



श्रीस्वामिनारायणो जयति ।

# ईशादिदशोपनिषद्भाष्यं

## गोपालानन्दस्वामिविरचितम् ।



वृत्तालयपाठशालाप्रधानपण्डितेन

एम्बार् कृष्णमाचार्येण संशोधितम् ।



मुम्बय्यां

पाण्डुरङ्ग जावजी श्रेष्ठिभिः

स्वीये "निर्णयसागरमुद्रणालयेऽङ्कयित्वा प्राकाश्यं नीतम् ।"



संवत् १९८८, सन १९३२.

मूल्यं ४ रूप्यकाः ।

श्री स्वामिनारायणो जयति ।



## प्रस्तावना ।

विलीने विज्ञाने, क्वचन गहने गाढतमसि
प्रवृद्धे त्वाविद्ये, भवपथगते भ्राम्यति जने ।
सतां चेतःपद्मे श्रियमुपहरन्नाविरभव-
त्परो हंसः कश्चित्, स हि विजयते लक्ष्मणमुनिः ॥१॥

यद्वाग्भिरप्रतिहताभिरपास्तमिथ्या-
वादान्धकारपटलो निगमान्तमार्गः ।
विष्णोः पदं भवभयापहमाप्तुकामै-
राश्रीयते, स जयताद्यतिराजभानुः ॥२॥

इह खलु भारतमण्डले ख्यायन्ते नाम बहूनि तत्त्वनिर्णयार्थानि दर्शनानि, आर्हतं सौगतमित्येवमादीनि, काणादं कापिलं पातञ्जलमित्येवमादीनि च । यानि बाह्याबाह्यविभेदेन तत्तत्समयनिष्ठैर्विभज्य गण्यन्ते, येषां न वयं पारयामः पारमधिगन्तुम् । यदप्रतिष्ठिततर्कजालसम्भृतान्यतिगहनमतिविलासभूयिष्ठानि प्रेक्षकाणां विमोहनानि प्रत्यर्थिनामपि तर्करसिकानामाश्चर्यावहानि । तत्र मानयन्तोऽपि वेदं तत्त्वनिर्णये प्राधान्येन दर्शनमात्मनः प्रमाणयन्तः काणादप्रभृतयः पुरुषविशेषवचः प्राधान्येन मानयन्तीति तान्येतानि पौरुषेयाणि दर्शनानि ।

तर्कत एव केवलात्तत्त्वनिर्णयमप्रतिष्ठितं पश्यन्तः परे कमप्यपौरुषेयं शब्द-राशिमेव प्रमाणयन्तस्तत्त्वनिर्णयाय न मानयन्ति तान्येतानि पौरुषेयाणि दर्श-नानि । प्रमाणयन्ति चौपनिषदमेव दर्शनम् । यत्, मूलमस्य दर्शनस्योपनि-षदस्तदुच्यते दर्शनमौपनिषदमिति ।

उपनिषदश्चानादिनिधना अपौरुषेया गिरः । कथमपौरुषेया गिरः ? न हि पुरुषनिरपेक्षा गिरः प्रभवन्ति, कथं वाऽनादिनिधनता ? वर्णमात्रं हि ताल्वा-द्यभिघातमूलकम् । अपगते च निमित्ते स्वयमुपशाम्यति च । विलये च विकाराणामशेषाणां क्व शब्दविशेषसद्भावावकाशः । सत्यं—पुरुषमपेक्षन्ते नाम गिरः, परं कल्पकमेवेति न नियमः । स्मृताऽप्युच्चार्यते हि वाक् । एवं ताल्वा-द्यभिघाते निमित्ते समुपरते प्रशाम्यति नाम वाङ्मयम् । पुनः पुनः सरूपोद्भवे न प्रतिरोधः । अध्यापक इवाद्यतनः परमेश्वरोऽपि वेदं सन्दर्भविशेषसंवलित-मस्खलितस्वरवर्णविन्यासमत एव पूर्वपठितादविशिष्टं पाठयति हिरण्यगर्भमिति न वेदस्य भारतादेरिव कल्पक इत्यपौरुषेयता वेदशिरसामुपनिषदाम् ।

या विद्या शिथिलयति बन्धं, अवसादयति वा, गमयति वा परं ब्रह्म सा विद्योच्यते **उपनिषदि**ति, तदवबोधकतया शब्दविशेषे भवत्युपनिषत्पदप्र-योगः । उपनिपूर्वकात् सदेर्विशरणावसादनगत्यर्थकात् क्विपि निष्पन्नोऽ-यमुपनिषच्छब्दः ।

अयमत्र सङ्ग्रहः—

शीर्यते हृदयग्रन्थिः कर्मबन्धो विनश्यति ।
गम्यते स्वं यया रूपं सा विद्योपनिषन्मता ॥
षदिर्विशरणे नाशे गतावपि हि वर्तते ।
उपनीत्युपसर्गौ च सामीप्यात्यन्तिकत्वयोः ॥



शीर्यते नाश्यतेऽत्यन्तं विद्ययाऽव्यवधानतः ।
व्यवधानाभावरूपसामीप्यस्य विवक्षया ॥
मुक्तौ साधनता साक्षाद्विद्याया अवगम्यते ।
तावदेव चिरं यावत् प्रारब्धान्न विमुच्यते ॥
भोगादिना कर्मनाशो जायते तु पदे पदे ।
आत्यन्तिकस्तद्विनाशो विद्यया सञ्चितक्षयात् ॥
सुषुप्तौ स्वाप्ययादीषत् स्वं रूपं गम्यतेंऽशतः ।
न सर्वांशाभिनिष्पत्तिः पुनर्व्याघ्रादिनोद्भवात् ॥
षदिर्गतिनिवृत्त्यर्थो यद्वाऽत्रोपनिपूर्वकः ।
अनादिकालानुस्यूते भवाध्वनि गतागते ॥
निवर्त्यते यया सेयं विद्योपनिषदुच्यते । इति ।

यद्यप्यवयवार्थयोगतो वेदशिरःस्विवान्यत्रापि परब्रह्मविद्यैकपरेष्वपि निबन्धेषूपनिषत्पदं प्रवर्तेत । अथाप्यविशेषितोऽयमुपनिषच्छब्दो वेदशिरःस्वेव प्रसिद्धः । विशेषितस्त्वन्यत्र—यथा, 'श्रीभगवद्गीतासूपनिषत्सु' इति । गीताशब्दसाहचर्यादुपनिषच्छब्दोऽवयवार्थमात्रेण प्रवर्तते । वेदशिरस्त्वं रूढिनिमित्तम् । रूढिनिमित्ताश्रयणं तु प्रयोगप्राचुर्यमूलकमिति नास्वरसम् ।

आसां चोपनिषदामाशयमवगमयितुं प्रवृत्तास्ते ते महान्तस्तथा तथा व्यवृण्वन्निमाः । विवरणनिरपेक्षमाशयस्तासां दुरधिगम एव, यदप्रतिपत्तिर्विप्रतिपत्तिरन्यथाप्रतिपत्तिर्वा परिमितमतीनां भवेदेव तत्र तत्र । गहना च श्रुतिगतिः । क्वचित् भेदनिषेधः क्वचित् भेदवादः, क्वचित् गुणनिषेधः क्वचिद्गुणविधानं, क्वचित्सत एवोत्पत्तिः क्वचिदसतः । तदासां विवरणमपेक्ष्यत एव महताम् ।

विवरणं च न्यायोपसंवलितं तत्त्वप्रतिपत्तये कल्पते । न ह्यपौरुषेयं वच इत्येतावतोपपत्तिपराहतेऽर्थे प्रमाणं भवेत्, 'आयुर्वै घृत'मिति वाक्यं हि वाच्यार्थे बाधितं लक्ष्यार्थे प्रवर्तते, एवं 'आदित्यो यूप' इति च, 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति च। एवमन्यान्यपि वचांसि मुख्यार्थे बाधितानि गौणे प्रवर्तन्ते । किं बहुना—भगवान् बादरायणस्तत्र तत्रौपनिषदे वाक्ये विप्रतिपत्तीरुपपत्तिभिः प्रशमयन् न्यायप्रयोगरूपाणि सूत्राणि हि निर्ममे । अत एव यान्युपनिषद्विवरणानि भगवद्बादरायणसमाकलिते सौत्रपथे प्रस्खलितगतीनि, न तान्यादरणीयानि ।

कानि तानीत्येतन्निर्धारणाय न वयमधुना प्रवर्तामहे । परमुपनिषदर्थनिर्णयाय भाष्येऽस्मिन् प्रवर्तमानानां प्रथममेव त्र्यन्ततातपर्यं भाष्ये तत्र तत्र प्रकाशयिष्यमाणं सारतो ज्ञातुमिच्छतां प्रोत्साहनाय किञ्चिदिदमावेदयामः । तत्रायमादाववधेयो विशेषो दार्शनिकपथादौपनिषदपथे । जगदिदमखिलं जडात् बीजादिति दार्शनिकः पक्षः, अजडादित्यौपनिषदः । नन्वस्य सौगतेन सौहार्दम् । नैतत् । न हीदमर्थजातं तेनेष्यते, अर्था न सन्ति, विज्ञानमेवार्थात्मना भातीत्येव हि तन्मतम्, तदर्थानां न तदारभ्यता, तदभिमतात् क्षणिकविज्ञानसन्तानाद्विलक्षणमेवाजडं प्रत्यक्त्वमिह विवक्षितम् । तदजडादिदमारभ्यते इत्यौपनिषद एवायमसाधारणः पक्षः ।

तत्र काणादाः—

जडैरेवाणुभिर्बीजैर्विविधैर्विविधं जगत् ।
आरभ्यते, न चैकस्मात् क्षित्यादि विविधं भवेत् ॥
चेतनाधिष्ठिताद्बीजात् दृष्टः कार्यस्य सम्भवः ।
तस्मादणूनां बीजानामधिष्ठाता स चेश्वरः ॥ इति ।

अपरे परमाणुवादिनः—

आरम्भकानणूनाहुश्चेतनेनानधिष्ठितान् ।
अणुप्रचय एवेदं जगदित्यपरे पुनः ॥

कापिलाः पुनस्तत्त्वदर्शिनां प्रथमपदमपेक्षमाणाः प्रकृतिपुरुषविवेचने प्रवृत्ता इदमाहुः—

जगत्यस्मिन् द्विधा भिन्ने जडाजडविभेदतः ।
अजडः पुरुषो नैव स्रष्टा नाप्यस्य कारणम् ॥
अविक्रियः स निर्लेपस्तस्मिंस्तद्धि न युज्यते ।
न चाणवः प्रपञ्चस्य बीजं गन्धादिलक्षणाः ॥
विशेषाः खलु ते तेषु सर्वप्रकृतिता कथम् ।
विकृतीनां विशेषाणां व्यक्तानां त्रिगुणात्मनाम् ॥
नभोनभस्वदादीनामस्त्येकं बीजमव्ययम् ।
यत्प्रधानं सत्त्वरजस्तमस्त्रितयलक्षणम् ॥
उपादेयसरूपं यदुपादानं तु तद्भवेत् ।
सुखदुःखादयो भावाः सत्त्वादीनां हि सम्मताः ॥
सुखादित्र्यात्मकं सर्वमुपादेयं हि दृश्यते ।
आनुमानिकमेतत्तु प्रधानं त्रिगुणात्मकम् ॥
स्वत आरभते विश्वं चेतनेनानधिष्ठितम् । इति ।

एकचेतनाधिष्ठितानेकजडोपादानतावादात्काणादाभिमतात् कापिलाभिमतोऽयं जगदारम्भवादः एकोपादानकताश्रयणांशमात्रेण सन्निहित इव सन्नपि जडोपादानकताश्रयणेन च सुतरां व्यवहित एवौपनिषदात् अजडोपादानकजगद्वादात् । अजडश्चायमात्मा, यः सर्वान्तरः ।

आत्मानमखिलस्यास्य नैकमिच्छन्ति कापिलाः ।
ऐकात्म्यमखिलस्यास्य तत्परोपनिषन्मतम् ॥
सर्वस्यात्मैकमूलत्वं सर्वस्यैकात्मतेति यत् ।
त्रय्यन्ते द्वयमेवैतद्व्यावृत्तं दर्शनान्तरात् ॥

तत् त्रय्यन्तविवरणाय प्रवृत्तैर्द्वयमेतदवधानेन नेयम् ।

तत्रात्मैकमूलकत्ववादीन्यौपनिषदानि वचनान्युदाह्रियन्ते—'आत्मैवेदमग्र आसीत् पुरुषविधः' 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति' 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेराप अद्भ्यः पृथिवी' इत्यादीनि । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति यदुपक्रमे प्रस्तुतं ब्रह्म तदेव 'तस्माद्वा एतस्मादात्मन' इत्यात्मशब्देन निर्दिश्यते । सोऽयमात्मा विज्ञानमयस्याप्यात्मभूतस्ततोऽन्य आनन्दमय इति तत्रैवोत्तरत्रोपसंहृतम् । तथा च सिद्धं यः सर्वस्य कारणमात्मा सोऽयमानन्दमयः परंब्रह्मेति ।

श्रूयते चास्य सर्वान्तरात्मनः परब्रह्मणः कारणत्वम् 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती'ति, 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति च । तदिदं परं ब्रह्म 'सदेव सोम्येदमग्र आसी'दिति कारणवाक्ये सदिति सामान्यशब्देन निर्दिश्य 'तदैक्षते'ति चेतनधर्मोक्त्या तस्याचेतनत्वशङ्कां व्युदस्य अबादिक्रमेण सर्गमभिधाय 'अनेन जीवेनात्मनाऽनुप्रविश्य'इत्यनेन ब्रह्मणः स्वात्मभूतजीवद्वाराऽनुप्रवेशं ततो नामरूपव्याकरणं चोक्त्वा 'ऐतदात्म्यमिदं सर्वं'मिति सर्वस्य एतदात्मकता श्राविता नाम सद्विद्यायाम् । एषु कारणवाक्येषु 'इदमग्रे आत्मैवासीत्' 'इदमग्रे सदेवासीत्' इति निर्देशात् 'यतो जायन्ते यदभिसंविशन्ती'ति निर्देशाच्चात्मन

उपादानता गम्यते, 'स ऐक्षत' 'तदैक्षत' इति निर्देशात्तस्यैव निमित्तता च । ननु न दृष्टं यदेवोपादानं तदेव निमित्तमिति । किं ततः । दृष्टवैरूप्यम् । किं तेन, कल्पनायां हि तदानुरूप्यापेक्षा । श्रुतिस्तु श्रावयतीममर्थम् । ननु व्याहतं निमित्तस्योपादानत्वम् । कुतो व्याहतम्, बहुभवनशक्तियोगादुपादानता, ईक्षणगुणयोगान्निमित्तता च । सर्वात्मनि परमचेतने तदुभययोगोऽव्याहतः । नन्वविक्रिये कथं बहुभवनयोगः । सत्यमविक्रियः । अथापि श्रूयते 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति । दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति । 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्' इति निदर्शनविशेषोपदेशपूर्वकं च । श्रूयते चास्य ब्रह्मोपादानकत्वनिबन्धनं ब्रह्मणोऽनन्यत्वं 'सर्वं खल्विदं ब्रह्म तज्जलानि'ति । सत्यं श्रूयते । अविकारित्वश्रुत्यविरुद्धेनार्थेन भाव्यम् । अनतिलङ्घनीयं च जडाजडयोर्वैलक्षण्यम्, उपादानतायां तु तद्व्याकोपः । अत्र नित्यविज्ञानवादिन इदमाहुः—उपादानोपादेयभावयाथात्म्यमविजानतामयमाक्षेपः । यदुपादेयं तदखिलमध्यस्तं हि, श्रावयति चेममर्थं 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति । केवलं वाग्विलास एव घटः शराव इत्यादि विकारजातम्, अर्थतत्त्वं तु न मृदोऽतिरिक्तम्, तद्विकारः सर्वो मिथ्यैव । तथाच प्रपञ्चः सर्वोऽयं ब्रह्मोपादानको ब्रह्मणो विवर्तो मिथ्यैव । तथा चात्र सङ्ग्रहः—

आरम्भकारभ्यभात्रोऽप्ययं यदि निरूप्यते ।
अधिष्ठानाध्यस्यभावे केवलं पर्यवस्यति ॥
आरभ्यते हि यदिदमसत्यं सर्वमेव तत् ।
घटः शराव इत्यादिर्वाक्प्रपञ्चस्तु केवलम् ॥
अन्यान्यद्वर्तते तत्र वस्तु किं वा विमृश्यताम् ।
मृदेकमेव वस्त्वस्ति विकारः कल्पनैव हि ॥
एवं चारभ्यमात्रस्य मिथ्यात्वे पर्यवस्थिते ।
ज्ञप्तिमात्रात्मनाऽऽरब्धं मिथ्यैतदखिलं जगत् ॥

तथा च परंब्रह्म सकलजगदुपादानमपि सर्वाध्यासाधिष्ठानमित्यविकृतमेव । यतो विकारजातमखिलं मिथ्या अत एव 'नेह नानास्ति किञ्चन' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादिभेदनिषेधश्रुतीनामप्यानुगुण्यम् । यतः सकलभेदविधुरं परं ब्रह्मात एव 'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते । यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्याद्यभेदवचसामपि सांगत्यम् । ननु कथं सकलभेदविधुरं परं ब्रह्मेति ? । श्रूयन्ते हि बहवः संसरन्तो जीवा अनीशाः, ईशश्च ततः परः ।

सत्यं जीवात् स तु परो न तु जीवस्ततः परः ।
यद्यप्यस्मात् घटाकाशान्महाकाशो मतोऽधिकः ॥
नाधिकस्तु महाकाशात् घटाकाशो भवेदसौ ।
परस्तरङ्गादुदधिस्तरङ्गो नोदधेः परः ॥
मायोपहितचैतन्यादस्माज्जीवघनात्पुनः ।
चैतन्यमात्ररूपं यत्तद्ब्रह्म त्वतिरिच्यते ॥

न चासती सती नापि सा मायाऽध्यासकारणम्।
तत् ज्ञप्तिमात्रमात्मैको जीवो नार्थान्तरं ततः॥
ज्ञातृज्ञेयादिभेदोऽयं व्यवहारैकगोचरः।
अविद्यया ज्ञप्तिमात्रे तस्मिन् ब्रह्मणि कल्पितः॥

ननु कथमतात्त्विकान् भेदानवलम्ब्यानुशास्ति श्रुतिः।

कर्तृकर्मक्रियाभेदवासनावासितात्मनः।
निर्विशेषज्ञप्तिमात्रापरोक्षानधिकारिणः॥
श्रेयो गमयितुं तत्तद्व्यावहारिकवर्त्मनि।
वेदः प्रवर्तते नानागतिभेदावलम्बनः॥
निर्विण्णः कर्मणो यस्तु व्युत्थितश्चैषणात्रयात्।
अविद्याप्रभवाशेषभेदाध्यासोपमर्दकम्॥
ज्ञप्तिमात्रात्मयाथात्म्यविज्ञानं बन्धवारकम्।
तस्य सञ्जनयन्नेष वेदान्तस्तु प्रवर्तते॥
वेदवेदान्तयोरेवं भेदाभेदावलम्बिनोः।
बाध्यबाधकभावस्तु स्वप्नजागरयोरिव॥
न चानेन श्रुतेर्यत्तत्प्रामाण्यमपहीयते।
आ प्रबोधादयं भेदो ह्यनपायः प्रवर्तते॥
भेदश्रुतेस्तन्निषेधश्रुतिस्तु बलवत्तरा।
अपच्छेदनयप्राप्तं तत्प्राबल्यं हि सुस्थिरम्॥

यतोऽयं जीवभेदोऽप्यविद्याकल्पितः, अत एव 'योऽसावसौ पुरुषः सोऽहमस्मि' 'अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरत अहमेवेदं सर्वम्' 'तत्त्वमसि श्वेतकेतो' इत्यादि श्रुतिजातमपि समन्वेति। किञ्च—

अन्येयमहमन्योऽस्मीत्युपास्ते यस्तु देवताम् ।
तस्योपासितुरज्ञत्वं सुव्यक्तं श्रूयते ननु ॥
देवतेऽस्मि त्वमेवाहमहं त्वमसि देवते ।
उपासनाप्रकारश्च श्रूयते व्यक्तमीदृशः ॥
नान्यो द्रष्टास्त्यतः कश्चिन्नान्यः श्रोताऽस्ति कश्चन ।
नान्यो मन्ता न बोद्धेति प्रतिषेधति च श्रुतिः ॥
सुषुप्तावप्ययः स्वस्मिन् ब्रह्मणि श्रूयतेऽपि च ।
परात्मनि श्रूयते च विज्ञानात्मप्रतिष्ठितिः ॥
तथा चाविकृतात् सत्यान्निर्विशेषान्निरञ्जनात् ।
ब्रह्मणो जगदारम्भः श्रौतः सोऽयमबाधितः ॥

ननु कथं निर्विशेषे 'यतो वे'ति लक्षणश्रुतेः समन्वयः । नैतत् ।

सत्यं ज्ञानमनन्तं यत् तद्धि ब्रह्मोपलक्ष्यते ।
अतात्त्विकैर्जगज्जन्मस्थितिभङ्गैस्तु केवलम् ॥

ननु कथमनृतं सत्यं लक्षयति । हार्दमविदुषोऽयमाक्षेपः ।

विवर्तो यस्य सर्वोऽयं तं कुतोऽयं न लक्षयेत् ।
छाययाऽनृतया सत्यः पुरुषो ह्युपलक्ष्यते ॥

नन्वेवमौपनिषदपरिणामवादस्याध्यासवादे चेत्तात्पर्यं कथमेकविज्ञानेन सर्वविज्ञानश्रवणसङ्गतिः । का तत्रासङ्गतिः । तथा हि—

ज्ञाते च सकलाध्यासाधिष्ठानात्मनि तत्त्वतः ।
वस्त्वेकमपि लोकेऽस्मिन् ज्ञातव्यं नावशिष्यते ॥
तस्मादात्मनि विज्ञाते विज्ञातमखिलं भवेत् ।
विवर्तवादस्तद्युक्तस्तत्त्वविद्भिर्निरूपितः ॥

अत्रेदं विचार्यम्—अध्यासवादेनारभ्यवादं नयतामेषामुपादानोपादेयभावयाथात्म्यनिरूपणप्रकारः कोऽयम् ।

आरम्भकारभ्यभावपरिशीलनपद्धतिः ।
हन्त केनाप्यदृष्टेयं सत्यानृतविवेचिनी ॥

तथाहि—यद्यभिनिवेशः सत्कार्यवादे उपादानादनन्यत्वमुपादेये संरक्ष्यम्, अंशतः सारूप्यमंशतो वैरूप्यं चोपादानोपादेयभावनिर्वहणैकान्तमभ्युपगन्तव्यमुपादानोपादेययोः । कथमिदमुपपाद्यताम् ।

अनन्यता कथं नाम सिद्ध्येत् सत्यानृतार्थयोः ।
अंशतोऽपि न सारूप्यं स्यादत्यन्तविरूपयोः ॥

न सन्नासज्जगदिदं न ह्यनन्यत् सतो भवेत् ।
सतोऽनन्यत् सतोऽन्यच्चेत्येतद्धि व्याहतं वचः ॥

अध्यस्ते बाधयोगाय स्वीकृता हि सतोऽन्यता ।
उपादानात् सतो नान्यदित्यतो नन्वनन्यता ॥

उपादेयं जगदिदं नन्वस्ति ख्यायते यतः ।
ननु तत्तत्त्वतो नेति सुस्थैव तदनन्यता ॥

कार्यकारणयोरैक्यं हन्त किं तेन साधितम् ।
कार्यमात्रप्रतिक्षेपे का नु सत्कार्यवादिता ॥

सतोऽन्यदखिलं कार्यमिदमास्तामतात्त्विकम् ।
आविद्यकमथाप्यस्ति ह्येतदुत्पादनाशभाक् ॥

भवान् हि सौगतस्येष्टाद्भीतो जगदपह्नवात् ।
तथाच ख्यायमानेषु वर्तमानेषु वस्तुषु ॥

सदारब्धतयेष्टेषु कार्येषु वियदादिषु ।
सदसद्भ्यो विभिन्नेषु का नाम सदनन्यता ॥

यद्यपि तत्सत्तातिरिक्तसत्ताशून्यतया तदनन्यत्वोपपादनं तद्धि तर्कताण्डवपाटवम् । सत्यानृतयोरनन्यत्वे विवादग्रस्ते तत्सत्तयोरनतिरिक्तता कथं तदुत्तीर्णा स्यात् । तत् तत्र विवदतस्तदिदमनुत्तरम् ।

सत्यसत्तातिरेकेण सत्ता स्यान्न कुतोऽनृते ।
ज्ञानमर्थात्मना भातीत्यस्मिन् पक्षे तथाऽस्तु तत् ॥
अविद्यया समुत्पन्नमर्थं स्वीकुर्वतस्तव ।
सत्यसत्तातिरिक्तैवानृतसत्ता स्वरूपतः ॥
सत्तानिरूपकौ देशकालौ न स्तः पृथग्यतः ।
तत् सत्ता सत्यसत्तातो नातिरिक्ताऽनृते ननु ॥
नैतन्निरूपकैक्येऽपि नैक्यं तदनुयोगिनोः ।
सत्यानृतविभेदेन भिद्यमानेऽनुयोगिनि ॥
निरूपकैक्यमात्रेणानतिरेकः कथं भवेत् ।
आस्तां वाऽनतिरिक्ता सा दुर्घटा तदनन्यता ॥
ईदृक्सत्ता शून्यतैवानन्यतेति स्वसद्मगम् ।
किं नु सिद्ध्येदनन्यत्वं स्वगोष्ठीपरिभाषया ॥

किञ्च—

सारूप्यमंशतो वाऽपि किं नु सत्यानृतार्थयोः ।
आरम्भकारभ्यभावो न चात्यन्तविरूपयोः ॥
यया कयाऽपि विधया सारूप्यं त्वप्रयोजकम् ।
ब्रह्मणा निर्विशेषेण सारूप्यं न च सम्भवेत् ॥

व्याहतो विषमश्चायमजडाज्जडसम्भवः ।

ननु विवर्तोऽयं प्रपञ्चः परस्य ब्रह्मणः, न परिणामः, मायायास्तु स परिणामः, अत एव च माययाऽनिर्वचनीयया गुणमय्या समसत्ताकता प्रपञ्चस्य, ब्रह्मणा तु विषमसत्ताकता, उपपद्यते च सत्यस्याजडस्य विवर्तोऽयं जडोऽनृतः प्रपञ्च इति ।

तथा चाव्याहतः सोऽयं सत्तावैषम्यलक्षणः ।
सत्याजडादुपादानाज्जडानृतसमुद्भवः ॥

नैतन्न्याय्यम्—अदृष्टं च हीदृशमुपादानस्य द्वैविध्यम्, न ह्यारभ्येषु कटकमुकुटादिषु न वा दध्यादिषु दृश्यते तदिदमारम्भकद्वैविध्यम् । या च विवर्तपरिणामस्वरूपव्यवस्थितिः सा कुत्र वा दृष्टा । ननु कटकमुकुटादीनि प्रकृतिसरूपाण्येव दृश्यन्ते, दध्यादीनि प्रकृतिविरूपाणि, तदनेन वैषम्येण व्यवस्थाभेदोऽयम् । नैतत् । नियते नामारभ्यारम्भकयोः सारूप्यवैरूप्ये, तत्र केषुचिदारभ्येषु सारूप्यांशभूयस्ता, यथा कटकमुकुटादिषु, दध्यादिषु च वैरूप्यांशभूयस्ता, यत्र वैरूप्यांशभूयस्ता तत्र प्रायो भवति विवर्तशब्देन व्यवहारः, परिणतिशब्देन तूभयत्र समो व्यवहारः । एकस्मिन्नुपादेये उपादानभेदनियतसत्तासाम्यवैषम्यनिर्वहणं तु न दृष्टचरम् । किञ्च—

मायायाः परिणामोऽयं विवर्तो ब्रह्मणस्त्विति ।
विभेदकल्पना सेयं स्वगोष्ठीपरिनिष्ठिता ॥
सूत्रकारो ह्यात्मकृतेः परिणामादिति ब्रुवन् ।
प्रकृतित्वं स्थापयति ब्रह्मणो बादरायणः ॥
ब्रह्मणः परिणामोऽयमित्यनेन स्फुटं ननु ।

विवर्तोपादानं ब्रह्मेति वदताऽपि विवर्ते प्रपञ्चे ब्रह्मणोऽनन्यत्वं तु वक्तव्यम्, तच्च सत्यानृतयोर्न घटते इत्युक्तं प्रागेव। ब्रह्मणोऽन्यदिदं जगदनिर्वचनीयं वर्तमानमप्यनृतमेवेति तत्त्वतो नास्तीत्यन्यप्रतिषेधदार्ढ्यमवलम्ब्य तदनन्यतासमर्थनं न तदुपादानभावसमर्थनानुरूपं भवितुमर्हति। अनृतत्वमात्रेणापि हि तदनन्यतासिद्धेः। एकस्यैवावस्थाभेदेनोपादानोपादेयभावे हि तदनन्यता मुख्या स्यात्।

आरम्भकारभ्यभावं श्रौतं ब्रह्मप्रपञ्चयोः।
उपपादयतः सोऽयं जगन्मिथ्यात्वसंश्रयः॥
अश्रुतानुपपन्नार्थकल्पनायासमात्रदः।
विज्ञानवादप्रागल्भ्यपारवश्यसमुद्भवः॥

ननु श्रुतमेव वयमनुवदामः, नाश्रुतमाश्रयामः, नवाऽनुपपन्नम्। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य' मिति विकारजातस्य मिथ्यात्वमुपपादयति हि श्रुतिः। नैतत्। अनुपपन्नमर्थमुपपादयतीति हि व्याहतम्। ननु श्रावयति कण्ठरवेण, तत् उपपन्नेन भाव्यं तेनार्थेन। कमर्थं श्रावयति कण्ठरवेण। ननु विकारस्य मिथ्यात्वम्। न। विकारः प्रकृतेरन्यद्द्रव्यमिति यन्मतं तस्यासत्यतां हि श्रावयति 'मृत्तिकेत्येव सत्य'मिति। अयमर्थः—यद्यपि भिन्नभिन्नया वाचा—व्यवहारेणारभ्यते नाम—स्पृश्यते नाम भिन्नभिन्नसंस्थानलक्षणो घटशरावादिर्विकारः, तथा घटः शराव इति भिन्नभिन्नं नाम च, व्यवहारभेदगोचरोऽपि स घटशरावादिविकारभेदः प्रकृतेर्मृत्तिकाया नान्यद्द्रव्यम्, एकमेव तु द्रव्यमवस्थाभेदेनोपादेयभावमाप्नोति, तदेवमुपादेयस्वरूपयाथात्म्येऽवस्थिते मृत्तिकात उपादानादुपादेयं घटशरावादिविकारद्रव्यमन्यदित्यसत्यम्, मृत्तिकेत्येव तु सत्यम्—प्रमाणगम्यम्, तदुपादेयस्योपादानादर्थान्तरत्ववादिनो हि विभ्रान्ता इति। उपक्रमानुरूप्यं चास्मिन्नर्थे,

तथाहि—यदुपक्रान्तमेकस्मिन्विज्ञाते सर्वं विज्ञातं स्यात् इति, तदिदं सर्वस्यैकोपादानकतामुपादेयस्योपादानादनन्यतां चाभिप्रेत्यैव प्रवृत्तम्, उपादानोपादेययोर्भेदमर्थभेदनियतव्यवहारभेदतः समवलम्ब्य 'कथं नु भगवः स आदेशो भवती'त्याशङ्कायां समुद्भूतायामुपादानोपादेययोस्तादात्म्यमबाधितप्रत्यक्षप्रमाणसिद्धमवगमयन्ती तामाशङ्कां परिहरति 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या' दित्यादिना । ननु कथमेकेनोपादानेन घटशरावादि सर्वं मृण्मयं विज्ञातं स्यात्, उच्यते—सर्वं घटशरावादि मृण्मयं मृत्तिकेत्येव—मृद्द्रव्यमित्येव सत्यम्—अबाधितप्रत्यक्षप्रमाणसिद्धम् । ननु गवाश्वादिवदर्थभेदेऽसति कथं व्यवहारभेदः ?, उच्यते, गवाश्वादिवदसत्यप्यर्थभेदे संस्थानवैलक्षण्यनिबन्धनो यो विकारभेदः यश्च तन्निमित्तो नामभेदः तेन भवति वागारम्भः—अन्यान्यव्यवहारारम्भः । (वागिति व्यवहारो लक्ष्यते) तत् व्यवहारनिर्वहणायाबाधितप्रत्यक्षप्रमाणसिद्धद्रव्यानन्यतावधीरणं कथमुपपद्येत । इति । नचोपादेयस्य व्यलीकतोपपादनमुपादानविज्ञानेनोपादेयमात्रस्य विज्ञाततासमर्थनोपयुक्तम्, ननु तत्त्वतः सति ह्युपादेये ज्ञातेऽप्युपादाने उपादेयं ज्ञातव्यमवशिष्येत, उपादेयमात्रं तु व्यलीकम्, अतो ज्ञातव्यमपरं नास्तीति एकस्मिन्विज्ञाते सर्वं ज्ञातं स्यादिति सर्वविज्ञानप्रतिज्ञावाक्यस्याशयः, तद्भवति विकारस्य व्यलीकतोपपादनमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानोपपादकम् । तर्ह्येकविज्ञानेन सर्वविज्ञानं गौणेन पथा समुन्नीतम्, नास्ति ह्युपादेयं तत्त्वतः, उपादाने विज्ञाते यदुपादेयं ज्ञातं स्यात् । किं त्वधिष्ठाने विज्ञाते व्यलीकं तु निवर्तेत । तत् 'एकस्मिन् विज्ञाते सर्वं निवर्तेते'ति श्रुतिशैल्या भाव्यम् । श्रौतः सर्वोऽपि जगदारम्भवादः परिणामवाद एव स्वरसगतिको नाध्यासवादे 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः' इत्यादिः ।

यज्जायते तत्सर्वमध्यस्तमिति तु साहसम् । न हि जनिशब्दस्याध्यासशब्दस्य च पर्यायता दृष्टा ।

ब्रह्मारभ्यजगद्वादं श्रौतमध्यासवादतः ।
रिरक्षिषन्ति हन्तैते नित्यविज्ञानवादिनः ॥
विवर्तवादे नयतां परिणामश्रुतीः शतम् ।
वाक्यस्वारस्यभङ्गोऽपि न प्रकम्पाय कल्पते ॥

किञ्च—

मातृमेयप्रभेदोऽयं व्यवहारैकगोचरः ।
अविद्यया परे ब्रह्मण्यध्यस्त इति यन्मतम् ॥
श्रुतिन्यायाननुगुणं प्रमातृभ्यो न रोचते ।
तदैक्षतेति श्रुत्या हि प्रमातृ ब्रह्म गम्यते ॥
इमास्तिस्र इति श्रुत्या मेयभेदोऽपि गम्यते ।
नन्वयं व्यवहारो हि, सत्यं कस्य विविच्यताम् ॥
तच्चिन्तया को विशेषः, नाविद्याकृत इत्ययम् ।
सतो हि व्यवहारोऽयं ननु श्रुत्याऽनुभाष्यते ॥
तदेवाविद्यया च्छन्नं ननु सन्मात्रमैक्षत ।
व्यवहारस्ततस्तस्य यथाऽध्यासमिमाः इति ॥
तदभ्राम्यदिति श्रुत्या ननु भाव्यं तथा सति ।
अविद्यया समाच्छन्नमित्यपि श्रूयते नहि ॥
सतस्तस्य स्वतन्त्रस्य स्वेच्छासङ्कल्प एव हि ।
बहु स्यामिति वाक्येन स्वारस्यादवबोध्यते ॥

तस्य सङ्कल्पमात्रेण बहुधाभवनात्मके ।
सामर्थ्यं गम्यते सर्गे तत्तेजोऽसृजतेत्यतः ॥
न सामर्थ्यमधिष्ठाने ख्यातमध्यासकल्पकम् ।
दोषस्यैव तु सामर्थ्यं सर्वाध्यासप्रकल्पनात् ॥
अध्यासमात्रानुगतसत्तामात्रस्वरूपतः ।
सामर्थ्यं तस्य किं येन वाक्यं तत् स्वरसं भवेत् ॥
जीवस्तु ब्रह्मणोऽनन्य इत्येतच्च न युज्यते ।
जीवस्य ब्रह्मणोऽन्यत्वं श्रूयते तत्र तत्र हि ॥
तानि श्रौतवचांस्यत्रानूद्यन्तेऽर्थानुबन्धतः ।
'अस्मान्मायी सृजत्येतद्विश्वं यदुपलभ्यते ।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥'
'मायिनः स्रष्टुरन्योऽसौ सन्निरुद्धस्तु मायया ।'
'द्वौ सुपर्णौ तयोरन्यः पिप्पलं ह्यत्ति नेतरः ।'
आत्मानं प्रेरितारं च पृथङ्मत्वाऽमृतो भवेत् ।'
'अज एकोऽनुशेतेऽजामजोऽन्यस्तु जहाति ताम् ।'
'वृक्षे समाने पुरुषो मग्नः शोचति मोहितः ।
अन्यमीशं यदा पश्येद्वीतशोकस्तदा भवेत् ॥'
'यो वेद मध्वदमिममात्मानं जीवमन्तिकात् ।'
ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥'
'कामान् बहूनां नित्यानां चेतनानां दधाति यः ।
नित्य एकश्चेतनस्तमात्मस्थं योऽनुपश्यति ॥'
'अन्यस्तु विज्ञानमयादात्माऽऽनन्दमयोऽन्तरः ।'

'भूतानि भूतमात्राश्च विषयाश्चेन्द्रियाणि च ।
बोद्धव्यमपि बुद्धिश्च मन्तव्यं मन एव च ॥
सर्वमेतत्परे ह्यात्मन्यक्षरे सम्प्रतिष्ठते ।
द्रष्टा स्प्रष्टा रसयिता कर्ता बोद्धा य एष सः ।
विज्ञानात्मा परे ह्यात्मन्यक्षरे सम्प्रतिष्ठते ॥'
'एवं स पापैर्निर्मुक्तो ब्रह्मलोकं प्रणीयते ।
परात्परं ज्ञानघनात् पुरुषं सोऽयमीक्षते ॥'
'आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥'
रथी हि भिद्यते गन्ता भेदो व्यक्तस्ततस्तयोः ।
घटाकाशमहाकाशनिदर्शनसमाश्रयः ।
उदाहृतेषु वाक्येषु क्व लमेत समन्वयम् ॥
घटाकाशान्महाकाशः परो यद्यपि वर्तताम् ।
नान्यस्तु तस्मात्स भवेत् न महाकाशतोऽपि सः ॥
मिथो निदर्श्यतेऽन्यत्वं जीवात्मपरमात्मनोः ।
श्रौतस्य जीवभेदस्य कल्पितत्वे न च श्रुतिः ॥
भेदश्चेत्तात्त्विकः श्रौतं नन्वैक्यं नोपपद्यते ।
तत्त्वमस्यादिवाक्येन तदैक्यं श्रूयते खलु ॥
तन्निदर्शितरीत्यैव नेया भेदगिरस्तयोः ।

श्रूयमाणस्य भेदस्य श्रुतैक्यस्योपपत्तये।
आविद्यकत्वं सावद्यं हन्तैवं यदि कल्प्यते।
अभेदवचसामेव भेदश्रुत्युपपत्तये।
अनवद्यं स्तावकत्वं नाश्रीयेत कुतो बुधैः।
वस्तुतः स्तावकं नापि न च भेदोपमर्दकम्।
एकात्मकानेकभेदसम्भवात् स च वक्ष्यते।
अविद्याध्यस्तजीवांशज्ञप्तिमात्रात्मवादिनाम्।
बन्धमोक्षव्यवस्थाऽपि न घटेत कथञ्चन।
प्रकाशैकरसज्ञप्तौ स्यादविद्यान्वयः कथम्।
स्वकल्प्यजीवाश्रयता तस्या नैवोपपद्यते।
स्वतः सदा शुद्धबुद्धमुक्तचिन्मात्रवस्तुनः।
न बन्धो न च मोक्षश्च, नापि जीवे तदन्वयः।
को नु बन्धः कल्पितस्य सदाभासात्मनो भवेत्।
विषयाश्रयवस्त्वैक्यादविद्याविद्ययोर्मिथः।
बाध्यबाधकता वाच्या न घटेतान्यथा हि सा।
विषयाश्रयवस्त्वैक्यं यद्यस्या ब्रह्मणेष्यते।
एकमुक्तौ सर्वमुक्तिः स्यान्न स्यान्मुक्तिरेव वा॥
स च विज्ञानवाद्यस्मिन् प्रीतिमीषत्प्रदर्शयन्।
'नित्यज्ञानविवर्तोऽयं क्षितितेजोजलादिकः।
आत्मा तदात्मकश्चेति संगिरन्तेऽपरे पुनः।
तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः।
विपर्यस्ताविपर्यस्तज्ञानभेदो न विद्यते।

एकज्ञानात्मके पुंसि बन्धमोक्षौ ततः कथम् ।
किंवा निवर्तयेद्योगी योगाभ्यासेन साधयेत् ।
किंवा न हातुं शक्यो हि विपर्यासस्तदात्मकः ।
तत्त्वज्ञानं न चोत्पाद्यं तादात्म्यात् सर्वदा स्थितेः ।
योगाभ्यासोऽपि तेनायमफलः सर्व एव हि ।'
इत्यादिदूषणान्याह विरुद्धांशं प्रतिक्षिपन् ।
निर्विशेषज्ञप्तिमात्रं ब्रह्म जन्मादिकारणम् ।
वेदान्तवेद्यमित्येतद्व्याहतं वचनं खलु ।
बृहत्त्वगुणयोगाद्धि ब्रह्मशब्दः प्रवर्तते ।
निर्विशेषज्ञप्तिमात्रे निमित्तविधुरे कथम् ।
ब्रह्मशब्दः प्रवर्तेत मुख्यवृत्त्या विमृश्यताम् ।
अगोचरे गिरां तस्मिन्नतद्व्यावृत्तिमात्रतः ।
ननु प्रवर्तते शब्दः सर्वो न तु गुणान्वयात् ।
तदल्पप्रतिषेधेन ब्रह्मशब्दः प्रवर्तते ।
अपोहवादाश्रयणं ब्रह्मशब्दसमन्वये ।
हन्त सौगतसौहार्दं व्यनक्ति भवतो ननु ।
श्रौतादथात आदेशो नेति नेति निषेधतः ।
व्यक्तं वयमिदं ब्रूमो नतु सौगतसौहृदात् ।
हन्त तस्याः श्रुतेर्हार्दं तन्न सन्दर्भसङ्गतम् ।
प्रकृतैतावत्त्वमात्रप्रतिषेधपरा हि सा ।
उपपादयति ह्येवं भगवान् बादरायणः ।
किञ्च ज्ञप्तिर्निर्विशेषेत्येतद्धि व्याहतं वचः ।

ज्ञप्तेः स्वरूपसिद्धिर्हि ज्ञातृज्ञेयोभयान्वयात् ।
ज्ञेयान्वयप्रत्यनीकस्वभावा ज्ञप्तिरित्यसत् ।
किञ्च तन्निर्विशेषं चेत् कथं जन्मादिकारणम् ।
असमर्थाद्वस्तुमात्रान्न हि किञ्चित्प्रजायते ।
विलक्षणं च सामर्थ्यं स्वीकार्यं सर्वकारणे ।
ज्ञानशक्त्यादिवैचित्र्यविशेषरहितं यदि ।
कथं घटेत श्रुत्युक्ता जगज्जन्मादिहेतुता ।
जगत्कारणताक्षिप्ता ज्ञानशक्त्यादयो गुणाः ।
स्वाभाविकानवधिकाः श्रूयन्ते श्रुतिमूर्धसु ।
किञ्च लक्ष्यं लक्षणेन सविशेषं भवेन्ननु ।
लक्षणं ब्रह्मणो हीयं जगज्जन्मादिहेतुता ।
सत्यं लक्षणमेवैतत् जगज्जन्मादि किं ततः ।
जगज्जन्मादिना ब्रह्म केवलं ह्युपलक्ष्यते ।
भवेद्विशेषसंश्लेषस्तेन तस्य न कश्चन ।
शाखया लक्ष्यमाणेऽपि चन्द्रे शाखान्वयो नहि ।
जन्मादयो विशेषास्तु कार्य एव न कारणे ।
हेतुता च न हेतोर्हि स्वरूपादतिरिच्यते ।
हन्त लक्ष्ये लक्षणतो विशेषो यदि नेष्यते ।
कथं तल्लक्षणं तस्य नाविशेषो हि लक्षणम् ।
इतरस्मात्तस्य योऽसौ विशेषः स हि लक्षणम् ।
जन्मादिहेतुता चैष विशेषो ब्रह्मणो ननु ।
असंबद्धोपलक्ष्यस्य नोपलक्षकता भवेत्

न ह्यसम्बद्धचन्द्रा स्याच्छाखा चन्द्रोपलक्षिका ।
ऋजुदेशादिसंबन्धात्, स एव हि विवक्षितः ।
अन्यथा सति शाखाः स्युः सर्वा एवोपलक्षिकाः ।
जन्मादयः कार्यनिष्ठाः सत्यं, तद्धेतुतैव हि ।
ब्रह्मणो लक्षणं सा तु विशेषस्तद्गतो ननु ।
परास्तमिदमेतेन जगज्जन्मादिलक्षितम् ।
ब्रह्मेतरस्माद्व्यावर्त्य तत्स्वरूपं विशोधयत् ।
सत्यं ज्ञानमनन्तं हीत्येतद्वाक्यं प्रवर्तते ।
जन्मादिभिर्लक्ष्यमाणं दूष्यते ब्रह्म कैर्गुणैः ।
यद्व्युदासादिदं वाक्यं तस्य शोधकमुच्यते ।
जन्मादिना लक्ष्यमाणं ननु तेनैव दूष्यते ।
जगतः खलु जन्मादि ब्रह्मणो हेतुतैव तु ।
विचित्रकार्यहेतुत्वात् ज्ञानशक्त्यादिभिर्गुणैः ।
बृहत्त्वं सर्वतस्तस्य गम्यते तत्तु भूषणम् ।
सत्यज्ञानादिशब्दानामसत्यान्यादिबोधने ।
स्वार्थत्यागोऽपोहवादसौहृदं च प्रसज्यते ।
प्रतिषेधमुखेनापि पदानामन्वयो ननु ।
अनुयोगिस्वरूपस्य बोधकं समपेक्षते ।
स्वासाधारणरूपेण बोधश्चेन्नानुयोगिनः ।
प्रतिषेधावबोधो हि घटेत न कथञ्चन ।
ज्ञप्तिमात्रं ज्ञेयभावप्रत्यनीकस्वभावकम् ।
वेदान्तवेद्यमिति यद्व्याहृतं व्याहृतं च तत् ।

किञ्च—

न सती नासती मायेत्येतच्च व्याहतं वचः ।
सदसत्कोटिनिर्मुक्तं न हि स्याद्वस्तु किञ्चन ।
अयं नास्त्ययमस्तीति व्यवहारो द्विधैव हि ।
ननु किं व्यवहारेण न ततस्तत्त्वनिर्णयः ।
निरूप्यमाणा न सती बाधात् ख्यातेश्च नासती ।
ननु ख्यातेर्नासती चेत् सती सा पर्यवस्यति ।
नासती चे द्बाधयोगादसती पर्यवस्यति ।
तथा चोभयरूपैव स्यान्नोभयविलक्षणा ।
ख्यातेः सत्त्वमसत्त्वं च बाधात्, स्यात् कालभेदतः ।
दुर्लक्ष्यख्यातिबाधायास्तस्यास्तत्त्वनिरूपणम् ।
वस्तुतो नानया रीत्या सिद्ध्येत् तत्त्वेषु कथ्यताम् ।
एकदा ख्यायमानस्य बाध्यमानस्य चान्यदा ।
सतोऽसतश्च वैजात्यं यद्वादेर्निरूप्यते ।
निरस्तमिदमेतेन मानन्यायपराहतम् ।
ननु माया श्रूयते तु सदसद्भ्यां विलक्षणा ।
नासदासीत् नो सदासीत्तम आसीदिति श्रुतेः ।
हन्त श्रुत्याऽनया नैव सिद्ध्येदर्थो विवक्षितः ।
सदसद्भ्यां विभिन्नत्वं तमसो न हि बोध्यते ।
तमःकाले सदसतोः प्रतिषेधस्तु कीर्त्यते ।
सदसद्भिन्नता तेन तमसो ननु गम्यते ।
निषिध्यमानं सदसत्तत् किं स्यादिति चिन्त्यताम् ।

पारमार्थिकसत्त्वचेत् निरुपाख्यमसद्यदि ।
तदा सिद्ध्येत्तु मिथ्यात्वं तद्विलक्षणतात्मकम् ॥
परमार्थसतो नैव निषेधः स्यात् सदा स्थितेः ।
तुच्छान्वयः कदा वा स्यात् यस्तदानीं निषिध्यते ॥
निषेधासम्भवेनैवं पारमार्थिकतुच्छयोः ।
तमःकाले निषेधः स्याद्युक्तः सदसतोर्ययोः ॥
नन्वत्र ते परिग्राह्ये, स्थूलसूक्ष्मे तु ते मते ।
तथा च यदिदं स्थूलं पृथिव्यादि सदुच्यते ॥
महदादि च यत्सूक्ष्ममसदित्युच्यते परम् ।
तदेतदुभयं नासीत् तम आसीत्तु केवलम् ॥
इति तस्याः श्रुतेर्हार्दमनवद्यमवस्थितम् ।
अनया चर्चयाद्यालं प्रसक्तानुप्रसक्तया ॥
विवर्तवादसर्वांशपरीक्षा प्रकृता नहि ।
एतावता विचारेण निष्पन्नमिदमद्य नः ॥
ब्रह्मणो निर्विकारस्य जगदारम्भहेतुता ।
विवर्तवादाश्रयणान्नोपपादयितुं क्षमा ॥

ननु विवर्तवादे दोषं पश्यता वक्तव्यम्, कथमभेदश्रुतीनां सङ्गमनम्, कथं च भेदनिषेधवचसाम्, कथं वा गुणनिषेधवचसाम्, कथं चाविकृतस्वरूपस्य ब्रह्मणो जगदुपादानता । अत्रेदमव्याहतेनाचार्यमतेन ब्रूमः—'यतो वा इमानी' त्यादिना जगज्जन्मादिकारणत्वेन लक्ष्यमाणस्य परस्य ब्रह्मणः स्वरूपमुच्यते 'सत्यं ज्ञानमनन्तं ब्रह्मे' त्यनेन, इदं च स्वरूपावबोधकं वाक्यं

प्रवृत्तिनिमित्तभेदैः सत्यत्वादिभिर्विशेषणविशेष्यमुपसर्पद्भिः सत्यादिपदैः समानाधिकरणैः सत्यत्वादिविशिष्टं ब्रह्मस्वरूपमुपस्थापयति ।

नन्वस्य नोपपद्येत विशिष्टार्थावबोधिता ।
सामानाधिकरण्यं हि नन्वेकार्थावबोधने ॥
विशेषणविशिष्टार्थबोधने स्यादिदं कथम् ।
विशेषणविशेष्याभ्यां नन्वर्थौ हि विभिद्यते ॥
विशेषणविभेदश्च विशेष्यार्थविभेदकः ।
तस्माद्वाक्यमिदं नैव विशिष्टार्थावबोधकम् ॥
किन्त्वखण्डार्थकं ब्रह्मस्वरूपैकार्थबोधनात् ।
हन्त दृष्टा क्व वा सेयमखण्डार्थावबोधिता ॥
न ह्येकाऽपि हि धीर्दृष्टा वैशिष्ट्यानवगाहिनी ।
वाक्यजन्या तु या सेयं सुतरां न तथाविधा ॥
प्रकृतिप्रत्ययोपेतपदजातं हि वाक्यकम् ।
तथात्वं तस्य वाक्यस्य नन्वैकार्थ्योपपत्तये ॥
सत्यमेकार्थबोधित्वं धर्म्यैक्यान्नापगच्छति ।
निमित्तभेदेनार्थैक्यादैकार्थ्यं हि सुसङ्गतम् ॥
विशेषणविभेदेन विशेष्यं न च भिद्यते ।
स्वानाश्रयात् स्वाश्रयं हि विभिनत्ति विशेषणम् ।
स्वेतराश्रयमात्रात्तु न भिनत्ति विशेषणम् ।
प्रवृत्तेर्द्वारभेदेन पदानामेकधर्मिणि ॥
सामानाधिकरण्यं हि शाब्दिकैरपि सम्मतम् ।
तद्विशेषणभेदेऽपि धर्म्यैक्यान्मुख्यमेव तत् ॥

अन्यथाऽर्थबहुत्वं तु परस्यापि प्रसज्यते ।
व्यावर्त्यस्यानृतादेश्च भेदाद्ब्रह्मावृत्तिभेदतः ।
सर्वमानपथातीतनिर्विशेषार्थसिद्धये ।
प्रवृत्तिद्वारवोधेऽपि व्यर्थं प्रद्वेषमावहन् ॥
सामानाधिकरण्यस्य व्याख्यामन्यां प्रकल्पयन् ।
अस्थाने लक्षणाक्लेशं पदानां सहते परः ॥

तथाच सिद्धं जगज्जन्मादिकारणतया लक्ष्यमाणं परंब्रह्म सत्यत्वज्ञानत्वादिधर्मविशिष्टमिति । यदेव जगज्जन्मादिकारणं तदेव निरतिशयबृहत्त्वगुणयोगीति च गम्यते, न तु निर्विशेषमिति । अभिन्ननिमित्तोपादानतया च बहुभवनशक्तियोगः प्रकृष्टज्ञानशक्तियोगश्च तस्मिन्नवश्यमभ्युपेयः । अन्यथा कथं सर्वोपादानता सर्वनिमित्तता च । श्रूयते च जगत्कारणनिरूपणप्रकरणे—'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' इति। तथाऽन्यत्र च—'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति । तस्यास्य सत्यत्वादिगुणविशिष्टस्य ब्रह्मणो निरवधिकानन्दता च तत्रैवोत्तरत्र निरूप्यते च । उपक्रमे 'ब्रह्मविदाप्नोति पर'मिति प्रस्तुतस्य ब्रह्मणः 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति स्वरूपं निरूप्य तस्मादेवाकाशादिक्रमेण जगदारम्भं 'तस्माद्वा एतस्मादात्मन आकाशः संभूत' इत्यादिना निरूप्य अन्नमयादिभ्यो विज्ञानमयान्तेभ्यो व्यतिरिक्ततां तदन्तरात्मतां च स्थूलारुन्धतीन्यायक्रमेण निरूप्य तस्यानन्दमयतां निर्दिश्य निर्दिष्टमानन्दमयत्वं निरवधिकानन्दप्राचुर्यलक्षणं ज्ञापयितुं प्रवर्तते हि श्रुतिः 'सैषानन्दस्य मीमांसा भवती' त्यादिना । तस्यास्य सर्वज्ञस्य सर्वशक्तस्यानन्दमयस्य परस्य ब्रह्मणः सत्यज्ञानानन्तस्वरूपस्य सकलचेतनाचेतनान्तर्यामितया सर्वात्मत्वमन्तर्यामिब्राह्मणे श्रूयते—'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं

पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ।' 'योऽप्सु तिष्ठन्' 'योऽग्नौ तिष्ठन्' 'योऽन्तरिक्षे तिष्ठन्' 'यो वायौ तिष्ठन्' 'यो दिवि तिष्ठन्' 'य आदित्ये तिष्ठन्' 'यो विज्ञाने तिष्ठ'न्नित्यादिना । 'यो विज्ञाने तिष्ठ'न्निति स्थाने 'य आत्मनि तिष्ठ'न्निति शाखान्तरे पाठः । तथा सुबालोपनिषदि च 'यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद' इत्यादिना 'स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इत्यन्तेन । तथा चानेन शरीरशरीरिभावेन सर्वमेव चेतनाचेतनजातं परस्य ब्रह्मणोऽपृथक्सिद्धः प्रकारविशेष इति स्थितम् । द्रव्यस्य जातिगुणवत् शरीरं शरीरिण आत्मनो ह्यपृथक्सिद्धः प्रकारः । सिद्धमित्थं च खेतरसमस्तचिदचिद्विशिष्टं ब्रह्मैकं तत्त्वमिति ।

अन्तर्यामिश्रुतौ दृष्टिमवधानेन यच्छताम् ।
सूपपादा ह्यबाधेन भेदाभेदगिरां गतिः ॥

तथा चान्यत्रोक्तम्—

'वियद्वायुस्तेजः सलिलमवनिश्चेति यदिदं
विकाराणामेषां प्रकृतिरपि या ये च पुरुषाः ।
न तेषामेकं वा यदगुणतया स्यात्तनुतया
प्रकारीभूयास्ते निखिलमपि यद्ब्रह्मण इदम् ॥
तथा च स्वैकान्तैरखिलचिदचिद्धर्मनिचयै-
र्विशिष्टं ब्रह्मैकं भवति नच तत्त्वं तदधिकम् ।
अतो नाना नेति श्रुतिशिरसि जोघुष्यत इदं
विशिष्टाद्वैतं तन्न हि गुणविभागं न सहते ॥

रसादिषु विशेषेषु सत्स्वपि श्रूयते न किम् ।
आप एव पुराऽभूवन्नान्यत्किञ्चिदिति श्रुतिः ॥
निषेधोऽयं न सहते स्वगुणानां भिदां किमु ।
समानधर्मिसत्तां तु न सहेतेदृशं वचः ॥
लोकेऽपि देवदत्तोऽस्मिन् सद्मन्येकस्तु वर्तते ।
इति व्यवहृतिर्मुख्या दृश्यमानेऽपि तद्गुणे ॥
अभिज्ञो देवदत्तोऽयमेक एवात्र वर्तते ।
इति व्यवहृतिर्मुख्या देहे सत्यपि देहिनः ॥
यद्येकमपि विद्येत ब्रह्मणस्त्वगुणात्मकम् ।
ब्रह्मैकं, नास्ति नानेति वचो व्याहन्यते तदा ॥
शब्दादिभिर्विशेषैस्तु विशिष्टं वियदादिकम् ।
तथाविधैस्तु तैस्तत्त्वैर्विशिष्टमखिलात्मकम् ॥
तत्त्वमेकं परं ब्रह्म श्रूयते श्रुतिमूर्धसु ।
विशिष्टस्यास्य तत्त्वस्य सजातीयान्यशून्यता ॥
विशिष्टाद्वैतमेतत्तु विशेषणबहुत्वतः ।
न भज्यते युज्यते च भेदाभेदवचोऽधुना ॥ इति ।

यस्माद्विशिष्टं ब्रह्मात एवोपादानोपादेयभावोऽपि सुसङ्गच्छते । तथाहि—

सद्ब्रह्मात्मादिशब्दैः श्रुतिषु निगदितश्चेतनाचेतनात्मा
ज्ञानानन्दस्वरूपः स्वतनुचिदचितोः सौक्ष्म्यतः सोऽविभक्तः ।
सङ्कल्प्याहं बहु स्यामिति समुदभवत्सत्त्यदात्मा विभक्त-
स्तद्युक्ताऽनन्यता सा श्रुतिषु निगदिताऽऽरम्भकारभ्ययोर्या ॥
स्वशरीरस्थौल्यसौक्ष्म्यावस्थाभेदद्वयान्वयात् ।

आरभ्यतारम्भकते युज्येते परमात्मनि ॥
अनुरूपं च तत्सृष्टावूर्णनाभिनिदर्शनम् ।
उक्तावस्थाविभेदेऽपि ब्रह्म त्वविकृतं सदा ॥
उपादेयानन्यता च स्वरूपेऽप्यविकारिता ।
पक्षेऽस्मिन्नुपपन्नैव ब्रह्मणः परमात्मनः ॥
वाचो हि वामदेवादेर्ब्रह्मात्मत्वात्मदृष्टितः ।
प्रवृत्ता ननु शोभन्ते तत्त्वज्ञानसुसंस्कृताः ॥
न तावता स्वरूपैक्यं जीवात्मपरमात्मनोः ।
सुस्थे सति विशिष्टैक्ये विशेषणविशेष्ययोः ॥
स्वभावभेदो यस्तु स्यान्नियतः स तु वर्तते ।
आरम्भकारभ्यभावे विशिष्टे समवस्थिते ॥
न स्यात् स्वभावसाङ्कर्यं विशेषणविशेष्ययोः ।
यथास्वमन्यथाभावो ह्युपादेये प्रवर्तते ॥
समारब्धे पटे शुक्लपीतरक्तादितन्तुभिः ।
शुक्लादिवर्णसम्बन्धो नियतस्तत्तदंशतः ॥
प्रशासनविशेषैकलक्षणा या शरीरिता ।
शरीरस्थौल्यसौक्ष्म्याभ्यामवस्था सा विभिद्यते ॥
आरम्भकारभ्यभावावस्थाभेदेन तेन हि ।
प्रशासनैकवैचित्र्यं प्रसजेत् परमात्मनि ॥
न स्वरूपविकारस्यापादकं स्यात् कथञ्चन ।
शरीरयोश्चिदचितोश्चिदंशे न च विक्रिया ॥
सङ्कोचो वा विकासो वा तत्प्रभाज्ञान एव हि ।

विकरोति स्वरूपेण स्वभावेनाप्यचित्तु यत् ॥
सर्वोऽप्यवस्थाभेदोऽयं शरीरे यस्तु जायते ।
नियन्तुरात्मनस्तस्य सत्तयैव प्रवर्तते ॥
तस्मात् सद्वारकोऽप्येष मुख्यस्तु परमात्मनः ।
इत्थं च ब्रह्मणो मुख्यमुपादानत्वमक्षतम् ॥
उपादानानन्यता च सिद्धोपादेयवस्तुनि ।
येनैकेन श्रुतेनेदमश्रुतं भवति श्रुतम् ॥
इति प्रतिश्रुतं यच्च श्रौतं तच्च सुसङ्गतम् ।
उपादानात् सतोऽनन्यद्रुपादेयमिदं खलु ॥
ब्रह्मैव स्थूलचिदचिद्वपुर्विश्वमिदं ननु ।

यानि च गुणनिषेधवचनानि तानि तु गुणवचनानुरोधेन हेयगुणनिषेधमवबोधयन्ति सन्ति चरितार्थानि भवन्ति । एवं विधिनिषेधवचनयोर्विषये विभिन्ने को विरोधः, अयं चानयोर्विषयविभागः 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प' इति श्रुत्यैव गम्यते ।

गुणनिर्गुणवादानां भेदाभेदगिरां तथा ।
अविरोधेन नयने श्रुतिसिद्धे सुसंस्थिते ॥
परैरत्र कृतो युक्तो नापच्छेदनयाश्रयः ।
अविरोधेन नयनं श्रुतीनां ननु शोभते ॥
न त्वन्यतरबाधेन स नयोऽप्यत्र नोचितः ।
प्रयोगे स ह्यनियतपौर्वापर्यविरोधके ॥
तथा च वेदवेदान्तवेद्यः सर्वतनुर्हरिः ।
स्थूलयन् सूक्ष्मयंश्चापि स्वं रूपं विहरत्यसौ ॥

अनेन ब्रह्मणैकात्म्यमिदं सर्वत्र पश्यतः ।
अधस्तादहमेवाहमुपरिष्टादहं पुरः ॥
अहं पश्चादुत्तरतोऽप्यहं दक्षिणतस्तथा ।
अहमेवेदमखिलमित्येव स्यादहङ्ग्रहः ॥
आत्मयाथात्म्यविज्ञानविधुराणां ह्यहङ्ग्रहः ।
तनुमात्रे ननु भवत्यर्थानर्थभ्रमावहः ॥
स्वात्मनोऽपि तमात्मानं शास्त्रदृष्ट्याऽनुपश्यतः ।
अहङ्ग्रहो ह्यभिपतेत्तस्मिन् सर्वशरीरिणि ॥
प्रतिष्ठा स हि सर्वासां बुद्धीनां च गिरामपि ।
वेदान्तश्रवणादेव सोऽयं सद्भ्योऽवगम्यते ॥
अतएवाखिला वेदाः केवलं मुखभेदतः ।
यान्ति सर्वतनौ विष्णौ प्राधान्येन समन्वयम् ॥
वेदस्य परमं हार्दं वेदान्तैरेव गम्यते ।
अज्ञातश्रुतितात्पर्या अश्रुतश्रुतिमौलयः ॥
रमन्ते फलवादेषु स्वतन्त्रात्मभ्रमादमी ।
रागद्वेषौ जनयति सोऽयमात्मविपर्ययः ॥
संसारविषवृक्षोऽयं याभ्यामेव विवर्धते ।
पशवो जातमात्राश्च नैवोन्मीलितलोचनाः ॥
पिण्डादन्यन्न जानन्ति शिरःपाण्यादिलक्षणात् ।
उन्मील्य लोचनं किञ्चित् पश्यतां दर्शनान्यपि ॥
ग्राहयन्त्यन्यथाऽऽत्मानं तर्कस्वातन्त्र्यदोषतः ।
आत्मानमेकं सर्वस्य नैतेष्वेकोऽपि पश्यति ॥

अपास्तमिदमेतेन परैर्यदभिमन्यते ।
कर्तृकर्मक्रियाभेदालंबिकर्मावबोधिनः ॥
आत्मावबोधिवेदान्तैर्वेदस्यैव प्रबाधनम् ।
यस्यान्तर्यामिणः प्रोक्ता वेदान्तैः समुपास्यता ॥
वेदैस्तस्य विधीयन्ते सपर्यास्तनुभेदतः ।
अत एव च वेदानामन्यान्यार्थाभिधायिनाम् ॥
तात्पर्यभूमिरेकैव परमात्माऽखिलात्मकः ।
एकत्वेन पृथक्त्वेन सतः सर्वतनोर्हरेः ॥
इज्याभेदोपास्तिभेदान्ननु श्रावयति श्रुतिः ।
वेदवेदान्तयोरेवं सौहार्दे समवस्थिते ॥
कः प्रसङ्गो विरोधस्य येन बाधः प्रकल्प्यते ।
सुव्यक्तं श्रूयते चापि साहित्यं ज्ञानकर्मणोः ॥
सह यो वेद विद्यां चाविद्यां चाविद्यया तु सः ।
तीर्त्वा मृत्युमवाप्नोति त्वमृतं विद्ययेति हि ॥

तथाच—यानीमानि कारणवाक्यानि 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम्' 'सोऽकामत बहु स्यां प्रजायेयेति स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वमसृजत । यदिदं किञ्च । 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् ।' 'असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मानं स्वयमकुरुत ।' 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति । दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी

विश्वस्य धारिणी ।' 'तस्मादग्निः समिधो यस्य सूर्यः ××× तस्मादृचः सामयजूंषि ×× तस्माच्च देवा बहुधा संप्रसूताः ×× सप्त प्राणाः प्रभवन्ति तस्मात् ×× अतः समुद्रा गिरयश्च सर्वे ×× येनैष भूतैस्तिष्ठते ह्यन्तरात्मा' 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम् । तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् । यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ।' 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत्' 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ×× तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत ×× ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति । ता अन्नमसृजन्त' 'आत्मैवेदमग्र आसीत्पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् । सोऽहमस्मीत्यग्रे व्याहरत् ततोऽहंनामाभवत् ।' 'ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः ब्रह्माध्यतिष्ठद्भुवनानि धारयन्' इत्यादीनि परिणामवादे स्वरसगतीनि ब्रह्मणः सकलकार्यनिमित्तोपादानतावबोधकानि ब्रह्मण एव स्वेतरसमस्तवस्तुप्रकारस्य स्वतनुभूतचिदचिद्द्वारेण स्थौल्यसौक्ष्म्यलक्षणावस्थाभेदयोगेनोपादेयोपादानभावयोगात् ज्ञानशक्त्यादिगुणयोगेन निमित्तकारणतान्वयाच्च सुसङ्गतानि । नैतेष्वेकमपि वाक्यमध्यासवादे स्वरसगतिकम् । नवा निर्विशेषे वस्तुनि तत्समन्वयः । यानि चास्य परमकारणस्य परस्य ब्रह्मणः पारमैश्वर्यावबोधकानि वाक्यानि 'भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' 'को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । ××× भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः ।

भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ।' 'अथ य आत्मा सेतुर्विधृतिरेषां लोकानामसम्भेदाय' 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः । एतस्य वाऽक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः । एतस्य वाऽक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता ××× स्तिष्ठन्ति । एतस्य वाऽक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते ××× यां यां च दिशमनु । एतस्य वाऽक्षरस्य प्रशासने गार्गि ददतो मनुष्या ××× अन्वायत्ताः' 'एतस्मिन्नु खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च' 'अन्तः प्रविष्टः शास्ता जनानाम्' 'यः पृथिव्यां तिष्ठन् ××× यः पृथिवीमन्तरो यमयति' 'य आत्मनि तिष्ठन् ××× य आत्मानमन्तरो यमयति ।' इत्यादीनि तानि परस्य ब्रह्मणः पारमार्थिकविभूत्यभ्युपगमात्स्वाभाविकपारमैश्वर्ययोगेन सुसङ्गतानि । यानि च जीवेश्वरभेदवचनानि 'य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो विजुगुप्सते' 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' 'अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः' 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते । अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ।' 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ।' 'एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः । स परेऽक्षरे आत्मनि संप्रति-

ष्टते।' 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा।' 'आविः संनिहितं गुहाचरं नाम महत्पदम्। एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्वरिष्ठं प्रजानाम्' 'यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि। दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठितः।' 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति। समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः।' 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति।' 'गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु। कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति।' 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः'। "अयमात्मा सर्वेषां भूतानां मधु अस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषः............स वाऽयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चाराः समर्पिताः एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्वे एत आत्मानः समर्पिताः" 'एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तः' 'तेन प्रद्योतेनैष आत्मा निष्क्रामति' 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' 'ज्ञाज्ञौ द्वावजावीशानीशौ' 'अजा ह्येका भोक्तृभोगार्थयुक्ता,' 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' 'तिलेषु तैलं दधनीव सर्पिरापः स्रोतःस्वरणीषु चाग्निः एवमात्मा आत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति' 'य एको जालवानीशत ईशनीभिः सर्वान् लोकानीशत ईशनीभिः' 'ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढम्। विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वाऽमृता भवन्ति।

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय । यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ।' 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः । मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम् ।' 'अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः । बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रोऽह्यवरोऽपि दृष्टः ॥ वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' । 'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् । न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । स कारणं करणाधिपाधिपः' इत्यादीनि तान्यपि पारमार्थिकजीवात्मपरमात्मभेदाभ्युपगमात्सुसङ्गतानि । यानि चाभेदवचनानि—'योऽसावसौ पुरुषः सोऽहमस्मि' 'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते । यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ।' 'यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' । 'पुरुष एवेदं विश्वम्' 'सर्वं खल्विदं ब्रह्म' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' 'स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वम्' 'अहमेवाधस्तादहमुपरिष्टात् × × × अहमेवेदं सर्वम्' 'आत्मैवाधस्तादात्मोपरिष्टात्×××आत्मैवेदं सर्वम्' 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ' 'मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव

पश्यति' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादीनि तानि तु सर्वस्य ब्रह्मात्मकत्वेनाब्रह्मात्मकवस्त्वभावेन तात्त्विकीमैकात्म्यदृष्टिमभिप्रेत्य विशिष्टाद्वैतैकोपदेशपराणि प्रवर्तन्ते इति अनन्यथासिद्धश्रुतिसिद्धचिदचिदीश्वरविभागमात्रप्रतिषेधे न प्रभवन्ति। यानि च गुणनिषेधपराणि 'निर्गुणं निरञ्जन'मित्यादीनि तानि तु 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपाद'मिति हेयगुणप्रतिषेधपूर्वकं 'नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनि'मिति गुणविशेषविधानश्रवणात् हेयगुणनिषेधमात्रे प्रवर्तन्ते। इह विस्तरशो निरूपणीयं निबन्धान्तरे निरूपयिष्यामः। प्रस्तावनाशरीरविस्तरभयान्नेह वितन्यते विशेषतो विवेचनम्।

सर्ववेदान्तवाक्यानां सौहार्देन समन्वयम्।
सत्तर्काञ्जनलिप्तेन पश्यद्भिर्मानचक्षुषा॥
विशिष्टाद्वैतसिद्धान्ते पूर्वाचार्यैः प्रदर्शिते।
प्रमाणपरतन्त्राणां प्रीतिमावहतां सताम्॥
प्रीणनायेह रचिता सेयं प्रस्तावना मया।
विवर्तवादप्रक्षेपे भूयान्नास्माकमाग्रहः॥
त्रय्यन्तवाक्यस्वारस्यं विशिष्टाद्वैतवादिनाम्।
निराबाधमितीदं तु मुख्यमत्र विवक्षितम्॥
विवक्षितांशव्यक्त्यै तु प्रास्तः परपरिभ्रमः।
किञ्च तैस्तैः प्रदृष्टेषु तत्त्वभेदेषु के वयम्॥
इदमेवमिदं नैवमिति कर्तुं विवेचनम्।
किन्तु त्रय्यन्तनिष्णातश्रीमदाचार्यदर्शितम्॥
त्रय्यन्तहार्दं सुव्यक्तमिह तावदनूदितम्।
इदं चोपनिषद्भाष्यं भेदाभेदसमन्वये।
विशिष्टाद्वैतसिद्धान्तमालम्ब्यैव प्रवर्तते।

प्रवेशमिच्छतामस्मिन् सिद्धान्तप्रतिपत्तये ॥
विशिष्टाद्वैतसिद्धान्तसारांशोऽयं निरूपितः ।
स जयति विश्वशरीरो विष्णुः सर्गादि यल्लीला ।
अनवद्यमङ्गलगुणः श्रुतिशिरसामेकवेद्यो यः ॥
को वा कार्त्स्न्येन वेत्तुं प्रभवति मितधीर्मादृशो वेदमूर्ध्नां
हार्दं, श्रीभाष्यकारैर्गतिमुपनिषदामक्षतां निर्वहद्भिः ।
त्रय्यन्तैकान्तवृद्धप्रथितगुरुवरक्षुण्णसन्मार्गनिष्ठै-
र्यद्व्याख्यानं व्यधायि प्रदिशति मम तद्ध्यत्र वाचोऽवकाशम् ॥

भगवद्रामानुजाचार्यैर्वेदार्थसङ्ग्रहे श्रुतिशिरसां पराभिमतव्याख्याननिरसनपूर्वकं परमात्मनि सर्वशरीरके तात्पर्यं प्रतिपादयद्भिः सद्विद्याविवेचनमुखेनोपनिषदामर्थगतिः प्रदर्शिता । अनयैव गत्याऽन्येषामप्यौपनिषदवचनानामर्थः सुखाववोध इति न प्रतिपदमुपनिषदो दशाऽपि व्याख्याताः । अथैषां शिष्यशाखायामनुप्रविष्टेन श्रीमद्रङ्गरामानुजयतिना सकलदर्शनपारदर्शिना दशाप्युपनिषद ईशादयो विवृताः । परमेतद्विरचितभाष्यं श्रीभाष्यश्रुतप्रकाशिकादिविषयविचारैर्विशेषतस्तत्र तत्र समलङ्कृतं पूर्वमीमांसाविचारैश्च परिष्कृतमधिगतश्रीभाष्यादीनामेवार्थबोधनेनानन्दावहं न सर्वेषां सुखप्रतिपत्तये भवति । इदं तु भाष्यं सरलया शैल्या प्रवर्तमानं सुखेनार्थमवगमयति । विशिष्टाद्वैतसिद्धान्तमवलम्बमानानामुपकारकमेतत् । यद्यप्यस्ति नाम क्वचित्क्वचिद्वाक्ययोजनायां शब्दार्थेषु च भेदः पूर्वव्याख्यानतः । अथापि विशिष्टाद्वैतं तु न लेशतोऽप्यतिलङ्घते । तदिदं गुणैकदर्शिनां विदुषामानन्दायैव स्यात् ।

श्री. एं. कृ.

# शुद्धिपत्रम् ।



| पृ. | पं. | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ४४ | ९ | महामदं | मदामदं |
| ५८ | १८ | प्रलोमन | प्रलोभन |
| ७३ | १२ | प्रस्तौति | स्तौति |
| ९६ | ९ | तदात्मक | मदात्मक |
| २६७ | १५ | शिक्ति | शक्ति |
| २६९ | १ | त्तत्संसृष्टा | त्तत्संसृष्टा |
| २७१ | ३ | काशादि, आत्म | काशाद्यात्मन |
| ,, | ८ | ओषधीभ्य | ओषधीभ्यः |
| ३०९ | १८ | यथाऽडं | यथाऽण्डं |

## छान्दोग्योपनिषदि ।

| | | | |
|---|---|---|---|
| ८३ | ८ | नुपादिशति | नुपदिशति |

## बृहदारण्यकोपनिषदि ।

| | | | |
|---|---|---|---|
| ३ | १३ | यद्विजम्भते | यद्विजृम्भते |
| ४६ | १४ | ऽत एव | त एव |
| ४७ | १ | लक्षणान्यान्यानि | लक्षणान्यन्यानि |
| ५३ | १० | जसृत | सृजत |
| ५९ | ८ | नौपाधिकर्म | नौपाधिककर्म |
| ६९ | ११ | दिमाहुः | दिदमाहुः |
| ८४ | १७ | धृतवन्तिः | धृतवन्ति |
| ९१ | १० | आदिपुरुष | आदित्यपुरुष |
| १०८ | १२ | आपेक्षिकक्षयल | आपेक्षिकमक्षयल |

| पृ. | पं. | अशुद्धं | शुद्धम् |
|---|---|---|---|
| १२७ | २ | द्वतमिव | द्वैतमिव |
| १४५ | १८ | तदाहो | तदहो |
| १४८ | ४ | उ वलन्ति | उज्ज्वलन्ति |
| १५३ | २० | ष्कामन्ति | ष्कामति |
| १५४ | ३ | दुषमधिकृत्य | दुषोऽधिकृत्य |
| १५९ | ४ | तदबोध | तदवबोध |
| १८३ | २१ | ल्लोकाप्रैति | ल्लोकात्प्रैति |
| २३४ | ५ | व कश्चन | न कश्चन |
| २४५ | ५ | धिकोऽह्ययम् | धिको ह्ययम् |



# अनुक्रमणिका.







श्रीस्वामिनारायणो जयति ।

वाजसनेयसंहितान्तर्गता

# ईशावास्योपनिषत् ।

## श्रीगोपालानन्दस्वामिविरचितभाष्यसमेता ।



ॐ ईशा वास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥१॥

---

वेदाः स्तोतुं प्रवृत्ता यदनवधिमहानन्दमालक्ष्य दूरात्
प्रत्यावर्तन्त सर्गस्थितिलयमखिलस्यास्य येनामनन्ति ।
स्थाने दिव्येऽक्षरे यो निवसति सततं नित्यमुक्तानुषक्तः
सोऽयं कृष्णः कृपालुः स्वयमवति निजान्स्वामिनारायणो नः ॥१॥
विश्वात्मानमनन्तं व्याकृतदेवादिविविधभेदं तम् ।
कल्याणगुणनिकेतं कृष्णं वन्दे क्षराक्षरातीतम् ॥२॥
स्मृत्वा चरणसरोजे सहजानन्दस्य भगवतः साक्षात् ।
श्रुतिशिरसामहमधुना तनोमि विवृतिं सुबोधिनीं सरलाम् ॥३॥

स जयति विश्वव्यापी कर्मभिरखिलैः समाराध्यः ।
अनवद्यमङ्गलगुणो विचित्रशक्तिः श्रुतः श्रुतिषु ॥४॥
असौ यः पुरुषः पूषा येन व्याप्तमिदं जगत् ।
स ईशः सत्यधर्मैकदृष्टये नस्तमो हियात् ॥५॥

इयमुपनिषदुपदेशरूपा, उपदेशश्च ब्रह्मविद्यामधिकृत्य । तदुक्तमभियुक्तैः—'ईशा वास्यमिदं सर्वमित्यादि यदनूच्यते । शिष्यं प्रति गुरोरेतद्ब्रह्मविद्यानुशासनम्' इति । स्वतन्त्रात्मताभ्रमनिवृत्तये सर्वस्य ब्रह्मात्मकतां मुमुक्षानुरूपां वृत्तिमप्युपदिशति—ईशेति । जगत्याम्-लोके । यत्किञ्च जगत्—यत्किञ्च चराचरं चिदचिज्जातं वा । सर्वमिदम् । ईशा—ईष्ट इति ईट्, असङ्कोचतः सर्वनियन्ता तेन । वास्यं-व्याप्यम् । तेन—सर्वनियामकेन त्यक्तेन—दत्तेन ( लाक्षणिकोऽयमर्थः ) भुञ्जीथाः—शास्त्राविरुद्धं भोगं कुरु । कस्यस्विद्धनम्—कस्यापि द्रव्यम् । मा गृधः—माकाङ्क्षीरित्यर्थः । चेतनाचेतनयोरेकं स्वभावेन अन्यत्तु स्वरूपेणान्यथात्वं गच्छतीति चेतनाचेतनं जगदित्युच्यते । यद्वा-त्यक्तेन तेनेति विशेष्यविशेषणभावेनान्वयः । दोषानुचिन्तनेन त्यक्तेन तेन भोग्यभूतेन वस्तुनोपलक्षितः सन् भुञ्जीथाः । भोग्यजातं दोषानुचिन्तनेन त्यक्त्वा यावद्देहधारणोपयोगि शास्त्राविरुद्धं भुञ्जीथा इति भावः । यद्वा—मा गृधः—सर्वथाऽऽशां त्यज । ननु स्वीये धन आशा कुतस्त्याज्या ?, मैवम् । कस्यस्विद्धनम् ? धनमिति भोग्यं लक्ष्यते, कस्यस्विदित्याक्षेपे, धनमिति किं कस्यचिदस्ति ? न कस्यापि किञ्चित् । तत्कुतः ? ईशा वास्यमिदं सर्वं यत्किञ्च—अखिलमेव नियामकेन व्याप्तम्, अखिलमेव परंब्रह्मान्तःप्रविश्य नियमयतीति सर्वमेव

तच्छरीरम्, तस्मादखिलं ब्रह्मात्मकम्, तत्कस्य किं भोग्यमस्ति ? । तर्हि मुमुक्षोरप्यवर्जनीयो देहधारणोपयोगी शास्त्रीयो वा भोगः कथं घटेत ? त्यक्तेन तेन भुञ्जीथाः—मनसा त्यक्तेन तेनोपलक्षितः सन्भुञ्जीथाः, अहं कर्ताऽहं भोक्तेत्याद्यभिमानं त्यक्त्वा 'ब्रह्मार्पणं ब्रह्म हविः' इति न्यायेन शास्त्रीयं देहधारणोपयुक्तं भोगं भुञ्जीथा इति । ईशा वास्यमित्याभ्यामन्तःप्रविश्य नियमनं व्यज्यते ।

अत्रापरे समाश्रित्य वसेराच्छादनार्थताम् ।
ब्रह्मणेदं जगत्सर्वमाच्छाद्यमभिमन्वते ॥१॥
नैतेन सिद्ध्येन्मिथ्यात्वं सिषाधयिषितं तु यत् ।
नहि केनचिदाच्छन्नं मृषा भवितुमर्हति ॥२॥
सूर्यरश्मिसमाच्छन्नं नक्षत्रं किं मृषा भवेत् ? ।
शुक्तिस्वरूपे विज्ञाते रजतं बाध्यते परम् ॥३॥
ज्ञातेन तेन चेच्छन्नं तत्तु सत्यं तदा भवेत् ।
घृष्टचन्दनदृष्टान्तो विषमस्तु निदर्शितः ॥४॥
सलिलक्लेददौर्गन्ध्यं चन्दनांशगतं तु यत् ।
घृष्टांशस्य सुगन्धस्य भूयस्त्वादभिभूयते ॥५॥
आच्छाद्यं कथमीशत्वमाच्छादकनिरूपकम् ।
मन्यते यदि धर्म्यैक्यमीशेत्यस्वरसं तदा ॥६॥
घृष्टेन चन्दनेनेव ज्ञातेन ब्रह्मणैव हि ।
आच्छाद्यताऽस्य जगतो न स्वरूपसता भवेत् ॥७॥

---

१ त्यागश्चायमेव मुख्यः, न हि मनसा विधृतं हस्ततस्त्यक्तमित्येतावता त्यक्तमिति व्यपदेशमर्हति, त्यक्तं तु मनसा हस्ते सन्निहितमपि त्यक्तमेव ।

ज्ञातेनेति पदं तावदध्याहार्यं तदा भवेत् ।
तस्मान्मृषात्वावगमो नैतेन स्यात्कथञ्चन ॥८॥
किन्त्वीशा स्मर्यमाणेन व्यपेतप्रत्ययान्तरम् ।
आच्छाद्यमिदमित्येव वस्तुतोऽर्थः प्रतीयते ॥९॥
सेयं निध्यानकाष्ठैव ध्येयान्यादर्शनं तु यत् ।
न वा बाधः पदार्थानां तिरोधिः सा त्वदर्शनम् ॥१०॥१॥

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेऽतोऽस्ति न कर्म लिप्यते नरे ॥२॥**

मुमुक्षोरप्यवर्जनीयं विद्याङ्गं कर्मेत्याह—कुर्वन्नेवेति । 'शतं समाः' इति प्रायिकं वचनम्, यावज्जीवमित्यर्थः । मुमुक्षुरपि विद्यायामधिकृतो विद्यानिष्पत्तये कर्माणि फलाद्यभिसन्धिरहितानि यावज्जीवं कुर्वन्नेवेह लोके जिजीविषेत् । यद्यपि जिजीविषेदिति विधिः श्रूयते तथापि 'स्नात्वा भुञ्जीते'त्यत्र स्नान इव कर्मानुष्ठाने विधिर्योजनीयः । मुमुक्षोर्मम किं कर्मणा ?, मैवम् । त्वय्येवम्—अनिष्पन्नज्ञाननिष्ठे त्वयि विषय उक्तकर्मानुष्ठानमेवोचितम् । इतः—उक्तप्रकारात्, अन्यथा—प्रकारान्तरं नास्ति । मुमुक्षामात्रेण न सहसा ज्ञाननिष्ठासिद्धिः, तत्कर्मण्येवाधिकारस्ते, यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवस्तस्य कार्यं न विद्यते, न त्वादृशानामिति भावः । ननु कर्मफलेन बन्ध एव भवेत् ? मैवम् । न कर्म लिप्यते नरे—नरे—प्रकरणान्मुमुक्षौ, कर्म—उक्तं निष्कामं कर्म, न लिप्यते—न बन्धाय भवति । वस्तुतः कर्मस्वरूपपर्यालोचनायां यत्किञ्चिदपि यागादिकं कर्म सर्वतनोः परमात्मन

आराधनमेव, बुभुक्षाव्याकुलान्तःकरणा न जानन्तीत्येतावता न वस्तुस्वरूपं व्याहन्येत, तत्स्वरूपतः कर्म कस्यापि न बन्धाय, बुभुक्षो रागवशात्तु बन्धः, तदुपाधिकं तु बन्धकत्वं कर्मणः, न स्वरूपत इत्यभिप्रेत्य न कर्म लिप्यते नर इति सामान्यनिर्देशोऽपि सुसङ्गतः ।

धीकर्मणोर्विरोधं शैलवदविकम्प्यमाकलय्यात्र ।
अधिकृत्यानात्मविदं विहितं कर्मेति केचिदाचख्युः ॥१॥
आत्मविदामनुरूपे सन्न्यासे किं न कर्मलेशो वा ? ।
धीकर्मणोर्विरोधः कथमविचाल्यस्त एव जानन्ति ॥२॥
भिक्षाटनादिनियमं कर्म कथं ते न जानन्ति ।
यदि मन्यते विरोधो नानेनान्यैर्विरोधः कः ? ॥३॥
अपरिच्छिन्नविशुद्धब्रह्मात्मैकत्वविषयविज्ञाने ।
ब्राह्मण्याद्यभिमानाद्यदग्निहोत्रादि तद्विरोधाय ॥४॥
इति यदि विभावितं स्यात्कथमिह भिक्षाटनादिनियमो वा ।
यदि विदुषः सन्न्यासान्न मन्यते विधिनिषेधवश्यत्वम् ॥५॥
ननु विधिनिषेधभाक्को भुञ्जीथा मा गृधश्चेति ।
आत्मैकत्वज्ञाने न चोपदेश्यो न चोपदेष्टा च ॥६॥
यदि नामानिष्पन्ने ज्ञानिनि सन्न्यासविधिरेषः ।
तस्मिन्नाश्रमकर्माप्यवश्यमिष्येत नान्ततो गच्छेत् ॥७॥
व्यपगतसमस्तभावं मनो यदाऽऽत्मन्यनारतं रमते ।
प्रच्यवति कर्म सर्वं प्रसुप्तहस्तस्थतालवृन्त इव ॥८॥
यावन्नैवम्भूतस्तावत्कर्मानुवर्तते नियतम् ।
उपदेशादिकमखिलं स्यादिममधिकृत्य नैव तं सिद्धम् ॥९॥

तदिहाभिमतः को वा विरोधो ज्ञानकर्मणोः ।
येनाधिकारिभेदेन व्याख्याक्लेशोऽपि सह्यते ॥१०॥
अथवायं विवादस्तु न पृथक्पदमर्हति ।
मुक्तिसाधनविज्ञानविवादमनुगच्छति ॥११॥
तद्यथा स्वस्वसिद्धान्तं व्याचक्षाणो न दुष्यति ।
परं पदानां नयनं क्लिष्टं चेद्दूषणं तदा ॥१२॥ ॥२॥

**असुर्या नाम ते लोका अन्धेन तमसावृताः । ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥३॥**

विद्यायामविलम्बेन प्रवृत्तयेऽविदुषामनर्थमाह—असुर्या नामेति । असुरास्तमःप्रकृतयस्तेषामुपभोगार्था असुर्याः । नामेति प्रसिद्धौ, अतिभीषणत्वेन प्रसिद्धाः । अन्धेन तमसावृताः गाढान्धकाराविष्टाः लोकाः । सन्तीति शेषः । ते प्रेत्य–मृत्वा, ताँल्लोकानभिगच्छन्ति–प्राप्नुवन्ति । के ते ? ये के चात्महनः—आत्महनः–ब्रह्मज्ञानविधुराः । ब्रह्मज्ञानविधुरा ह्यात्मानमवसादयन्ति संसारकान्तारे, ततो ब्रह्मज्ञानविधुरा आत्महन उच्यन्ते । 'असन्नेव स भवति असद्ब्रह्मेति वेद चे'दिति श्रुतेश्च । ननु ब्रह्मज्ञानवैधुर्ये माभूदपवर्गः; स्यात्तु सुकृतसाध्यो लोकः, तत्कथमुच्यते नरकान्प्राप्नुवन्तीति तत्राह—जना इति । आत्महनो हि जनाः–जनिमन्तः, यदाकदाचिदेषणावेगेन ज्ञानानुष्ठानवैकल्यसम्भवेन नरकानभिगच्छन्तीति यावत् । यथा मन्दाकिन्या अपि वियत्तलात्प्रच्युताया निम्नगास्वाभाव्यादवर्जनीयः क्षारसागरसमावेशः क्रमशः, तद्वदेवात्मज्ञानविधुराणामेषणावेगयोगेन ज्ञानानुष्ठानादिवै-

परीत्यसम्भवेनावर्जनीयो निरयपात इति भावः । यद्वा—लोक्यन्ते अनुभूयन्त इति लोकाः—कर्मफलरूपा योनयः, ते च असुर्याः—आत्मज्ञानविधुरा एवासुराः, तेषामुपभोग्याः । यस्मिंस्तमसि नात्माऽपि लक्ष्यते तदन्धं तमः, तच्चात्मस्वरूपाज्ञानं देवोऽहं मनुष्योऽहमिति विपरीतज्ञानं, तेनाविष्टाश्च । तादृशानि नानाविधजन्मान्यभिगच्छन्तीति ॥३॥

अनेजदेकं मनसो जवीयो नैनद्देवा
आप्नुवन्पूर्वमर्षत् । तद्धावतोऽन्यानत्येति
तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥४॥

विरोधाभासमुखेन ब्रह्मणो वैलक्षण्यं दर्शयति—अनेजदिति । अनेजत् मनसो जवीयः, अत एवैकं पूर्वमर्षत्, एनद्देवा नाप्नुवन्, तत्तिष्ठदेव धावतोऽन्यानत्येति, तस्मिन्नवस्थितो मातरिश्वाऽपो दधाति । अनेजत्—एजृ कम्पने, अकम्पमानमित्यर्थः । अकम्पमानमपि मनसो जवीयः—वेगवत्, न हि मनोवेगस्याप्यगोचरं नाम किमपि, ब्रह्म तु तस्याप्यगोचरं तदुपचर्यते ततो जवीय इति । अधिकजवो मन्दजवेन न खलु गृह्यते । यद्वा—वेगस्य प्रयोजनं हि प्राक्सन्निधिः, यावन्मनः सङ्कल्पवेगेन क्वचित्सन्निधत्ते तत्र देशे प्रागेव ब्रह्मतत्त्वं सन्निहितं विभुत्वात्, तदुच्यते—मनसो जवीय इति । पूर्वमर्षत्—प्रागेव प्राप्तम्, एनत्—ब्रह्म, देवाः—ब्रह्मादयः, नाप्नुवन्—नाधिगतवन्तः । प्रथमत एव देशविशेषप्राप्तं पश्चात्तं देशमभिगन्तारो हि लभन्ते, सर्वदेवान्तर्यामिस्वरूपेण सन्निहितमेतद्ब्रह्म तु पश्चात्तना ब्रह्मादयो न जानन्त्यविद्यान्धाः, तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा

उपर्युपरि सञ्चरन्त इति भावः । तद्ब्रह्म धावतोऽन्यान् गरुडादीन-प्यत्येति—अतिक्रामति । यतो यतो धावेत्कश्चित्ततस्ततः परस्तादपीदं ब्रह्मतत्त्वं व्यापृतमिति भावः । तस्मिन्निति । तस्मिन्ब्रह्मणि, अवस्थित इति शेषः । मातरिश्वा—वायुः । अपः—इदमुपलक्षणम्, महीमहार्णवा-दिकमखिलं दधाति—धत्ते, इदमप्याश्चर्यं यत् वायुस्तस्मिन्ब्रह्मणि, स च धारणानुगुणकाठिन्यरहितोऽपि भुवनं धत्त इति । ब्रह्मावधृतो वायुस्तदाहितशक्तिको जगद्धत्त इति भावः । तथा च वचनम् 'द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः । वासुदेवस्य वीर्येण विधृतानि महात्मनः' इति । अनेन विचित्रशक्तियोगो दर्शितः । यद्वा—प्रथम-मन्त्रे व्यापकतया वर्णितस्येशस्य व्याप्याद्वैलक्षण्यमाह—अनेजदिति । व्याप्यमिदं जगत्कम्पमानं स्वरूपात्स्वभावाद्वा प्रच्यवत्, व्यापकं ब्रह्म तु स्वरूपतः स्वभावतो वा न कम्पते, न च्यवतीत्यर्थः, स्वरूपतः स्वभावतो वा न विकरोतीत्येतत् । व्याप्यमिदं जगन्नाना, व्यापकं तु ब्रह्म एकम्—सजातीयद्वितीयरहितम् । न च व्याप्ये जगति मन-सोऽप्यगोचरं नाम किञ्चित्, व्यापकं तु ब्रह्म मनसोऽप्यगोचरं अपरिच्छिन्नत्वात्, तदिदमुच्यते—मनसो जवीय इति । पूर्वम-र्षत् वेगवतो मनसः पूर्वमेव, अर्षत्—गतम्, ततोऽपि वेगवत्, तस्या-प्यगोचरमित्युक्तं भवति । एनत्—ईदृशं ब्रह्म, देवाः—इन्द्रियाणि, नाप्नु-वन्—नाध्यगच्छन् । मनसोऽगोचरे तस्मिन्निन्द्रियाणां का वार्तेति भावः । तत्—ब्रह्म, तिष्ठत्—क्वचित् स्थितमेव, तद्देशे सम्बद्धं सदेवेति यावत् । ततो धावतोऽन्यानत्येति—अतिक्रम्य वर्तते, व्यवहितदूरदेश-सम्बन्धि भवतीति यावत् । इदं हि परिच्छिन्नस्य न घटते, तत्सर्व-

देशसम्बन्धित्वरूपं विभुत्वं वैलक्षण्यमुक्तम् । मातरिश्वाऽपो दधातीति यत्, तदपि तस्मिन्—निरवलम्बे आकाशे पाथःप्रभृति बिभर्तीत्येतदपि वस्तुतः सर्वात्मनि तस्मिन्नेव । सर्वाऽपि विधरणशक्तिस्तस्मिन्नेवेति यावत् । एतेन व्याप्तेः फलं विधरणमुक्तम् । यद्वा—मातरिश्वाऽपो दधातीति यत्तदपि तस्मिन्नीश्वरे सति । ईशितुर्भयाद्वायुरिदं ग्रहनक्षत्रादिकमप्रकीर्णं धत्ते, 'भीषाऽस्माद्वातः पवते' इति श्रुतेरिति भावः ॥४॥

तदेजति तन्नैजति तद्दूरे तद्वदन्तिके । तद-
न्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥५॥

उक्तमेवार्थं मुखान्तरेणोपदिशति—तदेजतीति । स्वयं चलति न चलति च । विभुत्वान्न चलति चलनफलव्याप्तिमत्वाच्चलतीत्युक्तिः । दूरे चान्तिके च—अन्तरात्मतया सर्वदेशव्यापित्वात् । तत्—ब्रह्म, सर्वस्यान्तर्बहिश्च । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति श्रुतेः । इदमखिलं वैलक्षण्यज्ञापकम् । न हि लौकिकः कश्चिच्चलति न चलतीत्याद्युक्तस्वभावः । यद्वा—एजति चलति स्वतनुभूतेनानेन जङ्गमेन, नैजति स्वरूपतो न चलति । एजति—स्वासाधारणदिव्यमङ्गलविग्रहेण चलति, नैजति—स्वरूपान्न च्यवतीति वा । तद्दूरे—अविदुषां दूरे, अगोचरमिति यावत् । तद्वदन्तिके—तदेव विदुषां समीपे, गोचर इत्येतत् । अन्यद्यथाव्याख्यातम् ॥५॥

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥६॥

अखिलं ब्रह्मात्मकमनुसन्दधानस्य विशेषमाह—यस्त्विति । यः—

उपासकः, सर्वाणि भूतानि—स्वतन्त्रतया प्रतिभासमानानि विविधा-न्याब्रह्मस्तम्बपर्यन्तानि आत्मन्येव—परमात्मन्येकस्मिन्नेव अनुपश्यति—सूत्र इव मणीनिति यावत् । सर्वभूतेषु चात्मानं—एकं परमात्मानम्, पश्यतीत्यनुषङ्गः । मणिषु सूत्रं प्रविष्टमिवेति यावत् । सः—एवमनुसन्द-धानः, ततः—ब्रह्मात्मकतयाऽवगतेषु तेषु, न विजुगुप्सते—न निन्दां करोति । यः सर्वाणि भूतान्येकेन परमात्मनाऽन्तर्यामिस्वरूपेणानुप्र-विश्यावधृततया तदेकात्मकानि पश्यति न तस्य क्वचिदपि जुगुप्साव-काशः, स हि सर्वमेव ब्रह्मात्मकं ब्रह्मणस्तनुभूतं मन्यत इति भावः ॥६॥

**यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र**
**को मोहः कः शोक एकत्वमनुपश्यतः ॥७॥**

उक्तब्रह्मात्मकत्वोपासनस्य सद्यः शोकापनोदकत्वमाह—यस्मि-न्निति । विजानतः—विविच्य वस्तुतत्त्वं जानतः, यस्मिन्—उपासन-समये, आत्मैव सर्वमभूत्—नहि सर्वे विविच्य वस्तु जानन्ति, केचन देहमेवात्मानं जानन्ति, केचन देहादिविलक्षणं कर्तारं भोक्तारं प्रतिशरीरमप्यन्यान्यं केवलं प्रत्यगात्मानं स्वतन्त्रतम्, यस्तु तानप्या-विश्य सर्वात्मना धत्ते नियमयति च तमेकमखिलस्याप्यात्मानं सर्व-तः स्वतन्त्रं न जानन्ति, अखिलं चेदं सचेतनं तदेकधार्यं तच्छरीरमिति च न जानन्ति, कश्चिदेव तु जानातीदृशं शरीरात्मविवेकं शास्त्रतः, यदा च विजानाति तदा तमेवाद्वितीयं स्वतन्त्रमात्मानं सर्वभूतप्रका-रमुपासीत, सर्वेषामेव तच्छरीरतया प्रकारत्वेनावगमात् । एवमनु-ध्यायतो नहि परमात्मनोऽन्यत्स्वतन्त्रं प्रतीयेत, यस्मिन्समय एवं

विदितमभूत् तस्मिन्समय उक्तरीत्या शरीरिण एकत्वमनुपश्यतः को मोहः, अहं ममेति स्वतन्त्रात्मभ्रमाप्रसक्त्या तन्मूलमोहशोकादेरनवकाश इति भावः ॥७॥

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्। कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥८॥

एवं सर्वप्रकारं परं ब्रह्म परमात्मानमुपासीनस्य ब्रह्मानुभवविशेषमाह—स इति । सः—सर्वभूतान्तरात्मभूतब्रह्मदर्शी। शुक्रम्—स्वप्रकाशरूपम् । अकायम्—प्राकृतकायशून्यम् । अत एवाव्रणम्—व्रणशून्यम्, अक्षतमिति यावत् । अस्नाविरम्—स्नायुशून्यम् । शुद्धम्—अशनायादिदोषरहितम् । अपापविद्धम्—पुण्यपापरूपकर्मभिरनालीढम् । एवम्भूतं परं ब्रह्म पर्यगात्—समाधिदशायां परितः प्राप्तवान्, सर्वतस्तमेवान्तर्यामिणमनुबभूवेति यावत्। 'अत्र ब्रह्म समश्नुत' इतिवत्सिद्धानुवादः। स ब्रह्मविदेवम्भूतश्चेत्याहोत्तरार्धेन । कविः—क्रान्तदर्शी । मनीषी—मनस ईशित्री बुद्धिर्मनीषोच्यते तद्वान्, निगृहीतान्तःकरण इत्येतत् । परिभूः—परिभवत्यरिषड्वर्गमिति परिभूः विजितारिषड्वर्गः । स्वयम्भूः—इतरनिरपेक्षः । शाश्वतीभ्यः समाभ्यः—यावद्विद्यानिष्पत्ति तावच्चिरकालपर्यन्तम् । अर्थान्—उपनिषदर्थान् । व्यदधात्—मनसि विविच्य रक्षितवान् । एवंभूत उपनिषदर्थचिन्तकः सर्वभूतान्तरात्मब्रह्मोपासक उपासनवेलायां निखिलहेयप्रतिभटमखिलान्तर्यामिणं सकलकल्याणगुणाकरं ब्रह्म सर्वतः साक्षात्कृत्यानुभवतीति भावः ।

यद्वा-प्रसक्तं परमात्मानमनुवर्णयति—स इति । सः-यः सर्वान्तरात्मा अकायमव्रणमस्नाविरं शुद्धमपापविद्धमक्षर[1]स्वरूपमपि व्याप्य तिष्ठतीत्यर्थः । सः याथातथ्यतः-सत्यतया अर्थान्-जगद्रूपान् शाश्वतीभ्यः समाभ्यः-बहुसंवत्सरेभ्यः, चिरकालस्थायितयेति भावः । व्यदधात्-सृष्टवान् । याथातथ्यत इति प्रातिभासिकत्वव्यावृत्तिः । शाश्वतीभ्यः समाभ्य इति स्वाप्नव्यावृत्तिः । ते हि सत्यभूता अपि कतिपयक्षणावस्थायिनः ॥८॥

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । ततो
भूय इव ते तमो य उ विद्यायां रताः ॥९॥

केवलकर्मावलम्बिनां केवलज्ञानावलम्बिनां चानर्थमाह—अन्धं तम इति । ये-भोगैश्वर्यप्रसक्ताः । अविद्याम्-केवलं कर्म । उपासते-एकान्तमनसाऽनुतिष्ठन्ति । ते अन्धं तमः-गाढमज्ञानं प्रविशन्ति, संसारं प्रविशन्तीति यावत् । ये विद्यायां उ-विद्यायामेव, केवलविद्यायामेव रताः । ते ततः-कर्मनिष्ठातः भूयस्तमो विशन्ति-अधिकं तमः प्राप्नुवन्ति । ये कर्मणा नः किं मुमुक्षूणामिति सर्वथा कर्मावधीर्य ज्ञानयोगे यतन्ते ते सर्वथाऽनर्थभागिनो भवन्ति कर्मणस्त्यागात् ज्ञानस्य चासिद्धेरिति भावः ॥९॥

अन्यदेवाऽऽहुर्विद्ययाऽन्यदाहुरविद्यया । इति
शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥१०॥

---

१ 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् । यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' इत्युक्तमक्षरस्वरूपम् ।

तर्हि मोक्षसाधनं किमित्यत्राह—अन्यदेवाहुरिति । विद्यया—विद्यातः; केवलविद्यातः अन्यदेव, अविद्यया—अविद्यातः केवलकर्मतः अन्यदेव मोक्षसाधनमाहुः । पञ्चम्यर्थे तृतीया । पञ्चम्यन्त एव पाठः केषाञ्चित् । ये नः तत्—कर्मज्ञानोभयं मोक्षसाधनं विचचक्षिरे—उपादिशन् । तेषां धीराणाम् । वचनमिति शेषः । शुश्रुम—श्रुतवन्तो वयम् ॥१०॥

विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अवि-
द्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥११॥

तदेव विवृणोति—विद्यां चेति । विद्यां चाविद्यां च—कर्मज्ञानमुभयमपि । यः । सह वेद—साहित्यमेकफलकत्वमङ्गाङ्गिभावेन वेदेति यावत् । सः । अविद्यया—कर्मणा । मृत्युम्—विद्याविरोधिपापम् । तीर्त्वा—सन्तीर्य । विद्यया—लब्धेनोपासनेन । अमृतम्—मोक्षम् । अश्नुते ॥११॥

अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्यां रताः ॥१२॥
अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् । इति
शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥१३॥
सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥१४॥

उक्तमेव ज्ञानकर्मणोरङ्गाङ्गिभावं पुनराह—अन्धं तम इति । न हि जामिता श्रुतीनाम् । सम्भूतिरित्युत्पादविनाशशालि कर्म प्रोच्यते । असम्भूतिरिति तच्छून्यमात्मस्वरूपमुच्यते । येऽसम्भूति-

मुपासते—किमेभिः कर्मभिः; नित्यात्मस्वरूपमेव वयं चिन्तयाम इति ये मुमुक्षामात्रेणावधूय कर्म केवलज्ञाननिष्ठायां प्रवर्तन्ते । तेऽन्धं तमः प्रविशन्ति—ज्ञाननिष्ठाऽसिध्या संसारमेव प्राप्नुवन्ति । ये सम्भूत्यां, उकार एवार्थः, सम्भूत्यामेव—केवलकर्मण्येव रताः । ते ततो भूयः अन्धं तमः प्रविशन्ति—विषयव्याकुलचित्ततया नरकमपि प्राप्नुवन्ति । सम्भवात्—केवलकर्मतः अन्यदेव मोक्षसाधनमाहुः । असम्भवात्—आत्मन उपास्यमानात्, आत्मोपासनादित्येतत्, केवलात्मोपासनादिति भावः, अन्यदेवाहुः—मोक्षसाधनमाहुः इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे—व्याख्यातम् । सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह—सम्भूतिमित्यवर्णलोपेन निर्देशः, असम्भूतिम्—आत्मोपासनम्, ज्ञाननिष्ठामित्येतत्, विनाशशब्देनोत्पादशब्देनाभिसंहितं कर्मोच्यते, ज्ञानं कर्म चेत्यर्थः । यस्तद्वेदोभयं सह—अङ्गाङ्गिभावेन वेद । विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते—व्याख्यातप्रायम् । यद्वा—एवं मुक्तिसाधनं परमात्मोपासनं कर्मयोगाङ्गकमुक्तम्, अथोपासकेन फलपर्वणोः प्रतिबन्धनिवृत्तिब्रह्मप्राप्त्योरुभयोरप्यनुसन्धानं कर्तव्यमिति वक्ष्यन्नादावेकैकमात्रानुसन्धानं निन्दति—अन्धमिति । 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानी'त्यत्राभिहिता प्राप्तिः सम्भूतिः, ततोऽन्याऽसंभूतिः । 'अब्राह्मण' इत्यादौ यथा ब्राह्मणादन्यः क्षत्रियः सान्निध्यादुपस्थाप्यते तथा प्रकृते ब्रह्मप्राप्तेरन्या तत्सन्निहिता पूर्वभाविनी प्रतिबन्धकनिवृत्तिरूपात्यन्तिकप्रकृतिनिवृत्तिरसंभूतिशब्देन बोध्यते । तामेव ये उपासते—ये प्रकृतिसंबन्धनिवृत्तिमात्रं फलतया चिन्तयन्ति न ब्रह्मप्राप्तिम् । तेऽन्धं

तमः प्रविशन्ति—ब्रह्मानुभवरहितं कैवल्यं विशन्ति । ब्रह्मानुभवाभावात्तदन्धं तम इत्युपचर्यते । ये आत्यन्तिकप्रकृतिविनिर्मोकचिन्तनं विहाय केवलं ब्रह्मसंपत्तिमात्रं चिन्तयन्ति ते कस्याप्यलाभेन जीवन्नेव मुक्तोऽस्मीति वादिन इव ततो भूय इवान्धं तमः प्रविशन्ति । उपासकस्य गतिचिन्तनं यथोपासनाङ्गं तथा 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानी'त्युक्तप्रकारेण प्रकृतिनिवृत्तिब्रह्मप्राप्त्युभयचिन्तनमुपासनाङ्गमिति तयोरेकचिन्तनवैधुर्येऽप्यङ्गवैकल्येनोपासनासिद्ध्या पुरुषार्थालाभेनैकैकमात्रचिन्तकानां निन्दामात्रे पर्यवसत्यन्धं तमः प्रविशन्तीति । अन्यदेवाहुः संभवात्—संभवात्—ब्रह्मप्राप्तिरूपात्फलपर्वणश्चिन्त्यमानात्, ब्रह्मप्राप्तिचिन्तनमात्रादित्यर्थः । अन्यदेव मोक्षसाधनमाहुः । असंभवात्—प्रतिबन्धकनिवृत्तिमात्राच्चिन्त्यमानात्, प्रतिबन्धकनिवृत्तिचिन्तनमात्रादित्येतत् । अन्यदेव मोक्षसाधनमाहुः । ये नः तत्—मोक्षसाधनमनुसन्धानविशेषम् । विचचक्षिरे—उक्तवन्तः । तेषां धीराणां वचनं शुश्रुम । न केवलमिष्टप्राप्तिचिन्तनमनिष्टनिवृत्तिचिन्तनं वा मोक्षाय किन्तूभयचिन्तनमपेक्षितमिति भावः । इदमेव स्फुटं कथयति—सम्भूतिं चेति । सम्भूतिम्—ब्रह्मप्राप्तिरूपं फलपर्व, विनाशम्—आत्यन्तिकप्रकृतिनिवृत्तिरूपप्रतिबन्धकनिवृत्तिरूपफलपर्वान्तरम्, उभयं यः सह वेद—सहानुसन्धेयत्वेन वेद । शिष्टं व्याख्यातप्रायम् ॥१२–१४॥

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥१५॥**

अथोपासकेनोपासनानिष्पत्तये कर्तव्यं भगवत्प्रार्थनाप्रकारमाह—हिरण्मयेनेति । अयमेव ह्युपासनोपायेषु मुख्योपायः, यावत्परमात्मा प्रार्थनया न वशीक्रियते तावत्कर्मयोगादिकमपि दुःसंपादम्। अत एव 'इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥' इति वशीकार्यतायां परमात्मनः प्राधान्यं श्रूयते । न हि परमात्मनः प्रसादादृते प्रयत्नशतेनापि मनोनैर्मल्यादि सिद्ध्येत् । उक्तं च गीतायां 'दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥' इति । सत्यस्य—जीवस्य परब्रह्मणो वा, उभयस्य वा । सत्यशब्दः 'सत्यं चानृतं चे'त्यात्मन्यपि श्रुतः । सर्वतः सत्यत्वात् ब्रह्मणि च । मुखम्—द्वारं, मनसा हि द्वारेण आत्मस्वरूपं गृह्यते, तन्मनः सत्यस्य मुखमित्युच्यते । तद्धिरण्मयेन पात्रेणापिहितम् । हिरण्मयशब्दोऽत्र प्रलोभकपरः । आच्छादनसाधनत्वात्पात्रमिति रूपकोक्तिः । प्रलोभकेन शब्दादिविषयेणेति यावत् । अपिहितम्—आच्छन्नम्, विषयवासनयाऽऽत्मस्वरूपे विरुद्धवृत्तिकमिति भावः । इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः, तदहं किं करोमि, सर्वथा त्वमसि सर्वरक्षकः, तत्त्वं पूषन्नपावृणु—पूषन्—हे सर्वरक्षक तत्—उक्तमाच्छादनम्, अपावृणु—उद्घाटय । मनसो विषयवासनादूषितत्वमपनयेत्यर्थः । कस्मै प्रयोजनाय ? दृष्टये—'आत्मा वाऽरे द्रष्टव्यः' इत्युक्तदृष्टिविशेषाय । उपासनासिद्ध्यर्थमिति यावत् । तदपि कस्मै ? सत्यधर्माय—सत्यं धर्मं प्राप्तुम् । यश्चायं मनुष्यत्वादिधर्मः स त्वौपाधिकः, स्वाभाविको धर्मः

सत्यो धर्म उच्यते; तच्च प्रजापतिवाक्योदितमपहतपाप्मत्वादिकम्, तन्निष्पत्तय इति भावः । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तप्रकारेण स्वस्वरूपाविर्भावं प्राप्तुमपेक्षितो यो दृष्टिविशेषस्त्वदुपासनं तन्निष्पत्तये । तन्मनसो विपरीतवासनादोषं त्वमेवापनय, नान्यः शरणमिति भावः । यद्वा—सत्यत्वमिह कालत्रयसंबन्धित्वम्, धर्मः—श्रेयःसाधनम्, स च द्विविधः, सिद्धसाध्यभेदात् । तत्र साध्यः कर्माद्युपासनान्तः समग्रोऽपि, सिद्धस्तु तैः प्रसाद्यो भगवान्, तदनयोः सिद्ध एव तु धर्मः कालत्रयसंबन्धात्सत्यो धर्म उच्यते, तस्मै सत्यधर्माय, तं प्रसादयितुमित्यर्थः । दृष्टये—साध्यधर्मरूपायोपासनाय अपावृण्विति पूर्ववदन्वयः । व्याख्याद्वयेऽपि सत्यधर्मायेत्यत्र 'एधोभ्यो व्रजती'त्यत्रेव चतुर्थी बोध्या । यद्वा—सत्यधर्माय दृष्टय इति विशेष्यविशेषणभावेनान्वयः । दृष्टिफलस्य ब्रह्मणः सत्यत्वात्तत्प्रापकधर्मे सत्यधर्मत्वोक्तिः ॥१५॥

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् ।
समूह तेजो यत्ते रूपं कल्याणतमं तत्ते
पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि ॥१६॥

एवं परमात्मसाक्षात्काराय मनसो नैर्मल्यप्रार्थनमुक्तम् । अथ निर्मलेऽपि मनसि तदीयदिव्यमङ्गलविग्रहतेजोराशेर्दुष्प्रेक्षतया तदेकदर्शनलालसस्य परमात्मभक्तस्य दुष्प्रेक्षोग्रतरतेजोराशेरुपसंहरणार्थः प्रार्थनाप्रकार उच्यते—पूषन्निति । पूषन्—सर्वशरीरत्वात्सर्वशब्दवाच्यत्वेन पूषन्नित्युक्तिः । यद्वा—पूषन्—आश्रितपोषक । एकर्षे—ऋषि-

रतीन्द्रियदर्शी एकर्षिः—अद्वितीयोऽतीन्द्रियदर्शी, सर्वं सर्वतः सर्वदा स्वयं साक्षात्कर्तुं क्षम इति यावत् । यमयतीति यमः, सर्वमन्तःप्रविश्य नियमयसीत्येतत् । सूर्य—सुष्ठ्वाश्रितानां धियमीरयति यस्तस्य संबुद्धिः, 'ददामि बुद्धियोगं त'मिति स्मरणात् । प्राजापत्य—स्वार्थे ष्यञ्, हे प्रजापते ! 'पतिं विश्वस्ये'ति श्रुतेः । रश्मीन्—भवदीयदिव्यदेहरश्मीन् । व्यूह—क्षणमात्रमुपसंहर, वयमसमर्थास्तद्दर्शन इति भावः । यत्तेजोऽस्मन्नयनसुखावहं तत्समूह—पुञ्जीकुरु । यत्कल्याणतमं ते रूपम्—सकलमङ्गलावहं ते रूपम्, तत्पश्यामि—पश्येयमित्यर्थः । छान्दसः प्रयोगः । कोटिसूर्यप्रकाशवदत्युग्रं तेज उपसंहृत्य मादृशजनदर्शनक्षमं सौम्यं तेजः स्वीकृत्य दिव्यामृतमत्याह्लादकं दिव्यरूपं मम लोचनसात्कुर्विति भावः । ईदृशे दिव्यतेजसि प्रणष्टदृष्टयः कतिचन भगवत्प्रसादविमुखा अविग्रहं भगवन्तमाहुः । श्रुतिस्तु जागर्ति या भगवतः परब्रह्मणो दिव्यं रूपं बोधयति—'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः' 'रुक्माभं स्वप्नधीगम्यं' 'आत्मैवेदमग्र आसीत्पुरुषविधः' 'आदित्यवर्णं तमसस्तु पारे' 'सर्वकर्मा सर्वगन्धः सर्वरसः' 'यदा पश्यः पश्यते रुक्मवर्ण'मिति । योऽसौ पुरुषः अहं सोऽसावस्मि—सकलजगद्व्यापकत्वेन यः पुरुष उक्तः सोऽहमस्मि । एतेन स्वातन्त्र्यभ्रमनिवृत्तिरुक्ता । एवं त्वत्पारतन्त्र्यानुसन्धानयुक्ताय मह्यं कल्याणतमं रूपं दर्शयेति भावः । यद्वा—योऽसौ पुरुषः 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प' इति स्वाभाविकरूपेण श्रूयमाणः पुरुषः प्रत्यगात्मा सोऽहमसीत्यर्थः । एतेन देवाद्याकार-

भ्रमनिवृत्तिपूर्वकपरिशुद्धात्मस्वरूपानुसन्धानमुक्तम् । तदेवं प्रकृतिविविक्तात्मज्ञानवते मह्यं पात्रभूताय दिव्यरूपं दर्शयेति भावः ॥१६॥

वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् । ॐ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥१७॥

अथोपासकस्य प्रकृत्यात्मविवेकानुसन्धानपूर्वकमन्तिमस्मरणमुच्यते—वायुरिति । वातीति वायुः—गन्ता, वा गतिगन्धनयोः । यद्यपि कर्मणा देवादिनानादेशेषु गच्छति तथाप्यनिलः—स्वभावतो निलयनरहितः, उपाधितो देहादिसंबन्धेऽपि स्वभावतस्तद्रहित इति भावः । यद्वा—वायुः—वायुवत्सूक्ष्मत्वात्सर्वत्र भूतेषु व्यापनशीलः । व्याप्येभ्यः स्थूलेभ्यो भूतेभ्यः व्यापकोऽयं सूक्ष्मः प्रत्यगात्मा विलक्षण इति भावः । अनिलः—यथा वायुः सततगमनशीलो न नियतनिलयनस्तथाऽयं कर्मणाऽन्यान्यदवगाहमानो न नियतदेवादिदेहनिलयनः । यथा सततगतेर्वायोर्नैकप्रदेशोऽसाधारण्येन निरूपणायालम्, तस्माद्देहादिभिरसाधारण्येन यो व्यवहारः स भ्रान्तिकृत इति भावः । अमृतम्—यथा वायुस्तत्र तत्र प्रविष्टोऽपि तदीयदोषेण न लिप्यते तथाऽयं देहेषु विशन्नपि तदीयजरामरणादिभिर्न लिप्यते, सन्निकर्षाच्चारोप्यते केवलं जरामरणादिकं वायाविव गन्धादिकमिति भावः । अथेति प्रकरणभेदे । इदम्—रमणीयतया भोगसाधनतया च दृश्यमानम् । शरीरम्—विशरणस्वभावं वपुः । भस्मान्तम्—अग्निसात्कृतं भस्मान्तम्, इदमुपलक्षणं कीटान्तस्य, तथैव परित्यक्तं कीटान्तम् । रमणीयतया प्रतीयमानस्यास्य वपुषः परिणामगतिस्तु भस्मकीटाद्यात्मनेति भावः । एवं

प्रकृत्यात्मविवेकमनुसन्धाय ओमिति व्याहरंस्तद्वाच्यं परंब्रह्मानुसरति—ओं क्रतो इति । उक्तं च 'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मर'न्निति । क्रतो—'यज्ञो वै विष्णु'रिति श्रुतेर्भगवतः संबोधनमिदम्, सर्वक्रतुसमाराध्यत्वाद्वा । उपासनपरस्य वा क्रतुशब्दस्योपास्ये उपचारः । मया कृतानां कर्मणामुपासनानां च गोचरीभूत ! इति व्यज्यते । स्मर—त्वामनुस्मरन्तं मां स्मर । कृतं स्मर—मया कृतं कर्मयोगप्रभृत्युपासनपर्यन्तमखिलं त्वत्प्रीणनं स्मर । समयोऽयं भवत्कृपाकटाक्षस्येति भावः । आदराद्द्विरुक्तिः । केचित्तु क्रतोरिति षष्ठ्यन्तं पठित्वा उपासनस्य स्मर—स्मृत्यर्थधातुयोगात्कर्मणि षष्ठी, कृतं कर्म च त्वदाराधनरूपं स्मरेति व्याचक्षते ॥१७॥

अग्ने नय सुपथा राये अस्मान्विश्वानि देव
वयुनानि विद्वान् । युयोध्यस्मज्जुहुराण-
मेनो भूयिष्ठां ते नमउक्तिं विधेम ॥१८॥

प्रकृतिविविक्तात्मानुस्मरणपूर्वकं भगवदनुस्मरणमुक्तम् । अथ गतिचिन्तनमुच्यते प्रार्थनामुखेन—अग्न इति । अग्ने—ऊर्ध्वगतिप्रापक, अग्रं नयतीत्यग्निः, आश्रितानूर्ध्वं नयति हि भगवान् । सुपथा—शोभनेन मार्गेण, अर्चिरादिमार्गेण । राये—मुक्तैश्वर्याय । अस्मान्नय—त्वमसि समाश्रितानामुद्धर्ता, तव हार्दस्यानुग्रहेण शताधिकया नाड्या निर्गत्यार्चिरादिना ब्रह्मलोकमभिसंभवानीति भावः । तदर्थं मम प्रारब्धव्यतिरिक्तं सञ्चितमखिलं प्रामादिकं चोत्तरमेनः अस्मत्—अस्मत्सकाशात् । युयोधि—विश्लेषय । पुण्यमपि मुमुक्ष्वपेक्षयैनःशब्देन निर्दि-

श्यते । तच्चैनो जुहुराणम्—कुटिलम्, दुर्मोचमिति यावत् । तत्कथ-महं मोचयितुं शक्त इति मा वोचः । हे देव ! त्वं विश्वानि वयुनानि विद्वान्—सर्वज्ञोऽसीति यावत् । पापपुण्ययोः शत्रुमित्रेष्ववकाशदानेन मत्तो वियोजय; त्वं हि सर्वं जानासीति भावः । एतेन 'सुहृदः साधु-कृत्यां द्विषन्तः पापकृत्या'मित्येतदनुस्मृतं भवति । ननु सर्वज्ञेनापि मया नान्यदीयमन्यत्र योज्यते निर्निमित्तम्, तदस्ति किञ्चिदुपाया-नुष्ठानं त्वयीत्यत्राह—भूयिष्ठां ते नमउक्तिं विधेम । अद्य तु वयं मुमूर्षवः शिथिलकरणाः, यावदासीन्नः करणशक्तिस्तावत्त्वनुष्ठितं यथाविहितमुपासनम्, तदेव स्मारितश्चासि कृतं स्मरेति, अधुनापि वाग्व्यापारसाध्यं नमउक्तिम्—नमःशब्दोच्चारणं विधेम—विदध्महे एतावत्यद्य नः शक्तिरिति भावः । विदध्मह इत्यर्थे विधेमेति व्यत्य-योऽयं छान्दसः । यद्वा—मन्त्रद्वयमिदं उपासनाशक्तस्य शरणागतिं प्रदर्शयति, शरणागतिर्ह्यात्मसमर्पणं ओमिति निर्देशाद्व्यज्यते, 'ब्रह्मणे त्वामहस ओ'मिति प्रणवेन ह्यात्महविःसमर्पणं श्रूयते; समर्प्यमाणह-विषः संस्कारो यथा प्रोक्षणादिकं तथाऽत्रात्महविषः संस्कारः प्रकृति-विविक्ततया यथाऽवस्थितवेषेण ज्ञानम्, सोऽयं संस्कारः प्रथमं क्रि-यते—'वायुरनिलममृतमथेदं भस्मान्तं शरीर'मिति । एवं संस्कृतमा-त्मानमोमिति ब्रह्माग्नौ प्रक्षिप्य प्रार्थनीयं प्रार्थयते—क्रतो स्मरेति । शक्तास्तु केचित्स्वयं धीराः योगधारणया त्वां धारयन्तो मनस्यव्यग्रे नियतकालमविच्छिन्नमनुदिनमनुस्मरन्ति स्मरन्ति चान्तकालेऽपि, अहं पुनरसमर्थस्तथा स्मर्तुम्, त्वमेव समये स्मर । सर्वमुक्तिप्रसङ्गपरिहाराय व्याजमात्रं वा यद्यपेक्षसे तर्हि कृतं स्मर—यत्किञ्चिदानुकूल्यसङ्कल्पा-

दिकमधुना कृतं तदेव स्मर। अथ चायमनन्यसामान्यो मादृशाकिञ्चनजनसमुचितः 'त्वमेवोपायभूतो मे भवे'ति प्रार्थनामतिरूपोपायानुष्ठानप्रकारो जागर्ति, तदहं प्रार्थये भवन्तम्। अग्ने नय सुपथा रायेऽस्मान्—वयं मार्गमपि न जानीमः, नाप्युपायान्तरम्, त्वामेकमेव जानीमः, तत्त्वमेवोपायो भूत्वा यो मार्गः शोभनस्तेन नय। अहमज्ञः किं हितं जानीयाम्, त्वमसि विश्वानि देव वयुनानि विद्वान्—त्वमसि देवः, यः सृष्टिस्थितिसंहरणैः क्रीडसे, तस्य ते जुहुराणमेनो मदीयमिति कियन्मात्रम्। मत्तः सकाशाद्वियोजय तत्। वियोज्य क्व नेयमिति तु नाहं जानामि। नाशय वाऽन्यं प्रापय वा। ततस्त्वं किं फलमभिलषितं पृच्छसि, नास्माकं किञ्चित्फलमाकाङ्क्षितमन्यत्, यतो वयं स्वतो दासास्तव, तत् तदानीमपि दास्यानुरूपां तुभ्यं नम उक्तिमेव विधेमहि—दासवृत्तिमेव प्रार्थयामहे इति भावः। विशेषस्तु संप्रदायगम्यः ॥१८॥

---

अत्रायमुपनिषदर्थसङ्ग्रहः—

ईशाभिव्याप्यमेतज्जगदखिलमिह त्यक्तसङ्गो मुमुक्षु-
र्भुञ्जीत स्वानुरूपं न धनमभिलषेत्कर्म कुर्यादसङ्गः।
योऽनात्मज्ञः स सक्तो निपतति निरये तन्मुमुक्षोरसङ्गं
यत्प्रोक्तं चित्तशुद्ध्यै प्रभवति ननु तत्कर्म बन्धाय न स्यात् ॥१॥
विज्ञेयो निश्चलत्वप्रभृतिगुणगणैर्व्याप्यतोऽस्माद्विधर्मा
विश्वव्यापी स ईशः श्रितजनसुगमो दुर्लभश्चेतरेषाम्।
तस्मिन्सर्वाणि भूतान्यपि च तमखिलेष्वेषु पश्यन्जुगुप्सां
कुर्यान्न क्वापि शोकादिकमपि न ततः स्यादिहैकात्म्यदृष्ट्या ॥२॥

एवम्भूतात्मदृष्टिः प्रविशति परितश्चेतसा ब्रह्म शुद्धं
याथातथ्येन सोऽर्थान्कलयति मनसा शास्त्रदृष्टांश्चिराय ।
सत्यप्यङ्गाङ्गिभावे श्रयति य इह धीकर्मणोरेकमेकं
सोऽनर्थस्यास्पदं स्याच्छ्रयति तदुभयं यस्तु तस्यामृतं स्यात् ॥३॥
एषा दैवी हि माया सपदि गुणमयी दुर्निवारा तदेनां
देवं तं तु प्रपद्य प्रशममुपनयेद्दिव्यरूपं तदीयम् ।
दुष्प्रेक्षं तेजसाऽपि प्रभवति कृपया वीक्षितुं तस्य कश्चित्
तस्मिन्न्यस्यात्मभारं व्रजति किमपि शं तत्पथा शोभनेन ॥४॥
येन व्याप्तं समस्तं जगदिदमपि यत्प्रीणनं कर्म सर्वं
योऽनन्ताश्चर्यशक्तिः शुभगुणनिलयो यत्र सर्वात्मदृष्ट्या ।
शोकादेर्नावकाशः प्रविशति परमं धाम यस्य प्रपत्त्या
स्वामी नारायणोऽयं स जयति गदितो वाजिनां संहितान्ते ॥५॥

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण-परम-
हंसवर्य-योगिराज-श्रीगोपालानन्दस्वामिविरचित-
मीशावास्योपनिषद्भाष्यं समाप्तम् ।





# केनोपनिषत् ।

## श्रीगोपालानन्दस्वामिविरचितभाष्यसमेता ।



**केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥१॥**

देवानामपि यो देवो न देवा द्योतयन्ति यम् ।
अमतस्तु मतो योऽसौ तमानन्दघनं श्रये ॥१॥
वाति वायुर्दहत्यग्निर्येनैवाहितशक्तिकः ।
तमेतमौपनिषदं नारायणमुपास्महे ॥२॥

जीवात्मनो विलक्षणं परमात्मानं प्रश्नप्रतिवचनमुखेन व्याचष्टे इयमुपनिषत् । व्यज्यते चैतत्तृतीयखण्डारम्भे ब्रह्म हेत्याद्याख्यायिकया । जानतोऽपि शास्त्रतो विधिनिषेधौ परिजिहीर्षतोऽपि परिहरणीयं करणानीमानि स्वयं स्वतन्त्राणीव स्वस्वाभिलषितमेवाभिसमापतन्ति । तदिमानि करणान्यन्येन केनापि पात्यन्त इति

लक्ष्यन्ते । तत्कोऽयमीदृश इति पृच्छति—केनेषितमित्यादि । अनिच्छतोऽपि मनः स्वयं बलात् स्वामीव किञ्चिदिष्टमभिपतति, मनस्तु जडं केनापि प्रेरितमेव तु पतेत्, तत्केन प्रेषितं सदिषितं पतति । इषितम्—इष्टमित्यर्थः । छान्दसः प्रयोगः । केन प्रयुक्तः प्रथमः प्राणः—मुख्यः प्राणः प्रैति—स्वकार्ये गच्छति । केन प्रेरिताः इषिताम्—अभिलषिताम् । इमां वाचं शब्दरूपां वदन्ति । जना इति शेषः । अनेन निर्देशेन करणाधिपाधिपं हृषीकेशमुद्दिश्यैवायं प्रश्न इति व्यज्यते । वदन्तीति करणाधिपस्यापि पारवश्याभिव्यक्तेः । न हि वदन्तीत्यत्रेन्द्रियमात्रं कर्तृ, बहुवचनवैयर्थ्यात् स्वारस्यभङ्गाच्च । चक्षुः श्रोत्रं क उ देवो युनक्ति—प्रेरयति । देवशब्दस्वारस्याच्चोक्ताभिप्राय एव प्रश्नः । करणाधिपमजानन् पामरो गण्यते । न हि तादृशः प्रष्टा समुचितोऽत्र । यद्वा—नेह प्रश्नप्रतिवचनमुखेनारम्भः, किन्त्वाक्षेपमुखेन । अयं भावः—अस्ति प्रायः सर्वेषां सत्यपि क्षेत्रक्षेत्रज्ञविभागविज्ञाने परमियमभिमतिः, यथाऽभिलषितं विज्ञातुं कर्तुं भोक्तुं च समर्थाः स्मो वयम्, यदिमानि करणानि वशे नः, न नः परः कश्चिदिति, तमिमं स्वतन्त्रताभ्रमं निरस्यन्नाह—केनेति । आक्षेपे किंशब्दः । भो मानवाः! यानीमानि मनःप्रभृतीनि सत्यं सहायभूतानि वः, परं तानीमानि केन नियुक्तान्युपकरणभावं प्राप्य वः क्रियाः साधयन्ति, न युष्माभिरेव नियुक्तानि तथा कुर्वन्ति, वयं वयमिति भ्रान्तिः केवलं वः । कस्तर्हि ? अस्त्यन्यः सर्वस्यान्तरात्मा यः श्रोत्रस्य श्रोत्रं मनसो मनः । किं बहुना—पूर्वं देवा अप्यासन्नभि-

(१) अस्यावतरणस्य खण्डान्तरेणानुगुण्यं प्रदर्शयति ।

मानिनः अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति । तमिममभिमानं खण्डयितुमन्तरात्मा प्रादुर्भूय यक्षात्मना सन्निहितमग्निमहमखिलं दग्धुं प्रभवामीत्यभिमन्यमानमभि तृणं निदधावेतद्दहेति, स तन्न शशाक दग्धुम्, तन्माभूद्वो भ्रमः—वयमिदं कुर्मो वयमिदं विजानीम इति, अस्ति नः परमात्मा सर्वेश्वरस्तस्य बलेन वयं प्राणिमो वयं व्यवहराम इति तत्परतन्त्रतां भावयतेति ॥१॥

श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं
स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः अतिमुच्य
धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥२॥

एवं पृष्टः प्रतिवक्ति—श्रोत्रस्येत्यादि । ज्ञातुः पुरुषस्य शब्दसाक्षात्कारे उपकारकतया किञ्चिदिन्द्रियं श्रोत्रमुच्यते, तदपि श्रोत्रं तत्साक्षात्कारापादने स्वयं साक्षादक्षमं परं ब्रह्मापेक्षते, तदुच्यते परं ब्रह्म श्रोत्रस्य श्रोत्रमिति । न हि किमपि सर्वान्तर्यामिणा परब्रह्मणाऽनाहितशक्तिकं स्वकार्याय क्षमम् । तच्छ्रोत्रादीनि सर्वाण्युपकरणानि परब्रह्माहितशक्तिकान्येवोपकरणभावं प्राप्नुवन्तीति भावः । यत्तु—अन्तर्यामिणमर्थान्तरमवधीर्य प्रत्यगात्मानमेव श्रोत्रस्य श्रोत्रमिति व्यपदिशन्ति तन्नातिरमणीयम्, न हि शब्दसाक्षात्कारे उपकारकमिन्द्रियमपेक्ष्योपक्रियमाणः पुरुष उपकारकभावेन श्रोत्रस्य श्रोत्रमिति निर्देशमर्हति । न ह्यालोकेनोपक्रियमाणं चक्षुरालोकस्याप्यालोक इति व्यपदेशमर्हति । तच्छ्रोत्रशब्दनिर्देशादेव श्रोतारं प्रति कस्यचिदिन्द्रियस्योपकरणता स्वयमवगतैव । स चायमुपकरणभावोऽस्य

सर्वतोऽन्तर्यामिणा सर्वशक्त्याधायकेन परब्रह्मणैवेति श्रोत्रस्य श्रोत्रमिति श्रोतुरर्थान्तरमेव परं ब्रह्म स्वरसतः प्रतीयते । न तु विना श्रोत्रेण बधिरो भवंस्तद्योगेन शब्दसाक्षात्कारार्हस्तदुपजीव्यो जीवः । वाचमिति विभक्तिव्यत्ययश्छान्दसः । यच्छ्रोत्रस्य श्रोत्रं मनसो मनो वाचो वाचं चक्षुषश्चक्षुः प्राणस्य प्राण इत्यन्वयः । चक्षुष इत्यन्तमिन्द्रियाणामुपलक्षकम् । स उ–एवम्भूत एव त्वया केनेषितमित्यादिना पृष्टो जानीहीति भावः । एवं वेदनस्य फलमाह—अतिमुच्येत्यादि । अतिमुच्य–एवं ज्ञात्वा । यद्वा–अतिमुच्य–वयं भोक्तारः करणेषु सर्वथा स्वतन्त्रा इति स्वातन्त्र्यभ्रमं त्यक्त्वा स एव हृषीकेशः सर्वेन्द्रियनियन्ता सर्वं भगवान्कारयतीत्यनुसन्दधानाः । अस्माल्लोकात्प्रेत्य–निर्गत्य, अमृता भवन्ति–मुक्ता भवन्तीत्यर्थः । अनेन मुक्तस्थानं लोकान्तरं व्यज्यते ॥२॥

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो
मनो न विद्मो न विजानीमो यथैतदनुशि-
ष्यादन्यदेव तद्विदितादथो अविदितादधि ।
इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥३॥

एवमखिलेन्द्रियप्रेरकतया प्रक्रान्तस्य परमात्मनो लौकिकार्थेभ्यो वैलक्षण्यमाह—न तत्रेति । लौकिको ह्यर्थश्चक्षुषा–प्रत्यक्षेण तदुपजीव्येन शब्देन तदुपजीव्येनानुमानेन वा सिध्यति, परमात्मा तु न तथा । यत्तत्र चक्षुर्न गच्छति–न हि घटादिवत्स इदङ्कारेणानेन चक्षुषा गृह्यते, अतीन्द्रियत्वात् । न प्रत्यक्षगम्य इति यावत् । न वा-

गच्छति—वागिन्द्रियसाध्यः शब्दो न गच्छति—न तं प्राप्नोति। अतीन्द्रियेऽस्मिन्नर्थे प्रत्यक्षमूलशब्दो न पराक्रमते। सर्वो हि शब्दो लौकिको वागिन्द्रियसाध्यः प्रत्यक्षोपजीव्यः। लौकिकव्यवहारागम्य इति यावत्। नापि मनः—अत्र मन इति मनोव्यापारप्रधानमनुमानमुच्यते, तदपि तस्मिन्न गच्छति, तस्यापि प्रत्यक्षोपजीव्यत्वात्। प्रत्यक्षातिपतितकृत्स्नधर्मे तस्मिन्प्रत्यक्षोपजीव्यसाहचर्यनियमसापेक्षस्यानुमानस्य क्व प्रसरावकाश इति भावः। एतेनालौकिकप्रमाणैकवेद्यत्वं व्यज्यते। अत्र चक्षुःशब्देन प्रत्यक्षमुपक्रम्य वाङ्मनसोरभिधानाद्वाङ्मनःशब्दाभ्यां तत्सजातीययोः शब्दानुमानयोर्ग्रहणमुचितमिति तथा व्याख्यातम्। एतद्यथाऽनुशिष्यात्तं प्रकारं तत्र न विद्म इत्यन्वयः। एतदिति सन्निहिततरमुच्यते, प्रत्यक्षतः सन्निहितमिदं लौकिकं वस्तु येन प्रकारेणानुशिष्यात्तं प्रकारं तत्र परमात्मनि न विद्म इत्यर्थः। लौकिकानि हि वस्तूनि त्रिकोणत्वसास्नादिमत्त्वादिभिराकारैरनुशिष्यन्ते, परमात्मा न तैः प्रकारैः करतलामलकवदुपदेशार्ह इति भावः। ननु विचित्रेष्विहोपलभ्यमानेषु यत्किञ्चिद्विलक्षणाकारं निदर्शनतया वा तस्योपलक्षकं किं न स्यादित्यत्राह—न विजानीमः—तादृशं किमपि लौकिकं वस्तु विशेषतो न विजानीमः, येन विशेषेणांशतो वा निदर्शनतया तस्य परमात्मन उपलक्षकं भवेत्। यथाऽयं लौकिकप्रमाणागोचरस्तथा लौकिकैः प्रकारैरपि नोपलक्ष्य इति भावः। यद्वा—इन्द्रियाणां प्रेरकः को देव इति पृष्टे श्रोत्रस्य श्रोत्रमित्यादिना श्रोत्रादीनामपि श्रोत्रं तत्तदिन्द्रियप्रकाशकः कश्चिदित्येतावन्मात्रेण प्रतिवचनेन ना-

तीव सुस्पष्टमुपदिष्टं तत्स्वरूपमित्यत्राह—न तत्रेति । न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः । शब्दार्थः पूर्ववत् । लौकिकं चेद्वस्तुस्वरूपं त्रिकोणत्वसास्नादिमत्त्वादिभिरिदमित्थमेतावदिति स्याज्ञाम । इदं तु परमात्मस्वरूपमगोचरं लौकिकस्य, कथमिव लौकिकवस्तुवदिदमित्थमेतावदिति शक्नुमो निरूपयितुमिति भावः । न विद्मः—अलौकिकार्थावबोधकतया प्रसिद्धा वयमपि न विद्मो यत्स्वरूपम्, अपारत्वात् । यदेकैकगुणप्रान्ते श्रान्ता निगमवन्दिनः । तत्कथमिवेत्थमेतावदिति निरूपयितुं शक्नुम इति भावः । न विद्म इत्यलौकिकप्रमाणस्य वेदस्यायं निर्देशः । वेद एव खल्वत्र गुर्वेपदेशेन प्रतिवक्ति । बहुवचनेन—अनन्ता वेदाः, तथापि कात्स्न्येन तत्स्वरूपं न विद्म इत्युक्तं भवति । तर्हि गुरुः शिष्यान्प्रति कथमुपदिशति ? न विजानीमो यथैतदनुशिष्यात्—एतत्—लौकिकवस्तुतो विलक्षणम्, अपरिच्छिन्नमलौकिकार्थावबोधकैरप्यलब्धपारं तत्स्वरूपं यथा—येन प्रकारेणोपदिशेत्, तद्वयं न जानीमः । कात्स्न्येन तदुपदेशः कात्स्न्येन तदवबोधो वाऽसंभावित इति भावः । उक्तं लौकिकार्थवदननुशास्यत्वमतिपतितसकललौकिकप्रकारस्यापरिच्छिन्नस्य परमात्मनः, तर्हि कथमसावनुशास्यस्तदाह—अन्यदेवेति । तत्परमात्मस्वरूपं विदितादन्यत्, नास्य विदितकोटावन्तर्भावः । तर्हि ज्ञानागोचरत्वेन तुच्छता स्यादत आह—अथोऽविदितादधि—अविदितात्—ज्ञानागोचरात्, अधि—अन्यदित्यर्थः । इदमित्थमेतावदिति परिच्छिद्य ज्ञातुमशक्यतया विदितमित्यपि वक्तुं न

शक्यते, शास्त्रवेद्यस्वरूपत्वाज्ज्ञानागोचरमित्यपि वक्तुं न शक्यते । एवमेव तद्वस्तुस्वरूपमनुपदेश्यमिति भावः । ये नस्तत्परमात्मस्वरूपं व्याचचक्षिरे, तेषां संप्रदायपरम्पराप्राप्तम्, इति—एवंप्रकारं वचः शुश्रुमः—श्रुतवन्तः । यद्वा—उक्तं लौकिकप्रमाणागम्यत्वमलौकिकप्रमाणागम्यत्वं चापरिच्छित्तेः । अत एव तच्चिदचिदात्मकाज्जगतोऽन्यदेवेत्याह—अन्यदेवेति । इह जगति संसृष्टे चिदचिदंशेऽचिदंशं सर्व एव जानन्ति पण्डितपामराविशेषेणेत्यचिदंश उच्यते विदितमिति शब्देन । अधिकारिविशेषप्रमाणविशेषाद्यनुपहितो हि वेदनशब्दः पण्डितपामरसाधारणं वेदनमेव स्वरसतोऽवगमयेत् । अविदितमितिशब्देन विदितशब्दोपात्तादचिदंशादन्यश्चेतनांश उच्यते । ताभ्यामन्यदुक्तपरमात्मस्वरूपमिति भावः । इति शुश्रुमेत्यादि यथाव्याख्यातम् ॥३॥

यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव
ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥४॥

वागादिप्रकाशकं तैरप्रकाश्यं परमात्मस्वरूपमिदंकारगोचरादन्यदेवापरिच्छिन्नमित्याह—यद्वाचेत्यादिना । यत्—परमात्मस्वरूपम्, वाचा—वागिन्द्रियेण, अनभ्युदितं—अप्रकाश्यम्, वेदवाण्या अपि सुदूरम् । येन—परमात्मना वाक्—वागिन्द्रियम्, अभ्युद्यते—प्रकाश्यते, तदेव ब्रह्म विद्धि—जानीहि । परिच्छिन्नतया हस्तामलकवदिदङ्कारगोचरं यदुपासते नेदं ब्रह्मेति शेषः । स्वरूपतो गुणतश्च सर्वतो यत् बृहत्, तस्मिन्निन्द्रियाणामपि प्रकाशके तैरप्रकाश्ये, परिच्छिन्न इव कथमिदं ब्रह्मेति सुस्पष्टनिर्देशो घटेत । तदिदमिति यदुपासते न तत् ब्रह्मेति भावः ॥४॥

यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥५॥

यत्परमात्मस्वरूपं कश्चिदपि जनो मनसा करणेन न मनुते । इदमित्थमिति साकल्येन न वेद । येन परमात्मना मनः, मतम्—विषयीकृतम्, प्रकाशितमित्येतत् । यद्वा—मतमिति भावे क्तः, मनोवृत्तिरुच्यते, अर्श आद्यच्, येन परमात्मना मनो मननव्यापारयुक्तं भवति । मनसो मन इत्येतत् । तदेवेत्यादि व्याख्यातम् ॥५॥

यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥६॥

यत्परमात्मस्वरूपं कश्चिदपि चक्षुषा करणेन न पश्यति । येन सुसहायेन चक्षूंषि पश्यति—रूपग्रहणं कुर्वन्ति । पश्यतीति वचनव्यत्ययश्छान्दसः । अन्यद्यथाव्याख्यातम् ॥६॥

यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥७॥

यत्परमात्मतत्त्वं न कश्चित् श्रोत्रेणानेन साधनेन शृणोति, श्रोत्रेन्द्रियागोचरमित्येतत् । येन सहायेन श्रोत्रं श्रुतम्—श्रवणसमर्थं भवतीत्येतत् । तदेवेत्यादि यथाव्याख्यातम् ॥७॥

यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८॥

यद्वात्मतत्त्वं प्राणेन साधनेन न प्राणिति—न प्राणनव्यापारविशिष्टं भवति। येन—परमात्मना साधनेन प्राणः प्रणीयते—प्राणनव्यापारयुक्तो भवति। तदेव ब्रह्म त्वं विद्धि—पूर्ववत् ॥८॥

इति केनोपनिषद्भाष्ये प्रथमः खण्डः।

---

**यदि मन्यसे सुवेदेति दभ्रमेवापि नूनम्। त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेष्वथ नु मीमांस्यमेव ते मन्ये विदितम् ॥१॥**

ब्रह्मस्वरूपस्य परिच्छिद्य ज्ञानागोचरता नेदं यदिदमुपासत इत्यादिनोक्ता, तामेव द्रढयति—यदि मन्यस इति। अहं ब्रह्मस्वरूपं सुवेद—सुस्पष्टं जानामीति यदि मन्यसे तर्हि त्वया ब्रह्मस्वरूपं परिच्छिन्नमेवावगतं स्यादित्याह—दभ्रमेवापि नूनम्। दभ्रमेव तत्—अल्पमेव तत्। अस्य ब्रह्मणो रूपं यदिह लोके त्वं वेत्थ, यच्चास्य रूपं देवेषु वा त्वं वेत्थ, तदुभयं दभ्रमेवेत्यन्वयः। अयं भावः—यत् सुस्पष्टं प्रतीयते तेन परिच्छिन्नेन भाव्यम्, न ह्यपरिच्छिन्नं वस्तु करतलामलकवत्साकल्येन सुस्पष्टं प्रतीयेत। तद्ब्रह्मस्वरूपं सुवेदेति वदता त्वया परिच्छिन्नमिह वा देवेषु वाऽवधृतं स्यात्, हन्त परिच्छिन्नमेव त्वयाऽवधृतम्, तद्ब्रह्म त्वया नावधृतमेवेति। अथ—इतः परम्, ते—त्वया मीमांस्यमेव। ब्रह्मस्वरूपमिति शेषः। ब्रह्मस्वरूपं न सम्यगवधृतं, पुनर्विचार्यमिति भावः। एवमुक्तः शिष्यः किञ्चिद्विचार्याऽऽह—मन्ये विदितमिति ॥१॥

नाहं मन्ये सुवेदेति नो न वेदेति वेद च।
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥२॥

विदितं तदेवाह—नाहमित्यादि। अहं सुवेदेति यदि मन्ये तदा मयाऽवगतं दभ्रमेव स्यात्, नाहं मन्ये तथेत्याह—सुवेदेति नाहं मन्ये—अहं सम्यग्जानामीति न मन्ये। किं तर्हि जानासीत्यत्राह— न वेदेति न—न जानामीत्यपि न। किन्तु वेद च—जानाम्येव। अपरिच्छिन्नत्वात्कार्त्स्न्येन न ज्ञातम्, यथोपदिष्टं तु ज्ञातमिति भावः। एवं शिष्यः स्वेनावगतप्रकारमुक्त्वा अथास्माकं सब्रह्मचारिणां मध्येऽन्योऽपि यदि मदवगतप्रकारेण विद्यात् स एव तद्ब्रह्म विद्यादित्याह—यो न इति। नो न वेदेति वेद चेति स्वोक्तवचनानुकरणम्। इतीति शेषः। तदित्यत्रान्वयः। नो न वेदेति वेद चेति मयोक्तं तद्वचनमित्यर्थः। नः—अस्माकं मध्ये, यो वेद, स तद्ब्रह्मस्वरूपं वेद। एतेन गृहीतार्थे दृढनिश्चयो व्यञ्जितः ॥२॥

यस्यामतं तस्य मतं मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥३॥

गुरुशिष्यसमाधितो विरम्य श्रुतिः स्वेन रूपेणाह—यस्यामतमिति। यस्यामतम्—यस्य बुद्ध्या ब्रह्म साकल्येनामतम्, यः साकल्येन ब्रह्मस्वरूपं न जानामीति मन्यत इति यावत्। तस्य ब्रह्म मतम्—तेन ज्ञातमिति यावत्। यस्य मतम्—यस्य बुद्ध्या साकल्येन मतम्, अशेषतो ब्रह्म जानामीति यो मन्यत इत्येतत्। न वेद सः। विजानताम्—विशेषतो जानताम्, ब्रह्माहं सम्यग्जानामीति मन्यमानानाम्।

अविज्ञातं ब्रह्मस्वरूपम् । अविजानताम्—विजानद्भ्योऽन्येऽविजानन्तः, कार्त्स्न्येन न जानामीति मन्यमानानामित्यर्थः । विज्ञातं ब्रह्मस्वरूपम् । परोक्षापरोक्षज्ञानभेदेनापौनरुक्त्यम् । यद्वा—विजानताम्—शास्त्रतो यथाऽवस्थितं ब्रह्मस्वरूपं ये जानन्ति, तेषां बुद्ध्या ब्रह्म अविज्ञातम्, ते ब्रह्मस्वरूपं कार्त्स्न्येन न जानीम इत्येव मन्यन्त इति भावः । अविजानताम्—यथावस्थितं ब्रह्म शास्त्रतो ये न जानन्ति, तेषां बुद्ध्या ब्रह्म विज्ञातम्, ते—इदमेव ब्रह्म मयाऽवगतं सम्यगिति मन्यन्त इति भावः ।

सर्वात्मना वेद्यताऽत्र ब्रह्मणो न निषिध्यते ।
अत्रैव मतमित्युक्तं विरुध्येत तथा सति ।
सर्वथा तदवेद्यं चेत्तुच्छमेव भवेत्तदा ।
प्रवृत्तिरपि शास्त्राणां नैव तस्मिन्घटेत च ॥३॥

**प्रतिबोधविदितं मतममृतत्वं हि विन्दते । आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥४॥**

ब्रह्मणः साकल्येनावेद्यत्वे तद्वेदनं कथम्, कथं वा मोक्षसिद्धिस्तत्राह—प्रतिबोधेति । यद्यपि ब्रह्म साकल्येन न ज्ञातुं योग्यम्, तथाऽपि प्रतिबोधतो विदितं चेन्मतं भवति । बुध्यतेऽनेनेति बोधः—बोधकधर्मः, प्रतिनियतो बोधः प्रतिबोधः—असाधारणधर्मः, स च सत्यत्वज्ञानत्वानन्दत्वादिः, तैरसाधारणाकारैः स्वेतरनिखिलविलक्षणत्वेन विदितं चेत्तदा तद्ब्रह्मस्वरूपं मतमेव—ज्ञातमेव । अमृतत्वं विन्दते—मोक्षं प्राप्नोति । येन प्रतिबोधविदितं तेन मतम्; सोऽमृतत्वं विन्दत इत्यन्वयः । अमृतत्वप्राप्तिप्रकारमाह—आत्मनेति । आ-

त्मना—प्रसन्नेन परमात्मना, वीर्यम्—विद्यानिष्पत्त्यनुकूलं मनोऽवधानरूपं वीर्यं विन्दते । यद्वा—आत्मना—मनसेत्यर्थः, मनःकृतं वीर्यम्, प्रणिधानसामर्थ्यमिति यावत् । ततश्च निष्पन्नया विद्ययाऽमृतत्वमश्नुते । यद्वा—बोधः बुध्यमानं वस्तु, कर्मणि घञ्, बोधे बोधे प्रतिबोधम्, प्रतिबोधं विदितं प्रतिबोधविदितम्, प्रतिवेद्यं येन ब्रह्मस्वरूपं विदितमित्यर्थः । सर्वशरीरत्वाद्ब्रह्मणः प्रतिवेद्यं 'ज्योतींषि विष्णुर्भुवनानि विष्णु'रिति न्यायेन येन विदितं तेन ब्रह्म मतमिति भावः ॥४॥

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदी-
न्महती विनष्टिः । भूतेषु भूतेषु विचिन्त्य
धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥५॥

इह—प्राप्ते शास्त्राधिकारयोग्येऽस्मिन्नेव जन्मनि, अवेदीच्चेत् । अथ—अनुपदम्, सत्यमस्ति—अनश्वरं फलमस्ति । नावेदीच्चेन्महती विनष्टिः—महाननर्थः, संसारनिरयपात एव । धिया रमन्त इति धीराः—आत्मतत्त्ववेदनशीलाः । भूतेषु भूतेषु—प्रतिभूतमन्तर्यामितया स्थितम्, विचिन्त्य—तेभ्यो विलक्षणत्वेनावधार्य । अस्माल्लोकात्प्रेत्य—निर्गत्य, निःशेषं विनष्टपापाः प्राकृतमिमं लोकं समतिक्रम्य, देशविशेषं प्राप्य । अमृता भवन्ति—मुक्ता भवन्ति ॥५॥

इति केनोपनिषद्भाष्ये द्वितीयः खण्डः ।

---

ब्रह्म ह देवेभ्यो विजिग्ये । अथ तस्य ह ब्रह्म-
णो विजये देवा अमहीयन्त । त ऐक्षन्तास्मा-

कमेवायं विजयोऽस्माकमेवायं महिमेति ॥१॥

एवं प्रथमद्वितीयखण्डाभ्यां प्रश्नप्रतिवचनमुखेन करणाधिपाधिपस्वरूपमुक्त्वा तृतीयखण्डे एतदाहितकरणशक्तिकानामेव तत्तत्कार्यविशेषकर्तृत्वसामर्थ्यमाख्यायिकामुखेनाह—ब्रह्मेति । ब्रह्म पुरा—देवासुरसङ्ग्रामे, देवेभ्यः—देवानां निमित्ते, विजिग्ये—विजयमकरोत् । देवानामन्तर्यामितया स्थितं ब्रह्म तेषां करणबलापादनेन विजयं तेभ्यः प्रायच्छदिति भावः । तदानीं ते देवा अमहीयन्त—पूजिता अभवन् । अथाहम्भावेनास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ऐक्षन्त—अमन्यन्त ॥१॥

तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव
तन्न व्यजानन्त किमिदं यक्षमिति ॥२॥

ब्रह्मेत्यनुषङ्गः । एषां—देवानाम् । तत्—उक्तमभिमानम् । ब्रह्म विजज्ञौ । तेभ्यः—अहङ्कारापनोदनेनताननुग्रहीतुम्, प्रादुर्बभूव—यक्षरूपमाविर्बभूव । इदं यक्षरूपं किमिति, तत्—आविर्भूतं ब्रह्म न व्यजानन्त ॥२॥

तेऽग्निमब्रुवञ्जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ॥३॥ तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥४॥

एवमजानन्तस्ते तद्विज्ञानायाग्निमब्रुवन्, जातवेदः! एतद्विजानीहि किमेतद्यक्षमिति । एवमुक्तोऽग्निस्तथेत्युक्त्वा तत् ब्रह्माभिमुखीकृत्याद्रवद्बलदर्पतः, अद्य ज्ञात्वाऽऽगमिष्यामीति वेगेनागच्छत् । तमग्निं

यक्षस्वरूपमवदत् कोऽसीति । एवं पृष्टोऽग्निः वीर्याभिमानेनासक्-
न्नाम्नाऽऽत्मानं प्रख्यापयन्नब्रवीत्—अग्निर्वा अहमस्मि जातवेदा
वा अहमस्मीति ॥३-४॥

तस्मिंस्त्वयि किं वीर्यमित्यपीदꣳ सर्वं दहेयं यदिदं पृथिव्यामिति ॥५॥ तस्मै तृणं निदधावेतद्दहेति तदुप प्रेयाय सर्वजवेन तन्न शशाक दग्धुम् । स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥६॥

एवं प्रत्युक्तं यक्षस्वरूपमाह—तस्मिन्निति । अग्निरहं जातवेदा वाऽहमिति बहुनामभिः प्रख्यापितात्मवैभवे त्वयि किं वीर्यमिति । एवं पृष्टोऽग्निः साभिमानमाह—यदिदं पृथिव्यां सर्वमपीदं दहेयमिति । तस्मै तृणं निदधौ तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुम् । स्फुटमेतत् । सः—भग्नमानोऽग्निः एतद्यक्षं यत्—यत्स्वरूपम्, एतद्विज्ञातुम्—सम्यग्ज्ञातुम्, नाशकम्, इति मत्वेति शेषः, तत एव—तत्क्षणादेव, निववृते—गतमानो गतवेगः क्षणमप्यसन्निधायापससारेति भावः ॥५-६॥

अथ वायुमब्रुवन्वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति ॥७॥ तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥८॥ तस्मिंस्त्वयि किं वीर्यमित्यपीदꣳ सर्वमाददीयं यदिदं पृथिव्यामिति॥९॥

तस्मै तृणं निदधावेतदादत्स्वेति तदुप प्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥१०॥

अथ वायुमित्यादि स्फुटम् ।

अथेन्द्रमब्रुवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ॥११॥

अथेन्द्रमब्रुवन्–अथ सर्वे देवा देवराजमब्रुवन् । मघवन्! किमेतद्यक्षमिति विजानीहीति । तथेत्युक्त्वा तदभ्यद्रवत् । इन्द्रस्य मानभङ्गो मा भूदिति ब्रह्म स्वयं तस्मात्–इन्द्रात्, देशाद्वा, तिरोदधे–अन्तर्हितमभूत् ॥११॥

स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमाꣳहैमवतीं ताꣳहोवाच किमेतद्यक्षमिति ॥१२॥

सः–इन्द्रः, तस्मिन्नेवाकाशे–प्राग्यक्षाधिष्ठित एव प्रदेशे । आविर्भूतामिति शेषः । बहुशोभमानां हिमवत्पुत्रीमुमाम् । आजगाम–दृष्ट्वा तत्सन्निधिमागच्छदिति भावः । आगत्य किमेतद्यक्षमिति सविनयं तामुवाच–अपृच्छदिति भावः ॥१२॥

इति केनोपनिषद्भाष्ये तृतीयः खण्डः ।

---

सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो ह वै विदाञ्चकार ब्रह्मेति ॥१॥

सा—उमा, इन्द्रेण पृष्टा सती ब्रह्मेति—एतद्यक्षस्वरूपमाविर्भूतं ब्रह्मेत्युवाच । एवमुक्त्वा इदमप्युवाच । ब्रह्मण एतद्विजये—ब्रह्मकर्तृकेऽस्मिन्विजये यूयं महीयध्वम्—महिमानं प्राप्नुत । नास्माकं विजयः अपि त्वस्मदन्तर्यामिण एवायमिति महिमानं प्राप्नुत, अस्माकमेवायं विजय इत्यभिमानं त्यजतेति भावः । ततो ह वै—तदानीमेव, ब्रह्मेति विदाञ्चकार २

तस्माद्वा एते देवा अतितरामिवान्यान्देवान्यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पर्शुस्ते ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ॥२॥

य इति प्रत्येकं सम्बध्यते, लिङ्गव्यत्ययश्छान्दसः । तस्माद्वा—तस्मादेव, एते देवा अन्यान्देवान्, अतितरामिव—महिम्नाऽतिशेरत इत्यर्थः । इवेत्यनर्थकमेवार्थकं वा । के ते देवा इत्यत्राह—यदग्निरिति । योऽग्निर्यो वायुर्यश्चन्द्रः । कस्मात्तेऽन्येभ्योऽतिशयिता इत्यत्राह—ते हि—यस्मात् ते अग्न्यादयः, एनन्नेदिष्ठम्—समीपगतं पस्पर्शुः । स्पर्शश्चात्र सन्निधिगमनसंवादादिरूपः संबन्धः । हि—यस्मात् ते एनत्—ब्रह्म, प्रथमः—प्रथमम्, विदाञ्चकार—विदाञ्चक्रुः । वचनव्यत्ययश्छान्दसः । उमावचनेनेन्द्रस्य इन्द्रवाक्येन चाग्निवाय्वोस्तत्परिज्ञानम् । अन्ये तु पश्चादेव व्यजानन्त । इमे प्रथमं व्यजाननित्युच्यते ॥२॥

तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ॥३॥

अग्न्यादिष्वपीन्द्रस्य श्रैष्ठ्यमाह—तस्मादिति । स्फुटम् ॥३॥

**तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा ३ इतीन्न्यमीमिषदा ३ इत्यधिदैवतम् ॥४॥**

अथ ब्रह्मणस्तदानीन्तनाविर्भावतिरोभावे निदर्शनमुपदिशति— तस्यैष इति । तस्य—क्षणमाविर्भूय तिरोभूतस्य ब्रह्मणः, एष आदेशः—वक्ष्यमाण उपदेशः । विद्युतो व्यद्युतदिति यच्च न्यमीमिषदिति, एष आदेश इति पूर्वेणान्वयः । वचनव्यत्ययश्छान्दसः । न्यमीमिषदिति प्रकाशाभावो लक्ष्यते । स्वार्थे णिच् । यथा विद्युत् घनान्धकारं सहसैवापसार्य अभिभूय सर्वं प्रकाशकं स्वयमेका विद्योतते, तथा तद्व्यद्योतत । यथा च सपदि क्षणेनैवालक्षितविशेषं तिरोभवति तथा तिरोभूतं चेति भावः । आ इति प्रसिद्धौ । इदित्यनर्थको निपातः । यद्वा—चक्षुर्न्यमीमिषत्, स्वार्थे णिच्, निमेषव्यापारमकरोदिति यत्, अयमपर उपमानोपदेश इत्यर्थः । इतः समुच्चयोऽर्थः । यथा विद्युत्सहसाऽविर्भूय सहसा तिरोभवति, यथा च निमेषव्यापारः पक्ष्मणोः संश्लेषरूपः क्षणेन सहसा भूत्वा सहसाऽपैति, तथा ब्रह्माविर्भूतं तिरोभूतं चेति भावः। इत्यधिदैवतमिति । एवंप्रकारेणाधिदैवतम्—देवतासु बाह्येषु भूतेषु, उपमानोपदेशः कृत इति भावः ॥४॥

**अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः ॥५॥**

अथाध्यात्मम्—अथ शरीरान्तरुपमानोपदेशः क्रियत इत्यर्थः । मन एतत् गच्छतीति यत्, तदिव, इत्यध्यात्ममादेश इत्यन्वयः । एतत् —ब्रह्म गच्छति—विषयीकरोतीत्येतत् । मनो ब्रह्म विषयीकरोतीति यच्च-

द्वदित्यर्थः । यथा मनसो ब्रह्मविषयीकरणं न चिरतरस्थायि किन्तु क्षणमात्रं तथा ब्रह्मण आविर्भावोऽयमिति भावः । मनसो ब्रह्मण्यस्थैर्यमेवोपपादयति–न चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः । सङ्कल्पः–मनसो वृत्तिविशेषः, अभीक्ष्णम्–असकृत्, अविच्छेदेनेति यावत्, एतत् ब्रह्म न स्मरति हि । चो ह्यर्थः । अनादिविषयवासनादूषिततया मनसो ब्रह्मणि बलाद्योजनेऽपि तदीया वृत्तिः क्षणं संश्लिष्य सहसैवापसरत्यन्यत्रेति भावः । मनोऽनेन चेति पाठे—ननु मनसो ब्रह्मणि चिरतरावस्थानाभावे कथमुपासकानां ध्यानं घटेतेत्याशङ्कायामाह—अनेनेति । सङ्कल्पः असकृदेनद्ब्रह्म स्मरतीति यत्, तत्त्वनेन प्रसन्नेन ब्रह्मणा । यद्यपि ब्रह्मणि प्रसन्ने मनसोऽवधानं तस्मिन् भवेत्, तथाप्यनादिवासनासंसृष्टतया प्रकृत्या मनसो ब्रह्मणि न चिरावस्थानमिति घटेतेदमुदाहरणमिति भावः ।

यद्वा–तस्यैष आदेशः, आदेशः–प्रशासनम् । यदेतद्विद्युतो व्यद्युतत्–विद्युतो विद्योतनमिति यत्, एष तस्य परब्रह्मण आदेशः–आज्ञा । आज्ञासाध्यत्वादाज्ञेति निर्देशः । इदमुपलक्षणं विचित्रव्यापाराणाम् । तथा च स्मरणम्—'मेघोदयः सागरसन्निवृत्तिरिन्दोर्विभागः स्फुरितानि वायोः । विद्युद्विभङ्गो गतमुष्णरश्मेर्विष्णोर्विचित्राः प्रभवन्ति मायाः' इति । एवं विचित्रव्यापारमुक्त्वा विचित्रो वा स्यादल्पो वा स्यात्सर्वं तदाज्ञावशगम् । तेन विना किमपि न चलतीत्यैश्वर्यं प्रदर्शयितुमाह—न्यमीमिषदिति । यच्च निमिषितं तदपि तत्सङ्कल्पायत्तमिति भावः । एवं बाह्यव्यापारस्य तदादेशगोचरत्वमुक्त्वाऽऽन्तरस्यापि तथात्वमाह–अथेति ।

एतन्मनो गच्छतीवेति यत्, एषोऽपि तस्याऽऽदेश इत्यन्वयः । मनः स्वदेशादप्रचलितमेव नानादेशान्गच्छतीवेति यत् तदपि तस्याज्ञेत्यर्थः । मनो न प्रचलति अथ च गच्छतीवेति किम्? तदेतत्स्फुटयन्नाह—अनेनेति । एतत्—मनः सङ्कल्पो भूत्वा, सङ्कल्पद्वारेणेत्येतत् । अभीक्ष्णम्—असकृत् तांस्तान्विषयान्स्मरति, इदमेव गच्छतीवेति निर्दिष्टमिति भावः । इदमपि, अनेन च—अनेन हि ब्रह्मणा विशुद्धिभङ्गप्रभृतिचिन्तितनिमिषितावधि अत्याश्चर्यमत्यल्पं सर्वमेव व्यापारजातं तत्प्रशासनगोचरमिति भावः । तदेवं स्थितेऽर्थतत्त्वे युष्माभिरस्माकमेवायं महिमाऽस्माकमेवायं विजय इति न भ्रमितव्यमितिव्यञ्जितम् ॥५॥

**तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाभिहैनꣳ सर्वाणि भूतानि संवाञ्छन्ति ॥६॥**

तद्धेति । तत्—ब्रह्म वनं—सर्वैः प्रार्थनीयम् । नामेति प्रसिद्धौ । यस्माद्ब्रह्म वननीयत्वेन प्रसिद्धं तत्—तस्मात्, तद्ब्रह्म वनमित्युपासितव्यम् । सः—प्रसिद्धः, योऽधिकारी, एतद्ब्रह्म एवम्—वननीयं वेद । एनमभि—एनं प्रति, सर्वाणि भूतानि संवाञ्छन्ति । सर्वैरयमुपासको विद्यामाहात्म्याद्वननीयो भवतीति भावः ॥६॥

**उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥७॥**

एवमुपदिष्टः शिष्यो ब्रह्मविद्यायां निरूपितायामपि तदुपायरहस्यं जिज्ञासुः परिपृच्छति—उपनिषदं भो ब्रूहीति । उपनिषदम्—रहस्यम्, वक्तव्यं रहस्यं ब्रूहीत्यर्थः । आचार्य आह—उक्तेति । ते—तु-

भ्यस्, उपनिषदुक्ता । उक्तेत्येतदेव द्रढयति—ब्राह्मीमिति । ब्रह्मविद्यामब्रूम किल ते । वावेत्येवार्थकम् । उक्तैव ब्रह्मविद्या, नात्रावशिष्टं किञ्चित्, किन्तु तदुपयोगि तु वक्ष्यमाणं शृण्विति भावः ॥७॥

तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः
सर्वाङ्गानि सत्यमायतनम् ॥८॥

तस्या इति । तस्यै—ब्रह्मविद्यायै । तपः—कृच्छ्रचान्द्रायणादि, दमः—इन्द्रियनिग्रहः, कर्म—अग्निहोत्रादिकम्, इतीदं प्रतिष्ठा—हेतुः । वेदास्तदङ्गानि सत्यमिति च, आयतनम्—स्थानम्, हेतुरित्यर्थः । विद्यायामिति शेषः ॥८॥

यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे
लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥९॥

यो वा एताम्—उक्तां ब्रह्मविद्याम्, एवम्—तपःप्रभृत्युपायसहिताम्, वेद । स पाप्मानमपहत्य—सर्वाणि पापान्यवधूय, अनन्ते—कालपरिच्छेदशून्ये, ज्येये—ज्यायसि, सर्वतः श्रेष्ठ इत्यर्थः, स्वर्गे लोके—दुःखासंभिन्नसुखे भगवल्लोके, अक्षरधाम्नीति यावत्, प्रतितिष्ठति—प्रतिष्ठितो भवति । न च पुनरावर्तत इति भावः । आवृत्तिरुपनिषत्समाप्त्यर्था । अनन्ते ज्येय इति पदद्वयसमभिव्याहाराद्योगपौष्कल्यात्स्वर्गशब्दो भगवद्धामपरः ॥९॥

इति केनोपनिषद्भाष्ये चतुर्थः खण्डः ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण—परमहंसवर्य—योगिराज—श्रीगोपालानन्दस्वामिविरचितं केनोपनिषद्भाष्यं समाप्तम् ।

---



श्रीस्वामिनारायणो जयति ।

# कठोपनिषत् ।

## श्रीगोपालानन्दस्वामिविरचितभाष्यसमेता ।

उशन्ह वै वाजश्रवसः सर्ववेदसं ददौ ।
तस्य ह नचिकेता नाम पुत्र आस ॥१॥

ओं नमः सर्वकल्याणनिलयायामलात्मने ।
सर्वकारणरूपाय सहजानन्दमूर्तये ॥१॥

अणोरणीयान् महतो महीयान् योऽसौ गुहायां निहितोऽस्य जन्तोः ।
तं सर्वगं सर्वतो दूरगं च महामदं देवमहं प्रपद्ये ॥२॥

विद्यास्तुतये आख्यायिका प्रस्तूयते—उशन्नित्यादिना । वाजश्रवसः—वाजश्रवसोऽपत्यं पुमान् । उशन्—कामयमानः, फलमिति शेषः । उपक्रान्ते विष्णुजिद्यागे सर्ववेदसं—सर्वस्वदक्षिणाम् । ददौ—प्रायच्छत् । तस्य पुत्रो नचिकेता नाम आस ॥१॥

तꣳ ह कुमारꣳ सन्तं दक्षिणासु नीय-
मानासु श्रद्धाऽऽविवेश सोऽमन्यत ॥२॥

दक्षिणासु—दक्षिणात्वेन निसृष्टासु गोषु नीयमानासु तं कुमारं सन्तं—कुमारमपि तं श्रद्धाऽऽविवेश। पित्रा दक्षिणात्वेन दीयमानाः सर्वा गा अवलोक्य पुत्रस्य कौमारे वयसि वर्तमानस्यापि काऽपि श्रद्धा पितुः कल्याणाभिकाङ्क्षयाऽभूदिति यावत् ॥२॥

पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः। अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥३॥

पीतोदका जग्धतृणा दुग्धदोहाः—प्राक्पीतानि नाम जलानि जग्धानि च तृणानि दुग्धाश्च दोहाः, अद्य तु कथाशेषास्ते व्यापारा इति भावः। निरिन्द्रियाः—प्रजननासमर्थाश्च। एवम्भूता या गावस्ता ददत्स यजमानोऽनन्दा नाम ये लोकास्तान्गच्छति। असुखाँल्लोकानाप्नोतीत्येतत्। तदेवं जीर्णा गाः प्रयच्छतो मम पितुरनिष्टं खलु भवेदित्यशङ्कत, इति भावः ॥३॥

स होवाच पितरं तात कस्मै मां दास्यसीति द्वितीयं तृतीयं तꣳ होवाच मृत्यवे त्वा ददामीति ॥४॥

एवमालक्ष्य यज्ञवैफल्यं दक्षिणावैगुण्यपरिजिहीर्षया पितरमात्मनो दाने उद्योजयन्नाह—हे तात! मां कस्मै दास्यसि, अहं हि तवासाधारणं स्वं तन्मां दातुमर्हति भवानित्याशयः। एवमुक्तोऽपि पिता बालोऽयमालपति किञ्चिदर्थविधुरं वच इत्यनाकर्णयन्निवाभूत्, तदाऽयं तु श्रद्धावांस्तदेव वचनं द्वितीयं तृतीयमाह, पुनःपुनराहेति भावः। पिता क्रुद्धः सहसेदमुवाच—मृत्यवे त्वा ददामीति ॥४॥

**बहूनामेमि प्रथमो बहूनामेमि मध्यमः । किंस्वि-**
**द्यमस्य कर्तव्यं यन्मयाऽद्य करिष्यति ॥५॥**

व्याहृतमेतन्निशम्य पुत्रश्चिन्तयति—नाहं मृत्युतो भीतः शोचामि, बहूनां तत्परिचर्यायै प्रवृत्तानां मध्ये प्रथमो मध्यमो वा भूत्वैमि तत्पार्श्वम्, नाधम इत्यर्थः । आज्ञावचननिरपेक्षं यथाऽवसरं परिचरणमेव परिचरतां प्राथम्यम्, यथादेशमादिष्टवचनपरिपालनमेव तेषु मध्यमता, अधमता च तदपरिपालनम् । किन्त्विदमेव शोचामि; यदप्रकृते पात्रे ममेदं वितरणमित्याह—किंस्विदिति । अद्य पित्रा यमस्य किं कर्तव्यम्—किमभीष्टं संपादनीयम् । मया—प्रदत्तेन मया यदभीष्टं करिष्यति, चिकीर्षतीति यावत् । अद्य खलु वृतेभ्य ऋत्विग्भ्यो दक्षिणावैगुण्यपरिहरणाय मम दानमुचितम्, तेषामेव प्रसादाकाङ्क्षया तेषामभीष्टं तु संपादनीयम्, तदस्मिन्नवसरे यमाय मां दत्वा किं साधयिष्यति, इदमेव शोचामीति भावः ॥५॥

**अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे । सस्य-**
**मिव मर्त्यः पच्यते सस्यमिवाजायते पुनः ॥६॥**

एवं क्रोधवेगापहतविवेकस्य पितुर्वचनप्रवृत्तिं प्रत्यनुशोच्य पश्चाद्धूयमानमानसं पितरं प्रति तदपि वचनं मिथ्या माभूदित्याह । अनुपश्य—पर्यालोचय तावत्, पूर्वे—नः पितृपितामहप्रभृतयः, यथा—येन प्रकारेण आसन् । तथा—अद्यापि येऽपरे सन्ति, तान्प्रतिपश्य—अस्मत्कुलेऽतीतान्सत्यैकपरायणानद्यापि वर्तमानांस्तथाभूताननुस्मरता भवता सत्यैकपरेण भाव्यम्, तद्यथोदितमनुज्ञैव देया मम मृत्युसन्नि-

धिगमन इति भावः । जीवलोकस्वभावो यदि पर्यालोच्यते तदाऽपि सत्यमेवानुपालनीयम्, नहि जीवलोके कश्चिदपि अजरामरः । सस्यमिव मर्त्यः पच्यते—यथाऽल्पेनैव कालेन सस्यं पच्यते तथा मर्त्योऽपि पच्यते, जीर्यतीत्येतत् । सस्यमिव जायते पुनः—यथा बीजं भूमौ पतितं पुनर्जायते, तथाऽयमपि मृत्वा पुनर्जायते । तदेवमनित्येऽस्मिन्जीवलोके सत्यवचनोल्लङ्घनेन किं फलं प्राप्यमस्ति, तत् पुत्रस्नेहं त्यज, सत्यमेवानुपालयेति भावः ॥६॥

वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् । तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥७॥

एवं प्रतिबोधितेन पित्राऽभ्यनुज्ञातः पुत्रो यमसदनमुपगतः प्रोषितस्य यमस्य प्रत्यागमनमाकाङ्क्षमाणोऽनश्नन् दिनत्रयमवात्सीत्सदनाङ्गणे । चतुर्थे दिने प्रत्यागते यमे तदनुचरा वृद्धाः कथयन्ति—अतिथिर्ब्राह्मणः, स एव वैश्वानरः—अग्निः, गृहान्प्रविशति । प्रविष्टस्य तस्यैतामर्घ्यपाद्यादिलक्षणां शान्तिं कुर्वन्ति वृद्धाः । वैवस्वत ! अस्मा अतिथये उदकं पाद्यादिनिमित्तं हर—उपनय । अग्निकल्पोऽतिथिर्गृहानुपगतोऽसत्कृतो दहेत्कुलम्, तमेनमतिथिं पाद्यादिदानेन सत्कुर्विति भावः ॥७॥

आशाप्रतीक्षे सङ्गतं सूनृतां चेष्टापूर्ते पुत्रपशूंश्च सर्वान् । एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे ॥८॥

अकरणेऽनर्थमाह—यस्याल्पमेधसो गृहे ब्राह्मणोऽतिथिभूतोऽनश्नन्वसति—अशनमलभमानो वसति । एतत्—इदमतिथेरनशनजनित-

मागः, तस्य गृहमेधिनः आशाप्रतीक्षादिकं सर्वं वृङ्क्ते, नाशयतीत्येतत्। आशा—अलब्धलाभेच्छा, प्रतीक्षा—लब्धस्य भोगवाञ्छा, सङ्गतम्—साधुसङ्गतम्, सूनृता—प्रियवाणी, इष्टं—यागः, पूर्तं—खातादि। यच्च वाञ्छितं यच्च सत्सङ्गसूनृतेष्टापूर्तादिजन्यं सुकृतं, पुत्रपश्वादिकं यत्प्रियम्, तदखिलं नश्यत्यतिथिमसत्कुर्वतोऽल्पमेधस इति भावः॥८॥

तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्म-
न्नतिथिर्नमस्यः। नमस्तेऽस्तु ब्रह्मन्स्वस्ति
मेऽस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व॥९॥

एवमुक्तो मृत्युः नचिकेतसमुपगम्य सप्रश्रयमुवाच—ब्रह्मन्! नमस्तेऽस्तु, त्वं नमस्यः—प्रणिपातार्हः। अतिथिः सन्नपि मे गृहे तिस्रो रात्रीरभिव्याप्यानश्नन्यस्मादवात्सीः, तस्मात्सञ्जातागसे मेमह्यं स्वस्त्यस्तु, अनुगृहाणेति यावत्। त्रीन्वरान्प्रति वृणीष्व। अनिच्छताऽपि त्वया मत्तो वरत्रयवरणेनाहमनुग्राह्य इति भावः॥९॥

शान्तसङ्कल्पः सुमना यथा स्याद्वीतमन्युर्गौ-
तमो माऽभि मृत्यो। त्वत्प्रसृष्टं माऽभि वदे-
त्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे॥१०॥

एवं मृत्युना सविनयं प्रार्थितो नचिकेता आह—हे मृत्यो! गौतमो मम पिता शान्तसङ्कल्पः—मम पुत्रो मृत्युमुपगतः कां दशामनुभवतीति चिन्तारहितः, अत एव सुमनाः—प्रसन्नचेताः माऽभि—मां प्रति वीतमन्युः—गतरोषश्च यथा स्यात्, यथा च प्रसन्नेन त्वया

---

१ सङ्गतादिपदैस्तज्जन्यं सुकृतं लक्ष्यते इति भावः।

गृहमुपगतं माऽभि-मां प्रति स एवायं मम पुत्र इति विश्वस्तः सन्व-देत्-प्रीतिपूर्वमालापं कुर्यात्, एतत्त्रयाणां मध्ये प्रथमं वरं वृणे ॥१०॥

यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारु-
णिर्मत्प्रसृष्टः । सुखꣳ रात्रीः शयिता वीत-
मन्युः त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥११॥

मृत्युः प्रतिवक्ति—औद्दालकिः-उद्दालकस्यापत्यम्, आरुणिः-अरुणस्य गोत्रापत्यम्, नाम्ना गौतमः, तव पिता मत्प्रसृष्टः सन्-मयाऽनुगृहीतः सन्, मदनुग्रहेणेत्येतत्, यथा पुरस्ताद्भविता-पूर्ववत्प्रहृष्टो भविष्यति । प्रतीतश्च भविता-त्वयि प्रत्यभिज्ञानवांश्च भविष्यति । मृत्युमुखात्प्रमुक्तं त्वां ददृशिवान्सन्-दृष्टवान्सन्, दृष्ट्वेति यावत्, वीतमन्युः-अपगतकोपः, रात्रीः सुखं शयिता-निश्चिन्तः सुखेन स्वप्स्यति चेति भावः ॥११॥

स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं
न जरया बिभेति । उभे तीर्त्वाऽशनायापि-
पासे शोकातिगो मोदते स्वर्गलोके ॥१२॥

स्वर्गसाधनभूतामग्निविद्यां द्वितीयेन वरेण वृण्वानः स्वर्गस्वरूपं तावदाह—स्वर्गे लोके-स्वर्गशब्दोऽयं मोक्षस्थानभूताप्राकृतलोकपरः, एतल्लोकं गतानां मुक्तासाधारणस्यापहतपाप्मत्वादिगुणाष्टकस्य 'न भयं किञ्चनास्ती'त्यादिना प्रतिपादनात् । तत्र हि 'न भयं किञ्चनास्ती'-

त्यपहतपाप्मत्वं, 'न तत्र त्व'मिति विमृत्युत्वं, 'न जरये'ति विजरत्वम्, 'उभे तीर्त्वाऽशनायापिपासे' इति विजिघत्सत्वमपिपासत्वं च प्रतिपाद्यते । श्रूयते चान्यत्रापि स्वर्गशब्दोऽप्राकृतलोकविशेषे 'तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषाऽऽवृतः' 'तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः' 'अनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठती'ति । स्वर्गशब्दस्य निरतिशयप्रीतिविशेषवाचित्वान्मोक्ष एव मुख्यार्थोपपत्तेः, अन्यत्र सातिशयप्रीतिमात्रादौपचारिकत्वात् । स्वर्गकामाधिकरणे च निरतिशयप्रीतिवाचिता समर्थिता । विस्तरस्त्वन्यतोऽवगन्तव्यः । 'न भयं किञ्चनास्ती'त्यादि तु व्याख्यातम् ॥१२॥

स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तꣳ
श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं
भजन्ते एतद् द्वितीयेन वृणे वरेण ॥१३॥

मृत्यो! स त्वं स्वर्ग्यमग्निं—उक्तस्वर्गसाधनीभूतमग्निम्, अध्येषि—जानासि । तं श्रद्दधानाय मह्यं प्रब्रूहि । स्वर्गलोका हि—उक्तस्थानविशेषं प्राप्ता हि, अमृतत्वं—मोक्षं स्वरूपाविर्भावलक्षणं भजन्ते । तस्मात् तत्साधनीभूतामग्निविद्यां मह्यमुपदिशेति भावः । मोक्षसाधनत्वमग्निविद्याया ज्ञानद्वारा बोध्यम् ॥१३॥

प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं
नचिकेतः प्रजानन् । अनन्तलोकाप्तिमथो
प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् ॥१४॥

मृत्युराह—हे नचिकेतः! स्वर्ग्यमग्निं प्रजानन्नहम्—उक्तस्थानविशेषसाधनमग्निं सम्यग्जानन्नहं, ते—तुभ्यं प्रब्रवीमि—प्रकर्षेण ब्रवीमि। विविच्य कथयामीति यावत्। निबोध—सावधानमनाः शृणु। अनन्तलोकाप्तिम्—आप्तिसाधनभूतम्, कारणे कार्योपचारः। अथ—किञ्च, प्रतिष्ठाम्—प्रतिष्ठासाधनभूतम्, अपुनरावृत्तिरूपस्थिरतायाः साधनभूतमिति यावत्। एवम्भूतम्, एतम्—वक्ष्यमाणमग्निं, गुहायां निहितं विद्धि—अतिरहस्यं जानीहि। नहि सर्वसुलभोऽयमर्थः। अहं पुनः प्रीत्या रहस्यमिदमुपदिशामि तदवहितः शृण्विति भावः। यद्वा—ते—तुभ्यं तत्—त्वया पृष्टं प्रब्रवीमि निबोध। त्वं मदुपदेशेन स्वर्ग्यमग्निं सम्यक्प्रजानन्सन्, उपासनाङ्गभूतेनैतेन, उपासनाद्वारा, अनन्तलोकाप्तिं प्रतिष्ठां च विद्धि—लभस्व। विदेर्लाभार्थकस्यापि सम्भवात्। ईदृशमस्य मोक्षहेतुत्वरूपं माहात्म्यं गुहायां निहितं—रहस्यम् ॥१४॥

लोकादिमग्निं तमुवाच तस्मै या इष्टका याव-
तीर्वा यथा वा। स चापि तत्प्रत्यवदद्य-
थोक्तमथास्य मृत्युः पुनरेवाह तुष्टः ॥१५॥

लोकादिम्—लोकस्यादिम्, उक्तलोकविशेषस्य कारणम्। तमग्निं तस्मै नचिकेतसे उवाच। इष्टका याः—चेतव्या इष्टका यत्स्वरूपाः, यावतीः—यावत्सङ्ख्याकाः, यथा—येन प्रकारेण च चेतव्याः, तत्सर्वमाहेत्यर्थः। विशेषोऽत्र चयनप्रकरणादवगन्तव्यः। सोऽपि नचिकेताः सकृदवबोधित एव तत्सर्वं यथोपदिष्टं प्रत्यवदत्। अथास्य तुष्टस्तन्मतिकौशलमवलोक्य सन्तुष्टस्तस्मिन् मृत्युः पुनरेवाह ॥१५॥

तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य
ददामि भूयः। तवैव नाम्ना भविताऽय-
मग्निः सृङ्कां चेमामनेकरूपां गृहाण ॥१६॥

शिष्यमतिकौशलमवलोक्य तुष्यन्महामना मृत्युर्भूयो वरं तवेहाद्य ददामीत्यब्रवीत्तं नचिकेतसम्। यश्चायं मयोपदिष्टोऽग्निस्तवैव नाम्ना प्रथितो भविता। अनेकरूपां—विचित्राम्, इमां सृङ्कां च—रत्नमालां च गृहाण। अयं च प्राक् प्रतिश्रुताद्वरत्रयादधिकः ॥१६॥

त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तर-
ति जन्ममृत्यू। ब्रह्मजज्ञं देवमीड्यं विदि-
त्वा निचाय्येमाꣳ शान्तिमत्यन्तमेति ॥१७॥

अथ कर्म स्तौति। त्रिकर्मकृत्—इज्याध्ययनदानरूपकर्मत्रयकृत्। त्रिणाचिकेतः—वारत्रयं नाचिकेतश्चितोऽग्निर्येन सः। त्रिभिश्चितैरग्निभिर्हेतुभिः सन्धिम्—उपासनेन सह संबन्धम्, एत्य जन्ममृत्यू तरति, मुक्तो भवतीति यावत्। उपासनद्वाराऽयमग्निश्चितो मुक्तये भवतीत्येतत्। अङ्गीभूतोपासनस्वरूपमाह—ब्रह्मजज्ञमिति। ब्रह्मजज्ञम्—सकलजगत्कारणाद्ब्रह्मणो जातं ज्ञं जीवम्, ईड्यं देवं परमात्मानं च विदित्वा, स्वात्मस्वरूपं परमात्मस्वरूपं च शास्त्रतो विदित्वा; निचाय्य—ध्यानतः साक्षात्कृत्य, इमां शान्तिम्—स्वबुद्धिसन्निहितत्वमभिप्रेत्येमामिति निर्देशः, आत्यन्तिकीं शान्तिमेति। यद्वा—ब्रह्मजज्ञं देवमीड्यमिति विशेष्यविशेषणभावः। स्वात्मानं परमात्मानं मत्वा, तदात्मकं मत्वेति यावत् ॥१७॥

त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाꣳश्चिनुते नाचिकेतम् । स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥१८॥

य एतत्त्रयं—अग्निस्वरूपमात्मस्वरूपं परमात्मस्वरूपं च, विदित्वा—शास्त्रतो ज्ञात्वा । एवं विद्वान्—शास्त्रावगतप्रकारेण त्रयमनुचिन्तयन् । नाचिकेतमग्निं चिनुते । स त्रिणाचिकेतः—उक्तोऽर्थः । मृत्युपाशान्—रागद्वेषादीन् । पुरतः—शरीरापगमात्प्रागेव, प्रणोद्य—विगमय्य, स्वर्गे लोके—निरतिशयसुखमये स्थानविशेषे । शोकातिगो मोदते, आविर्भूतस्वस्वरूपो भवतीत्येतत् ॥१८॥

एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण । एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥१९॥

एष तेऽग्निरुपदिष्टः; यस्त्वया वृतो वरेण द्वितीयेन । हे नचिकेतः ! तवैव नाम्ना वक्ष्यन्ति जना एनम् । अन्यं तृतीयं वरं वृणीष्व । जनास इति छान्दसः प्रयोगः ॥१९॥

येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥२०॥

अथ मुमुक्षुर्नचिकेता द्वितीयेन वरेणाधिगत्यात्मविद्यां मोक्षोपाय-

भूतां, स्वेनावगतमपि मोक्षस्वरूपं द्रढयितुं तृतीयेन वरेण मोक्षस्वरूपोपदेशं वृणुते—येयमिति । अवगतस्याप्यर्थस्य जिज्ञास्यतायां हेतुं व्यञ्जयन्वादिविप्रतिपत्तिं निरूपयति—अस्तीत्येके नायमस्तीति चैक इति । इदं विप्रतिपत्त्यन्तराणामुपलक्षकम् । येयं विचिकित्सा–विचारः । प्रेते–प्रकर्षेणेते, अत्यन्तं निर्गते, प्रकृतिविनिर्मुक्ते सतीत्यर्थः । अयमात्मा अस्तीति केचिन्नास्तीति केचित् । कथयन्तीति शेषः । मुक्तिस्वरूपमधिकृत्य हि विविधं वदन्ति वादिनः—वित्तिमात्रस्यात्मस्वरूपस्यैव समुच्छेदो मुक्तिः, सत एव वित्तिमात्रस्यात्मनोऽविद्यास्तमयो मुक्तिः, ज्ञानाद्यशेषगुणस्यात्यन्तिकोच्छेदेन पाषाणकल्पावस्था मुक्तिः, नित्यशुद्धस्य ब्रह्मण औपाधिकजीवभावापगमेन तद्भावापत्तिर्मुक्तिरिति । तदेवं विविधवादतः संशयाकुलेन निश्चयायेदं क्रियते । तस्मात्त्वयाऽनुशिष्ट एतन्मुक्तिस्वरूपं विद्याम् । त्वया प्रदत्तानां त्रयाणां वराणां मध्ये एष तृतीयो वर इति भावः ॥२०॥

देवैरत्रापि विचिकित्सितं पुरा न हि सुवि-
ज्ञेयमणुरेष धर्मः । अन्यं वरं नचिकेतो वृ-
णीष्व मा मोपरोत्सीरति मा सृजैनम् ॥२१॥

एवं पृष्टो मृत्युर्मुमुक्षुमेनं जानन्नपि गभीरस्यार्थस्याधिगमे उत्साहविशेषं स्थूणानिखननन्यायेन द्रढयितुं प्रतिवदति—देवैरिति । यद्वा —द्वितीयेन वरेण प्रसिद्धस्वर्गसाधनमेवापृच्छत् । स्वर्गवर्णनपरे स्वर्गलोक इति मन्त्रे 'न भयं किञ्चनास्ती'ति मानुषलोकसंभावितभयाभाव एवोच्यते, 'न तत्र त्व'मिति यमशासनावश्यत्वमुच्यते, अमृतपाना-

द्विजनिता तृप्तिः'उभे तीर्त्वे'त्यादिनोच्यते, अमृतप्राप्तिश्चोच्यमाना चिरकालस्थायित्वमभिप्रेत्य । स्वर्गसाधनमग्निं पृष्टो यमस्तमुद्दिश्य तन्मतिकौशलेन प्रसन्नस्तेनापृष्टोऽपि तस्याग्नेर्माहात्म्यवर्णनप्रसङ्गेन त्रिरनुष्ठितस्य ज्ञानद्वारा परमपुरुषार्थलक्षणमोक्षोपयोगितामाह— त्रिणाचिकेत इत्यादिना । उक्त एवार्थः । तदेवं प्रसङ्गादस्य मोक्ष-साधनत्वरूपं महिमानमुपश्रुत्य सञ्जातपरमपुरुषार्थरुचिः सन्मोक्षस्वरू-पमपृच्छत्—येयं प्रेत इति । एवं पृष्टो यमस्तस्य मुमुक्षां परीक्षितु-माह–देवैरिति । यद्यपि प्राक् 'सस्यमिव मर्त्यः पच्यते सस्यमिवाजा-यते पुन'रित्याह, न तावता तस्य स्वर्गादावपि वैतृष्ण्यं ज्ञायते, जन्म-मरणयोरवर्जनीयत्वेन जीवितनिमित्ते न व्यलीकं वक्तव्यमित्येताव-दुच्यते । तदस्यां व्याख्यायामपि नातीव बाधकम् । परमनिःश्रेयस-स्वरूपं हि सपदि नोपदेश्यमपरीक्ष्य शिष्याधिकारमिच्छामात्रेणेत्य-भिप्रेत्य तत्परीक्षणायाह—देवैरिति । अत्र–त्वया पृच्छ्यमाने मुक्ति-स्वरूपे । देवैरपि पुरा विचिकित्सितम्–संशयितम् । अपिना मानु-षेभ्यः प्रकृष्टज्ञानवत्वा देवानां व्यज्यते । तदेवं देवानामपि संशया-स्पदमिदं भवादृशानां मनुष्याणां न सुविज्ञेयम् । देवानामप्यगम्यं भवादृशानामगम्यमित्येतत्कैमुतिकन्यायसिद्धमिति हिशब्देन व्य-ज्यते । दुर्ज्ञेयत्वे हेतुमाह—एष धर्मः, मुक्तस्वरूपमित्येतत्, मुक्ता-पेक्षया तत्स्वरूपं हि धर्मः । एतेन मुक्तावपि धर्मधर्मिभावो व्य-ञ्जितः । मुक्तात्मस्वरूपं मुक्तिस्वरूपं ससाधनं वा धर्मशब्देनोच्यते । हे नचिकेतः ! अन्यं वरं वृणीष्व, मा मोपरोत्सीः, एनं मां–प्रतिश्रु-तवरं माम्, अतिसृज–मुञ्च । यद्यपि 'त्रीन्वरान्वृणीष्वे'ति प्रतिजानता

मया यावद्वरदानमधमर्णेनैव भूयते नाम, तथाऽपि भवादृशजनदुरधिगमेऽस्मिन्नेकस्मिन्विषये मां त्यज, वृथा निर्बन्धं माकुर्वित्याशयः ॥२१॥

देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो
यन्न सुविज्ञेयमात्थ। वक्ता चास्य त्वादृगन्यो न
लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥२२॥

एवं मृत्युना दुर्ज्ञेयत्वेन हेतुना प्रचाल्यमानोप्यप्रचलितः पुनराह—देवैरिति। यदि नाम वरः कश्चन स्यादस्य तुल्यः स्यान्नाम वरणीयः, नान्यो वरस्तुल्य एतस्य कश्चित्, इतो दुर्लभस्यान्यस्याभावात्। दुर्लभ एव हि वरणीयो भवति। दुर्लभतामेवाह—देवैरत्रापीत्यादिना। यः स्याद्देवानामपि सन्देहास्पदोऽयमर्थः, निखिलधर्मतत्त्वविच्त्वं च दुर्ज्ञेयमात्थ, वक्ता चास्य त्वादृक् मम हितैकपर उपदेशपरो न लभ्यः, तत्सर्वथा दुर्लभोऽयमेव भवत्प्रसादान्मया प्राप्यः ॥२२॥

शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्ति-
हिरण्यमश्वान्। भूमेर्महदायतनं वृणीष्व
स्वयं च जीव शरदो यावदिच्छसि ॥२३॥

पुत्रपौत्रान्वृणीष्व—सन्तानसमृद्धिं वृणीष्वेति यावत्। सा हि सर्वतो दुर्लभा। तच्च पुत्रपौत्रादिसन्तानं चिरायुरपि स्यादित्याह—शतायुष इति। किञ्च—बहून्पशून्हस्तिहिरण्यमश्वान्—न केवलं सन्तानसमृद्धिमात्रम्, अथ च भोगोपकरणं गवाश्वहस्तिहिरण्यं यत्त्वदपेक्षितं तद्वृणीष्व। किं बहुना-इदमपि वृणीष्व यच्च भूमेर्महदायतनम्—भौमं

महत्स्थानं, राज्यमित्येतत् । सर्वमिदं स्यान्नाम, यदि स्वल्पायुः किमेतैस्तदाह—स्वयं च जीव शरदो यावदिच्छसि—आयुर्नियममुल्लङ्घ्य यथेच्छं जीवेति यावत् ॥२३॥

एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं
चिरजीविकां च । महाभूमौ नचिकेतस्त्व-
मेधि कामानां त्वा कामभाजं करोमि ॥२४॥

एतदिति । योऽयं वरो वृतो मुक्तस्वरूपमधिकृत्य तमेकमृते यदनेन तुल्यं मन्यसे तद्वृणीष्व । वित्तं—मुक्ताफलमाणिक्यादिमहार्घमपि वृणीष्व । चिरजीविकामपि तथा । पुत्रमित्रकलत्रादिसकलसंपद्योग्यायामस्यां महाभूमौ हे नचिकेतः! अनेनैव नाम्ना प्रथितस्त्वमेधि—सर्वोत्कृष्टो राजन्यचूडामणीभूय वर्धस्व । किं बहुना—अस्यामेव भूमौ त्वां दिव्यानामपि कामानामप्सरःप्रभृतीनां कामभाजं—कामपात्रं करोमि, स्पृहणीयं करोमीत्येतत् ॥२४॥

ये ये कामा दुर्लभा मर्त्यलोके सर्वान्कामांश्छ-
न्दतः प्रार्थयस्व । इमा रामाः सरथाः सतूर्या न
हीदृशा लम्भनीया मनुष्यैः । आभिर्मत्प्रत्ताभिः
परिचारयस्व नचिकेतो मरणं माऽनुप्राक्षीः ॥२५॥

ये ये कामा मर्त्यलोके दुर्लभास्तान्सर्वान्यथेच्छं प्रार्थयस्व । दुर्लभमेव तु वरणीयं न सुलभमिति सर्वलोकदुर्लभं मा वृणीष्व, मर्त्यलोके जातस्त्वं मर्त्यदुर्लभं वृणीष्व । मर्त्यदुर्लभाः कामा बहवः सन्तीति यावत् । इमाः—दिव्याः, रमयन्ति पुरुषमिति रामाः— अप्स-

रसः, न केवलं रामाः, दिव्यै रथैर्दिव्यैर्वादित्रैश्च सह गृहाण । ईदृशाः—दिव्याः, मनुष्यैर्न लम्भनीया हि, मानुषदुर्लभोऽयमर्थ इति सुप्रसिद्धमेतत् । तदाभिर्मया दत्ताभिः परिचारयस्व, आत्मानमिति शेषः । बहवो देहान्तरेणापि या एव कामयमानाः महताऽप्यायासेन यागादि चरन्ति, ता एव अहमहमिकया पादसंवाहिन्यः परिचारिकास्तवाद्यैव भविष्यन्ति, तदाभिरात्मानं परिचरस्व, मरणं मानुप्राक्षीः—आत्यन्तिकशरीरविश्लेषवृत्तं मा विचारय ॥२५॥

श्वोऽभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रि-
याणां जरयन्ति तेजः । अपि सर्वं जीवि-
तमल्पमेव तवैव वाहास्तव नृत्यगीते ॥२६॥

एवं मृत्युना प्रलोभ्यमानोऽपि नचिकेता महाबुद्धिरेव गभीराशयो मात्रयाऽप्यक्षुभितः प्राह—श्वोऽभावा मर्त्यस्येति । कामा इति शेषः । मर्त्यस्य कामाः—पुत्रपौत्रगवाश्वहस्तिहिरण्यप्रभृतयो मानुषभोगाः, श्वः अभावो येषां ते श्वोऽभावाः, दिनद्वयमपि न स्युः । अन्तक ! त्वमसि मनुष्याणां जीवितहरः, जानासि नाम मानुषभोगस्थैर्यं कीदृशमिति, न हि सागरपरिधामेकः स्वशासनवशगामनुभवन्नपि मेदिनीं सह पुत्रमित्रकलत्रादिभिरेकस्मिन्दिन इवान्यस्मिन्दिनेऽपि स्वयं तिष्ठति सुखेन । यदेतद्द्वितीयं प्रलोमनमप्सरःप्रभृतिदिव्यभोगाः, त एते सर्वेन्द्रियाणां तेजो जरयन्ति—इन्द्रियदौर्बल्यमेवापादयन्ति । वीर्यप्रज्ञातेजोयशःप्रभृतीनां विनाशका इति यावत् । या च चिरजीविका त्वयोक्ता साऽप्यजानतः प्ररोचनायैव । कुतः ? अपि सर्वं जीवितमल्पमेव—ब्रह्मणोऽपि जीवितमल्पमेव तदपि हि सावधि, तत्सर्वथा

मानुषाद्दिव्याद्वा भोगाच्चिरजीविकातश्च विमुखस्य मे रथादिभिरेभिः किम्? । वाहा नृत्तगीते वा तवैव सन्तु—त्वद्विभूतयस्तवैव सन्तु ॥२६॥

न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा । जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥२७॥

वृणीष्व वित्तं चिरजीविकां चेत्यत्र प्रतिवदति—न वित्तेनेति । को वा जगति वित्तं प्राप्य नः पर्याप्तमेतदिति तृप्तः । यथा यथा लभ्यते तथा तथा आकाङ्क्षैव वर्धते, तन्न वित्तेन तर्पणीयो मनुष्यः । किञ्च—लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा—महोदारं त्वां यदा पश्यामस्तदा लप्स्यामहे यावदपेक्षितं वित्तम् । भवादृशमहापुरुषदर्शने सति वित्ते का चिन्तेति भावः । अस्मास्वत्यन्तप्रणयी त्वं यावत्कालमीशिष्यस्यस्मिन्याम्ये पदे तावत्तु जीवितं नः सिद्धमेव । तच्चिरजीवितायां वा का चिन्ता, तस्मात्स एव—प्राक् पृष्ट एव वरो वरणीयः ॥२७॥

अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन् । अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥२८॥

किञ्च मादृशो जीर्यन्मर्त्यः—जरामरणधर्मा, क्वधःस्थः—कुत्सिते दुःखैकप्रचुरेऽधोदेशे मानुषलोके स्थितः । एवम्भूतः प्रजानन्—स्वस्य जरामरणधर्मत्वं दुःखभूयिष्ठदेशवर्तित्वं प्रकर्षेण जानन्, अजीर्यताममृतानामुपेत्य—जरामरणशून्यानां मुक्तानां स्वरूपमपि ज्ञात्वा, एवं विज्ञातसंसारतदपगमविशेषः को वा विवेकी वर्णरतिप्रमोदानभि-

ध्यायन्—अप्सरःप्रभृतिभोग्याभासगतान् लावण्यप्रभृतीनुत्कण्ठयाऽनुचिन्तयन् । अतिदीर्घे जीविते—चिरजीविकायां रमेत । अनतिदीर्घे इति पाठे—अत्यल्पे जीविते को रमेतेत्यर्थः । यद्वा—जीर्यन्मर्त्यः क्वधःस्थो दैवयोगेनाजीर्यताममृतानां भवादृशानां देवानां सन्निधिमुपेत्य भवादृशमहापुरुषसंसर्गेण प्रजानन्—हिताहितविवेकमापन्नः को वा पुनरपि भोग्याभासान् वर्णरतिप्रमोदाननुचिन्तयन्नत्यल्पे जीविते रमेत । अयं भावः—क्व मर्त्याः क्व देवाः क्व तयोः संगतिः, यदा दैवयोगेन ज्ञानाधिकानां समागमो मर्त्यस्य तदा मर्त्यभावापनोदनायैव प्रयतितव्यं न पुनरधोगमनायेति ॥२९॥

यस्मिन्निदं विचिकित्सन्ति मृत्यो ! यत्सांपरा-
ये महति ब्रूहि नस्तत् । योऽयं वरो गूढमनु-
प्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥२९॥

यस्मिन्निति । हे मृत्यो ! यस्मिन्मुक्तात्मस्वरूपे विषये । इदम्—अस्ति नास्तीत्यादि विचिकित्सन्ति—संशेरते । महति सांपराये—महति पारलौकिके निमित्ते । यत्—ज्ञातव्यमिति शेषः । यदेवात्मस्वरूपं सर्वातिशायिपुरुषार्थनिमित्ते ज्ञातव्यमिति यावत् । तदेव नो ब्रूहि गूढमनुप्रविष्टो दुर्विज्ञेयार्थगोचरो योऽयं वरस्तस्मादन्यं वरं नचिकेता न वृणीते । स्वस्याविप्रलोभ्यत्वं व्यञ्जयन्नात्मानमेव नाम्ना निर्दिशति नचिकेताः । यद्वा—श्रुतिस्तस्य गभीरमनस्तां कथयति 'यमेन प्रलोभितोऽपि नचिकेता नान्यं वरं वृणुत' इति ॥२९॥

इति कठोपनिषद्भाष्ये प्रथमाध्यायप्रथमवल्लीभाष्यम् ।

---

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषꣳ सिनीतः । तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥१॥

अथ यमः शिष्यस्य परीक्ष्य मुमुक्षां, अप्रतिहतां विज्ञाय तां, स्तोतुमुपक्रमते—अन्यदित्यादिना । श्रेयोऽन्यत् प्रेयोऽन्यत्—यच्छ्रेयो न तत्प्रेयः यत्प्रेयो न तच्छ्रेयः । अयमाशयः—प्रकृतिसंसृष्टस्य प्राणिमात्रस्येन्द्रियारामस्येन्द्रियसंप्रयोगमात्रेण प्रियतामाविशति तु प्राकृत एवार्थो भोग्यभूतः, प्रकृतिविसजातीयं विशुद्धं मनोमात्रगोचरमात्मनोऽत्यन्तहितं परमनिःश्रेयसशब्दवाच्यं स्वस्वरूपमप्यनादिवासनया सहसा न प्रियतामाविशति, परंतु सर्वतः प्रशस्तं हितमिति श्रेय एव तु तत्, तस्मादन्यदेव प्रेयो भोग्यजातमन्यदेव श्रेयः शुद्धात्मस्वरूपं चेति । तदेते उभे नानार्थे—एको मोक्षायापरो बन्धाय । ते पुरुषं स्वस्वनिष्ठं सिनीतः—बध्नीतः स्ववशमापादयतः । अभ्युदयार्थी प्रेयसि मोक्षार्थी श्रेयसि प्रवर्तत इति भावः । तयोर्मध्ये श्रेय आददानस्य—मोक्षार्थे प्रयतमानस्य साधु भवति—भद्रं भवति । यस्तु बाह्यारामः प्रेयो वृणीते सः अर्थात्—पारमार्थिकात्प्रयोजनात् हीयते—प्रच्यवते । प्रेयोमार्गे प्रसक्तोऽर्थाभासमेव प्राप्नोति न त्वर्थमिति भावः ॥१॥

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः । श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥२॥

श्रेयश्च प्रेयश्चेत्युभे—मोक्षतदितरपुरुषार्थावित्येतत्। मनुष्यम्—स्वस्वसाधनानुष्ठानयोग्यकरणकलेवरयुक्तम्। एतः—आ इतः आभिमुख्येन गच्छतः। पुरुषार्थत्वाविशेषात्। तौ श्रेयःप्रेयःपदार्थौ नीरक्षीराविव हंसो धीरः संपरीत्य—सम्यक् पर्यालोच्य विविनक्ति—पृथक्करोति। गुणदोषपरिज्ञानेन त्याज्योपादेयभेदमाकलयतीति यावत्। एवमाकलय्य धीरो हि प्रेयसोऽभि—प्रेयोऽर्थादभ्यर्हितं श्रेयो वृणीते। प्रेयस इति ल्यब्लोपे पञ्चमी वा, प्रेयः परित्यज्येत्यर्थः, श्रेयोऽभिवृणीते। मन्दस्तु योगक्षेमेन निमित्तेन प्रेयो वृणीते। अज्ञो देवोऽहं मनुष्योऽहमित्याद्यभिमानयुक्तस्तदनुगुणशारीरक्षेमचिन्तया पुत्रपश्वन्नादिरूपभोग्यजातं वृणीत इति यावत् ॥२॥

स त्वं प्रियान्प्रियरूपाꣳश्च कामानभिध्याय-
न्नचिकेतोऽत्यस्राक्षीः। नैताꣳ सृङ्कां वित्तम-
यीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥३॥

हे नचिकेतः! स त्वम्—श्रेयःप्रेयःसाधारणमानुषस्वभावोऽपि त्वम्। यद्वा—मया प्रचाल्यमानोऽपि त्वम्। प्रियान्—स्वतः प्रियान्पुत्रादीन्, प्रियरूपान्कामांश्च—रूपतः स्पृहणीयानप्सरःप्रभृतींश्च, अभिध्यायन्—अभितः कार्त्स्न्येन चिन्तयन्, दुःखभूयिष्ठत्वदुःखोदर्कतादिदोषनिरूपणेन निरूपयन्, अत्यस्राक्षीः—त्यक्तवान्। एतां वित्तमयीम्—धनमयीं सृङ्काम्—कुत्सितां गतिं नावाप्तः। यस्यां धनमय्यां कुसृतौ बहवो मनुष्या निमज्जन्ति ॥३॥

दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता । विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त ॥४॥

प्रेयोवरणादर्थतो हानिः श्रेयोवरणाच्च साधु भवतीत्युक्तं तत्कुत इत्यत्राह—दूरमेत इति । विद्येति या ज्ञाता या चाविद्येति ज्ञाता । पण्डितैरिति शेषः । पण्डिता हि श्रेयो विद्यां मन्यन्ते प्रेयस्त्वविद्याम् । आत्मस्वरूपविषयिणी हि विद्या, पुत्रादिभोग्यविषयिणी ह्यविद्या । एते तत्त्वज्ञानकामकर्मात्मके विद्याविद्ये दूरं विपरीते—तैजस्तमसीवात्यन्तं विरुद्धस्वभावे । विषूची—विभिन्नगती, विपरीतफलके इति यावत् । तद्युक्तम् 'श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीत' इति । तदेवं दृढाग्रहं नचिकेतसं त्वामेवेह जगति विद्याभीप्सिनं श्रेयःसमुत्सुकमहं मन्ये ॥४॥

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥५॥

अथाविद्यानिष्ठानामधोगतिमाह—अविद्यायामन्तरे वर्तमानाः—पुत्रपश्वन्नादिकामरूपायामविद्यायां विद्यमानाः । तत्रापि न क्वचित्प्रान्ते किन्त्वन्तरे—मध्ये, नितान्तमविद्यानिमग्ना इत्येतत् । स्वयं धीराः—स्वयं प्रज्ञाशालिनः, वयमेव प्राज्ञा इति स्वयमेव मन्वाना इति यावत् । पण्डितंमन्यमानाः—शास्त्रकुशलानात्मनो मन्वानाः । दन्द्र-

ध्यमाणाः—कुटिलां गतिमनुगताः । 'जङ्घन्यमाना' इति पाठे जरामरणाद्युपद्रवैः पीड्यमाना इत्यर्थः । 'दन्द्रम्यमाणा' इति पाठे कामाग्निना विद्रुतचित्ता इत्यर्थः । एवम्भूता मूढा अन्धेनैव नीयमाना अन्धा इव परिभ्रमन्ति । भवमहारण्ये पुनः पुनर्भ्रमन्त्येवेत्यर्थः ॥५॥

न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं
वित्तमोहेन मूढम् । अयं लोको नास्ति पर
इति मानी पुनःपुनर्वशमापद्यते मे ॥६॥

प्रमाद्यन्तम्—पुत्रपश्वन्नादिष्वत्यासङ्गेन शास्त्रीयादपि पथः प्रस्खलन्तम्, तत्रानवहितमनस्कमित्येतत् । वित्तमोहेन मूढम्—धनमोहेन मुग्धम्, तमसावृतमिति यावत् । एवम्भूतं बालम्—अविवेकिनं प्रति सांपरायः—परलोकसाधनभूतः शास्त्रीयोऽर्थो, न प्रतिभाति । रजसा तमसाऽऽवृतस्य न परलोकदृष्टिरिति यावत् । एष मूढः, अयं लोकः—अयमेव दृश्यमानो लोकः नास्ति पर इति मन्यते । एवं मानी पुनः पुनर्मम वशमापद्यते—दण्डधरस्य मम वशमापद्यते, मत्क्रियमाणयातनागोचरीभवतीति यावत् ॥६॥

श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि
बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोऽस्य
लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥७॥

श्रेयसि यतमानानां सर्वेषामेव तत्परमात्मस्वरूपं न सुलभमित्याह—श्रवणायापीति । यः परमात्मा श्रवणायापि—श्रोतुमपि

बहुभिर्न लभ्यः, बहूनां तच्छ्रवणमपि दुर्लभम्। शृण्वन्तो बहवो यं न विद्युः—याथातथ्येन तत्स्वरूपं न जानीयुः। अस्य—एवम्भूतस्यास्य कुशलो वक्ता आश्चर्यः—मरुभूमिषु जलाशयवत् कश्चिदेव तादृश इति यावत्। कुशलेन गुरुणाऽनुशिष्टो ज्ञाताऽप्याश्चर्यः। तथा कुशलो लब्धाप्याश्चर्यः। गुरुमुखतोऽधिगतात्मयाथार्थ्यः पश्चादुपायाद्यनुष्ठानेनास्य लब्धा तु कश्चिदेवेत्यर्थः। उत्तरोत्तरं विरलत्वमभिप्रेतम् ॥७॥

न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहु-
धा चिन्त्यमानः। अनन्यप्रोक्ते गतिरत्र
नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात् ॥८॥

कुतो वक्तुर्ज्ञातुर्वा दौर्लभ्यमित्यत्राह—यद्यपि श्रुतवेदान्ताः पाण्डित्यमात्रप्रयोजना बहवः सन्ति नाम, ते ह्यनधिगतात्मसाक्षात्कारा अवरा एव, न तेष्वन्यतमेनावरेण नरेण प्रोक्त एष आत्मा सुविज्ञेयः, तस्माद्येन प्रोक्तोऽयं सुष्ठु विज्ञायेत स तु कुशलो वक्ता कश्चिदेव। एवं कुशलेन प्रोक्तोऽप्ययमनादिपापवासनाभिभूतेन विषयोन्मुखचेतसाऽवरेण नरेण न सुष्ठु विज्ञेयः, तज्ज्ञाताऽपि कुशलानुशिष्टः कश्चिदेव। यस्माद्गुरुणाऽनुशिष्टोऽपि यथावज्ज्ञाताऽत्र दुर्लभः, तस्मात्—विनाऽत्र गुरूपदेशमूहापोहनिपुणस्यापि ज्ञानं न घटतैवेत्याह—अनन्यप्रोक्त इति। अन्येन गुरुणाऽप्रोक्ते, स्वयमेव पर्यालोचित इति यावत्। अत्र—आत्मस्वरूपे गतिर्नास्ति, गम्यतेऽनेनेति गतिः—अवकाशः सोऽपि नास्तीत्यर्थः, ज्ञानकथाऽपि नेति यावत्। तर्ककुशलस्य किमिति दुर्ज्ञेयमित्यत्राह—अणीयानिति। यस्मादेषः अणुप्रमाणादप्य-

णीयान्—अतिसूक्ष्मः। तस्मादूहापोहशालिनाऽप्यज्ञातं तत्स्वरूपम् ॥८॥

नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ। यां त्वमापः सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥९॥

यस्मादणोरण्वप्रतर्क्यमात्मस्वरूपं तस्मात् एषा मतिः—आत्मस्वरूपविषयिणी तर्केण नापनेया—प्राप्तुमयोग्या। यां त्वमापः—सिषाधयिषिततया प्राप्तवानसि। या मतिः संपाद्यतया त्वया निश्चितेत्याशयः। यद्वा—अवधीर्य गुरूपदेशमात्मनस्तर्कबलेनात्मस्वरूपाधिगमे प्रवर्तमानस्य केवलं तर्कबलं दूरीकुर्यादेवान्तत आत्मज्ञानम्। तदवधीर्य गुरुमवलम्बितेन तर्केण सैषाऽऽत्मस्वरूपविषयिणी मतिर्नापनेया—न परिहार्या। लेशतो जाताऽपि सा केवलेन तर्केणापगच्छेदेवेत्याशयः। हे प्रेष्ठ—प्रियतम! अन्येन प्रोक्तैव सुज्ञानाय—गुरुमुखाद्ध्येवाधिगता सा सुज्ञानाय। अन्यथा त्वज्ञानफलायैवेति भावः। शिष्यमभिनन्दति—सत्यधृतिर्बतासीति। बतेत्यनुकंपायाम्। सत्यधृतिरसि—यदप्सरःप्रभृतिभिरपि भोगैरविचालितोऽस्यस्मादभिनिवेशात्। हे नचिकेतः! त्वादृक् प्रष्टा नो भूयात्—त्वादृशः सत्यधृतिः शिष्यो नो भूयात् ॥९॥

जानाम्यहꣳ शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्। ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥१०॥

तुष्टो मृत्युः स्वस्य परमनिःश्रेयससाधनभूतात्मज्ञानागमप्रकारमाह—

जानामीति । शेवधिः–निधिः, इदमखिलस्य कर्मफलस्योपलक्षकम्, निधिवद्भोग्यत्वात् । कर्मफलमखिलमेवानित्यमित्यहं जानामि । नाप्येतैरात्मलाभे लेशत उपयोगो वा । न ह्यध्रुवैरैन्द्राद्यैरपि पदैर्ध्रुवं तदात्मस्वरूपं प्राप्यते । याम्ये ऐश्वर्ये स्थितेनापि मयेदमकिञ्चित्करं ज्ञात्वा तत एव नाचिकेतोऽग्निर्विना फलसङ्गं चितः । अतश्च स्वतोऽनित्यैरप्येतैरिष्टकादिद्रव्यैः फलाभिसन्धिरहितकर्मसु विनियुक्तैर्लब्धवानस्मि नित्यम् । नित्यफलसाधनत्वान्नित्यमित्युक्तिः । आत्मस्वरूपज्ञानमित्येतत् । नित्यफलसाधनस्यास्य निष्कृष्टात्मज्ञानस्य लाभो ममानेनैवाग्निना निष्कामं चितेनेत्याशयः ॥१०॥

कामस्याऽऽप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् । स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥११॥

पुनरभिनन्दति नचिकेतसमनुसरंस्तस्य विषयवैतृष्ण्यम्–हे नचिकेतः! त्वमसि धीरः–प्रज्ञाशाली । यत् क्रतोः–यागादेः कर्मणः, प्रतिष्ठाम्–फलभूताम्, जगतः कामस्य–जगत्सम्बन्धिकामस्य, ब्रह्माण्डोदरवर्तिनो लौकिकस्य कामस्य प्राप्तिम् । अथालौकिके त्वर्थे परमपुरुषार्थस्वरूपे आनन्त्यम्–अविनाशित्वम्, अभयस्य पारम्–अभयकाष्ठाम्, स्तोमम्–अपहतपाप्मत्वादिगुणस्तोमम्, स्तुत्यं वा स्वरूपम्, महत्–महत्ताम्, उरुगायम्–प्रबलकीर्तिम्, प्रतिष्ठाम्–अपुनरावृत्तिलक्षणं स्थैर्यम्, दृष्ट्वा–विचिन्त्य, दोषगुणानुचिन्तनपूर्वकं दृष्ट्वा, लौकिकानर्थानत्यस्राक्षीः–त्यक्तवानसि । यद्वा–कामस्याऽऽप्तिं जगतः

प्रतिष्ठां दृष्ट्वा—जगत्प्रतिष्ठापरिमितां दृष्ट्वेति लौकिकार्थेषु दोषोक्तिः। अयं भावः—लौकिका ह्यर्था मानुषभोगप्रभृतिकाः परिमितकालत्वेन क्षयिष्णवः, यच्चात्र जगति सर्वतोऽतिशयितं हैरण्यगर्भं पदं तदपि जगतोऽस्य प्रलये तेन सह विनश्येदेवेति कामाप्तिः सर्वा ब्रह्मादिस्तम्बपर्यन्तजगत्सत्तां नातिशेत इति तत्प्रतिष्ठारूपेयम्, तस्य सान्तत्वे लौकिकार्थानां कुतोऽनन्तत्वमिति। अथ मुक्तिस्वरूपे गुण उच्यते—क्रतोरानन्त्यमिति। क्रतोः—उपासनस्य, ब्रह्मोपासनस्येत्येतत्। आनन्त्यं—फलतोऽपरिच्छिन्नत्वम्। अन्यत्पूर्ववत्। यद्वा—अभयस्य पारं स्तोमं महदुरुगायं प्रतिष्ठां च मोक्षेऽलौकिकपुरुषार्थे दृष्ट्वा, कर्मफलभूतां लौकिककामाप्तिमत्यस्राक्षीरित्यर्थः॥११॥

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति॥१२॥

एवमवधार्याधिकारमभिनन्द्य च तमर्थं प्रतिवदन्पृष्टं मुक्तिस्वरूपमधिकृत्याह—तं दुर्दर्शमिति। दुर्दर्शम्—सुखेन द्रष्टुमशक्यम्, दुःखमाप्तुमयोगत इत्येतत्। श्रवणायापि बहुभिर्यो न लभ्य इत्येतद्दौर्लभ्यमुक्तं भवति। गूढम्—दैव्यां गुणमय्यां मायायवनिकायां निगूढम्। दुर्दर्शत्वे निमित्तमेतत्। मायायवनिकाप्रतिरुद्धदृष्टिप्रसराणामगोचरमिति यावत्। अनुप्रविष्टम्—सृष्टेषु सृष्टिमनुप्रविष्टम्। इदमन्तर्यामितया। गुहाहितम्—हृदयगुहासन्निहितम्। इदं तु विग्रहतोऽपि। यद्वा—गुहाहितमनुप्रविष्टमित्यन्वयः। गुहा—हृदयं, योऽयमाहितस्तत्र

कर्मणा, तं जीवमनुप्रविष्टं स्वेच्छयेत्यर्थः । आहितात्प्रविष्टे विशेषो वचनव्यक्त्यैव व्यक्तः । आहित इति कर्मणि क्तः । अन्यकर्तृकाधानकर्मत्वात्पारवश्यम् । प्रविष्ट इति कर्तरि । कर्तृत्वाच्च स्वातन्त्र्यम् । स्वतन्त्रः कर्ता । कर्मणा प्रवेश्यमानं जीवमनुप्रविशति भगवांस्तद्रक्षणायेति भावः । गह्वरेष्ठं—दुष्प्रवेशे देशे स्थितम्, अप्राकृते देशविशेषे स्थितमिति यावत् । 'अक्षरे परमे व्योम'न्नित्यन्यत्र श्रूयते । यद्वा—अतिसङ्कटे देशे जीवरूपे स्थितम्, अन्तर्यामितयेत्येतत् । पुराणम्—कारणमिति यावत् । कार्यं ह्यर्वाचीनम् । तम्—त्रयीप्रसिद्धं, देवम्—निरतिशयदीप्तियुक्तम् । यस्य भासा सर्वमिदं विभाति । तं पुराणं देवमिति वाऽन्वयः । यद्यपि व्यपदिश्यन्ते देवा इति । नाममात्रमेतत् । अर्वाचीनाश्च । नारायणाद्ब्रह्मा जायते नारायणादिन्द्रो जायते । अनर्वाचीनो देवः स एक एव नारायण इत्यर्थः । अध्यात्मयोगाधिगमेन मत्वा—बाह्येभ्योऽर्थेभ्यः प्रतिसंहृत्यात्मस्वरूपे प्रवर्तितो मनसो योगः अध्यात्मयोगः, तेन जातोऽधिगमः—प्रकृतिविलक्षणपरिशुद्धात्मविज्ञानम्, आत्मावलोकनमित्येतत्, तेनाङ्गभूतेन । उक्तं देवं मत्वा, आत्मावलोकनपूर्वकपरमात्मोपासनं प्राप्येति यावत् । 'निजात्मानं ब्रह्मरूपं देहत्रयविलक्षणम् । विभाव्य तेन कर्तव्या भक्तिः कृष्णस्य सर्वदा' इति भगवद्वचनमिहोपबृंहणं बोध्यम् । अध्यात्मयोगस्याधिगमः—प्राप्तिः, योगसिद्धिः, तया देवं मत्वा—योगदृष्ट्या देवमवलोक्येत्यर्थ इति केचित् । एवं साधनस्वरूपमुक्त्वा फलमाह—हर्षशोकौ जहाति वैषयिकौ । हर्षशोकशब्दौ पुण्यपापलक्षकौ वा । आत्यन्तिकसंसारनिवृत्तिर्भवतीत्येतत् ॥१२॥

**एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः प्रवृह्य धर्म्य-**
**मणुमेतमाप्य। स मोदते मोदनीयꣳ हि**
**लब्ध्वा विवृतꣳ सद्म नचिकेतसं मन्ये ॥१३॥**

मर्त्य इत्युपलक्षकम्, योऽधिकारी सः। एतत्—अन्तर्याम्यात्मतत्त्वं श्रुत्वा—सद्गुरुतः, सम्परिगृह्य मनसा, मुहुर्विभाव्येत्यर्थः, मननं कृत्वेति यावत्। इदमुपासनस्योपलक्षकम्। धर्म्यं प्रवृह्य—धर्मसाधनं धर्मसाध्यं वेदं शरीरं प्रवृह्य पृथक्कृत्य, प्रारब्धावसानसमये परित्यज्येत्येतत्। एतमणुमाप्य—'अणीयान्ह्यप्रतर्क्यमणुप्रमाणा'दिति पूर्वं निर्दिष्टं सर्वतः सूक्ष्मतमम्, सर्वतः सन्निधानशक्तेः, अतिगूढत्वाद्वा सूक्ष्मम्। आप्य—देशविशेषेऽर्चिरादिना प्राप्य। सः—उक्तोपासकः। मोदनीयम्—अपहतपाप्मत्वादि ब्राह्मं स्वरूपं लब्ध्वा मोदते—परमानन्दमाप्नोति। 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुत्यन्तरैकार्थ्यं बोध्यम्। एवम्भूतात्मतत्त्वे श्रद्धातिशययुक्तोऽयं यन्नचिकेता अस्मत्त इदमेवाधिगन्तुमुद्युक्तः, तन्नचिकेतसं प्रति सद्म परब्रह्मणो विवृतं—उद्घाटितद्वारं मन्ये। परं ब्रह्माऽयं सुखेनाधिगमिष्यतीति भावः। 'हर्षशोकौ जहाति' 'स मोदत' इत्याभ्यां नात्मोच्छित्तिर्मुक्तिः, किन्तु सत एवास्योपासकस्यात्यन्तिकदुःखनिवृत्तिपूर्वकः परमानन्दलाभो मुक्तिरित्युक्तं भवति। स च प्रकृतिवियोगानन्तरभावीत्युक्तं भवति प्रवृह्य धर्म्यमित्यतः। अणुमेतमाप्य मोदनीयं लब्ध्वेत्यतः स्वरूपलाभः परब्रह्मलाभश्च मुक्तौ, न केवल-

मात्मलाभ इत्युक्तं भवति। अनेन न परब्रह्मापत्तिर्मुक्तिरिति व्यज्यते। 'आप्य' 'लब्ध्वे'ति निर्देशस्वारस्याच्च। अन्यथा भूत्वेति हि श्रूयेत स्वरसतः। 'देवं मत्वा हर्षशोकौ जहाती'त्यत उपास्योपासकयोर्वैलक्षण्यं व्यञ्जितं भवति। 'अध्यात्मयोगाधिगमेन देवं मत्वा' 'एतच्छ्रुत्वा संपरिगृह्ये'त्युपायविशेषप्रदर्शनेन न प्रातिभासिकभेदनिवृत्तिर्निर्विशेषसन्मात्रापत्तिर्वा मोक्ष इति व्यज्यते। तथा सति वाक्यार्थज्ञानमात्रस्यैवोपायत्वेनोपासनविशेषस्यानपेक्षणात्। इत्थं च आभ्यां मन्त्राभ्यां 'येयं प्रेते विचिकित्सा' इत्यनेन कृतः प्रश्नः सङ्क्षिप्योत्तरितः ॥१३॥

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥१४॥

एवं सङ्गृह्योक्तमर्थविशेषं विशिष्य ज्ञातुकामो नचिकेताः पृच्छति—अन्यत्रेति। धर्मादधर्माच्चान्यत्र यत्पश्यसि—पुण्यादपुण्याच्च विलक्षणं यत्साधनं पश्यसि, तद्वद। लोके शुभायाशुभाय वा फलाय पुण्यं पापमिति साधनं प्रसिद्धम्। 'देवं मत्वा हर्षशोकौ जहाती'ति निगदता त्वया ताभ्यामन्यदेव किञ्चिच्छ्रेयःसाधनं प्रस्तुतं तद्विविच्य ब्रूहीति भावः। अन्यत्रास्मात्कृताकृतात्—समाहारविवक्षया एकवद्भावः, कृतादकृताच्चान्यदित्यर्थः, कृतात्—कार्यात्मनाऽवस्थितात्, अकृतात्—कारणात्मनाऽवस्थिताच्चान्यद्यत्प्राप्यस्वरूपं पश्यसि, तद्वदेत्यर्थः। प्राप्यं हि लौकिकमैहिकमामुष्मिकं वा कार्यात्मना कारणात्मना वा विद्यमानादस्मात्प्रपञ्चान्नान्यत्। 'हर्षशोकौ जहाती'ति निगदता त्वयाऽऽभ्यामन्यदेव किमपि प्राप्यस्वरूपं प्रस्तुतं भवति।

प्राप्यानामेषां प्रकृतानामनुस्यूतहर्षशोकत्वात् । तत्–प्रस्तुतं प्राप्यं विविच्य ज्ञापयेत्याशयः । 'हर्षशोकौ जहाती'ति कर्तृतया निर्दिष्टो यः प्राप्ता तत्स्वरूपमपि सम्यग्विवेचयेत्याह—अन्यत्र भूताच्च भव्याच्चेति । अतीतादनागताच्चान्यत्, कालत्रयेऽपि वर्तमानमित्यर्थः, एकस्वरूपमित्येतत् । यत्प्राप्तृस्वरूपं पश्यसि तद्वदेत्यर्थः । 'हर्षशोकौ जहाती'ति हर्षशोकापगममात्रं निदर्शयता कालापरिच्छिन्नमुपेतृस्वरूपं प्रस्तुतं भवति, तद्विविच्य वदेत्याशयः । यद्वा–भूताच्च भव्याच्चान्यद्यत्पश्यसि–उपेतृस्वरूपं यत्पश्यसीत्यर्थः । लोके साधनवेलायां फलमागामि, फलवेलायां तु साधनमतीतम्, उभयत्रानुवर्तमानस्तूपेता, तदयं लक्ष्यते भूताद्भव्याच्चान्यदिति । उपेतृस्वरूपं यत्पश्यसि, तद्वदेत्यर्थः । उपेतृस्वरूपं 'अणुमेतमाप्य मोदनीयं लब्ध्वे'त्यादिनोपास्याद्देवात्पृथगेव किञ्चिदस्तीति प्रस्तुतं तद्विविच्य ज्ञापयेत्याशयः ॥१४॥

सर्वे वेदा यत्पदमामनन्ति तपाꣳसि सर्वाणि
च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदꣳ सङ्ग्रहेण ब्रवीम्योमित्येतत् ॥१५॥

एवं पृष्टो मृत्युः प्रतिवदन्नादावादरातिशयाय श्रोतॄणां प्राप्यस्य महिमानमनुवर्णयति—सर्वे वेदा इति । अत्र वेदशब्दः पूर्वभागमात्रपरः, तपांसीत्युपरितनभागस्य निर्देशात् । समग्रोऽपि पूर्वभागो यत्पदं प्राप्यस्वरूपमामनन्तीत्यर्थः । इन्द्रादितत्तद्देवताद्वारा तच्छरीरिणः परब्रह्मण एव तत्रापि वर्णनात् । तपो ज्ञानं तत्प्रधानत्वादुपरितनभागस्तपःशब्देन लक्ष्यते । समग्रोऽप्युपरितनभागो यदेव

वदति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति—अष्टविधस्त्रीसङ्गत्यागरूपं ब्रह्मचर्यमाचरन्ति । इदं गुरूपसदनादेरप्युपलक्षकम् । एतेन निखिलवेदवेद्यत्वेन गुरूपसदनब्रह्मचर्यादिभिरधिगन्तव्यत्वेन प्राप्यं स्तुतं भवति । इदमेव निखिलवेदवेद्यं सङ्गृह्य निर्दिश्यते तु प्रणवेनेत्याह—तत्पदं प्राप्यं ते सङ्ग्रहेण—सङ्ग्राहकेण शब्देन ब्रवीमि । तस्य सङ्गृह्य (प्रतिपादकं) वाचकं शब्दं कथयामीत्येतत् । ओमित्येतत्—ओमित्येतदक्षरं तस्य प्राप्यस्य सङ्गृह्य प्रतिपादकः शब्दः । 'ओं तत्सदिति निर्देशस्त्रिविधो ब्रह्मणः स्मृतः' इति च वचनम् । अनेन प्रणववेद्यस्वरूपं वैभवमुक्तं भवति ॥१५॥

एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् । एत-
द्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥१६॥

अथ वाचकं प्रणवं प्रस्तौति—एतद्ध्येवाक्षरं ब्रह्म—जपोपासनादिना ब्रह्मवत्सकलाभीप्सितसंपादकतया ब्रह्मेति स्तूयते । एतद्ध्येवाक्षरं परम्—जप्येषु श्रेष्ठम् । एतदेवाक्षरं—शब्दस्वरूपं ज्ञात्वा—समुपास्य यो यदिच्छति तस्य तत्सिद्ध्यति । सेयं प्रणवप्रशंसा परब्रह्मप्रशंसायामेव पर्यवस्यति । वाचकप्रशंसा हि वाच्यप्रशंसायां पर्यवस्यति ॥१६॥

एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् । एत-
दालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥१७॥

एतदेवाक्षरमालम्बनेषु ध्यानालम्बनेषु श्रेष्ठम् । अत एवैतदालम्बनं परम्—एतदालम्बनं यस्मिन्नुपासने तदेवोपासनमुत्कृष्टम् । एतत्—

एतदेवाक्षरम्, आलम्बनम्—परमपुरुषध्याने आलम्बनमिति ज्ञात्वा, 'ओमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीते'त्युक्तप्रकारेण ध्यानालम्बनं ज्ञात्वेत्यर्थः । ब्रह्मलोके महीयते—अनुष्ठितेन तदालम्बनपरमपुरुषोपासनेन परब्रह्मणो लोके—धाम्नि महीयते । यद्वा—एतदालम्बनं—एतदालम्बनकमुपासनं ज्ञात्वा, प्राप्येत्यर्थः । पाकं पक्त्वेत्यादाविव धात्वर्थाविवक्षया तथा बोद्धव्यम् । यद्वा—एतदालम्बनम्—एतत् आलम्बनं वाचकं यस्य तत् । परंब्रह्म ज्ञात्वा ब्रह्मलोके महीयते ॥१७॥

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न
बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं
पुराणो न हन्यते हन्यमाने शरीरे ॥१८॥

एवमुपवर्ण्य प्राप्यस्य महिमानं प्राप्तुः प्रत्यगात्मनः स्वरूपमाह—न जायते इति । स्वरूपतो विपश्चिदयमात्मा न जायते म्रियते वा—नोत्पद्यते नापि नश्यति । नायं कुतश्चिदुत्पादकादुत्पद्यते । न किमप्यस्योत्पादकमित्यर्थः । उत्पत्तिनिषेधेन नित्यत्वे सिद्धे उत्पादकनिषेधो दार्ढ्याय । न बभूव कश्चित्—देवादिष्वन्यतमोऽपि नासौ बभूव । यश्चायं व्यवहारः—'जायते म्रियते देवदत्ताद्यज्ञदत्तो जातः बालोऽयं युवा बभूव वृद्धो बभूव' इत्येवमादिः, नात्मस्वरूपं स्पृशति । ते हि भावाः विकारिद्रव्यस्य । अयमात्मा हि न तथा । अजः—जनिशून्यः । नित्यः—नाशशून्यः । शाश्वतः—शश्वदेकरूपः । पुराणः—अनादिः । यद्यपि हन्यते नाम, परं किं हन्यत इति विचार्यम् । न हन्यते त्वात्मा, नित्यत्वात् । शरीरमेव तु तथा । हन्यमानेऽपि

शरीरे सत्यपि तत्सम्बन्धे नायं हन्यते, सर्वतः सूक्ष्मत्वात् । न हि स्थूले वृक्षादौ छिद्यमाने सूक्ष्ममाकाशं छिद्यते ॥१८॥

हन्ता चेन्मन्यते हन्तुꣳ हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायꣳ हन्ति न हन्यते ॥१९॥

न हन्यतेऽयमात्मा हन्यमाने शरीरे । सत्यप्येवं यो द्विष्यन् पिण्डमात्रे मात्सर्यादिना छेत्स्यन् सङ्कल्पयत्यहमेनं हन्मीति, यश्चान्यस्तेन छिन्नावयवो मन्यते हतोऽस्म्यनेनेति, तावुभौ नात्मानं याथातथ्येन जानीतः, देहात्माभिमानेन हि तथा प्रतिपत्तिरित्याह— हन्ता चेदिति । हन्ता हत इति पामरदृष्ट्या निर्देशः । हन्तुं मन्यते चेत्—हन्तुं सङ्कल्पयति चेदित्यर्थः । हन्तुमित्युकारान्तो निपातो वा । हन्तारमित्यर्थः । नायं हन्ति न हन्यते; आत्मस्वरूपस्याविनाशित्वादिति यावत् । 'नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः । अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च' इति हि भगवद्वचनम् ।

इह कर्तृत्वसामान्यमात्मनि प्रतिषिध्यते ।
इति केचन मन्यन्ते न तत्साधु तथा सति ॥
क्रियाविशेषनिर्देशस्वारस्यं ननु हीयते ।
पूर्वमन्त्रोक्त एवार्थो नन्वत्र प्रतिपाद्यते ॥१९॥

अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥२०॥

प्रत्यगात्मानं निरूप्य तस्यात्मतयाऽवस्थितं परमात्मानमाह—

अणोरिति। अस्ति कश्चिदाश्चर्यस्वरूपः, योऽयमणोरणीयान्महतो महीयान्। 'अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकतण्डुलाद्वा ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः'। सर्वत्र कार्त्स्न्येन व्यापनशीलत्वात्। यतोऽयमात्माऽणोरणीयानत एवायमस्यात्मा 'न जायत' इत्यादिना पूर्वमन्त्रनिर्दिष्टस्य प्रत्यगात्मनोऽप्यात्मा। स चायं नातिदूरे, निहितो गुहायाम्—सन्निहित एव गुहाविशेषे। गुहा च न मेरोर्हिमवतो वा, किन्तु जन्तोः—प्राणिनो हृदयगुहेति यावत्। अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। स्वस्वहृदयसन्निहितस्योपासने नातीव क्लेश इति व्यज्यते। एवम्भूतस्यात्मनः—प्रत्यगात्मनोऽप्यात्मभूतस्य महिमानं—अणोरणीयस्त्वादिरूपं महिमानम्, योऽक्रतुः—काम्यकर्मण्यनासक्तः पश्यति—चिन्तयति, उक्तमहिमविशिष्टं तं यः पश्यतीत्येतत्। सः धातुस्तस्य प्रसादाद्वीतशोको भवति। यद्वा—योऽयमस्यात्मनो महिमा—अणोरणीयस्त्वादिरूपः, तं न सर्वे साक्षात्कर्तुं क्षमाः, कश्चिदेवाक्रतुः—अकामः, बाह्येष्वनिविष्टमनाः, तदेककाम इत्येतत्। तस्यैव धातुः प्रसादाद्वीतशोकः पश्यति। तादृशमहिमविशिष्टं तं साक्षात्करोतीत्येतत्। धातुप्रसादादिति पाठे धातोः—धारकस्य तस्येत्यर्थः। धातवो मनःप्रभृतीनि, शरीरधारणात्, तेषां प्रसादेन नैर्मल्येनेति वार्थः ॥२०॥

आसीनो दूरं व्रजति शयानो याति सर्वतः।
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥२१॥

अणोरणीयान्महतो महीयानित्येतावदेव नाश्चर्यमस्मिन्परमात्मनि, अयं ह्यासीनो दूरं व्रजति शयानो याति सर्वतः । सर्वान्तर्यामिणि सर्वमिदमाश्चर्यं घटेत नाम । मदामदम्—सर्वात्मत्वात्, हृष्टाहृष्टोभयरूपम् । मदामदशब्दयोरजन्तता वा लक्षणा वाऽऽश्रयणीया । सर्वशरीरत्वेन सर्वप्रकारत्वाद्वा हर्षाहर्षोभयरूपम् । तादृशं देवं मदन्यः को वा ज्ञातुमर्हति ॥२१॥

अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥२२॥

एवं द्वाभ्यां प्राप्तुः प्रत्यगात्मनः स्वरूपमुक्तम् । द्वाभ्यां च प्राप्यस्य परमात्मनः स्वरूपमुक्तम् । अथोपायस्वरूपमाह—अशरीरमिति । शीर्यत इति शरीरं विशरणस्वभावं वपुस्तद्रहितः, तत्प्रयोजककर्माभावात् । अथाप्यनवस्थेषु शरीरेष्ववस्थितम्—अस्थिरेषु सुरनरतिर्यगादिनानाशरीरेष्वन्तर्यामितया स्थितम् । यद्वा—शरीरेष्वनवस्थेष्ववस्थितमथाप्यशरीरम्, तत्संसर्गकृतसुखदुःखाद्यनन्वयात् । अनश्नन्नन्योऽभिचाकशीति । अत एव विभुम्—वैभवशालित्वाद्वा विभुम् । महान्तं विभुम्—महावैभवशालिनमित्येतत् । एवंभूतमात्मानं—परमात्मानम्—धीरो मत्वा न शोचति—सांसारिकदुःखान्निवृत्तो भवतीत्यर्थः ॥२२॥

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूꣳ स्वाम् ॥२३॥

ननु सुकरोऽयमुपायो मेधाविनाम्, सुविज्ञेयो हि शास्त्रेणायमात्मा । अथ कथमात्थ 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हती'ति तत्राह—नायमिति । मेधाया मध्यतो निर्देशेन तस्याः प्रवचनश्रवणयोरत्यन्तोपयोगो व्यज्यते । स्यान्मेधा, शतशः श्रूयन्तां श्रुतिशिरांसि, प्रोच्यन्तां च तथा, न तावताऽयमात्मा लभ्यस्तत्त्वतः । मेधया तु भवेच्छास्त्रार्थविज्ञानं, न त्वस्य तत्त्वतः साक्षात्कार इति भावः । तत्र हेतुमाह—यमेवेति । एष परमात्मा यं वृणुते—स्वीकरोति, यस्मिन्प्रसन्नो भवतीत्येतत् । तेनैवायमात्मा लभ्यः । लाभ इह साक्षात्कारो वा । कस्मात् ? यस्मादेष परमात्मा यं वृणुते तस्मा एव स्वां तनुं विवृणुते—स्वस्वरूपं प्रदर्शयति नान्यस्मै । तत्त्वतस्तत्परिज्ञानस्य तत्प्रसादैकमूलत्वान्न मेधादिभिस्तस्य साक्षात्कारः सुगमः । असति च साक्षात्कारे न संसारनिवृत्तिः, 'महान्तं विभुमात्मानं मत्वा धीरो न शोचती'त्यत्र या मतिरुपायतया निदर्शिता सा तु तदपरोक्षरूपेति भावः । श्रूयते चान्यत्र 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति ॥२३॥

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । ना-
शान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥२४॥

नन्ववगतस्यार्थस्य स्मरणाभ्यासपाटवेन भवेदपरोक्षरूपा मतिः, तदत्र वरणापेक्षा का ? अत आह—नाविरत इति । न वा प्रज्ञानेनाप्येनमाप्नुयात् । वाकार एवार्थे । न हि शास्त्रजन्येनापि परमात्मनो विज्ञानेन परोक्षभूतेन तदपरोक्षरूपं विज्ञानं भवेत् । ननूक्तं स्मरणाभ्यासपाटवादेव तद्भवेदिति । सत्यम् । तदेव दुर्घटम्, जानन्तोऽपि

बहवः शास्त्रतत्त्वमनादिवासनादूषितचेतसो नोपरमन्ते दुश्चरितात्पर-दारपरद्रव्यप्रसङ्गतः, अपरे च गृहमेधिनो ग्राम्यभोगात्, अपगत-बाह्यकरणपाटवाः पुनरपरे कामतः क्रोधतो वा प्रतिक्षणं समुन्मिष-त्सङ्कल्पसहस्राः; किं कामदोषचिन्तया, स्वतश्चञ्चलमनसश्च सर्वे, चञ्चलं हि मनः, तत् यश्च दुश्चरितादविरतः, यो वा अशान्तः, यश्चाशान्तमानसः, असमाहितश्च यः, स किं स्मरणाभ्यासपाटवमा-प्नुयाच्छास्त्रजेन ज्ञानमात्रेण, किन्तु तदपि प्रणश्येद्विज्ञानम्, क्व परमात्मापरोक्षकथा वा, तत्परमात्मप्रसादादृते यत्नशतेनाप्यनादि-वासनाकलुषितचेतसां मनसः समाधानं दुर्घटम्, असमाहितमनसां स्मरणाभ्यासस्तन्मूलसाक्षात्कारश्च दुर्घटः, अतो यमेवैष वृणुते तेन लभ्य इति भावः । परमात्मप्राप्तौ परमात्मैव प्रधानसाधनमित्युक्तं भवति । श्रावयिष्यति च 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति'रिति । पुरुषोऽत्र परमपुरुषः । ननु 'मामेव ये प्रपद्यन्ते माया-मेतां तरन्ति ते' इति प्रपदनस्य हि प्रधानसाधनता प्रतीयते । मैवम् । नात्र किमपि साधनानुष्ठानं विधीयते । यस्तु तापत्रयतो भीतभीत-स्तदुपायांश्च शास्त्रदृष्टान्दैव्या गुणमय्या मायाया दुस्तरतयाऽनादिवा-सनादूषितचेतसाऽत्मना दुरधिगमान्विनिश्चित्य तस्य कृपामाकाङ्क्षमा-णस्तिष्ठेत्, तस्य तत्सिद्धिरित्युच्यते । न हि कृपामाकाङ्क्षत इत्येताव-ताऽऽकाङ्क्षायाः साधनत्वं न्याय्यम् । किन्तु कृपाया एव कृपालोस्त-स्येत्येतत् । रहस्यतमोऽयमर्थ इति नेह वितन्यते । अथ चेदेवं मुमु-क्षुणा तृषार्तेन चातकेनेवोन्मुखेन स्थेयम्, लाभस्तु न नियतः, मेघ इव स्वतन्त्रोऽयं, कदाचिद्विमुखोऽपि स्यात् । मैवम् । अयमेवास्मिन्वि-

शेषः । यदुन्मुखेषु न जात्वयं विमुखः । यदयमेवमाह 'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥' 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इति । यद्वा—देवं मत्वेत्यत्र प्रस्तुतमुपायं विशिनष्टि—नायमिति । प्रोच्यत अनेनेति प्रवचनं—मननम् । मेधा—ध्यानम् । लक्षणयाऽयमर्थः । श्रुतं—श्रवणम् । श्रवणेन मननेन ध्यानेन वा केवलेन नायमात्मा लभ्यः, अपि तु प्रीतिरूपेण तेनेत्याशयेनाह—यमेवैष इति । प्रियतम एव हि वरणीयो भवेत् । तत् परमात्मनो यः प्रियतमस्तेनैव परमात्मा लभ्य इति सिद्धम् । परमात्मनः प्रियतमश्च यः परमात्मनि परमप्रीतिं करोति स एव । आह च भगवान् 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति । तथा च प्रीतिं विना कृतेन केवलेन ध्यानेन नायं लभ्यः, अपि तु प्रीतिरूपेण तेनेति भावः । यश्च निदिध्यासितव्यं इति सामान्यतः प्राप्तं ध्यानं तदप्यनेन विशेष्यत इति सिद्धम् । उक्ते उपायविशेषे अङ्गतया केषांचिद्धर्माणामवश्यापेक्षामाह—नाविरत इति । दुश्चरितोपरत्यादिर्यदि न स्यात्, प्रज्ञानं न सिद्ध्येत्, तदसिद्धौ कथं तमाप्नुयात्, अतः प्रज्ञानाङ्गतयाऽवश्यमपेक्ष्यन्ते दुश्चरितनिवृत्त्यादय इति भावः ॥२४॥

**यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।**
**मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥२५॥**

अथास्य महिमाऽपरिच्छेद्य इत्याह—यस्येति । ब्रह्म च क्षत्रं च—इदमुपलक्षणं प्राणिमात्रस्य । यस्येदमोदनम्—उपसंहार्यमित्यर्थः । संहार-

कारणीभूतो मृत्युर्यस्योपसेचनम्—संहारद्वारभूतं सत्स्वयं च संहार्यम् । सर्वस्यास्य चराचरप्रपञ्चस्य संहर्ता य इति भावः । स परमात्मा यत्र महिम्नि वर्तते, तं महिमानं, इत्था—इत्थमिति को वेद—परिच्छिद्य को वेद, न कोऽपीत्यर्थः । अपरिच्छिन्नमहिमाऽयमिति यावत् । यद्वा—परमात्मप्रसादादृते तत्त्वतः को वैनं वेत्तुमर्हतीत्याह—यस्येति । यस्मिन्प्रकारेऽस्ति तं प्रकारमित्थमिति को वा तत्प्रसादादृते वेदेत्यर्थः । यद्वा—मदन्यः को वेत्तीत्याह—इत्थमहं यथा वेद्मि तथा वेदेत्यर्थः ॥२५॥

इति कठोपनिषद्भाष्ये प्रथमाध्यायद्वितीयवल्लीभाष्यम् ।

---

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ
परमे परार्ध्ये । छायातपौ ब्रह्मविदो व-
दन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥१॥

'देवं मत्वा हर्षशोकौ जहाती'त्यत्र प्रस्तुतस्य संसारशोकसन्तरणोपायभूतस्य परमात्मविज्ञानस्यालब्धपरमपुरुषप्रसादैरजितेन्द्रियैरलभ्यत्वमुक्तम् । अथेन्द्रियजये उपायो निरूप्यते तृतीयवल्ल्या । तत्रादौ परमात्मा सूपास्योऽस्माभिः सर्वैरपि, सन्निहितो ह्ययं, तद्यत्न आधीयतां वक्ष्यमाणे साधन इत्याशयेनाह—ऋतमिति । अहो विमोहः सन्निहितमपि स्वयं न जानाति । न ह्युपासितुः स्वरूपमन्यत्र, उपास्यस्य स्वरूपमन्यत्र, किन्तु—उपासितोपास्यश्च सदा सन्निहितावेव । इमौ हि छायातपौ—अल्पज्ञत्वसर्वज्ञत्वाभ्यां रूप्येते छायातपाविति । प्रविष्टौ चैकां गुहाम्, गुहा च नातिदूरे, इहैव सुकृतस्य लोके—सुकृ-

तसाध्ये मानुषलोके, मानुषशरीर इत्यर्थः। हृदयगुहां प्रविश्यान्तर्यामितया सर्वत्र सान्निध्ये सत्यप्युपासनस्य मनुष्याधिकारत्वाल्लोकविशेषनिर्देशः। अनेन यदेव मानुषं वपुः समुत्तरणसाधनं सुकृतविशेषेणोपलभ्यते, सन्निहित एव तत्रेश्वर इति विज्ञायते। प्रवेशे हेतुमाह— ऋतं पिबन्ताविति। हेत्वर्थे शतृप्रत्ययः, ऋतमनुभवितुमिति यावत्। ऋतं–सत्यम्। इह फलं लक्ष्यते। फलं च यथान्वयमेव वक्तव्यम्। तत्रैकस्य फलं कर्मणोऽन्यस्य तु सङ्कल्पस्य। जीवो हि कर्मवश्यः परमात्मा च सत्यसङ्कल्पः। तत् जीवो यथाकर्म फलभोगाय शरीरं प्रविशति। परमात्मा तु सर्गादिभिः क्रीडेयमिति सत्यसङ्कल्पो यथासङ्कल्पं निर्मायानुप्रविशति लीलारसानुभवाय। प्रविश्य गुहां ऋतं पिबन्तौ वर्तेते इति वा। गुहां प्रविष्टौ तत्रापि परमे परार्ध्ये वर्तमानौ–अत्यन्तमुत्कृष्टे स्थाने वर्तमानौ। परार्ध्यमित्यनेनोत्कृष्टं लक्ष्यते। हार्दाकाशे वर्तमानावित्येतत्। अस्मिन्नर्थे आप्तसंवादमाह— ब्रह्मविदो वदन्तीति। अधिगतब्रह्मसाक्षात्कारा वदन्तीत्यर्थः। ये च पञ्चाग्नयस्त्रिणाचिकेताः–तेऽपि वदन्ति। नाचिकेतश्चितो वारत्रयमेवम्भूताः। पञ्चाग्नयः–गार्हपत्यो दक्षिणाग्निराहवनीयः सभ्य आवसथ्यश्चेति पञ्चाग्नयो एषां ते। ब्रह्मसाक्षात्कारसाधने प्रवृत्ता निष्पन्नब्रह्मसाक्षात्काराश्च तथा वदन्तीत्याशयः ॥१॥

**यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्। अभयं**
**तितीर्षतां पारं नाचिकेतꣳ शकेमहि ॥२॥**

तद्योऽयमन्तर्यामितया सन्निहितः सर्वकर्मफलप्रदोऽक्षरात्परतः

परः संसारं तितीर्षतां साधनभूतस्तमिमं सर्वे वयमुपासितुं शक्ताः स्मः, परमिन्द्रियजये वक्ष्यमाणक्रमेण यत्न आधीयतां युष्माभिरित्याह—यः सेतुरिति । यः सेतुरीजानानाम्—ये पुनरखिलहृदयगुहाशयमेकमन्तरात्मानमजानन्तः 'इन्द्रं यजामहे' 'वरुणं यजामह' इति यजन्ते, तेषामपीष्टलम्भको यः, तदन्तरात्मतया स्थित्वा फलं प्रयच्छतीति यावत् । अक्षरं ब्रह्म यत्परं—यत्परकम्, अक्षरब्रह्मणोऽपि परमित्यर्थः । यत् परमिति भिन्नं वा पदम्, यदविकारि परंब्रह्मेत्यर्थः । पारं तितीर्षताम्—तरतिरत्र प्राप्तिवचनः, वेदान्तं तरतीतिवत्, संसारसागरे निपत्य सीदतां परं तीरं जिगमिषताम् । अभयम्—निर्भयं साधनमित्यर्थः । साधनान्तरनिष्ठानां तु स्यात्कदाचिद्भयम्, एतन्निष्ठानां तु न तथेति व्यज्यते । संसारसागरं तितीर्षतामभयं पारमिति वा योजना । मुमुक्षवो यत्प्राप्याभयं गच्छन्तीति यावत् । एवम्भूतं नाचिकेतम्—नाचिकेताग्निप्राप्यम् । ज्ञानद्वारा चैतत् । एवम्भूतं परमात्मतत्त्वमधिगन्तुं वयं शक्ताः स्मः । सन्निहितमेव हीदमित्याशयः । यद्वा—वक्ष्यमाणस्येन्द्रियनिग्रहप्रकारस्य कठिनतां मत्वा केचन न प्रवर्तेरन्नाम, तथाविधानप्यनभिज्ञान्प्रवर्तयितुमुच्यते—ऋतमित्यादिना । एतदुक्तं भवति—हिरण्यनिधिं स्वक्षेत्रे वर्तमानं ज्ञात्वा क्षेत्री क्षणमपि नालसस्तिष्ठेत्कश्चिदपि । महान्तमपि परिश्रमं सहेतैव तल्लाभे । सपदि प्रवर्तेत च त्वरया । तत्स्वस्यैव क्षेत्रे सन्निहितं ब्रह्मनिधिं जानन्स्वकरणनियमनाय को वा क्षेत्री न त्वरेत । तदस्य प्रतिक्षेत्रं वर्तमानत्वं यदि ज्ञाप्येत, सर्वे तत्तत्क्षेत्रिणः सहसा यतेरन्नेव, तदधुना प्रथमतः क्षेत्रिण एव क्षेत्रे वर्तमानत्वमस्य निधेर्ज्ञापयाम इत्यभिप्रेत्यो-

च्यते–ऋतमिति । द्वितीयेन च मन्त्रेणैवम्भूतं निधिमधिगन्तुं क्षेत्रिणो वयं सर्वे अर्हाः स्मः, तद्यत्न आधीयतां वक्ष्यमाणे उपाये इत्युच्यते ॥२॥

**आत्मानꣳ रथिनं विद्धि शरीरꣳ रथमेव तु ।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥३॥**

अवशीकृतेन्द्रियस्यानर्थ एवेति स्फुटयन्रूपकेणाह—आत्मानमिति । एतेन वक्ष्यमाणप्रकारेण वशीकरणमावश्यकमिति दृढीक्रियते । शरीरमेव रथं विद्धि–आत्मनो भोगापवर्गगतिसाधनत्वाच्छरीरं रथत्वेन निरूप्यते । रथिनं चात्मानम्–आत्मा ह्यस्य स्वामी, यदनेन कर्मणा समधिगतोऽयम् । अधिरुह्य चैनमुपगच्छति भोगमपवर्गं वा । बुद्धिं तु सारथिं विद्धि–बुद्धिरध्यवसायः । अध्यवसायेन चोद्यमाना हि धावन्तीन्द्रियाणि विषयानभि । यद्यपि मनसा व्यापार्यन्ते नामेन्द्रियाणि, तथाऽपि मनसोऽप्यध्यवसायस्य प्रबलत्वादध्यवसाय एव प्रधानो नेता । अतो निरूप्यते 'बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव चे'ति ॥३॥

**इन्द्रियाणि हयानाहुर्विषयाꣳस्तेषु गोचरान् ।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥४॥**

इन्द्रियैर्हि व्यापृतैरितस्ततः समाकृष्यते रथोऽयम् । रथिकश्चानेन समेति तांस्तान्विषयान् । विषयाः शब्दादयः, त एव देशाः । सत्येव देहादिपरिकरयोगे आत्मनो भोक्तृता, न त्वन्यथा । अतो देहादीनां रथादितयाऽऽत्मनो रथितया च निरूपणं युक्तमिति व्यञ्जयन्नाह—आत्मेति । आत्मा–देहः । एतद्योग[1] एव भोक्तृतेत्यर्थः । ज्ञातुर-

१ एतेषां योग एव ।

प्यस्य करणकलेवरयोगाभावे न हि भोगसामर्थ्यमित्याशयः ॥४॥

यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥५॥

रथिनाऽनेन सुसारथिना[1] भाव्यमित्युच्यते—यस्त्विति। यस्तु रथी आत्मा, अविज्ञानवान्भवति–विशिष्टं ज्ञानं विज्ञानम्–विवेकः, ततो विपरीतमविज्ञानं तद्वान्, कुबुद्ध्या युक्त इति यावत्। अत एव अयुक्तेन–अनियमितेन मनसा सदोपलक्षितः। तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥५॥

यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥६॥

यस्तु सुबुद्ध्या युक्तो नियमितेन मनसोपलक्षितः तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः। यस्य रथिनः सुगृहीतमनःप्रग्रहः सुबुद्धिसारथिः, तस्यानुकूला इन्द्रियाश्वा इति भावः ॥६॥

यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः।
न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥७॥
यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥८॥

यस्त्वेवंविधो यस्तु नैवंविधस्तयोरर्थानर्थावाह—यस्त्विति। अमनस्कः–अनियमितमनस्क इति यावत्। अत एवाशुचिः–करणत्र-

1 शोभनः सारथिर्यस्य।

यमालिन्ययुक्तः । तत्पदम्—यत्प्राप्यं तन्नाधिगच्छति । संसारं चाधिगच्छति—अधोधः संसारं प्रविशतीति यावत् । परस्तु रथी सुसारथिना सुगृहीतमनःप्रग्रहेण नियमिताश्वेन सुपथे नीयमानस्तत्पदं प्राप्नोति, यतो भूयो न जायते ॥७-८॥

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽ-
ध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥९॥

तच्च पदं विष्णोरित्याह—विज्ञानसारथिरिति । यस्य सारथिरनुकूलो बुद्ध्याख्यः, मनःप्रग्रहश्च प्रगृहीतः, सः तत्—प्रसिद्धं अध्वनः पारम्—यत् प्राप्य संसाराध्वानं नावर्तेत, संसाराध्वनः पारभूतं विष्णोः पदम्—अप्राकृतं स्थानविशेषमधिगच्छति ॥ ९ ॥

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥१०॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषा-
न्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥११॥

संसाराध्वनः पारमिच्छताऽवश्यं इन्द्रियमनोबुद्धयो वशे कार्या इत्युक्तमेतावता । अथैषां वशीकरणे प्रवृत्तेन ज्ञातव्यां वशीकार्यकाष्ठां ज्ञापयन्नाह—इन्द्रियेभ्य इति । इन्द्रियेभ्यः—चक्षुरादिभ्यः, अर्थाः—शब्दादयः, पराः—प्रबलाः । अवगत्य शब्दादीन्विषयाननर्थदान् शून्यागारमध्यमध्यासीनस्येन्द्रियनिग्रहे प्रवृत्तस्यापि सम्मुपनते विषयसान्निध्ये सपदि संक्षुभ्यन्त्येवेन्द्रियाणि । तदिन्द्रियापेक्षया वशीका-

र्यत्वे प्रधाना अर्थाः। अर्थेभ्यश्च परं मनः—दूरीकृतेऽप्यर्थे; पिहितेष्वपीन्द्रियद्वारेषु; मनश्चेन्न वशे, प्रसरेदेव परितः, ततश्च नेन्द्रियजयः स्यात्। अतो मनसो वशीकृतस्य तदुभयवशीकरणमूलत्वान्मनसस्ततः परत्वम्। अध्यवसाये चावशगे मनोऽपि न वशे स्यादिति मनसस्तु परा बुद्धिरुच्यते। अध्यवसायलक्षणायास्तस्याः पर आत्मा—अध्यवसायस्याप्यात्मा ह्याश्रयः। यथाश्रयं ह्याधेयस्य सम्भवः। इन्द्रियाणि जेतव्यानि, मनश्च वशीकार्यम्, अध्यवसायश्चात्मन्येवाधेय इति यस्य रुचिस्तस्य हि तत्प्रसङ्गः, यस्य तु न रुचिः न तस्य तथाविधाध्यवसायः, अत आत्मा परो बुद्धितः। इन्द्रियादेरध्यवसायपर्यन्तस्यैतदिच्छायत्तत्वादयं महानिति च विशिष्यते। अत एव च रथित्वेन रूपितः प्राक्। महतः परमव्यक्तम्—अस्य चानादिप्रकृतिसंसर्गेण गुणाभिभूततया गुणानुगुण्येनैव रुचिवैचित्र्यसम्भवाच्छरीरात्मना परिणतमव्यक्तमस्मादात्मनोऽपि वशीकार्यतायां परम्। विशेषणवाचिमहच्छब्देनेह विशेष्यस्यात्मनो ग्रहणम्। देवदत्ताद्यज्ञदत्तः शीघ्रगतिर्योऽयमश्वारूढः, अश्वारूढाच्च विष्णुमित्र इत्यादाविव। सत्यपि विविक्ताहारसेवनादौ सर्वान्तर्यामिणः परमपुरुषस्य प्रसादादृते न सत्त्वोन्मेषादि, तत् ततोऽपि परः पुरुषः। वशीकार्यत्वे प्रथमोऽयम्। अस्य च वशीकरणं शरणागतित इत्यनुपदं व्यक्तीभविष्यति। सा काष्ठा सा परा गतिः, अयमेवोपायकोटौ मुख्योपायः, अयमेव परमप्राप्यश्च। सर्वेऽपीन्द्रियजयादयो मुक्त्युपाया यदुपायमूलाः सैवोपायकाष्ठा। यत्प्राप्तवतः प्राप्यान्तरं न विद्यते, स एव च परमप्राप्यः। 'तद्विष्णोः परमं पद'मित्यत्रोक्तं परमप्राप्यत्वमिह स्मारितम्॥१०–११॥

**एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥१२॥**

एष इति । एष आत्मा—या काष्ठा या परा गतिः, एष नातिदूरे, किन्तु सन्निहितः सर्वेषु, तथाऽपि न प्रकाशते, सर्वेषां गूढो ह्ययम् । नायं प्रकाशः सर्वस्य योगमायासमावृतः । दैव्या गुणमय्या मोहिता नाभिजानन्ति जना एनमिति यावत् । गूढोऽप्येष दृश्यते तु सूक्ष्मदर्शिभिः—सूक्ष्मवस्तुदर्शनशीलैः । यत एषां बुद्धिरग्र्या—एकाग्रा । अत एव सूक्ष्मा—सूक्ष्मवस्तुविवेचनसमर्था च । येषां बुद्धिर्न बाह्येन्द्रियार्थेषु स्थूलेषु, सर्वतः सूक्ष्मतमे परमात्मनि निश्चलतां प्राप्ता तैस्तथाविधया बुद्ध्या तदात्मतत्त्वं साक्षात्क्रियत इति यावत् ॥१२॥

**यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥१३॥**

तदेवमिन्द्रियवशीकरणं विना परमात्मनो दुरधिगमत्वं, वशीकृतेन्द्रियेण तु सुगमत्वं, वशीकार्येषु च प्रधानान्युक्त्वाः अथ वशीकारप्रकारमाह—प्राज्ञः—त्याज्योपादेयविभागवित् । वाचं मनसि नियच्छेत्—द्वितीयाया लोपश्छान्दसः, दीर्घश्च तथा । वाचमितीन्द्रियाणामुपलक्षकम् । इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते, तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि । तदिन्द्रियाण्यर्थेभ्य उपसंहृत्य मनसि नियच्छेत् । प्राज्ञेन प्रज्ञारक्षणाय कर्तव्यमेतत् । मनसि नियमनं चैतेषामात्मोन्मुखमनोऽनुगुणतापादनम्, अविक्षेपतापादनमिति

यावत् । विषये संबध्यमानानि हीन्द्रियाण्यात्मन्युन्मुखमपि मनः सहसा व्याक्षिपेयुः । एतेन हयाः प्रग्रहायत्ताः क्रियन्तामित्युक्तं भवति । तन्मन आत्मनि ज्ञाने—आत्मगते ज्ञाने नियच्छेत् । ज्ञानमत्र बुद्धिः । सा चार्थेषु हेयताध्यवसायरूपा बोध्या । मनसस्तस्यां नियमनं नाम तदनुगुणप्रवृत्तितापादनम् । ज्ञानमात्मनि महति नियच्छेत्—रथित्वेन रूपित आत्मा महानिति विशिष्यते, यदस्योपकरणान्यन्यानि । अध्यवसायं चात्मस्वरूपे नियच्छेत् । अध्यवसायस्यात्मनि नियमनमात्मैकावलम्बनतापादनम् । आत्मनोऽन्यदनुपादेयतयाऽऽत्मानं चोपादेयतयाऽध्यवस्येदिति समुदिताशयः । तं चात्मानं शान्त आत्मनि परमपुरुषे नियच्छेत् । आत्मनः परमपुरुषे नियमनं नाम तदेकाश्रयत्वापादनम् । शरणागतिरिति यावत् । परमपुरुषं शरणं गतस्याध्यवसायप्रभृति सर्वमनुकूलं स्यात्, अनुकूलेषु चैतेष्वध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति भावः ॥१३॥

उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत । क्षुरस्य धारा
निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥१४॥

अहो क्षेत्रिणः स्वक्षेत्रनिहितमपि हिरण्यनिधिमविन्दन्तोऽवसीदन्तीत्यनुतपन्ननुकम्पया सर्वान्सम्बोधयति—उत्तिष्ठतेति । इतः परं वा जाग्रताज्ञाननिद्रायाः, कालो ह्यसङ्ख्यातो गतः, उत्तिष्ठत—विषयतल्पतः, आत्माभिमुखा भवतेत्येतत् । वरान्प्राप्य—आत्मविदामग्रेसरानाचार्याननुपगम्य निबोधत—यज्ज्ञातव्यमात्मतत्त्वम् । यद्वा—शरणागतिप्रसन्नात्परमात्मनो वरान्लब्ध्वा, अनुग्रहं लब्ध्वेति यावत् ।

'यमेवैष वृणुत' इति च प्रकृतम् । वरान्प्राप्येति किं विशिष्यत इत्यत्राह—दुर्गमिति । पथः—पन्थानम्, छान्दसः प्रयोगः, आचार्य-प्रसादादृते तदात्मतत्त्वं दुरधिगमम् । कवयः—तत्त्वविदः, वदन्ति । कुत एवम् ?, निशिता क्षुरस्य धारा दुरत्यया हि—अशिक्षितस्यानवहितस्यासिधारासञ्चरणमिवात्मबलेन यतमानस्यानर्थः स्यादिति भावः ॥१४॥

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्य-
मगन्धवच्च यत् । अनाद्यनन्तं महतः परं
ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥१५॥

अथोपसंहरति—अशब्दमिति । यत्र भौतिकाः शब्दादयो न, अत एव यदव्ययम्—भूतवदुपचयापचयशून्यम् । अनाद्यनन्तम्—उत्पादविनाशशून्यम् । अतएव नित्यम् । ध्रुवम्—स्वभावतोऽपि स्थिरम् । महतो जीवात्मनः परं परमात्मानं निचाय्य—साक्षात्कृत्य मृत्युमुखात्प्रमुच्यते । अत्र महच्छब्देन जीवात्मनो ग्रहणमेव समुचितम्, 'आत्मा महान्परः' 'आत्मनि महति' इति जीवात्मनोर्निर्देशात् । प्राक् 'देवं मत्वा' 'महान्तं विभुमात्मानं मत्वे'ति सामान्यवाचिशब्देन प्रस्तुतं ज्ञानमिह विशेषवाचिना निचाय्येत्यनेनोपसंहृतम् ॥१५॥

नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् । उ-
क्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥१६॥

श्रुतिरिममुपदेशं स्तौति । नाचिकेतम्—नचिकेतसा प्राप्तम् । सना-

तनम्–अपौरुषेयत्वात् । एवम्भूतमिदमुपाख्यानं गुरुभ्यः श्रुत्वा शिष्येभ्य उक्त्वा च ब्रह्मलोके महीयते ॥१६॥

य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि ।
प्रयतः श्राद्धकाले वा तदानन्त्याय
कल्पते तदानन्त्याय कल्पत इति ॥१७॥

य इमं परमं गुह्यं ब्राह्मणानां संसदि श्रावयेत्, स चानन्त्याय कल्पते–अनन्ताय फलायार्हति । श्राद्धे प्रयतो भुञ्जानान् श्रावयेच्चेत्, तच्छ्राद्धमनन्ताय फलाय कल्पत इति स्तुतमिदमाख्यानम् ॥१७॥

इति कठोपनिषद्भाष्ये प्रथमाध्यायतृतीयवल्लीभाष्यं समाप्तम् ।

---

अथ द्वितीयोऽध्यायः ।

पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्
पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्य-
गात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥१॥

अथ प्राप्यतया प्राक्प्रस्तुतस्य विवेचनरूपेयं वल्ली । तत्रादौ सह निवसन्तमप्यन्तरात्मानं किमित्यनवगत्य सीदन्ति सत्यपि करणग्रामे इत्यत्राह । खानि–इन्द्रियाणि । यद्यपि नैकं खं, सन्ति च दश खानि, किं तैरर्थप्रकाशनस्वभावैरपीन्द्रियैः, यदिमानि पराञ्चि विधाय व्यतृणत्स्वयंभूः–परागर्थैकप्रकाशनस्वभावतया विधाय हिंसितवान् । अर्थप्रकाशकमिति मिषेणानर्थैकमूलं व्यतानीत् । तत् निस्ष-

ष्टान्यपि निहतान्येव खानि । स्रष्टा स्वयंभूः—स्वतन्त्रः । न हि पर्यनुयोगार्हः सः । अनुशोकेनैतदुक्तिः । तस्मात्परागर्थैकग्रहणस्वभावकरणभूयिष्ठत्वात्परागर्थान्रूपादीनेव पश्यति—वेत्त्यहमहमिकया प्रवृत्तैस्तैः करणग्रामैः । अत एव विरोधान्नान्तरात्मानम् । विभक्तिलोपश्छान्दसः । तदेवं स्वरसतः प्रवहति परितः पराक्परे करणपूरे कः प्रत्यक्परो भवेत् । धीरः कश्चित्तु—आत्मानात्मविज्ञानरतिरलौकिकः पुरुषः । अमृतत्वमिच्छन्प्रत्यावृत्त्य पराग्भ्यस्तानि प्रत्यगात्मानमीक्षते । तत्सर्वस्यान्तरात्मानं परमात्मानं हृदयतलसन्निहितमपि न सर्वे साक्षात्कुर्वन्तीति भावः ॥१॥

पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति
विततस्य पाशम् । अथ धीरा अमृतत्वं
विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥२॥

अर्थपराणामनर्थं विभावयतां विजानतां नार्थेषु रुचिः स्यात् सत्स्वपि तत्प्रकाशकेषु करणेष्वित्यभिप्रेत्याह—पराच इति । आत्मकामानां कामो व्यावर्त्यते—पराच इति । पराचः कामान्—शब्दादीन्, अनुयन्ति—अनुगच्छन्ति बालास्ते । बालो ह्यपरिज्ञाय स्वानर्थं प्रलोभनमनुगच्छेत् । कामाननुगच्छन्तो ह्येते विस्तृतस्य मृत्योः पाशं यन्ति—परितः प्रसृतस्य जननमरणादिलक्षणस्य संसारस्य बन्धं प्राप्नुवन्ति । धीराः—अचलाः, प्रलोभनानामवशगाः । एते त्वमृतत्वं ध्रुवं मत्वा—मुक्तिमेव ध्रुवं फलं विनिश्चित्य, अध्रुवेषु कामेषु किमपि न प्रार्थयन्ते । तद्दोषदर्शनादिति भावः ॥ २ ॥

येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान्। एतेनैव विजानाति किमत्र परिशिष्यते एतद्वै तत् ॥३॥

पूर्ववल्ल्यां द्वावात्मानौ 'ऋतं पिबन्ता'विति प्रस्तुतौ। तत्रैकः प्राप्ता रथी रूपितः। इतरः प्राप्योऽध्वनः पारभूतो निरूपितः। अध्वनः पारभूतस्य स्वरूपं विशिष्यतेऽधुना—येनेति। येनैतेनैवान्तरात्मना ज्योतिषां ज्योतिषा वेदिता वेत्ति रूपादीन् अथ च ग्राम्यानानन्दान्। किमत्र परिशिष्यते—प्रकाशकेऽस्मिन्किमवशिष्यते। प्रकाशकेनानेनाप्रकाश्यं किमस्तीति यावत्। सर्वस्यार्थस्य प्रकाशकोऽयमेव। यानि च प्रकाशकानि व्यपदिश्यन्ते श्रोत्रादीनि, अनेनैव ज्योतिषा बलेन। अतो वेदिता तांस्तानर्थाननेनैव ज्योतिषा वेत्ति। न चैतं प्रकाशकमनुपजीव्य प्रकाशकं किमपि लोक इति भावः। अन्यत्र च श्रूयते—'श्रोत्रस्य श्रोत्रं मनसो मनः' इति। एतद्वै तत्—ईदृशं पूर्वप्रस्तुतमात्मतत्त्वं प्राप्यभूतमित्यर्थः। केचित्त्वेवं व्याचक्षते। रूपादिशब्दैस्तत्तन्निमित्तकानन्दा लक्ष्यन्ते, सर्वानेतानानन्दान् येनैतेनैवानन्दस्वरूपेणानुभूयमानेनानुभवन्त्येतदनुभवितारः। किमत्र परिशिष्यते—सर्व एव वैषयिकानन्दा आब्रह्मानन्दाद्यदनवधिकानन्दैकदेशभूताः, तस्मिन्नेतस्मिन्ननुभूयमाने को वाऽऽनन्दोऽवशिष्येत, यदितोऽन्यत्प्राप्तव्यं स्यात्, एतद्वै तदिति ॥३॥

स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति। महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥४॥

१ ब्रह्मात्र हिरण्यगर्भः।

पुनस्तमेव विशिनष्टि—स्वप्नेति । येनैव ज्योतिषां ज्योतिषा सर्वात्मभूतेन परमात्मना लोकोऽयं स्वाप्नमर्थं जाग्रदर्थं चानुपश्यति, तं सर्वान्तरं सर्वव्यापिनमात्मानं मत्वा धीरो न शोचति । इन्द्रियद्वारा भवतोऽपि लौकिकार्थविज्ञानस्य सर्वस्य परमात्मैव साधनमित्युक्तं भवत्याभ्याम् ॥४॥

**य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो विजुगुप्सते एतद्वै तत् ॥५॥**

पुनर्विशिनष्टि—य इमं मध्वदं जीवात्मानं वेद—अयमहमस्मीत्यापाततः प्रतीयमानं कर्मफलभोक्तारं जीवात्मानं सम्यग्वेद, वेद चास्यान्तिके भूतभव्यस्येशानं परमात्मानम् । स पश्चान्नात्मानं कुतश्चिज्जुगुप्सते—गोपायितुमिच्छेत्, भयाप्रसङ्गात् । स ह्यभयं गतो भवति । यद्वा—जुगुप्साशब्दः निन्दार्थकः । य एतदुभयं वेत्ति तं वर्णतो वृत्ततो वा विहीनमपि लोको न निन्देदित्यर्थः । सार्वविभक्तिकस्तसिः । यद्वा—सः ततः पश्चात्कमपि न निन्देदित्यर्थः । स्वस्य परस्य च हृदयगुहायां सन्निविष्टमेकमन्तर्यामिणं जानतो न तदवसरः, सर्वस्यैकात्मकत्वानुसन्धानादिति भावः । एतद्वै तत्—एतन्मन्त्रप्रतिपादितं सर्वस्येशभूतं तत्—पूर्वं प्राप्यतयोक्तं स्वरूपमित्यर्थः । योऽसावनेन जीवेनात्मना सहानुप्रविश्य हृदयगुहां यथाकर्म नियमयन्नास्ते भूतभव्येशः स एव स इति यावत् ॥५॥

**यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत । गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत एतद्वै तत् ॥६॥**

अथ यः सर्वकारणं स एव स इत्याह—यः पूर्वमिति । अद्भ्यः पूर्वं जातम्—अद्भ्य इत्युपलक्षकं भूतानाम्, भूतेभ्यः प्रागुत्पन्नं महदादिकं सर्वं यः पूर्वमजायत—य एवादावजनयत् । अन्तर्भावितण्यर्थोऽयं प्रयोगः । केनोपकरणेन ? तपस एव केवलात्—सङ्कल्पमात्रतः । जातमिति प्रथमान्तं वा । यः स्वयमेकोऽहं बहु स्यामिति सङ्कल्प्यादौ महदादिकमजायत, तद्रूपेणाजायतेत्यर्थः । एतेन अभिन्ननिमित्तोपादानत्वं ज्ञाप्यते । अखिलव्यष्टिसृष्टिद्वारभूतो हिरण्यगर्भोऽपि यत्सङ्कल्पादित्याह—गुहामिति । गुहां प्रविश्य तिष्ठन्तम्—गुहाऽत्र अण्डोदरमुच्यते । भूतेभिरिति छान्दसः प्रयोगः । उपलक्षणे तृतीया । अण्डान्तरं प्रविश्य कार्यकारणलक्षणैः सह वर्तमानं हिरण्यगर्भं व्यपश्यत—सङ्कल्पमात्रेण व्यलोकयत् । सङ्कल्पमात्रेण संसृष्टवानित्यर्थः । एतद्वै तत्—पूर्ववदर्थः । यद्वा—पूर्वं व्यष्टिसृष्टेः प्राक् अद्भ्यः—अण्डात्मना परिणताभ्यः, योऽजायत । तथा च स्मर्यते 'अप एव ससर्जादौ तासु वीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥ तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ।' इति । तं तपसो जातम्—स्वसङ्कल्पमात्राज्जातम् । पूर्वम्—प्रथमम्, व्यष्ट्यपेक्षया, गुहां प्रविश्य तिष्ठन्तम्—तदीयहृदयगुहायां वर्तमानम् । भूतेभिः—देहेन्द्रियान्तःकरणादिभिरुपलक्षितं व्यपश्यत—व्यष्टिसृष्टिद्वारतयैक्षत, यत्सङ्कल्पाद्धिरण्यगर्भः स्रष्टा भवतीति यावत् ॥६॥

**या प्राणेन सम्भवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत एतद्वै तत् ॥७॥**

यश्चायं क्षेत्रज्ञवर्गः सोऽपि तदात्मक इत्याह—येति । अत्ति कर्मफलानीति भोक्ता जीवोऽदितिरुच्यते । याऽदितिर्देवतामयी प्राणेन सम्भवति—यो भोक्ता जीव इन्द्रियप्रचुरः प्राणेनोपलक्षितः सम्भवति । यः स्वकर्मानुगुणमिन्द्रियप्राणविशिष्टो भोगाय प्रभवतीति यावत् । पुनस्तामेवादितिं विशिनष्टि—गुहामिति । हृदयगुहां प्रविश्य वर्तमाना याऽदितिर्भूतैर्देहात्मना परिणतैर्व्यजायत—ज्ञानस्वरूपत एकरूपाऽपि देवमनुष्यादिविविधरूपेणाजायत । एतद्वै तत्—अयमपि भोक्ता क्षेत्रज्ञस्तदात्मक इत्यर्थः । 'क्षेत्रज्ञं चापि मां विद्धी' ति च स्मर्यते । मां—तदात्मकमिति च भाषितम् ॥७॥

अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः । दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः । एतद्वै तत् ॥८॥

प्राप्तुस्तदात्मकत्वमुक्तम्, अथ प्राप्तिसाधनतया प्रस्तुतस्याग्नेस्तदात्मकत्वमाह—योऽयमधियज्ञं जातवेदा अरण्योरधरोत्तरयोर्निहितः, गर्भ इव गर्भिणीभिः सुभृतः—ऋत्विग्भिरिति शेषः । सुपरिरक्षित इति यावत् । अन्वहं जागरूकैर्हविष्मद्भिर्मनुष्यैः स्तुत्यः । अग्रनेता[1] सोऽपि तदात्मकः ॥८॥

यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति । तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चन । एतद्वै तत् ॥९॥

---

१ अग्निरित्यस्यायं यौगिकार्थः ।

सर्वे देवा यत्प्रतिष्ठाः स तु स इत्याह—यतश्चोदेति सूर्यो यत्र चास्तं गच्छति—यस्मात्परमात्मन आविर्भवति यस्मिन्नेव परमात्मनि लयमेति। सर्वे च देवा अग्न्यादयस्तमेव परमात्मानमर्पिताः—अरा इव रथनाभौ तस्मिन्नर्पिता इत्यर्थः। जगति कश्चिदपि पदार्थस्तदु नात्येति—तं परमात्मानमतिलङ्घ्य स्वातन्त्र्येण न वर्तते। सर्व एव तत्प्रतिष्ठा इति यावत् ९

यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः
स मृत्युमाप्नोति य इह नानेव पश्यति ॥१०॥
मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन। मृत्योः
स मृत्युं गच्छति य इह नानेव पश्यति ॥११॥

अव्यवहितमन्त्रत्रयतात्पर्यपर्यवसितमर्थमाह—यदेवेति। अयमाशयः—या प्राणेनेति मन्त्रे जीवात्मनां परमात्मात्मात्मकत्वमुक्तम्। अरण्योरिति मन्त्रे अग्नेस्तदात्मकत्वोक्त्या भूतजातस्यापि तदात्मकत्वं व्यञ्जितम्। यतश्चेति मन्त्रे परमात्मनः सूर्याद्युदयलयप्रतिसंबन्धित्वेन सर्वदेवप्रतिष्ठात्वोपपादनमुखेन तदु नात्येति कश्चनेति सर्वस्य पदार्थस्य द्रव्यमुल्लङ्घ्य जातिगुणादीनामिव परमात्मानमुल्लङ्घ्य सत्ता प्रतिषिद्धा। एतेन सर्वात्मकः सर्वप्रकारः परमात्मा एक एवेति तात्पर्यतोऽवगतमर्थं हृदि निधायाह—यदेवेति। इह जगति नाना नास्ति, सर्वान्तरः परमात्मा एक एव तत्तत्प्रकारस्तत्र तत्र वर्तते। यदेवेह तदेवामुत्र—दृश्यमानप्रकारमदृश्यमानप्रकारमप्येकमेव परमात्मतत्त्वमिति भावः। यदमुत्र तदन्विहेति दार्ढ्यायोक्तिः। मृत्योः

स मृत्युं गच्छति—सर्वथा संसारं प्रविशति । य इह नानेव पश्यति—वस्तुतो नानात्वं नास्तीत्यर्थं स्फुटयितुमिवशब्दः । ननु चक्षुषा भिन्नं भिन्नं स्वनिष्ठं दृश्यते तत्राह—मनसेति । इदम्—एकमेव परमात्मतत्त्वं स्वेतरसमस्तवस्तुप्रकारं सर्वत्र तिष्ठतीत्येतत् मनसैवाप्तव्यम्—शास्त्रसंस्कृतेन मनसैव ज्ञातव्यम् । सुसंस्कृतेन मनसा चेत्पर्यालोच्यते नेह नानास्ति किञ्चन, यस्त्वसंस्कृतेन मनसा चक्षुषा वा नानेव पश्यति मृत्योः स मृत्युं गच्छति । यद्वा—नन्वेकात्मकत्वमखिलस्य कथं घटेत ? अहमयमस्मि अहमसावस्मीति व्यवस्थित एव खलु प्रत्ययो भवति लोकानाम्, आत्मा चेदखिलस्यैकः कथमयं नियमितः प्रत्ययो घटेत ? तदा ह्यहमखिल इति स्यात्प्रत्ययः, तत्राह—यदेवेहेति । अन्तरात्मतत्त्वं तदेवामुत्रापि लोके । यदमुत्र—तदन्विह । एकमेवान्तरात्मतत्त्वमखिलस्य, तथाऽपि पामराणां निष्कृष्टात्मस्वरूपज्ञानाभावाच्छरीर एव केषाञ्चिदहंप्रत्ययः, केषांचिज्जीवमात्रे, शास्त्रतः संस्कृतमनसां तु परमात्मन्येवाहंप्रत्ययः । अत एव 'अहं मनुरभव' मित्यादयो भवन्ति व्यवहारा वामदेवादीनाम् । इह—अन्तरात्मतत्त्वे, नाना—वैविध्यं नास्तीत्यर्थः । शिष्टं स्पष्टम् ॥१०-११॥

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो
भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥१२॥
अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भू-
तभव्यस्य स एवाद्य स उ श्वः । एतद्वै तत् ॥१३॥

पुनः प्रकृतं तमेव विशिनष्टि—अङ्गुष्ठेति । यः परमः पुरुषः स एवोपासकानामनुग्रहाय मध्य आत्मनि—शरीरमध्ये, हृदयपुण्डरीक इत्येतत् । अङ्गुष्ठमात्रः—अङ्गुष्ठपरिमितस्तिष्ठति । अपरिच्छिन्नस्याप्यस्यानेन परिच्छेदो हृदयकमलमपेक्ष्य । उपासकानुग्रहाय स्वेन रूपेण सन्निहितो हि तत्र । अपाक्रियते जीवशङ्का—ईशानो भूतभव्यस्येति । सर्वस्य कार्यवर्गस्येत्यर्थः । अयं च न ततो देहमध्याज्जुगुप्सते, वात्सल्यादिति यावत् । य एनं वेद स ततो न जुगुप्सते इति शेषपूरणेन वाऽर्थो बोध्यः । एतद्वै तत् । यश्चायमङ्गुष्ठप्रमितः, अधूमक इवानलः—प्रकाशैकबहुलः, ज्योतिषां ज्योतिरिति यावत्, भूतभव्यस्येशानः । स एवाद्य श्वोऽपि—कालापरिच्छिन्नः । अद्यतनं श्वस्तनं सर्वं स एव, तदात्मकमेवेति वा भावः ॥१२-१३॥

यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥१४॥

य एनं सर्वान्तरं सर्वात्मकं सर्वप्रकारमविज्ञाय तांस्तान्धर्मान्—देवत्वमनुष्यत्वादीन् पृथगेव पश्यति । एकस्मिन्मुख्यविशेष्येऽनन्वितान्स्वतन्त्रविशेष्यगतान्पश्यति । स पर्वतमूर्ध्नि निपतितमुदकमधोऽधो बहुधा निपत्य यथा विशीर्यते तथा विशीर्यत इत्याह—यथोदकमिति । दुर्गे—दुर्गमे पर्वतमूर्ध्नि । पर्वतेषु—पर्यन्तपर्वतेषु । निपत्य विविधं धावति—निम्नेषु देशेषु प्रवहति । धर्मान्—देवत्वादीन् भिन्नभिन्नविशेष्यपर्यवसायिनः पश्यन्, साक्षात्परंपरया वा एकमुख्यविशेष्येऽ-

नन्वितान् जानन्निति यावत् । तानेव–मनुष्यत्वादिधर्मान्, अनु विधावति, संसरतीत्येतत् ॥१४॥

**यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**
**एवं मुनेर्विजानत आत्मा भवति गौतम ॥१५॥**

अथ विजानतो विशेषमाह—यथेति । एवमुक्तप्रकारेण सर्वान्तरात्मानमेकमखिलप्रकारं सर्वस्य कारणं सर्वप्रतिष्ठाभूतमुपासकजनानां हृदि सन्निहितं यो विजानाति, तस्यात्मस्वरूपं शुद्ध उदक आसिक्तं शुद्धमुदकं यथा तादृगेव भवति–तत्समानाकारमेव भवति। परमात्मन्यासक्तमिदमात्मस्वरूपमपहतपाप्मत्वादिना तत्समानाकारमेव भवतीति भावः ॥१५॥

इति कठोपनिषद्भाष्ये द्वितीयाध्यायप्रथमवल्लीभाष्यं समाप्तम् ।

---

**पुरमेकादशद्वारमजस्यावक्रचेतसः । अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते ॥ एतद्वै तत् ॥१॥**

दुरधिगमत्वात्परमात्मतत्त्वस्य पुनस्तद्विवेचनायारभते—पुरमिति। शरीरं पुरमुच्यते द्वारादिसाम्यात् । सप्तभिर्मुखे भवैर्नाभ्या सहार्वाग्भिस्त्रिभिर्मूर्ध्नैकेन चैकादशद्वारमुच्यते । त्वङ्मांसरुधिरादिभिः प्राकारैः परिवेष्टितमेतत्पुरम् । द्वारपाश्चादित्यादयस्तत्तदधिष्ठातृदेवताः । अतोऽस्य पुरत्वं युक्तम् । यथायथमितस्ततः समाहृत्यार्थान् बलिमुपहरद्भिरिन्द्रियैः पौरैरुपसेव्यमानः प्रभुपदेऽभिषिक्तो जीवः ।

यस्तु शरीरं पुरं वेत्ति स पुरात् पौरेभ्यश्चात्यन्तविलक्षणमात्मानं जानात्येव। नैतावता कृतकृत्यता, किन्तु येनायमस्मिन्पुरे प्रभुपदेऽभिषेचितः तं चेद्विजानीयात्। स चाजोऽवक्रचेताः परमात्मा। जीवस्य हि कर्मसम्बन्धेनोपाधिद्वाराऽस्ति नाम जन्मसम्बन्धः। अस्य तु कथमपि न तत्सम्बन्ध इत्यज उच्यते। कर्मणा ज्ञानसङ्कोचात्कदाचिद्वक्रचेता नाम जीवः, अयं तु नित्यासङ्कुचितज्ञानोऽवक्रचेताः। चेतःशब्देन ज्ञानं लक्ष्यते। तदात्मनोऽस्मिन्पुरे प्रभुपदे योजयितारं परमात्मानं ज्ञात्वा तदिदमेकादशद्वारं पुरं तस्यावक्रचेतसः अनुष्ठाय— विधाय, सम्बन्धसामान्ये षष्ठी, तदर्थं विधायेति यावत्। न शोचति। 'विचित्रा देहसम्पत्तिरीश्वराय निवेदितु'मिति हि स्मर्यते। इह भगवान् दयमानमनाः करणकलेवरयोगं विदधाति चेतनानां स्वाराधनेन समुज्जीवनाय। कतिचन मन्दभाग्या अजानन्तो देहात्मभ्रमेण स्वतन्त्रात्मभ्रमेण च च्यवन्त्येव। यः पुनर्विज्ञायाऽऽत्मयाथात्म्यमीश्वरनिसृष्टां करणकलेवरसम्पत्तिं सर्वानपि तद्व्यापारांस्तदाराधनरूपानेव तनुते, स हि सर्वशोकमूलतो विमुक्तो भवति। तदुच्यते—ऽजस्यावक्रचेतस अर्थे पुरमिदं विधाय न शोचतीति, इति भावः। इहैव शोकमूलभूतै रागद्वेषादिभिर्विमुक्तः शरीरावसानसमये विमुच्यते प्रकृतिसम्बन्धतः न पुनः शरीरं प्राप्स्यति, किन्त्वर्चिरादिना प्राप्य भगवल्लोकं विमुक्तो भविष्यति। एतद्वै तत्—यदाराधनेन विमुक्तो भवति तदेतत् पूर्वोक्तमित्यर्थः। यद्वा—कामनामूलकः सर्वोऽनर्थः, सा च देहात्माभिमानमूला, अतस्तत्त्वं विचार्यम्। वस्तुत आत्मा न जायते, शरीरं तु जायते, अतश्चायं ततो भिन्नः।

शरीरं तु जडम्, अयं तु अवक्रचेताः—ज्ञानैकवपुः, ज्ञानस्वरूपे ह्यस्य न देवादिवैषम्येण वक्रता, अतश्चायमत्यन्तभिन्नः । अनुष्ठायैतत्—अनुष्ठानपर्यन्तं ज्ञात्वेति यावत्, शास्त्रतस्तु सर्व एव जानन्तीदं वैषम्यम्, तद्व्यावृत्तिर्ज्ञाप्यतेऽनुष्ठायेत्यनेन । न शोचति—शोकमूलभूतदेहात्माभिमानापगमात् । विमुक्तश्च विमुच्यते—यथा व्याख्यातमेतत् । एतद्वै तत्—एवम्भूतो मुक्तोऽपि तदात्मक इति भावः ॥१॥

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषद-
तिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा
गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥२॥

सर्वस्य चिदचित्पदार्थस्यैतदात्मकतामाह—हँस इति । शुचौ निर्लेपे आकाशे वर्तमानो हंसः सूर्यः । वसुरन्तरिक्षसत्—आकाशे सततमनुसञ्चरन् यो वासयति वायुः । होता वेदिषत्—वेद्यां वर्तमानो यश्च होता, होताऽग्निः, वेदिश्च पृथिवी, तथा च श्रूयते 'अग्निर्वै होता इयं वेदिः परोऽन्तः पृथिव्या' इति, ऋत्विग्विशेषो वा । अतिथिर्दुरोणसत्—यश्च गृहान्प्रविशत्यतिथिः । नृषत्—यस्तु मनुष्ययोनौ । वरसत्—यश्च देवयोनौ । ऋतसत्—यश्च सत्यलोके वर्तमानः । व्योमसत्—व्योम्नि परमाकाशे वर्तमानः । अब्जा गोजा ऋतजा अद्रिजाः—ये जलजाः, ये च भूमिजाः, ये चाकाशजाः, ये च पर्वतप्रभवाः, सर्वमेतत् बृहत् ऋतम्—अपरिच्छिन्नब्रह्मात्मकम् । ऋतमिति सत्यमुच्यते, सत्यं ब्रह्मैव । 'सत्यं ज्ञान'मिति श्रुतेः ॥२॥

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥३॥

परमात्मानं सुखेन ग्राहयन्नाह—ऊर्ध्वमित्यादिना । यः शरीरमध्ये हृदयकमले सन्निधाय प्राणमूर्ध्वमुन्नयत्यपानमधो गमयति, तमेतं प्राणापानगतिव्यवस्थापकं हृदयपुण्डरीके सन्निहितं वामनम्–भजनीयं सर्वे देवा उपासते । देवा इत्युपलक्षकम् । सत्त्वप्रकृतय इति वार्थः ॥३॥

अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः । देहाद्विमु-
च्यमानस्य किमत्र परिशिष्यते । एतद्वै तत् ॥४॥

ननु प्राणगतिव्यवस्थापकः प्रत्यगात्मनो नातिरिच्यत इत्यत्रोच्यते—अस्येति । शरीरस्थस्य देहिनः–अनादरे षष्ठी, अस्ति नाम शरीरे प्रत्यगात्मा, स चायं देहस्य स्वामी, स्वेन कर्मणा ह्यर्जितोऽयं देहः, स चायमावासमात्मनो रक्षितुमेव वाञ्छति, न तूत्सादयितुम्, सर्वो हि जीवितुमाकाङ्क्षत इति विदितमेतत्, अथाप्येनमनादृत्य प्राणो निःसरणोन्मुखो भवति नाम, अन्ते च शरीराद्वियुज्यते च, तत् विस्रंसमानस्य–शिथिलीभवतोऽस्य प्राणस्य, अन्ततो देहाद्विमुच्यमानस्य च, अत्र–विस्रंसने विमोक्षे च विषये, किं परिशिष्यते–निमित्तं किं परिशेषात्सिध्यति, पर्यालोच्यतामित्यर्थः । प्रत्यगात्मा चेत्प्राणगतिव्यवस्थापकः, जीवितुं वाञ्छतोऽपि तस्य प्राणाः कुतो निःसरन्ति, तत् प्राणनिःसारणे निमित्तत्वं प्रत्यगात्मनि बाधितमन्यत्र प्रसङ्गानर्हतया परमात्मनि परिशिष्यते । प्राणगतिव्यवस्थापकस्य

तस्य वैमुख्याच्च तद्विश्लेषो घटत इति भावः । प्राणापानगतिव्यवस्थापकोऽयमन्तरात्मैव पूर्वप्रस्तुतं ब्रह्मेत्यर्थः ॥४॥

**न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।**
**इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥५॥**

अत एव जीवितं प्राणिनां प्राणापानायत्तमिति पामरप्रवादोऽप्यसङ्गत इत्याह—नेति । न प्राणेन नापानेन मर्त्यो जीवति कश्चन—प्राणसंश्लेष एव जीवितम्, तत्र च निमित्तेनान्येन भाव्यम्, नहि स्वसंश्लेषे स्वस्य निमित्तत्वमुचितम्, तत् यस्मिन्परमात्मन्येतावुपाश्रितौ, तेन तु जीवन्तीति भावः । परे त्वाचार्याः—अस्येति मन्त्रमुपासकपरतया योजयन्ति । अस्मिन्पक्षे देहस्थस्य विस्रंसमानस्य देहाद्विमुच्यमानस्यास्य देहिन इति सामानाधिकरण्येनान्वयः । अस्य—उपासकस्येत्यर्थः । अत्र—जगति किं परिशिष्यते—किं कर्तव्यमवशिष्यते, कृतकृत्यो हि सः । एतद्वै तत्—इदमुपासकस्वरूपमपि ब्रह्मात्मकमित्यर्थो बोध्यः ॥५॥

**हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।**
**यथा च मरणं प्राप्य आत्मा भवति गौतम ॥६॥**

अधिकारिविशेषलाभेन सन्तुष्टो मृत्युः परमगुह्यं पुनर्विवेचयन्प्रतिजानीते—हन्तेति । अधिकारिविशेषलाभजनितो हर्षो व्यज्यते । ते—त्वमसि पात्रमुत्तममुपदेशस्यास्य, न त्वा कामा बहवो लोलुपयन्ति, तदीदृशाय तुभ्यम्, इदम्—एतावतोपदिष्टं गुह्यम्—रहस्यं

सनातनं ब्रह्म, प्रवक्ष्यामि—प्रकर्षेण पुनर्वक्ष्यामि । यद्विज्ञानाच्छाश्वतं सुखम् । अविज्ञाते च यस्मिन्नयमात्मा मरणं प्राप्य यथा भवति, तं प्रकारमप्रतिविधेयानन्तदुःखास्पदतारूपं शृणु । इदं च ब्रह्मविज्ञाने आदरदार्ढ्याय निबोध्यते ॥६॥

योनिमन्ये प्रपद्यन्ते शरीरित्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥७॥

अन्ये देहिनः—ये पुनर्ब्रह्मविज्ञानविधुरा देहारम्भककर्मसम्पन्नास्ते केचन योनिं प्रपद्यन्ते—अहो दुःसहमेतद्गर्भवासादिदुःखम् । कस्मै फलाय प्रपद्यन्ते ? शरीरित्वाय—वियुज्य शरीरादेकस्मात्पुनः शरीरान्तरसम्पत्तये । अहो महानयं क्लेशो मरणजननचक्रके भ्राम्यमाणानामेषाम् । अपरे च पापिष्ठतराः वृक्षादिस्थावरवर्गं प्रपद्यन्ते यथाकर्म यथाश्रुतम् । तदेवमत्यन्तदुःखाकरं संसारं विजानन्को वा न त्वरेत ब्रह्मविज्ञानायेति भावः ॥७॥

य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः
श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥८॥

अथ यत्प्रवक्ष्यामीति प्रतिज्ञातं तद्ब्रह्माह—य इति । प्राणिषु प्रसुप्तेषु य एष पुरुषः कामं कामं निर्मिमाणो जागर्ति तदेव ब्रह्म । कामं काममिति णमुलन्तम्, सङ्कल्प्येत्यर्थः । सङ्कल्पमात्रेण सृजति स्वामानर्थानिति यावत् । जीवस्य तु कर्मणा नियन्त्रितस्य करणसा-

पेक्षज्ञानप्रसरस्योपरतेष्वखिलेषु करणेष्वस्ताखिलव्यापारस्य सङ्कल्पमात्रेणार्थविशेषनिर्माणसामर्थ्यं न घटेतेति परब्रह्मणः पुरुषोत्तमस्यैव तदानीं तत्स्रष्टृत्वमिति भावः । तदेव शुक्रम्—सर्वतः शुभ्रम्; प्रकाशकमित्येतत् । तदेवामृतम्—निरुपाधिकं भोग्यभूतमुच्यते । अनवधिकानन्दत्वान्निरवधिभोग्यं हि तत् ॥८॥

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रति-
रूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा
रूपं रूपं प्रतिरूपो बहिश्च ॥९॥

ननु परस्य ब्रह्मणः सर्वभूतान्तरात्मत्वे अप्रतिहतज्ञानशक्त्यादिकेनैतेनैकेनात्मनाऽधिष्ठितानामेषां कथं वा ज्ञानादिवैलक्षण्यम्, शरीरभेद इव जीवभेदस्त्वप्रयोजकः, न ह्येकात्माधिष्ठितेषु वैषम्यं घटेतेति शङ्कां दृष्टान्ततः परिहरन्नन्तरात्मत्वमवगमयति—अग्निरिति । यथाग्निर्भुवनं प्रविष्टः—स्वतः कुटिलत्वदीर्घत्वादिवैषम्यरहित एकरूपोऽपि दाह्यं दार्वादिभुवनं प्रविष्टः प्रतिरूपो बभूव—व्याप्यतत्तद्वस्तुस्वरूपो बभूव । कुटिलं व्याप्य कुटिल इव दीर्घं व्याप्य दीर्घ इव च प्रतीयत इत्येतत् । तथा सर्वभूतान्तरात्मा—देवमनुष्यादितत्तत्प्राणिवर्गे प्रविष्टः, स्वयमकर्मवश्यतया ज्ञानसङ्कोचविकासादिवैषम्यरहितोऽपि देवं व्याप्य तत्सरूप इव, मनुष्यं व्याप्य तत्सरूप इवाभाति । अयं भावः—कर्मविशेषेण मनुष्ययोनिमापन्नान्ज्ञानसङ्कोचविशेषमापन्नांश्चेतनान्व्याप्य नियमयन्नयं परमात्मा स्वयमसङ्कुचितज्ञानोऽपि

देवानिव न चेतयेत्, तत्तत्कर्मसापेक्षत्वादेतत्कृताधिष्ठानस्य, तथा च व्याप्यचेतनविशेषान्कर्मवश्यान्स्वयमकर्मवश्योऽप्रतिहतज्ञानशक्तिकोऽपि तत्तत्कर्मानुगुणमेव व्यापारयतीति तत्तत्स्वरूप इव भवतीत्युक्तिरिति। एतेनाप्रतिहतज्ञानशक्त्यादिकेन सर्वान्तरात्मनैकेनाधिष्ठितत्वेऽप्यधिष्ठानस्य कर्मसापेक्षत्वादधिष्ठेयेषु चेतनेषु योनिभेदेन ज्ञानादिवैषम्यमपरिहार्यमेवेति सिद्धम्। तदेवमन्तर्यामितायां तत्तत्कर्मानुरूपमेव व्यापारयन्नप्रकाशितज्ञानशक्त्यादिरास्ते। स्वे धाम्नि स्वेन रूपेणावस्थितौ तु ज्ञानशक्त्यादिकमात्मनः सर्वदा प्रकाशयन्नेवास्त इत्यभिप्रेत्याह—बहिश्चेति[1]। चस्त्वर्थे। अन्तर्यामिभावादन्यत्र तु। यद्वा—परस्य ब्रह्मणः सर्वभूतेष्वन्तर्बहिश्च व्याप्तिं दृष्टान्तपूर्वकमवगमयति—अग्निरिति। अग्निरिह तेजः। नह्यग्निनाऽव्याप्तः कश्चिद्देशः, स हि सर्वत्र सूक्ष्मरूपेण सन्निहितः, इयांश्च विशेषः, स्थूलेषु जलादिसकलभूतेष्वन्तर्व्याप्यास्ति। यत्तु सूक्ष्मं तत्र तु बहिरेव केवलं व्याप्तः। तदेवमन्तर्बहिश्च व्याप्य वर्तमानोऽप्यविषम एव यथाऽयं, तथा सर्वभूतान्तरात्माऽन्तर्बहिश्चाविषम एव व्याप्य वर्तत इत्याशयेनाह—अग्निर्यथा भुवनं प्रविष्टो बहिश्च एकस्तथा सर्वभूतान्तरात्मेति। परंब्रह्म अन्तर्यामितया सूक्ष्मरूपेण सर्वभूतेष्वन्तर्बहिश्च व्याप्य वर्तमानं बहिरन्तःप्रदेशरूपोपाधिभेदेऽपि स्वयमविषममेवेति भावः। अन्तःप्रवेशे विशेषमाह—रूपं रूपमिति। यथाऽविषमोऽप्यग्निर्भूतेष्वन्तःप्रविष्टः प्रतिरूपो बभूव—भिन्नभिन्नरूपो बभूव, एक-

---

१ बहिःस्थितितो विशेषमाहेत्यर्थः।

स्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपः । अयमाशयः—जलपृथिव्यादिष्वन्तः सन्निहितोऽप्यग्निरविभागविशेषात्पृथगाकारादिकमलभमानो जलमित्येव पृथिवीत्येव भिन्नभिन्नतत्तदाकारतत्तन्नामादिव्यपदेशमर्हति, तथा परमात्मा तत्र तत्रान्तर्यामितया सन्निहितोऽविभागविशेषाद्भिन्नभिन्नतत्तदाकारनामादिगोचरो भवतीति । परे तु—तत्र तत्रान्तर्यामी भिन्नभिन्नविग्रहश्चकास्तीति योजयन्ति । अयमेको भगवदवतारविशेष इति तेषां हृदयम् ॥९॥

वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं
प्रतिरूपो बभूव। एकस्तथा सर्वभूतान्त-
रात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥१०॥

सुसूक्ष्ममन्यं दृष्टान्तमाह—वायुरिति । पूर्वसादविशिष्टार्थकमेतत् १०

सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते
चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्त-
रात्मा न लिप्यते लोकदुःखेन बाह्यः ॥११॥

ननु परस्य ब्रह्मण आत्मतया सर्वत्रानुप्रवेशे जीवस्येव सुखदुःखादिलेपः स्यादिति शङ्कां दृष्टान्ततो वारयति—सूर्यो यथेति । सूर्यो हि रश्मिद्वारा सर्वस्य चक्षुषि सन्निहितो नाम, 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठित' इति हि श्रूयते। तथाऽपि न लिप्यते चाक्षुषैर्बाह्यदोषैः। चाक्षुषा हि दोषाः काचादयः । बाह्याः—बहिःप्रसरणशीलाः । न

तैश्चक्षुषोऽन्तः सन्निहितः सूर्योऽभिभूयते । यद्वा—चाक्षुषा ये दोषाश्चक्षुर्मलादयो न तैर्बाह्यैरादित्यो लिप्यते । तथा सर्वेषामन्तरात्मा सोऽयमेको न लिप्यते लोकदुःखेन । यतोऽसौ लोकतो बाह्यः विलक्षणः, अकर्मवश्य इत्येतत् । अधिष्ठेयाच्चक्षुषोऽत्यन्तविसजातीयस्तस्याधिष्ठाता सूर्यो यथा चाक्षुषैर्दोषैर्न लिप्यते, सर्वभूतान्तरात्मा सर्वस्य लोकस्यान्तर्यामितयाऽधिष्ठाताऽन्तःसन्निहितोऽप्यत्यन्तविसजातीयो न तद्दोषैर्लिप्यत इति भावः ॥ ११ ॥

एको वशी सर्वभूतान्तरात्मा एकं बीजं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥१२॥

एतद्विज्ञानादेव शाश्वतं सुखं नान्यथेत्याह—एक इति । यश्चायं सर्वभूतान्तरात्मा, अयमेव वशी । अन्तरात्मनो हि वशे सर्वाणि भूतानि । एकश्चायं न ह्यस्य समोऽन्यः । अयमेव च सर्वस्य कार्यस्य कारणमित्याह—एकं बीजं बहुधा यः करोतीति । एकम्—अविभक्तं स्वस्मात्, सर्वस्य विकारस्य बीजभूतं प्रधानं, महदादिरूपेण बहुधा योऽयं सङ्कल्पमात्रेण करोति । बीजस्याविभक्तत्वोक्त्याऽविभक्तविशेषणद्वारा सर्वविकारोपादानत्वमन्तर्यामिण्युक्तं भवति । तं सर्वकारणं सर्वान्तरात्मानं ये आत्मन्यन्तरात्मतया विद्यमानं श्रवणमनु साक्षात्कुर्वन्ति, तेषामेव शाश्वतं सुखं सिध्यति नेतरेषाम् । ये पुनरेनं नैव जानन्ति, ये वा शास्त्रतो जानन्ति नाम न योगतः साक्षा-

स्कुर्वन्ति, ये वाऽन्यत्र केवलं नात्मनि, न तेषां नित्यं सुखं सिध्येत्, किन्तु सुखाभासरूपा संसृतिरेव ॥१२॥

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो
विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति
धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥१३॥

अयमेव सर्वकामप्रद इत्याह—नित्य इति । नित्यानां बहूनां चेतनानामन्तर्यामितया सन्निहितो योऽयमेकस्तत्तत्कामांस्तत्तत्कर्मानुगुणं विदधाति, तमात्मनि सन्निहितं येऽनुपश्यन्ति तेषां शान्तिः शाश्वती— संसारोपरतिरूपा, नान्येषाम् । चेतनबहुत्वमत्र सुस्पष्टम् ॥१३॥

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु
तद्विजानीयां किमु भाति विभाति वा ॥१४॥

तेषां सुखं शाश्वतमिति फलतया प्रस्तुतं नित्यं किं तदित्यत्राह— तदेतदिति । अनिर्देश्यम्—किमपि तत्, इदमिति परिच्छेदानर्हम् । यतो वाचो निवर्तन्ते । परमम्—निरतिशयम् । यस्मिन्ननुभूयमाने नावशिष्यते किमपि सुखम्, यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितम्, किमत्र परिशिष्यते । इदं च यदनया वल्ल्या पूर्वया च निरूपितं परंब्रह्म न ततोऽन्यत्, तदेतदिति तद्विदो मन्यन्ते । विवक्षितार्थे आप्तसंवादः प्रदर्श्यते—मन्यन्त इति । अथ शिष्यः परिपृच्छति दिव्यविग्रहविशेषजिज्ञासया । कथं नु तद्विजानीयाम्—अपरिच्छिन्ननिरतिशयसुखरूपं परंब्रह्मेत्युपदेशतो गगनमिव

केवलं निराकारमेकरूपं परितो व्याप्तं परंब्रह्मेत्यापाततः स्फुरति, तत्कथं निश्चिनुयाम् । कथमिति जिज्ञासितं विकल्पं व्यनक्ति—किम्नु भाति विभाति वा । किं तन्निरतिशयसुखस्वरूपं परंब्रह्म सामान्यतो दीप्यते, उत विशेषतो दीप्यते । आस्तिकाग्रेसरोऽयं भगवतो विग्रहसद्भावासद्भावकोटिं साक्षात्प्रष्टुं शङ्कित आपाततो जातां शङ्कां परिजिहीर्षन् विग्रहसद्भावकोटौ सामान्यतो दीप्तिमत्त्वनिरतिशयदीप्तिमत्त्वे विकल्पयति । एतदुत्तरेण विग्रहसद्भावासद्भावयोरेकतरः पक्षोऽपि निश्चितो भवेदिति । दीप्तिर्हि निरूप्यमाणा स्वाश्रयं विग्रहं ज्ञापयति । 'आदित्यवर्ण'मिति श्रुत्यन्तरैकार्थ्यं च ॥१४॥

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो
भान्ति कुतोऽयमग्निः । तमेव भान्तमनु भाति
सर्वं तस्य भासा सर्वमिदं विभाति ॥१५॥

सर्वतेजसां छादकं सर्वतेजसामनुग्राहकं दिव्यं रूपं परस्य ब्रह्मणोऽस्तीत्याशयेन प्रतिवक्ति—न तत्रेति । सूर्यादयो भगवतो दिव्यरूपसन्निधौ निष्प्रकाशाः । तमेव भान्तमनु भाति सर्वम्—दिव्यरूपं प्रकाशमानमेनमनु प्रकाशन्ते ते । तन्मूलकास्त इति भावः । तस्य भासा सर्वमिदं विभाति—तदुपजीव्यप्रकाशाश्च त इति यावत् । यद्वा—गौतमः पृच्छति—तदेतदिति । अनिर्देश्यं प्राकृतानां वाङ्मनसागोचरं परमं सुखं तत्—परब्रह्म, एतदिति करतलामलकवत्, व्यक्तमिति यावत्, निष्पन्नयोगाः केचन भवादृशा मन्यन्ते । अहं कथं विजानीयाम्—

अपरिनिष्पन्नयोगा मादृशाः कथं विजानीयुरिति यावत् । किन्नु भाति—साधारणतया । उत विभाति—विजातीयतया प्रकाशते । प्रतिवक्ति यमः—न तत्रेति । अयं भावः—यच्छङ्कसे योगिनो मन्यन्ते नाम, अयोगिनः कथं विजानीयुरिति । सत्यम् । अगतिरेवैषामत्र, न हि प्रकाशकैः सूर्यादिभिरिदं प्रकाश्यम्, येनेतरवस्तुवत्पामराणामपीह दृष्टिः प्रसरेत्, न तत्र परब्रह्मणि परमसुखरूपे सूर्यो भाति, न चन्द्रतारकम्, नेमा विद्युतो भान्ति, अयमग्निः कुतः । घटाद्यर्थेषु तु प्रकाशन्ते नात्रेत्यत्र को विशेषस्तत्राह—तमेव भान्तमनुभाति सर्वम्—यमन्तर्यामिणं प्रकाशमानमनु सर्वमेतत्सूर्यादि प्रकाशते । तस्य भासा सर्वमिदं विभाति—विविक्तं भाति, यस्य च प्रकाशोपजीव्य एषां विविक्तः प्रकाशः, तस्यास्य कथं प्रकाशकमेतत्सर्वं भवेत् । तदेदमितरसजातीयतया प्रकाशते, किन्त्वत्यन्तविसजातीयतया । तदिदं परिनिष्पन्नयोगा एव तदेतदिति साक्षात्कर्तुं शक्ता नान्य इति ॥१५॥

इति कठोपनिषद्भाष्ये द्वितीयाध्यायद्वितीयवल्लीभाष्यम् ॥

---

**ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥१॥**

ब्रह्म दुरवबोधमिति पुनरुपदेशारम्भः । तत्रादौ प्रपञ्चाद्विलक्षणमिदं परं ब्रह्मेत्युच्यते—ऊर्ध्वमूल इति । एष परिदृश्यमानः प्रपञ्चः कोऽप्यश्वत्थः । श्वो न स्थास्यतीति तथा निरूप्यते । एतेन विनाशि-

त्वादनुपादेयत्वं व्यज्यते। प्रसिद्धादश्वत्थादस्मिन्नश्वत्थे विशेषमाह— ऊर्ध्वमूलोऽवाक्शाख इति। सर्वेषामुपरितनो हिरण्यगर्भोऽस्य मूलमित्यूर्ध्वमूलमुच्यते, ततोऽधोधो देवमनुष्यपशुपक्षिस्थावरान्तानां प्रसृतेरवाक्शाखत्वम्। परब्रह्मणो मूलत्वादूर्ध्वमूलत्वं तु न योग्यं वक्तुम्, शाखायामिव मूलेऽपि वृक्षत्वप्राप्तेरनुपादेयत्वप्रसङ्गात्। अयं च सनातनः—चिरन्तनः, अनादित्वात्संसारस्य। तमिममतिक्षुद्रसुखदुःखफलं प्रफुल्लधर्माधर्मकुसुमसञ्चयं परितः समुद्गतशब्दादिविषयप्रवालं प्रचलत्कर्मपलाशपरिपूर्णं दृढमूलं सर्वभूतोपजीव्यमसङ्गशस्त्रेण छेद्यमाह भगवान् 'अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा' इति। परब्रह्म तु इतोऽत्यन्तविलक्षणं, अमृतत्वाच्छुद्धत्वादुपादेयं प्रागुक्तमेवेति ज्ञापयति—तदेवेति। यदेव पूर्वमुक्तं 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण' इति। तस्यैव मन्त्रस्योत्तरो भाग इहानुश्रूयते १

यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति
॥२॥ भयादस्याग्निस्तपति भयात्तपति सूर्यः।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः॥३॥

यदिदमिति। यत्किञ्चेदं जगत्—वाय्वादित्यादिलक्षणम्, स्वस्मादेव निःसृतम्, प्राणः—परं ब्रह्म, एजति—कम्पयति। स्वे स्वे कर्मण्यप्रमादेन व्यापारयति। कथम्? तद्धि महद्भयम्—बिभेत्यस्मादिति भयम्। उद्यतं वज्रमेव तु तत्। अनेनातिशयेन भयाधायकता समर्थ्यते। स्वामिना समुद्यतं वज्रमवलोक्य यथा भीताः स्वे स्वे कर्मणि

प्रवर्तेरन्भृत्यास्तथा परस्य ब्रह्मणः प्रशासनवशगाः स्वे स्वे कर्मणि सर्व एव प्रवर्तन्त इति भावः । अत्रैजतिर्ण्यर्थगर्भः । यद्वा—उद्यताद्वज्रान्महतो भयात्प्राणाद्धेतोरेजतीत्यन्वयः । सुपां सुः । भावस्तु स एव । एतत्—सर्वस्य जगतः प्रशासकं परंब्रह्म, ये विदुस्तेऽमृता भवन्ति । 'यदिदं किञ्च जगत्सर्वं प्राण एजती'ति सामान्यतो निर्दिष्टं विशेषतो निदर्शयति—भयादस्येति । धावति स्वे स्वे कर्मण्यप्रमत्त इत्येतत् । समर्था अप्यग्न्यादयो लोकपाला अस्मात्प्राणात्प्रशासितुर्भीताः स्वकार्याण्यप्रमादेन कुर्वन्तीति भावः ॥२-३॥

इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः ।
ततः सर्वेषु लोकेषु शरीरत्वाय कल्पते ॥४॥

सपदि यतितव्यमस्य विज्ञानायेत्याशयेनाह—इहेति । अयमेव समुचितः समयो विज्ञानाय, यदिह लोके आत्मानात्मविवेचनक्षमं वपुरुपलब्धम्, परमिदं विशरणैकस्वभावम्, अत एव शरीरमिति प्रथते, तद्यावन्न विशीर्येत, तावत्येवावकाशे सर्वस्य प्रशासितृ परमात्मस्वरूपमधिगन्तव्यं नाम । इह शरीरस्य विस्रसः प्राक्—शरीरविशरणतः प्राक्, उक्तं परमात्मस्वरूपं बोद्धुं चेदशकत्—अशक्नुवांश्चेत् । विकरणव्यत्ययश्छान्दसः । स हि ततः सर्गेषु सृजिकर्मसु पशुपक्ष्यादिषु लोकेषु यत्र क्वचित् भूत्वा, शरीरत्वाय कल्पते । जरामरणादियोगायैवेति यावत् ॥४॥

यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा
पितृलोके । यथाऽप्सु परीव ददृशे तथा
गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥५॥

स चायं सर्वस्य हृदि सन्निहितः सर्वान्तरात्मा सोऽयमुन्मील्य योगकलया हृदयकोशमात्मन्येवात्मानमवलोकयतामादर्श इवात्मनो मुखमवभासेत विशदतरम्। अन्यत्र तत्साक्षात्कारे यतमानानामतथाभूतानां तु न तथेत्याशयेनाह—यथाऽऽदर्शे मुखादि स्फुटमवभासते, तथाऽऽत्मनि—स्वतनौ स्वात्मेव परमात्माऽपि स्फुटमवभासते योगोन्मीलितहृदयकोशानामिति यावत्। यथा स्वप्न इति। ये च प्रतिनियतदेशविशेषमेनं मत्वा केवलं पितृलोके वा गन्धर्वलोके वा हिरण्यगर्भलोके वाऽन्यत्र वा यत्र क्वापि साक्षात्कर्तुं यतन्ते, तेषां तु स्वप्न इव, अन्तर्जल इव, अल्पालोक इव च न स्फुटावभासस्तत्र तत्रेत्यर्थः। यद्वा—ननु भवादृशानां देवानामुक्तं परमात्मतत्त्वं सुगमं नाम, मादृशानां तु मानुषाणां कथं तदवगम इत्यत्राह—यथेति। आत्मनि—मनसि। पितृलोके वा गन्धर्वलोके वा, किं बहुना हिरण्यगर्भलोके वा स्याज्जन्म, किं तावता, यावद्रजोधूसरं मनः तावत्तत्र तत्र तेषां तेषामुक्तमात्मस्वरूपमसंस्कृते मनसि नैव प्रकाशते, मनो ह्यादर्शवद्रजसाऽऽवृतं न प्रकाशयितुमर्हति, तच्चेत्सुसंस्कृतं निर्मले तस्मिन्नादर्शे इव निर्मले मुखादि स्फुटमवभासते तत्तत्त्वम्, तन्न कश्चिद्विशेषो मानुषेभ्यो देवानाम्, तद्यत्न आधीयतां मनःसंस्करण इति भावः ॥५॥

इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत्।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥६॥

देहात्मभ्रमवतां नान्तरात्मविज्ञानं सिध्येत्, अतः प्रकृतिविविक्तः प्रथममवगन्तव्य इत्याशयेनाह—इन्द्रियाणामिति। इदमुपलक्षकं देहस्य। यद्यप्ययमन्धः अयमनन्धः अयं बधिरः अयमबधिर इति

प्रतीयते नाम पृथग्भावः, तथापि नायमात्मस्वरूपे ज्ञानैकघने, किन्त्विन्द्रियेष्वेव । यतस्तान्येव भिन्नभिन्नस्वभावानि भवन्ति, रूपव्यञ्जकानि कानिचिदेव शब्दव्यञ्जकानि कानिचिदेवेति । तेषां तेषां तत्तच्छक्तिप्रतिरोधाप्रतिरोधाभ्यां तथा तथा व्यवहारः । तस्मादुक्तं पृथग्भावमुक्तरीत्या पृथगुत्पद्यमानानाम्-पृथक्स्वभावतयोत्पद्यमानानामिन्द्रियाणामेवेति मत्वा न शोचति-न तस्य सांसारिकशोकावकाश इति यावत् । इन्द्रियाणां यावुदयास्तमयौ तौ च मत्वा न शोचति । अयं भावः-यद्यप्ययं शेते अयं जागर्तीति भवति प्रत्ययः, वस्तुतस्तु नायमात्मस्वरूपं साक्षादवलम्बते, यतोऽयमात्मा नित्योदितज्ञानप्रभः, तस्मादिन्द्रियाणामुदयास्तमयविभागतो भवति तथा प्रत्ययः, इन्द्रियाणामुदयो-व्यापृतिः, अस्तमयस्तदभावः, तत्तावेव जाग्रदादिदशोपाधितया मत्वा संसारशोकं न प्राप्नोतीति । एवं देवो मनुष्यः पशुः पक्षीत्यादिविभागं जातो मृत इत्यादिविभागं च शरीर एव नात्मनीति मत्वा न शोचतीति बोध्यम् । एवं प्रकृतिविविक्तमात्मस्वरूपं जानतः क्रमात्परमात्मविज्ञानस्यापि सम्भवाद्भवति संसृतिनिःसरणमिति भावः ॥६॥

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥७॥

अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च । यं
ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥८॥

देवोऽहं मनुष्योऽहमित्याद्यनादिवासनादूषितचेतसां सपदि विविक्तात्मदर्शनं दुर्लभम् । वशीकृतेन्द्रियाणामेव तु तत्सम्भवः । इन्द्रियाणां वशीकरणमपि मनस्यवशीकृते नैकान्ततः सम्भवति, मनसो

वशीकरणमपि नाध्यवसायवशीकरणादृते, तदेवं वशीकार्यत्वे प्रधानं किमिति पर्यालोचनायां सर्वतः परः पुरुषोत्तम एव, स चेत्प्रपदनेन वशीकृतः सर्वं सुखेन वशीकृतं स्यात्। उक्तं च भगवता 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति। तत्परमपुरुषं वशीकार्यं ज्ञात्वा मुच्यत इतीममर्थं प्रागुक्तं समये स्मारयति—इन्द्रियेभ्य इति। परम्—वशीकार्यत्वे श्रेष्ठमित्यर्थः। मन इति। इन्द्रियेभ्योऽर्थानां ततो मनसः परत्वं क्रमाद्बोध्यम्। 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मन' इति प्राक्श्रुतत्वात्। सत्त्वमिह बुद्धिः, स्थानप्रामाण्यात्। 'मनसस्तु परा बुद्धि'रिति हि प्राक् श्रूयते। अव्यक्तं व्याख्यातम्। अलिङ्गः—लिङ्गागम्यः, शब्दैकसमधिगम्य इति यावत्। यं ज्ञात्वा मुच्यते—संसारात्। अमृतत्वं च गच्छति—निरवधिकानन्दस्वरूपतां च प्राप्नोति ॥७-८॥

न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा
पश्यति कश्चनैनम्। हृदा मनीषा मनसाऽ-
भिकॢप्तो य एतद्विदुरमृतास्ते भवन्ति ॥९॥

यं ज्ञात्वा मुच्यते तस्य विज्ञाने साधनं प्रस्तौति—न सन्दृश इति। अस्य परमपुरुषस्य रूपं यदप्राकृतं तन्न सन्दृशे तिष्ठति, प्राकृतदृष्टिपथे न तिष्ठति। अत एवैनं न कश्चिच्चक्षुषा पश्यति—मनुष्यजातीयो देवजातीयो वा चक्षुषाऽऽत्मीयेन द्रष्टुं न शक्नोतीत्येतत्। यद्वा—नास्य रूपं तिष्ठति—नीलपीतादि लोके दृश्यमानं नास्त्यस्येत्येतत्। यद्रूपं सन्दृशे—दर्शनविषयत्वे प्रयोजकं स्यात्। परे तु—नास्य स्वरूपं परिच्छिन्नवस्त्वन्तरवद्दर्शनविषये पथि पुरतस्तिष्ठति, यतो व्यापकोऽयम्। चक्षुषस्तु परिच्छिन्नग्रहण एव पाटवम्। अतो

न चक्षुषा पश्यति कश्चनैनमिति व्याचक्षते। तर्हि केनायं ग्राह्य इत्यत्राह—हृदेति। रूप्यरूपिविभागमनपेक्ष्यानपेक्ष्य च सन्निहितविप्रकृष्टादिविभागं सर्वमर्थजातं हरति—आदत्त इति हृदित्युच्यते चेतः, तेनायं ग्राह्यः। चक्षुरादीनां रूपादिनियतार्थग्राहितयैतद्ग्रहणासामर्थ्येऽप्यचाक्षुषेऽप्यर्थे चेतसः सामर्थ्यात्तेनास्य ग्रहणं भवेदिति यावत्। यद्यपि चेतः सामान्यतः सर्वेषां साधारणम्, न तावताऽस्य ग्रहणं सिध्यति। तत् संस्कृतमेव तत्तथेति ज्ञापयन्नाह—मनीषेति। तृतीयाया लोपश्छान्दसः। आत्मानात्मविवेचनक्षमा तु बुद्धिरिह मनीषेत्युच्यते। ईदृशबुद्धिविशेषसंस्कृतेन चेतसाऽयं ग्राह्य इत्युक्तं भवति। यद्यपि बहवो मनीषिणः शास्त्रत आत्मानात्मतत्त्वं विविच्य जानन्ति नाम, न तावता तेषामस्य साक्षात्कारो भवति, तथापि मननमहिम्ना भवेदेवास्य साक्षात्कार इति ज्ञापयन्नाह—मनसेति। मननसाधनं मन उच्यते। मननं विविच्याधिगतस्य मुहुरनुचिन्तनम्। ध्यानयोग्येन चेतसेत्युक्तं भवति। अभिक्लृप्तः—अभिगृहीतः साक्षात्कृतः, साक्षात्कारयोग्य इति यावत्। य एतद्विदुः—ईदृशं परं ब्रह्म ये विदुस्तेऽमृताः—मुक्ता भवन्ति। परे तु 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्। भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह' इति भारतवचनेन श्रुतिरुपबृंहिता भवति। तत्र च हृदा मनीषेति स्थाने भक्त्या च धृत्या चेति स्मरणात्, हृदेत्यस्य भक्त्येत्यर्थः। मनीषेत्यस्य धृत्येत्यर्थ इत्याहुः॥९॥

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्॥१०॥

कदा चेतसस्तथात्वं तदाह—यदेति । यस्मिन्समये श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि मनसा सहावतिष्ठन्ते–ब्रह्मण्यभिमुखे मनसि तेन सहैवावतिष्ठन्ते, तदनुगुणान्येव भवन्ति, तद्विपरीतवृत्तिकानि न भवन्तीत्येतत् । बुद्धिश्च न विचेष्टेत–बुद्धिरध्यवसायः, स च न विरुद्धं चेष्टेत । तामाहुः परमां गतिम्–गम्यतेऽनयेति गतिः–गमनसाधनम् । मोक्षसाधनत्वात्परमां गतिमाहुः । ताम्–तत्समयसम्पन्नामिन्द्रियधारणाम् ॥१०॥

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥११॥

तामिति । ताम्–उक्तलक्षणाम् । स्थिराम्–अचलामिन्द्रियधारणां योग इति मन्यन्ते तत्स्वरूपविदः । युजेः समाध्यर्थाद्व्युत्पन्नोऽयं योगशब्दः । योगे प्रवृत्तेनाप्रमत्तेन भाव्यमित्याह—अप्रमत्त इति । तदा–योगोपक्रमसमये, अप्रमत्तो भवति–अप्रमत्तो भवेत् । यद्यप्यनुवादसरूपो निर्देशः, तथाप्यौचित्याद्विधावेव तात्पर्यम् । कुतः? योगो हि प्रभवाप्ययौ–उत्पादविनाशवन्तौ । विद्युत इव प्रभवमन्वप्ययोऽपि प्रतिक्षणं सम्भाव्यमान इति यावत् । तस्मात्तत्सिद्धावप्रमत्तेन भाव्यमिति भावः । यद्वा–तदा–उक्तलक्षणयोगकाले अप्रमत्तो भवति–अवहितचित्तो भवति । यतस्तदानीं बुद्धिरपि न विचेष्टेत । अथ योगं स्तौति—योगो हि प्रभवाप्ययौ, साधने साध्योपचारः । इष्टप्रभवस्यानिष्टाप्ययस्य च साधनभूत इति भावः । परे तु–योगदशायामवहितो भवतीत्येतदुपपाद्यते—योगो हीति ।

अयं भावः—अवधानं ह्येकाग्रता, योगदशायां तु साऽस्ति, कथम्? योगो हि प्रभवाप्ययौ—प्रभवः—प्रकृष्टं भवनम्, परे ब्रह्मणि वर्तनम्, अप्ययश्च शब्दादिवृत्तीनाम्, मनसो यदिदमुभयं स एव योगः तदेकाग्रता भवत्येव तदेति भावः ॥११॥

नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥१२॥

ननु प्रलोभनमेतत्, योगदशायां विशदतरं परमात्मतत्त्वं प्रकाशत इति । प्रमाणतस्तत्सिद्धौ हि योगेन वाऽन्येन वा तस्य प्रकाश इत्येतदिष्येत । तच्छ्रद्धापिशाचिकापरिगृहीतानां गोष्ठ्यामेतन्निवेद्यतामित्यासुरभावेन शङ्कायामुत्तरयति—नैवेति । सत्यम् । अयमात्मा न चक्षुषा, न वा केवलेन तर्ककुशलेन मनसा, न वा केवलया वादविचक्षणया वाचा निश्चेतुं शक्यः । अस्ति ब्रह्मेति ज्ञापयतो वैदिकाद्वचनादृते कथं तदुपलभ्येत । यो वैदिको ब्रह्मास्तित्ववादः, तत्र चेदप्रामाण्यशङ्का न कथञ्चन तत्सिद्धिः । तदास्तिकानामेवैतत्प्रकाशो न त्वासुराणाम् । प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः । न शौचं नापि चाचारो न सत्यं तेषु विद्यते । असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् । ते हि नष्टात्मानोऽल्पबुद्धयः ॥१२॥

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः । अ-
स्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥१३॥

अस्तीत्येवोपलब्धव्यः—तद्दैवीं सम्पदमभिजातेन अस्तीत्येव ज्ञातव्यः, श्रुतेर्विश्वासात् । न तु कुतर्कैस्तद्धयाकुलयेत् । तदेवमास्तिक्येन

प्रथममस्तीति सामान्यतो विनिश्चितोऽयं पुरुषस्तत्त्वभावेन चोपलब्धव्यः । उपलब्धव्य इत्यनुषज्यते । तत्त्वम्—याथार्थ्यम्, तद्रूपो भावः । यथावस्थितस्वरूपेण ज्ञातव्य इति यावत् । यद्वा—तत्त्वं ब्रह्म, तथा च कोशः 'तत्त्वं ब्रह्मणि याथार्थ्ये' इति । तस्य भावः—असाधारणो धर्मः । विविच्य ज्ञातव्य इत्येतत् । उभयोः—ज्ञातव्यतया निर्दिष्टयोरस्तित्वतत्त्वभावयोर्मध्ये अस्तीत्येवोपलब्धस्य—विनाऽप्रामाण्याशङ्कामप्रदाय च कुतर्ककृतासद्वादानामवकाशमाशये यो नामास्तीत्येवोपलब्धः ज्ञातवान्, 'भुक्ताः ब्राह्मणा' इतिवत्कर्तरि निर्देशः, तस्य तत्त्वभावः—यथावस्थितं विविक्तं तत्स्वरूपं प्रसीदति—प्रसन्नं भवति, विना कलङ्कलेशं स्फुटं प्रकाशते । आस्तिक्यमहिम्नेति भावः । उपलब्धस्येति कर्मण्येव वा क्तः, तस्य यस्तत्त्वभाव इत्यप्यन्वयः । आशयस्तु स एव १३

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥१४॥

योगेनायं लभ्य इति पूर्वं प्रस्तुतम् । तत्र च विरोधी कामः, तस्मिन्नपुनरङ्कुरं विलीने तत्सिद्धिरित्याशयेनाह—यदेति । येऽस्य हृदि श्रिताः—अन्तःकरणमुपाधिमवलम्ब्य ये नाम शब्दादिविषयाः कामाः प्रतिकलं प्रवर्धमाना रूढमूला अभूवन्, ते सर्वे यदा प्रमुच्यन्ते—स्वयमेव विशीर्यन्ते, अपुनरङ्कुरमपसरन्ति स्वयमेव । अथ स मर्त्योऽत्र ब्रह्म समश्नुते—योगसिद्ध्येहैव साधनानुष्ठानवेलायां परिपूर्णं ब्रह्मानुभवति । अमृतश्च भवति—सत्यपि प्रारब्धमात्रे संसृतिबीजविरहादमृतो भवति, पूर्वाघस्य विनाशादुत्तराघस्य चाश्लेषात् ॥१४॥

**यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।**
**अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥१५॥**

कामस्यापि मूलभूतोऽभिमानस्तस्मिन्नपगते सर्वं सम्पन्नमित्याशयेनाह—यदेति । हृदयस्य ये ग्रन्थयः—अनात्मन्यात्माभिमानस्तन्मूलकाश्चान्येऽस्वे स्वाभिमानप्रभृतयः । एते दुर्मोचा इति ग्रन्थय उच्यन्ते । नैत आत्मनः स्वरूपसम्बद्धा अन्तःकरणोपाधिका इति हृदयस्येत्युक्तिः । ते सर्वे, इह प्रभिद्यन्ते—प्रकर्षेण नश्यन्ति, सवासनं विनश्यन्ति । अथ मर्त्योऽमृतो भवति । एतावदनुशासनम्—नेतोऽन्यदुपदेष्टव्यमवशिष्टमस्ति । यदुपदिष्टादस्मादुपायादपरो ज्ञातव्यो नावशिष्यते कश्चिदुपायः ॥१५॥

**शतं चैका च हृदयस्य नाड्यस्तासां मूर्धा-**
**नमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्व-**
**मेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥१६॥**

मुमुक्षोः परमा गतिर्योग उक्तः । तत्रान्तरङ्गता कामाभिमाननिवृत्त्योरुक्ता । अथ योगिनो मुच्यमानस्य निष्क्रमणप्रकारो निरूप्यते—शतं चैका चेति । हृदयस्य नाड्यः प्राधान्येन शतम्, एका च । एकाधिकशतसङ्ख्याकाः प्रधाननाड्य इति यावत् । तासां मध्ये या मूर्धानमभिनिःसृता तया सुषुम्णाख्यया नाड्याऽन्तकाले ऊर्ध्वमुद्गच्छन्नमृतत्वम्—परमां मुक्तिमधिगच्छति । अन्यास्तु नाड्यो विष्वगुत्क्रमणे भवन्ति—समन्तादुत्क्रमणे भवन्ति । सुरनरतिर्यगादिनानाविधगतये भवन्तीत्येतत् ॥१६॥

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां
हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहे-
न्मुञ्जादिवेषीकां धैर्येण । तं विद्याच्छुक्र-
ममृतं तं विद्याच्छुक्रममृतमिति ॥१७॥

उपदिष्टमर्थमुपसंहरन्नाह—अङ्गुष्ठेति । अङ्गुष्ठमात्रः परमपुरुषोऽन्तर्यामी जनिमतां सर्वेषां नो हृदि सदा सन्निविष्टः । तं स्वात्—स्वोपभोगार्थतया स्वेन कर्मणाऽऽर्जिताच्छरीरात्—मुञ्जादिवेषीकां धैर्येण—अप्रमादेन प्रवृहेत्—पृथक्कुर्यात् । अन्तर्यामितया स्वशरीर एव सन्निहितमपि ततः पृथक्कुर्यात्, विश्लिष्टं कुर्यात् । तथाकरणमत्र बौद्धम् । असंश्लिष्टमेव भावयेदिति यावत् । सत्यपि तत्संसर्गे तत्कृतसुखदुःखादिभोगरहितोऽनश्नन्नन्योऽभिचाकशीतीति भावयेदिति भावः । यद्वा—तमन्तर्यामिणं स्वाच्छरीरात्—तदीयाच्छरीराच्चेतनाद्चेतनाच्च प्रवृहेत्—पृथक्कुर्यात्, पृथक्तया जानीयादित्यर्थः । तं विद्याच्छुक्रं—निखिलहेयप्रत्यनीकम् । अमृतम्—अखिलकल्याणगुणपरिपूर्णं च विद्यात् । आदराद्विरुक्तिः । उपदेशसमाप्तिज्ञापिका वा ॥१७॥

मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा विद्यामेतां
योगविधिं च कृत्स्नम् । ब्रह्मप्राप्तो विरजोऽ-
भूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥१८॥

विद्यास्तुतये प्रक्रान्तामाख्यायिकामुपसंहरति श्रुतिः—मृत्युप्रोक्तामिति । अथ नचिकेता मृत्युप्रोक्तां परमात्मविद्यामेतां योगविधिं च तदुक्तं कृत्स्नमधिगत्य ब्रह्मोपसम्पन्नो विरजा विमृत्युश्चा-

भूत् । 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति चान्यत्र श्रूयते । योऽप्यन्योऽध्यात्मवित्, सोऽप्येवमेव । नाचिकेत इवान्योऽपि चेदात्मतत्त्वं परं जानीयात्, सोऽपि स इव ब्रह्मप्राप्तो विरजा विमृत्युर्भवतीत्यर्थः ॥१८॥

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥१९॥

विद्यादानादानयोर्यो नियमः, प्रमादतस्तदतिलङ्घने शिष्याचार्ययोर्यो दोषः, तत्प्रशमनार्था शान्तिराम्नायते—सहेति । नौ—शिष्याचार्यौ । स हि—विद्यागम्यः परमात्मा अवतु—रक्षतु, तत्त्वार्थप्रकाशनेन । हेति प्रसिद्धौ । स ह नौ भुनक्तु—स हि सर्वस्य स्वामी शेषभूतौ नौ भुनक्तु । विद्याफलभूतपरिपूर्णशेषवृत्तिप्रदानेन भुनक्त्विति भावः । आवां सह वीर्यं विद्यायाः करवावहै । नौ—आवयोः, अधीतं तेजस्व्यस्तु । मा विद्विषावहै—नियमातिलङ्घनकृतो विद्विषो नौ माभूत् । स्मर्यते च नियमातिलङ्घने विद्वेषः 'यश्चाधर्मेण विब्रूते यश्चाधर्मेण पृच्छति । तयोरन्यतरः प्रैति विद्वेषं वाऽधिगच्छति' इति । शान्तिः शान्तिः शान्तिः । सर्वदोषप्रशमनाय त्रिरुक्तिः ॥१९॥

इति कठोपनिषद्भाष्ये द्वितीयाध्यायतृतीयवल्लीभाष्यम् ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण–परमहंसवर्य–योगिराज–श्रीगोपालानन्दस्वामिविरचितकठोपनिषद्भाष्ये द्वितीयाध्यायभाष्यम् ॥

॥ समाप्तं कठोपनिषद्भाष्यम् ॥



# प्रश्नोपनिषत् ।

## गोपालानन्दस्वामिविरचितभाष्योपेता ।

हरिः ओम् । सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौशल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥१॥

एष प्राणो यतो यस्मिन्नेतत्सर्वं प्रतिष्ठितम् ।
अस्तं यान्ति कला यस्मिंस्तं नौमि पुरुषोत्तमम् ॥१॥

विद्यास्तुतये आख्यायिका प्रस्तूयते । नाम्ना सुकेशा भरद्वाजस्यापत्यम्, नाम्ना सत्यकामः शिबेरपत्यम्, सौर्यस्यापत्यं गर्गस्य गोत्रापत्यं कश्चित्, नामतः कौशल्यः अश्वलायनस्यापत्यम्, भृगोर्गोत्रापत्यं विदर्भेरपत्यं कश्चित्, नाम्ना कबन्धी गोत्रतः कात्यायनः, एते

षट् ब्रह्मपराः, ब्रह्मात्र वेदः, वेदप्रवणाः, वेदार्थविचारपरा इति यावत्। ब्रह्मनिष्ठाः—तपोनिष्ठाः । परं ब्रह्मान्वेषमाणाः—जिज्ञासमानाः । एष पिप्पलादो यत्परं ब्रह्म यच्च तत्प्राप्तिसाधनं तत्सर्वं वक्ष्यतीति भगवन्तं पिप्पलादं समित्पाणयः शिष्यभावेन उपसन्नाः—उपजग्मुः ॥१॥

**तान्ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ। यथाकामं प्रश्नान्पृच्छत यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥२॥**

तान् ह स ऋषिरुवाच—यद्यपि तपःप्रभृति युष्माभिराचरितं नाम, यदि ब्रह्मविद्यायां वो वाञ्छा संवत्सरमेकं भूयस्तपसा ब्रह्मचर्येण श्रद्धया संवत्स्यथ—वसतेति यावत्, अथ यथाऽभिलषितं पृच्छत सर्वं वो वक्ष्यामः यदि विज्ञास्यामः । इदं चानुद्धतेः, न तु संशयात्, महतामियमेव शैली । अनेनापरीक्ष्याऽऽदरं ब्रह्मविद्या नोपदेष्टव्येत्येतद्व्यज्यते २

**अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन्कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥३॥**

गुरोर्यथाऽऽदेशमुषित्वा संवत्सरम्, अथ कबन्धी कात्यायनो गुरुं पिप्पलादं पप्रच्छ—भगवन्निमा दृश्यमानाः प्रजा मनुष्यादयः कस्मात्प्रजायन्त इति ॥३॥

**तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते रयिं च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत इति ॥४॥**

एवं पृष्टो भगवान्पिप्पलाद उपसन्नाय तस्मै इदमुवाच । प्रजापतिः—प्रजानां पतिर्भगवान्, हिरण्यगर्भशरीरको वा । सः प्रजाकामः—प्रजाः स्रष्टुकामः सन् । तपोऽतप्यत—स्रष्टव्यवस्तुविषयपर्यालोचनमकरोत् । स परमात्मा तपस्तप्त्वा—इदमित्थं कर्तव्यमिति पर्यालोच्य, मिथुनमेकमुत्पादितवान् रयिं च प्राणं च । प्रजाः स्रष्टुकामः किमिति रयिप्राणात्मकं मिथुनमुत्पादितवानित्यत्राह—एतौ मे बहुधा प्रजाः करिष्यत इति ॥४॥

आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिरेव रयिः ॥५॥

का रयिः ? कश्च प्राणः ? यदेतन्मिथुनमुच्यते, तदेतच्छ्रुतिरेव व्याचष्टे—आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः—अत्र प्राणशब्देन निर्दिष्ट आदित्यः, रयिशब्देन निर्दिष्टश्चन्द्रमा इत्यर्थः । रयिशब्देन चन्द्रमसो निर्देशे हेतुमाह—रयिर्वेति । यन्मूर्तं—स्थूलं पृथिव्यादि, यच्चामूर्तं सूक्ष्मं वाय्वादि, तत्सर्वं रयिः । वाशब्दः प्रसिद्ध्यर्थः । रयिशब्दो धने प्रसिद्धः, धनं च भोग्यम्, पृथिव्यादिकं सर्वं भोग्यवर्गान्तर्गतमेव । तन्मूर्तममूर्तं च रयिरित्येतत्सुप्रसिद्धमिति भावः । ततः किमायातमित्यत्राह—तस्मान्मूर्तिरेव रयिरिति । तस्मात्—मूर्तामूर्तयो रयित्वात् । मूर्तिः—मूर्तिमात्रं[1] रयिरेव । एवकारस्य भिन्नक्रमेणान्वयः । तच्चन्द्रमसो मूर्तविशेषस्य रयित्वेन निर्देशः समुचित इति भावः ॥५॥

---

१ मात्रशब्दः कृत्स्नार्थः ।

अथादित्य उदयन्यत्प्राचीं दिशं प्रविशति तेन प्राच्यान्प्राणान्रश्मिषु सन्निधत्ते। यद्दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति तेन सर्वान्प्राणान्रश्मिषु सन्निधत्ते ॥६॥

यद्यप्येवंसत्यादित्यस्यापि रयित्वमविशिष्टम् । तथाऽपि सर्वप्राणसमुत्तेजनलक्षणविशेषमाश्रित्य प्राणत्वेन निर्देश इत्यभिप्रयन्नाह— अथेति । चन्द्रमसो रयित्वमुपपादितम् । इदानीमादित्यस्य प्राणत्वमुपपाद्यत इति विभागो व्यज्यते अथेत्यनेन । उदयन्नेवायमादित्यः प्राचीं दिशं प्रविशति, स्वप्रभया व्याप्नोतीत्येतत् । तेन प्राच्यान्प्राणान्स्वरश्मिषु सन्निधत्ते—रश्मिभिर्धारयतीत्येतत् । तत्रत्यान्प्राणान्रश्मिभिः पुष्णातीति भावः । यद्दक्षिणां दिशं प्रविशति, यत्प्रतीचीं दिशं, यदुदीचीं दिशं, यच्चोर्ध्वं, यच्चाधः, यदन्तरा दिश आग्नेय्याद्याः, यच्चान्यत्सर्वं प्रकाशयति, तेन तत्र तत्र विद्यमानान्सर्वान्प्राणान्स्वरश्मिषु सन्निधत्ते । पुष्णातीति भावः । परे तु—अत्तृद्यविभागमभिप्रेत्य आदित्यो ह वै प्राणो रयिरेव चन्द्रमा इत्याह । रयिरित्यद्यं लक्ष्यते । ननु कथमत्त्रद्यविभागः, रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च—यन्मूर्तं कठिनं पार्थिवं यच्चान्यदकठिनं जलादि सर्वमेवाद्यं स्थूलमिव सूक्ष्मेण सूक्ष्ममपि ततोऽपि सूक्ष्मेण विनाश्यत एवेत्याक्षिप्य समाधत्ते—तस्मान्मूर्तिरेव रयिरिति । यद्यपि सर्वमेव रयिः, तथापि तस्मात्—अमूर्तात्, अमूर्तमपेक्ष्य, मूर्तिरेव रयिर्भवेत् । तत्र चन्द्रमसोऽद्यवर्गान्तर्गतसकलौषधिरसपोषकत्वेन रयित्वं सुव्यक्तम् ।

आदित्यस्य कथमत्तृत्वमित्याशङ्कायां 'प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विध'मिति प्राणस्यादनोपकारकत्वस्मरणात्, लोकतश्च तदवगमात्, 'स होवाच किं मेऽन्नं भविष्यतीति यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्य इति होचु'रिति श्रुतेश्चात्तृत्वं प्राणेष्वाकलय्य तादृशप्राणपोषकत्वेनादित्यस्यात्तृत्वमित्यभिप्रयन्नाह—अथेतीति व्याचक्षते ॥६॥

स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेतदृचाभ्युक्तम् ॥७॥

अथादित्यं स्तौति—स एष इति । यस्तु वैश्वानरो जाठराग्निः सोऽप्यादित्यानुग्राह्यप्राणानुग्राह्य इति स एष वैश्वानर इत्यादित्यः स्तूयते । विश्वरूपः—विश्वमसौ स्वरश्मिभिर्यस्मात्प्रकाशयति तस्माद्विश्वमसावेवेति स्तूयते । यस्मादसौ प्राणान् रश्मिषु सन्निधत्ते तस्मादेष एव प्राणः । एषोऽग्निः, श्रूयते च 'उद्यन्तं वाऽऽदित्यमग्निरनु समारोहति' इति । यद्वा—विश्वेषां नराणामयं वैश्वानरः, अधिष्ठातृतया सर्वस्य चक्षुषि सन्निधानात्तथोच्यते । विश्वान्नरानर्थप्रकाशनेन नयतीति वा वैश्वानरः । विश्वप्रकाशसाधनत्वाद्विश्वरूपः । शुक्लनीलादिबहुरूपत्वाद्वा विश्वरूपः । अग्रनयनादग्निः । उदेत्यन्वहमेवंभूतोऽयम् । एतत्—आदित्यस्वरूपम्, ऋचा वक्ष्यमाणया, अभ्युक्तम्—निगदितम् ॥७॥

विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् । सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥८॥

विश्वरूपं—व्याख्यातमेतत् । हरिणम्—हरयो रश्मयो यस्य तम्, छान्दसः प्रयोगः । जातवेदसम्—जातं वेदः प्रज्ञानं यस्मात्तम्, श्रूयतेऽन्यत्र जातवेदःशब्दः सूर्ये 'उदुत्यं जातवेदसं देवं वहन्ति केतव' इति । परायणम्—करणे ल्युट्, उत्कृष्टं गतेर्द्वारमिति यावत् । श्रूयते च विदुषामादित्यं गतानां ब्रह्मप्राप्त्याऽपुनरावृत्तिः । एकं ज्योतिः—अद्वितीयं ज्योतिः, इतरेषां लौकिकानां ज्योतिषां इतोऽपकृष्टत्वात् । तपन्तम्—तापक्रियाकर्तारम् । अभिगच्छन्त्यात्मविद इति शेषः । सहस्ररश्मिश्चायं शतधा वर्तमानः, सर्वेषां चक्षुष्यधिष्ठातृतया सन्निधानात् । सायमग्नौ सन्निधानाच्च । तथा च श्रूयते—'आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्' 'अग्निं वा आदित्यः सायं प्रविशति' इति । प्रजानां प्राणः—व्याख्यातमेतत् । एवम्भूतः सूर्यः सर्वान्प्रकाशयन्नन्वहमुदेति । परे तु—प्राणशब्दनिर्दिष्टो योऽयमादित्यः सोऽपि परमात्मात्मक इत्याह—स एष इति । योऽसौ विश्वाम्भरानन्तरात्मा सन्नयति । अत एव सर्वशरीरः स एष प्राणोऽग्निरुदयते—प्राणत्वेन निर्दिष्ट आदित्यो भूत्वाऽन्वहमुदेति, भगवान्हि सर्वान्तरः सर्वशरीरः, तदादित्यात्मना स एव प्रकाशत इति सर्वस्य स्रष्टा परमात्मा स्तुतो भवति । इहाग्निशब्देनादित्यस्य निर्देशः सूर्याग्न्योरेकत्वभावनया । श्रूयते च—'उद्यन्तं वाऽऽदित्यमग्निरनु समारोहती'ति । उत्तरमन्त्रे अग्निशब्दस्थाने सूर्यशब्दः । श्रूयते च 'प्राणः प्रजानामुदयत्येष सूर्य' इति । विश्वरूपमिति । सर्वान्तर्यामितया सर्वशरीरम् । हरिणम्—ज्ञानप्रभारूपरश्मिबहुलम्, सर्वज्ञमित्येतत् । जातवेदसम्—जातं वेदः प्रज्ञानं यस्मात्तम्, सर्वप्रज्ञानकारणम् । अत एव ज्योतिरद्वितीयम् ।

ज्योतिषां ज्योतिः। तपन्तम्—सर्वतः प्रकाशमानं परमात्मानम्। शतधा—सर्वप्रकारेण, अनुवर्तमानः सन्नुदयति। कः? एष सूर्यः प्रजानां प्राणः सहस्ररश्मिरिति व्याचक्षते ॥८॥

संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च। तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते त एव पुनरावर्तन्ते तस्मादेत ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते। एष ह वै रयिर्यः पितृयाणः ॥९॥

प्रजाः सिसृक्षुः प्रजापतिरादौ चन्द्रादित्यौ रयिप्राणावसृजदित्युक्तम्। ततः किम्?, ताभ्यां सृष्टाभ्यां प्रजाः कथमभवन्? तत्रोच्यते—संवत्सर इत्यादिना। अयमाशयः[1]—चन्द्रादित्याभ्यामहोरात्रशुक्लकृष्णदक्षिणोत्तरायणादिकालविभागः, ततश्च व्रीह्याद्यन्ननिष्पत्तिः, ततो रेतः, ततश्च प्रजाः, यश्चान्नमत्ति प्राणी तस्य प्राणानादित्यो रश्मिषु सन्निधत्ते, यच्चाद्यमन्नं व्रीहियवादि तच्चौषधीशः पुष्णाति रश्मिभिः, तद्युक्तमुक्तं प्रजाकामः प्रजापतिरादौ चन्द्रादित्यावसृजदितीति। संवत्सरो वै प्रजापतिः—यः प्रजाकामो हिरण्यगर्भशरीरः परमात्मा चन्द्रादित्यावसृजत्, स एवायनद्वयसमुदायात्मकसंवत्सरात्मकोऽप्यभूत्। प्रजासृष्टिद्वारभूते संवत्सरादौ प्रजापतित्वमुपचर्यते। चन्द्रादि-

---

१ सुखबोधायाह—अयमाशय इति। आशयश्चायं पूर्वापरमन्त्राणां विमृश्य वाक्यैकवाक्यतां प्रकाश्यते।

त्ययोः स्रष्टरि हिरण्यगर्भेऽपि तथैवेति केचिदाहुः । तस्य संवत्सरस्य द्वाववयवौ दक्षिणायनमुत्तरायणं चेति । तत्र दक्षिणायनं रयित्वेन कल्पयन्नाह—तद्ये ह वै इति । तत्—तत्र, दक्षिणायनोत्तरायणयोर्मध्य इत्यर्थः । दक्षिणं प्रतिपद्यन्त इत्युत्तरेण सम्बन्धः । इष्टम्—यागादि, पूर्तम्—वापीकूपतटाकादि; एवम्प्रकारं यत्कृतमनित्यं कर्म, तद्य उपासते—श्रद्धयाऽनुतिष्ठन्ति, ते चन्द्रमःसम्बन्धिनं लोकं प्राप्नुवन्ति । प्राप्यान्नमयं लोकं भुक्त्वा च भोग्यं पुनरावर्तन्ते क्षीणे कृते । कृतोपासका ह्येते, न नित्यात्मस्वरूपोपासकाः । त एते प्रजाकामाः । प्रजाशब्दः कामानामुपलक्षकः । दक्षिणायनं प्रतिपद्यन्ते । कर्मिणः कामकामा दक्षिणेन पथा चन्द्रं प्राप्य कृते प्रक्षीणे पुनरावर्तन्ते, तस्मात् एष ह वै रयिर्यः पितृयाणः—पितृयाणमिति प्रथितं दक्षिणायनं रयित्वेन रूपितो यश्चन्द्रस्तत्प्रापकत्वात्पुनरावृत्तेरपकर्षाच्च रयित्वेनोच्यत इति भावः । तत्र चन्द्रप्रापकत्वमग्रे निरूपयिष्यमाणं रात्रिकृष्णपक्षयो रयित्वे लिङ्गं बोध्यम् । स्मर्यते च पितृयाणकोटावनयोरपि गणना 'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तत' इति ॥९॥

अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजयन्ते । एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधस्तदेष श्लोकः ॥१०॥

उत्तरायणस्य प्राणत्वे हेतुं व्यञ्जयन्नाह—'एष ह वै रयिर्यः पितृयाण' इति । दक्षिणायनस्य रयित्वनिर्देशेनैवोत्तरायणस्य प्राणत्वं निर्दिष्टप्रायमेव । श्रूयते चोत्तरत्र शुक्लकृष्णयो रयिप्राणविभागस्तथाऽहोरात्रयोरपि । अथेत्यनेन पूर्वस्मात्पथोऽयमन्यः पन्था इति व्यज्यते । कतिचन पुनस्तपसा—कायक्लेशादिरूपेण, ब्रह्मचर्येण—स्त्रीसङ्गराहित्यरूपेण, श्रद्धया—आस्तिक्यबुद्धिरूपया, विद्यया—आत्मविषयिण्या आत्मानमन्विष्य—श्रवणादिभिर्विज्ञाय प्रारब्धदेहावसानसमये उत्तरेणायनेन देवयानरूपेण, आदित्यम्—देवयानमार्गं प्राप्नुवन्ति । एतद्वै प्राणानामायतनम्, एतदिति सामान्यतो नपुंसकनिर्देशः । यथाऽयमादित्यः प्राणानामायतनं तथोक्तं प्राक् 'प्राणान्रश्मिषु सन्निधत्त' इति । अमृतम्—अविनाशि, फलापादकत्वादमृतमिति साध्यगतो धर्म उपचर्यते । चन्द्रवद्वृद्धिह्रासशून्यत्वाद्वा तथोपचारः । अभयम्—देवतान्तर्गतमादित्यं गतानां ब्रह्मप्राप्त्या संसारभयं हि निवर्तते । परायणम्—उत्कृष्टं गतिसाधनं यतो न च्युतिः । तदेवाह—एतस्मान्न पुनरावर्तन्त इति । देवयानमार्गक्रमेणादित्यं गतो हि तत ऊर्ध्वं गत्वा ब्रह्म प्राप्नोति, तन्न पुनरावर्तते । तथा च श्रूयते—'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती'ति । इत्येष निरोधः—इतिशब्दो हेतुवाची । यस्मादेतस्मान्न पुनरावर्तन्ते तस्मादेष आदित्यो निरोधः—अधःप्रच्युतिप्रतिबन्धकः । तदेष श्लोकः—इममादित्यमधिकृत्यैष श्लोकः—वक्ष्यमाणः श्लोकः ॥१०॥

१ ननूत्तरायणस्य प्राणत्वं नैव निर्दिष्टम्, तत्कथमुच्यते उत्तरायणस्य प्राणत्वे हेतुं व्यञ्जयन्नितीत्यत आह—एष इति ।

**पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् । अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति ॥११॥**

पञ्चपादं पितरमिति । मेषादिराशिषु प्रविशन्नादित्यो मासभेदापादनद्वारा संवत्सरव्यवहारे ऋतुव्यवहारे च हेतुर्भवति । तदिदमभिप्रेत्य रूप्यते—पञ्चपादमिति । पञ्च ऋतवः पादा यस्य । हेमन्तशिशिरावेकीकृत्येत्थमुक्तिः । द्वादशाकृतिम्—मेषादिद्वादशमासाकृतिकम्, पितरम्—प्राणिमात्रोत्पादनहेतुत्वात् । दिवः परे अर्धे—अन्तरिक्षस्योपरितनभागे विद्यमानम् । पुरीषिणम्—पुरीषमिति जलमुच्यते, वृष्ट्याधायकतया पुरीषिणमित्युक्तिः । आहुः—अन्ये पुनरुत्कृष्टा एवमाहुः । सप्तचक्रे—चक्राणि रथगतिसाधनानि, प्रकृते अश्वा विवक्षिताः, सप्ताश्वेऽस्मिन्नादित्ये । षडरे—षड्ऋतुभेदनिर्वाहके । प्राणिजातम्, विचक्षणम्—यथा तथा, सम्यगिति यावत् । अर्पितमाहुः । सूर्येणैवास्य प्राणिजातस्य सत्तेति भावः ॥११॥

**मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणस्तस्मादेत ऋषयः शुक्ल इष्टिं कुर्वन्तीतर इतरस्मिन् ॥१२॥**

मासो वै प्रजापतिः—यः प्रजापतिः संवत्सरात्मा स एव तदवयवभूतमासात्मकोऽपि भवतीत्यर्थः । तस्य—मासात्मकस्य प्रजापतेः द्वाववयवौ कृष्णपक्षः शुक्लपक्ष इति, तयोः कृष्णो रयिः शुक्लः प्राणः,

तयोस्तथात्वेन रूपणे लिङ्गं तूक्तमेव । तस्मात्—रयिप्राणविभागकृताद्देव विशेषात् ये ऋषयः—ज्ञानिनः एते शुक्ल एवेष्टिं कुर्वन्ति । शुक्लपक्षो हि देवयानकोटौ गणितः । इतरे—अनात्मविदः कामपराः पुनः इतरस्मिन् कृष्णपक्षे इष्टिं कुर्वन्ति ॥१२॥

अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यते ॥१३॥

मासावयवदिनात्मकोऽपि स एव प्रजापतिर्भवतीत्याह—अहोरात्र इति । तस्यावयवभूतमहः प्राणः, रात्रिरेव रयिः, तयोः प्रासङ्गिकं विशेषमाह—प्राणं वेति । ये दिवा रत्या संयुज्यन्ते एते प्राणं प्रस्कन्दन्ति—प्राणमेवात्मनो विकिरन्ति, क्षीणप्राणबला भवन्तीत्येतत् । यद्रात्रौ रत्या संयुज्यन्ते, तद्ब्रह्मचर्यमेव । न ततस्तादृशी हानिरिति यावत् ॥१३॥

अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥१४॥

तदेवं कालविभागे प्रजापतिरन्नात्मकोऽपि भवतीत्याह—अन्नं वा इति । ततो ह वै तद्रेतः—अद्यमानादन्नाद्रेतः, ततः प्रजाः । संवत्सरो वै प्रजापतिः, मासो वै प्रजापतिः, अन्नं वै प्रजापतिः, इति तत्र तत्र सामानाधिकरण्यनिर्देशेन प्रजापतेरेव प्रजासु हेतुत्वं, संवत्सरादीनां तु तथाभूते तस्मिन्विशेषणत्वमात्रमिति व्यज्यते । इत्थं च तत्तद्विशिष्टस्य परमात्मनः सर्वत्र हेतुत्वं ज्ञापितं भवति ॥१४॥

तद्ये ह वै तत्प्रजापतिव्रतं चरन्ति ते मिथु-
नमुत्पादयन्ते। तेषामेवैष ब्रह्मलोको येषां
तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् ॥१५॥
तेषामसौ विरजो ब्रह्मलोको न येषु
जिह्ममनृतं न माया चेति ॥१६॥

तदेवं प्रजासृष्टिप्रकारो निरूपितः। प्रसङ्गाद्गृहाश्रमनिष्ठानां दृष्टादृष्टफलविशेषौ निरूप्येते—तद्ये ह वा इति। ह वा इति प्रसिद्ध्यर्थके। ये एतत्प्रजापतिव्रतं चरन्ति—ऋतौ भार्यागमनलक्षणं प्रजोत्पादनव्रतं चरन्ति। व्रतशब्देन न पश्वादिवद्रतिकामाः, अपि तु धर्मप्रजैकपरा इति व्यज्यते। ते मिथुनमुत्पादयन्ते—पुत्रीपुत्रादिलक्षणसन्तानरूपार्वाचीनफलसिद्धिर्भवतीति यावत्। तेषामेवैष ब्रह्मलोकः—वक्ष्यमाणाद्विरजसो लोकादर्वाचीनत्वमभिप्रेत्यैष इति निर्देशः। यस्त्वर्वाचीनः कार्यब्रह्मलोको हैरण्यगर्भान्तः स च तेषामेव गृहमेधिनाम्, अग्निहोत्रादिष्वधिकारात्। केवलकर्मभिस्तेषां तत्सिद्धेरिति भावः। एवकारादात्मैककामा व्यवच्छिद्यन्ते। यस्तु विरजो ब्रह्मलोकः स तु ज्ञानिनामात्मैककामानामेवेत्याह—येषां तप इति। तपोऽत्र विज्ञानम्, येषामात्मविद्या, अष्टविधमैथुनाभावलक्षणं ब्रह्मचर्यं सत्यं च येषु प्रतिष्ठितम्—सुस्थिरम्। तेषामसौ विरजो ब्रह्मलोकः—अप्राकृतः परब्रह्मलोकः। सत्यशब्देन लिलक्षितं स्फुटयति—न येषु जिह्ममनृतं न माया चेति। जिह्मम्—कौटिल्यं करणत्रयेण वैरूप्यम्। अनृतम्—मिथ्यावचनम्। माया—मिथ्याचारता ॥१५-१६॥

अत्रेदं बोध्यम्—

अत्राचार्याः प्रसिद्धार्थं परित्यज्य प्रयत्नतः ।
व्याचक्षते ततः कश्चिद्विशेषो लभ्यतामपि ॥
अबाधिते तु रूढार्थे स्वारस्येऽप्यक्षते सति ।
कलङ्कयति वाक्यं हि यौगिकार्थपरिग्रहः ॥
आदित्यो हेति मन्त्रस्थादित्यशब्दस्य योगतः ।
जीवार्थकत्वाश्रयणे क्लेश एव विशिष्यते ॥
श्रूयते चाव्यवहिते आदित्य उदयन्निति ।
अनेनादित्यशब्दस्य युक्ता रूढार्थतैव तु ॥
उदयश्चेन्निर्गमनं सुषुप्तिस्थानतो बहिः ।
क्लिष्टार्थकल्पनाधिक्यात् हन्त व्याख्या कलङ्किता ॥
प्राचीं दिशं प्रविशतीत्याद्यप्यस्वरसं भवेत् ।
शरीरे दिग्विभागश्चेदस्वारस्यं विशिष्यते ॥
प्रसिद्धादित्यशब्दार्थस्वीकारे न्यूनताऽत्र का ।
क्लिष्टोऽप्यर्थः परिग्राह्यो भवेद्यदपनुत्तये ॥
ब्रह्मकारणकत्वस्य जीवेऽपि ज्ञापनाय चेत् ।
किं तेन प्रकृतस्याद्य प्रश्नः को वा विभाव्यताम् ॥
इमाः प्रजाः कुत इति प्रश्नस्योत्तरमुच्यते ।
सुसङ्गतमिदं तावत्प्रसिद्धार्थपरिग्रहात् ॥
विवक्षितविशेषस्य नात्रापेक्षा विशेषतः ।
अथापि पूर्वैराचार्यैर्व्याख्यातमिति गृह्यताम् ॥

इति प्रश्नोपनिषद्भाष्ये प्रथमप्रश्नभाष्यम् ।

---

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ। भगवन्कत्येव देवाः प्रजां विधारयन्ते कतर एतत्प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति ॥१॥

अथेत्यवसरसङ्गतिर्व्यज्यते। उत्पत्तिहेतावध्वृते सपदि स्थितिहेतुः क इति जिज्ञासा भवेत्। प्रश्नोऽनूद्यते—भगवन्निति। प्रजास्तु प्रजापतेरुत्पन्ना नाम। इमां प्रजां विधारयन्ते कति। प्रजाशब्दितमिदं शरीरं कैर्विधार्यत इत्यर्थः। एतद्धारणलक्षणं कार्यं के प्रकाशयन्ते—ख्यापयन्ति। कैः क्रियमाणं धारणलक्षणं कार्यं विख्यायत इति यावत्। यदि बहुभिर्विधार्यते को वरिष्ठस्तेषाम्। इदमत्र बोध्यम्—एतत्प्रश्नप्रतिवचनेन मुख्यप्राणे धारकत्वं ग्राहयित्वा तृतीयप्रश्नप्रतिवचने ततोऽतिरिक्तं परमात्मानं सर्वस्य धारकं ज्ञापयिष्यति। देहेन्द्रियप्राणादिवैलक्षण्यमात्मनि सुखेन ग्राहयितुमित्थमारम्भः॥१॥

तस्मै स होवाचाकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च। ते प्रकाश्याभिवदन्ति वयमेतद्बाणमवष्टभ्य विधारयामः ॥२॥

तस्मै स होवाच—स पिप्पलादः, तस्मै—वैदर्भये उवाच। आकाशादीनां देवविशेषाधिष्ठातृत्वाद्देव इत्युक्तिः। दीव्यति गच्छतीति देवः गमनशीलस्तादृशो वायुरिति व्याख्यानं तु न रमणीयम्। प्रश्ने कत्येव देवा इति बहुवचनान्तेन निर्देशात् प्रतिवचनेऽपि देव इत्यस्य

सर्वत्रान्वय एवोचितः। आकाशादीनि शरीरारम्भकाणि भूतानि करणानि च वागादीनि सम्भूय धारयन्ति। अवकाशदानादिभिरंशतस्ते धारयन्ति नाम। एवम्भूतास्ते—अवकाशप्रदानादिरूपं स्वकार्यं धारणलेशं प्रकाश्य, असहायोऽहमेक एवेदं शरीरमवष्टभ्य विशेषतो धारयामीति सर्वे प्रत्येकमभिवदन्ति स्पर्धमाना इति भावः। गतिशीलत्वाच्छरीरमिह बाणशब्देनोच्यते ॥२॥

**तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति ॥३॥**

तानेवमभिमन्यमानान्वरिष्ठः प्राणः—मुख्यप्राण उवाच। मा मोहमापद्यथ—वयमेव स्वातन्त्र्येण विधारका इति माभूद्वो मोहः। अहमेक एवात्मानं प्राणापानादिरूपेण पञ्चधा विभज्यैतच्छरीरं विधारयामि। अवकाशदानादि यद्वः कार्यमुपलभ्यते तदसति मत्सान्निध्ये न घटेतेति भावः ॥३॥

**तेऽश्रद्दधाना बभूवुः। सोऽभिमानादूर्ध्वमुत्क्रमत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते। तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रातिष्ठन्ते। तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते। तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्त एवं वाङ्मनश्चक्षुः श्रोत्रं च ते प्रीताः प्राणं स्तुवन्ति ॥४॥**

इदमुपश्रुत्य ते आकाशादयोऽश्रद्दधाना बभूवुः। अश्रद्धामेषामवलोक्य सोऽभिमानादूर्ध्वमुत्क्रामत इव। ईषदर्थ इवशब्दः। किञ्चिदुच्चचालेत्यर्थः। तस्मिन् प्राणे उत्क्रामति सर्वे एव वागादय उत्क्रामन्ते, तस्मिंश्च प्रतिष्ठमाने सर्वे एव प्रतिष्ठन्ति, यथा मधुकरराजानमुत्क्रामन्तं सर्वा एव मक्षिका उत्क्रामन्ते। तस्मिंश्च प्रतिष्ठमाने सर्वा एव मक्षिकाः प्रतिष्ठन्ति। अथ वाङ्मनःप्रभृतयस्ते प्रीताः प्राणं वक्ष्यमाणप्रकारेण स्तुवन्ति स्म ॥४॥

एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वा-
युरेष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥५॥

एषोऽग्निस्तपति—योऽग्निस्तपत्येष मुख्यप्राण एव सः। यश्च प्रकाशते सूर्यः सोऽप्येष एव। यो वर्षति पर्जन्यः सोऽप्येष एव। यस्त्रैलोक्याधिप इन्द्रः सोऽप्येष एव। यो मेघादीन्विधत्ते वायुः सोऽप्येष एव। या धत्ते जङ्गमाजङ्गममिदं पृथिवी साऽप्येष एव। यः पुष्णात्योषधीः स रयिर्देवश्चन्द्रमाः सोऽप्येष एव। यच्च सूक्ष्मं यच्च स्थूलं सर्वमेवैषः। यच्चामृतम्—अजरामरत्वापादकं तदपि स एव। सर्वेषामेतदायत्तस्थितिकत्वादेष एवाग्निरेष एव सूर्य इति सामानाधिकरण्येन स्तूयते ॥५॥

अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्।
ऋचो यजूꣳषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥६॥

सर्वमेव स्थावरं जङ्गमं वा अरा इव रथनाभौ प्राणे प्रतिष्ठितम्।

या च त्रयी, यच्च त्रयीसाध्यं कर्म यज्ञादि, यच्च तद्रक्षकं क्षत्रम्, यच्च तत्प्रवर्तकं ब्रह्म, सर्वमेषः ॥६॥

**प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे। तुभ्यं प्राण प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि ॥७॥**

अथ प्राणः साक्षादभिमुखीकृत्य स्तूयते।–हे प्राण त्वमेव प्रजापतिः–चतुर्मुखः गर्भे चरसि। यद्वा–त्वमेव प्रजानां पोषको भूत्वा गर्भे चरसि। त्वमेव प्रतिजायसे–पुत्रादिरूपेण त्वमेव जायसे। इमाः प्रजाः–मनुष्यादयः तुभ्यमन्वहमन्नादिकं बलिमुपहरन्ति ॥७॥

**देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा।**
**ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि ॥८॥**

वहति हविर्देवेभ्य इति वह्निरुच्यते। हे प्राण त्वमसि देवेभ्यो वह्नितमः हविषां वाहकतमः। या च पितॄणां प्रथमा स्वधा–मुख्या स्वधा अत्यन्तप्रीतिसाधनभूता साऽपि त्वमेवेति यावत्। अथर्वाङ्गिरसामृषीणां यत्सत्यम्–यत्सत्यं चरितं तत्त्वमसि। ऋषिशब्दस्य रूढ्यर्थस्वीकार एव तु समुचितः, पूर्वार्धे देवानां पितॄणां च ग्रहणात् ॥८॥

**इन्द्रस्त्वं प्राण! तेजसा रुद्रोऽसि परिरक्षिता। त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥९॥**

इन्द्रस्त्वम्–परमेश्वरस्त्वमसि। स्तुतिप्रकरणमेतत्। हे प्राण तेजसा त्वमसि रुद्रः। न केवलं रुद्रः, परिरक्षिता च–परितो रक्षिता, सर्वान्सर्वतो रक्षसि। त्वमेवाहवप्रवहादिरूपो भूत्वाऽऽकाशे चरसि।

ज्योतिषां पतिः सूर्यश्च त्वमेवासि । नात्र[1] पौनरुक्त्यम्, आभिमुख्येन हि स्तुतिः प्रवर्तते ॥९॥

यदा त्वमभिवर्षस्यथेमाः प्राण ! ते प्रजाः आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥१०॥

हे प्राण पर्जन्यात्मना मेघात्मना वा यदा त्वमभिवर्षसि तदा ते इमाः प्रजाः समृद्धमन्नं नः कामाय भविष्यतीत्यानन्दप्रचुरा भवन्ति १०

व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः । वयमाद्यस्य दातारः पिता त्वं मातरिश्व नः ॥११॥

हे प्राण यस्तु व्रात्यः, यस्त्वेकोऽद्वितीयः ऋषिः—अतीन्द्रियार्थसाक्षात्कारसमर्थः, स च त्वमेव । उच्चनीचमिदं प्राणिजातं त्वमेवेति यावत् । यद्वा—व्रात्यस्त्वम्—संस्कारहीनस्त्वम्, संस्कारनिरपेक्षः स्वतः शुद्ध इति भावः । यद्वा—व्रात्यः—व्रतनिष्ठः, एकर्षिः—एकर्षिनामा यः, स त्वमेव । विश्वस्य—प्रपञ्चस्य, अत्ता—संहारकस्त्वमेव । यद्वा—विश्वस्य—सर्वस्य, अत्ता—भक्षकोऽग्निस्त्वमेव । सतां पतिस्त्वम् । वयमाद्यस्य दातारः—आद्यस्य अदनीयस्य, तव यद्योग्यं तस्य, दातारः—परिवेषयितारः, किङ्करा वयमिति भावः । हे मातरिश्वन्, नस्त्वं पिताऽसि । मातरिश्वेत्यकारान्तश्रवणं छान्दसम् ॥११॥

या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि । या च मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥१२॥

एवमभिष्टूय प्रार्थयन्ते प्राणं—मोत्क्रमीरिति ।

---

१ परोक्षतः स्तुतिप्रकरणे उक्तस्य इहोक्तिर्न पुनरुक्तय इति भावः ।

हे प्राण या ते तनूः वाचि—वागिन्द्रिये प्रतिष्ठिता शक्तिरूपेण । या श्रोत्रे या च चक्षुषि । प्राणशक्त्याहितसत्ताकाः खलु वागादयः स्वस्वकार्यं कुर्वन्ति । तद्वागादिषु प्राणस्य शक्तिरूपा तनुः प्रतिष्ठिता नाम । या च मनसि सन्तता—मननप्रयोजकीभूताऽनुवर्तमानाऽस्ति । ताम्—वागादिषु मनःपर्यन्तेषु प्रतिष्ठितां तनुं शिवां कुरु—तत्र तत्र मङ्गलां कुरु । तत्र तत्र तत्सान्निध्यं सर्वदानुकूलं स्यात् । मोत्क्रमीः—अनुत्क्रमणेनास्मान्रक्षेति भावः ॥१२॥

प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् । मा-
तेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञां च विधेहि नः ॥१३॥

इदं सर्वम्—अस्मिंल्लोके विद्यमानं यत्किञ्च, त्रिदिवे—स्वर्गे प्रतिष्ठितं यत्किञ्च, तत्सर्वं प्राणस्य ते वशे वर्तते । तत् त्वमस्मान् माता पुत्रानिव रक्षस्व । श्रीः प्रज्ञां च नो विधेहि । स्वकार्ये शक्तिं नः प्रयच्छेति यावत् । एतेन संवादेन मुख्यप्राणस्य वरिष्ठता शरीरधारणसमर्थता च ज्ञापिता भवति ॥१३॥

इति प्रश्नोपनिषद्भाष्ये द्वितीयप्रश्नभाष्यम् ।

---

अथ हैनं कौशल्यश्चाश्वलायनः पप्रच्छ । भगव-
न्कुत एष प्राणो जायते कथमायात्यस्मिन् शरीरे ।
आत्मानं वा प्रविभज्य कथं प्रातिष्ठते । केनोत्क्र-
मते कथं बाह्यमभिधत्ते कथमध्यात्ममिति ॥१॥

उपश्रुत्य प्राणस्य शरीरधारकतां तत्र विशेषं जिज्ञासुरपरः पप्रच्छ । ननु स्यान्नाम प्राणस्यैष महिमा, योऽयमाकाशादिभ्यो विशेषः शरीरधारणलक्षणः, तथापि सापेक्ष एवायं महिमा, न ह्ययं नित्यसिद्धः, सञ्जातरूपो ह्ययम्, तत् सकारणकतया कारणमन्यदितोऽप्यतिशयितमस्तीति विज्ञायते, तत्किम् । स किं स्वत एवाऽऽयाति उत परतः । प्रविष्टोऽयं विभज्यात्मानं केन प्रकारेण प्रतितिष्ठति । केन प्रकारेणास्माच्छरीरादुत्क्रमते । बाह्यमध्यात्ममिति च क्रियाविशेषणम् । बाह्यं धारणमध्यात्मं धारणं च केन रूपेणेत्यर्थः ॥१॥

तस्मै सहोवाच अतिप्रश्नान्पृच्छसि
ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥२॥

अतिक्रम्य वर्तमानाः प्रश्ना अतिप्रश्नाः । कबन्धिवैदर्भिप्रश्नावतिक्रम्य वर्तमानतया अतिप्रश्ना इत्युक्तिः । तवेमे प्रश्नाः प्राक्कृतात्प्रश्नतो रहस्यार्थगोचरा इति भावः । अयं हि प्रश्नः परमकारणं परमात्मानमेवावलम्बते । यस्तु प्रथमः प्रश्नः स तावदादित्यादिसृष्टिनिरूपणेनोपशाम्यतीति नैकान्ततः साक्षात्परमात्मप्रतिपत्तावुपयुज्यते । विजानतां स्यान्नाम हिरण्यगर्भशरीरकतया स्रष्टरि तस्मिंस्तद्वचनान्वयः । प्रश्नं द्वितीयः सोऽपि प्राणधार्यत्वकथनेन विश्राम्यति तथैवेति युक्तमुक्तमतिप्रश्नान्पृच्छसीति । उत्साहेन स्तौति—ब्रह्मिष्ठोऽसीति २

आत्मन एवैष प्राणो जायते । यथैषा पुरुषे छायैतस्मिन्नेतदाततं मनोकृतेनायात्यस्मिञ्छरीरे ॥३॥

कुत एष प्राण इत्यस्योत्तरमाह—आत्मन इति । आत्मनः—परमात्मनः, एष—उक्तमहिमशाली, प्राणो जायते । श्रूयते चान्यत्रापि 'एतस्माज्जायते प्राण' इति । कथमायात्यस्मिन्नित्यस्योत्तरमाह—यथैषेति । मनोकृतेनेति छान्दसः प्रयोगः । मनःकृतमिति कर्मोच्यते । मनसा हि रागद्वेषरूषितेन प्रवर्तते तत्र तत्र कर्मणि सङ्कल्प्य । कर्मणाऽयमायात्यस्मिन्शरीर इत्यर्थः । ननु कर्मणा कर्तुर्जीवस्य घटेताऽऽगमनमस्मिन्शरीरे, प्राणस्य कथमित्याशङ्कायामाह—यथा पुरुषे छायैतस्मिन्नेतदाततमिति । यथा पुरुषे छाया आतता—अभिसम्बद्धा, पुरुषे गच्छति गच्छति, आगच्छति चागच्छति । एवमेतत्प्राणतत्त्वमेतस्मिन्पुरुषे आततम्—अभिसम्बद्धम् । तत्कर्मणाऽऽयात्यस्मिन्शरीरे तेनैव सहेति भावः । यद्यपि दृष्टान्तवाक्ये पुरुषशब्देन जीवाधिष्ठितः पिण्डविशेष उच्यते, दार्ष्टान्तिकवाक्ये एतच्छब्देन जीवमात्रपरामर्शः । तथापि पूर्वप्रकृतविशिष्टैकदेशपरामर्शात्, अधिष्ठानद्वाराऽधिष्ठात्रायत्ततायाः छायायां प्राग्विवक्षणाद्वा अधिष्ठात्रधिष्ठानयोरभेदोपचाराद्वा न क्षतिः । अत्र छायादृष्टान्तग्रहणात्प्राणसम्बन्धस्यौपाधिकता व्यज्यते । न हि छाया पुरुषस्य स्वत एव, परन्त्वातपाद्यौपाधिकी, एवमात्मनः प्राणसम्बन्धो न स्वरूपानुबन्धी किंतु कर्मोपाधिकः । ब्रह्मव्यतिरिक्तस्यानृतत्वमभिमन्वानाः स्वाभिमतार्थलिप्सया वाक्यमिदं प्राणोत्पत्तिप्रतिपादकवाक्यशेषतया योजयन्तः एतस्मिन्सत्ये आत्मनि छायेवानृतं प्राणतत्त्वमिति व्याचक्षते । यदि छायाग्रहणेनानृतत्वं व्यज्येत तदा घटेत नामेदम् । इह हि

पुरुषस्य छाया गृहीता, ततश्च स्वतो गत्यागत्यभावः परगत्यायत्तगतिकता च व्यज्यते । अनृतत्वं चेद्विवक्षितम्, अविशेषान्मूर्त इत्येव श्रूयेत, पुरुषे इति विशेषश्रवणमस्वरसम् । यथैषा च्छायेत्येव वा श्रूयेत । छायाया अनृतत्वमन्यत्र प्रतिक्षिप्तमाचार्यैः । अपरे तु मनोकृतेनेत्यत्र मनः अकृतेनेति पदविभागमुचितं विभावयन्तः—पुरुषे छायेव सम्बद्धमिदं मनः पुरुषे प्रविशति सामग्र्यन्तरनिरपेक्षं प्रविशति, प्रविशति च प्राण इति व्याचक्षते । तैस्तु मनसः प्रवेशनिरूपणे सङ्गतिर्वक्तव्या । इह हि प्राणानां प्रवेशे प्रश्नः । यत्तु दृष्टान्तार्थमिदमिति, तत्तु न रमणीयं प्रतिभाति, प्राणानां प्रवेशे जिज्ञासिते प्राणोपजीव्यस्य प्रवेशो न दृष्टान्तीभवितुमर्हति । तस्य तदुपजीव्यता च द्वितीयप्रश्न एव श्रुता ॥३॥

यथा सम्राडेवाधिकृतान्विनियुङ्क्ते एतान्ग्रा-
मानेतान्ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण
इतरान्प्राणान्पृथक्पृथगेव सन्निधत्ते ॥४॥

आत्मानं वा प्रविभज्य कथं प्रातिष्ठते इत्यस्योत्तरमाह—यथा सम्राट्—राजा अधिकृतान्—अधिकारिणः पुरुषान् स्वयं विनियुङ्क्ते, त्वमेतान्ग्रामानधितिष्ठस्व त्वमेतान्ग्रामानधितिष्ठस्वेति । एवंप्रकारेण स्वस्य वशे वर्तमानानितरान्प्राणांश्चक्षुरादीनेष मुख्यप्राण एव पृथक्पृथगेव सन्निधत्ते—तंत्र तत्रासङ्कीर्णाधिकारं योजयति ॥४॥

---

1 ग्रामस्थानीयं गोलकादि तत्र तत्रेत्यनेन विवक्षितम् ।

पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति ॥५॥

सम्राडिवायमधिकृतान्प्राणान्विनियुङ्क्ते नाम, विशेषश्च ततोऽस्मिन्, यदेष स्वात्मानं प्रविभज्य तत्र सन्निधत्ते इत्याह—पायूपस्थ इत्यादिना । तत्र—अपानं भूत्वा पायूपस्थे प्रातिष्ठते—अपानवृत्त्या मूत्रपुरीषापकर्षणं कुर्वन्पायूपस्थे अधितिष्ठतीत्यर्थः । प्राणः स्वयं मुखनासिकाभ्यां चक्षुःश्रोत्रे प्रातिष्ठते—प्राणवृत्त्या मुखनासिकाभ्यां निर्गतश्चक्षुःश्रोत्रे अधितिष्ठतीत्यर्थः । मध्ये तु समानः—समानः सन् प्राणापानस्थानयोर्मध्ये—नाभ्यामिति यावत्, तिष्ठति । एष ह्येतद्धुतमन्नं समं नयति—जाठराग्नौ हुतमन्नं समं नयति समानः । हिर्हेतौ । यस्मादेष समानो जाठराग्नौ प्रक्षिप्तमन्नमविषमं तत्तद्धातुभावं गमयति, तस्मादेव हेतोः सप्तार्चिषो जाठराग्नेः प्रभवन्ति । कास्ता अर्चिषः ? एताः—सर्वेषामस्माकं गोचरीभूताः, प्रसिद्धा इत्येतत् । दर्शनश्रवणादिलक्षणा इत्यर्थः । सप्तसङ्ख्याकता च श्रवणद्वयं दर्शनद्वयं घ्राणद्वयमास्यमेकमिति सप्त । शब्दादिप्रकाशकारणतया तेष्वर्चिष्ट्वारोपः । अन्नरसबलेनैव तेषां सम्भवात्तस्माद्भवन्तीत्युक्तिः ॥५॥

हृदि ह्येष आत्मा अत्रैकशतं नाडीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्ति तासु व्यानश्चरति ॥६॥

व्यानात्मना सर्वत्र नाडीषु संस्थितिमस्य दर्शयितुं नाडीनामुत्पत्तिस्थानं निरूपयति प्रथमम् । एष आत्मा—जीवात्मा हृदि हि—हृदयप्रदेशे हि। अत्र—हृदये एकशतं नाडीनाम् एकोत्तरशतं नाड्यः सन्तीत्यर्थः । तासाम्—प्रधाननाडीनां मध्ये, एकैकस्यां शतं शतं नाड्यः—शाखानाड्यः सन्तीत्यर्थः । द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्ति—प्रतिशाखानाडीनां सहस्राणि, तानि च द्वासप्ततिः शाखानाडीषु मध्ये एकैकस्यां प्रतिशाखानाड्योऽवान्तरशाखानाड्यो द्वासप्ततिसहस्रसङ्ख्याका भवन्तीति यावत् । तासु व्यानश्चरति ॥६॥

**अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥७॥**

अथेत्यनेन प्रतिवचनोपक्रमो व्यज्यते । यद्यपि कथं वा प्रविभज्येत्यस्योत्तरमनुवर्तते नाम, उदानात्मना प्रविभागस्येह निरूप्यमाणत्वात् । तथापि प्रधानार्थः पुण्येन पुण्यमित्यादि । तद्युक्तं प्रतिवचनान्तरारम्भत्वमस्य वाक्यस्य । एकया—अन्यतमया । आसामिति शेषः । तया उदानात्मना प्रविभक्तोऽयं प्राण ऊर्ध्वगः सञ्चितः प्रेतान्पुण्येन पुण्यलोकं पापेन पापलोकं मिश्रीभूतेन च कर्मणा मनुष्यलोकं नयति । अत्र लोकशब्दस्तत्तद्योनिपरः । सुकृतप्रचुरान्सत्त्वप्रचुरयोनिविशेषे दुष्कृतप्रचुरांस्तमःप्रचुरतिर्यगादियोनिविशेषे समसुकृतदुष्कृतान्मानुषयोनिषु योजयतीति यावत् ॥७॥

**आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः पृथिव्यां या देवता सैषा पुरुष-**

स्यापानमुपष्टभ्य अन्तरा यदाकाशः स समानो वायुर्व्यानः ॥८॥ तेजो ह वा उदानस्तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः ॥९॥

कथं बाह्यमभिधत्त इत्यस्योत्तरमाह—आदित्यो ह वा इत्यादिना । ह वै इति प्रसिद्धौ । प्रथमप्रश्नप्रतिवचन एव प्रसिद्धमिति भावः । एष हि चाक्षुषं प्राणमनुगृह्णान उदयति–यश्चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतितिष्ठति तं चाक्षुषं प्राणमनुगृह्णात्यादित्यो बाह्यप्राण इत्यर्थः । पृथिव्यां या देवता–पृथिव्यभिमानिनीत्यर्थः । सा पुरुषस्यापानमवष्टभ्य वर्तते । अपानमनुगृह्णातीत्यर्थः । सर्वाण्येव हि मानुषादीनि भूतान्याकृष्यन्ते पृथिव्या । द्यावापृथिव्योर्मध्ये योऽयमाकाशः स समानः समानानुग्राहकः । यश्च वायुर्बाह्यः स व्यानः । यच्च बाह्यं तेजः स उदानः उदानानुग्राहकः । यद्यप्यादित्यादयो मुख्यप्राणतो भिन्नाः, तथापि तेषां प्राणादिवृत्तिविभेदभिन्ने चक्षुराद्यधिष्ठातरि तस्मिन्ननुग्राहकतया प्राणनतया नियमेन सन्निधानमस्तीति बहिरादित्यादिरूपेण धारकतोक्तिरुपपद्यते । अध्यात्मं च प्राणादिरूपेण धारकताया उक्तत्वात्कथमध्यात्ममित्येतदप्युत्तरितम् । तेजस उदानानुग्राहकतामुपपादयति—तस्मादिति । यस्मात्तेजसोऽनुग्राहकता तस्मादेव मुमूर्षुः पुरुष उपशान्ततेजाः सन्–उपरतदेहौष्ण्यः सन्, मनसि सम्पद्यमानैरिन्द्रियैः सह इन्द्रियैरुपलक्षितो वा पुनर्भवं शरीरान्तरं प्राप्नोतीत्यर्थः । उपशान्ततेजस्त्वं तेजस

उदानानुग्राहकत्वे लिङ्गम्, उदाने शरीरादुत्क्रमणोन्मुखे शरीरौष्ण्यमपगच्छति ॥९॥

**यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहात्मना यथासङ्कल्पितं लोकं नयति ॥१०॥**

कथमयं जीवः शरीराच्छरीरान्तरमायाति स प्रकारः प्रसङ्गादुच्यते —यच्चित्त इति । यच्चित्तः—मुमूर्षोरस्य चित्तं यस्मिन्, तेन—सङ्कल्पविषयीभूतेन तेनोपलक्षितः सन्नित्यर्थः । एष जीवः प्राणमायाति—मुख्यप्राणेन संश्लेषविशेषं प्राप्नोतीत्यर्थः । अस्तसर्वेन्द्रियवृत्तिर्वासनामात्रावशेषेण मनसोपलक्षित उच्छ्वासनिश्वासरूपवृत्तिमात्रविशिष्टे मुख्यप्राणे संयुक्तो भवतीति यावत् । मुख्यप्राणस्तेजसा संयुक्तः, तेजसा—भूतान्तरसंसृष्टेन तेजसा, इदं च भूतसूक्ष्मम्, तेजसः प्राधान्यात्तेजसेति निर्देशः । यथासङ्कल्पितं लोकं नयति । मुमूर्षोरस्य सङ्कल्पो यस्मिन्नासीत् तं लोकं नयति । कं नयति ? य एष प्राणमायाति तमेनमित्यर्थसिद्धम् । केन सह ? आत्मना सह—मनसा सहेत्यर्थः ॥१०॥

**य एवं विद्वान्प्राणं वेद न हास्य प्रजा हीयतेऽमृतो भवति तदेष श्लोकः ॥११॥**

यो विद्वानेवं प्राणं वेद—उक्तविशेषविशिष्टं वेद । नास्य प्रजा हीयते । इदं चानुषङ्गिकम् । मुख्यं च फलममृतत्वम् । तदुच्यते— अमृतो भवतीति । अमृतत्वं चेह मोक्षः । यद्यपि प्राणविज्ञानस्य न साक्षान्मोक्षहेतुता, तथापि प्राणोत्पत्तिविचारे परमात्मनः सर्वज-

गत्कारणस्यात्रगम्यमानतया परमात्मविज्ञानद्वारा मोक्षहेतुताऽप्यस्तीति बोध्यम् । अमृतत्वं चिरकालजीवित्वमात्रपरं वा ॥११॥

उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा । अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुते ॥१२॥

उत्पत्तिम्—परमात्मनः सकाशात्, आयतिं च—कर्मणा, स्थितिं च—पाय्वादिषु, स्वामित्वं चेतरप्राणापेक्षया, शरीरान्तः प्राणापानादिभेदेन बहिश्चादित्यादिरूपेण सान्निध्यं च विज्ञायामृतमश्नुते ॥१२॥

इति प्रश्नोपनिषद्भाष्ये तृतीयप्रश्नभाष्यम् ॥ ३ ॥

---

अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन्पुरुषे कानि स्वपन्ति कान्यस्मिञ्जाग्रति कतर एष देवः स्वप्नान्पश्यति कस्यैतत्सुखं भवति कस्मिन्नु सर्वे सम्प्रतिष्ठिता भवन्तीति ॥१॥

अथ परतरं तत्त्वं विचारमुखेन सुखेन ज्ञापयितुं चतुर्थः प्रश्नः प्रवर्तते । एतस्मिन्पुरुषे कानि स्वपन्ति कानि जाग्रति—व्यवह्रियते नाम प्रसुप्तोऽयं पुरुष इति, तत्रेदं विचार्यम्, प्राणेन्द्रियादिभूयिष्ठेऽस्मिन्वपुषि पुरुषशब्दाभिलप्ये कानि स्वपन्ति, तदा कानि वा जाग्रति, यदि सर्वेषामेवास्तव्यापारता तदा शरीरनाश एव प्रसजेत् । यो देवः

स्वप्नान्पश्यति एष देवः कः ? यच्चैतदात्मसंवेद्यं सुप्तोत्थितेन प्रत्यभिमर्श्यमानं सुखं तत्कस्य–किंसम्बन्धि। लौकिकं हि सर्वमेव सुखं शब्दाद्यर्थानुबन्ध्येव दृष्टम्, सुषुप्तिवेलायामर्थग्रहणप्रसङ्गाभावेन तदानीन्तनं सुखं किमनुबन्धीति भावः। यानि स्वपन्ति यानि वा जाग्रति, यदनुबन्धि वा सुखं, ये चान्ये सर्वे, ते कस्मिन्प्रतिष्ठिता भवन्ति ॥१॥

**तस्मै स होवाच यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति ताः पुनरुदयतः प्रचलन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकीभवति। तेन ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयति न स्पृशति नाभिवदते नाऽऽदत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥२॥**

स पिप्पलादस्तस्मै गार्ग्यायोवाच। यथाऽस्तं गच्छतः सूर्यस्य सर्व एव किरणास्तन्मण्डल एवैकीभवन्ति–परितः प्रसरणशून्यास्तेन सहाविभागं गच्छन्ति, उदयतस्तु तस्य ते परितः प्रसरन्ति। तथैव तत्सर्वं चक्षुरादि जाग्रद्दशायां परितः प्रसरत् स्वप्नसमये परे देवे मनस्येकीभवति–अविभागं याति। अविभागश्चात्र दर्शनादिव्यापाराक्षमतापादकः संयोगविशेषः। स्वस्वव्यापाराक्षमतैव वा। द्योतनगुणयोगाद्देवशब्द इन्द्रिये प्रवर्तते, तेष्वन्तःकरणं प्रधानमिति परे देवे इति

विशिष्यते । यतो मनस्येकीभवन्ति श्रोत्रादीनि, तेन निमित्तेन तदानीमेष पुरुषः श्रवणादिव्यापारशून्यः केवलं स्वपितीत्येवाचक्षते जना एनम् । एतेन कानि स्वपन्तीत्येतदुत्तरितमिन्द्रियाण्येव स्वपन्तीति ॥२॥

प्राणाग्नय एवैतस्मिन्पुरे जाग्रति गार्हपत्यो
ह वा एषोऽपानोऽन्वाहार्यपचनो यद्गार्हपत्या-
त्प्रणीयते प्रणयनादाहवनीयः प्राणः ॥३॥

कानि जाग्रतीत्यत्राह—प्राणा एवाग्नयः, त एवास्मिन्पुरे—देहे तदानीं जाग्रति । शरीरधारणलक्षणप्राणवृत्तीनां तदानीमप्यनपायादिति भावः । जाग्रत्सु तेष्वग्नित्वनिरूपणे विशेषं प्रकाशयन्नग्निहोत्रदृष्टिं विधत्ते—गार्हपत्यो ह वा एषोऽपानः—य एष मूलाधारस्थोऽपानवायुः स गार्हपत्याग्निः । यस्तु व्यानः सोऽन्वाहार्यपचनः—दक्षिणाग्निः । यः प्राणः स आहवनीयः, तेषां तथात्वेन निरूपणे किं निमित्तं तत्राह—यद्गार्हपत्यात्प्रणीयते प्रणयनादिति । प्रणयनादिति गार्हपत्यस्य विशेषणम्, प्रणीयते अस्मादिति प्रणयनम्, आहवनीयो ह्यग्निर्गार्हपत्यात्प्रणीयते, तस्माद्गार्हपत्यं प्रणयनम्, ततो यः प्रणीयते स आहवनीयः । प्राणस्तु हृदयादूर्ध्वमुदञ्चन्नपानादधोऽवस्थितादुन्नीयत इव, अतः प्राण आहवनीयत्वेन रूप्यते, यत उन्नीयते सोऽपानो गार्हपत्यत्वेन रूप्यत इति भावः । व्यानस्य दक्षिणाग्नित्वेन रूपणे दक्षिणदिक्सम्बन्धो निमित्तं बोध्यम् । स च हृदयस्य दक्षिणसुषिरसम्बन्धरूपः । श्रूयते च—'अथ योऽस्य दक्षिणः सुषिरः स व्यान' इति ॥३॥

**यदुच्छ्वासनिःश्वासावेतावाहुती समं नयतीति समानः । मनो ह वाव यजमान इष्टफलमेवोदानो य एनं यजमानमहरहर्ब्रह्म गमयति ॥४॥**

आहुती चैतावुच्छ्वासनिःश्वासौ । ते चाहुती समं नयतीति समान उच्यते । स चायं होता, यो हि हविराहवनीयं प्रापयति स हि होता । अयं च ते आहुती व्यानमाहवनीयमभि नयति । मन एव यजमानः—यो ह्यधिकरोति यागे स यजमान उच्यते । अन्तःकरणमेव तु शब्दादिविविधबाह्यदेशपर्यटनपरिश्रमपरिहरणाय स्वापाग्निहोत्रे प्रवर्तते । उदानमेव इष्टस्य—यागस्य फलं, पुण्यमिति यावत् । यथा पुण्यं यजमानं स्वर्गादिफलं प्रापयति, एवमेवायमुदानोऽहरहः स्वापकाले ब्रह्म गमयति । ननु—सुषुप्तौ जीवस्य ब्रह्मगमनवादो व्याहन्येत । मैवम् । नहि मनसस्तद्गमनश्रवणमात्रात्तस्योपमर्दः, श्रुत्यन्तरतस्तदपि घटेत । पुरीतद्देशावच्छिन्ने ब्रह्मणि सङ्गमनादिदमपि घटेत, मनश्च सुषुप्तौ पुरीतति सङ्गच्छति । यद्यपि कानि जाग्रतीत्यस्य प्रश्नस्य प्राणा एवास्मिञ्जाग्रतीत्येवोत्तरम्, अन्यत्त्वपृष्टोत्तरम् । अथापि विदुषः स्वापोऽपि कर्मविशेष एवेति ज्ञापयितुमग्निहोत्रदृष्टिविधानमिदम् ॥४॥

**अत्रैष देवः स्वप्ने महिमानमनुभवति । यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति**

**दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ॥५॥**

कतर एष देवः स्वप्नान्पश्यतीत्यस्योत्तरमाह—अत्र—इन्द्रियोपरतितः पश्चात्, सुषुप्तेः प्राक्, अस्मिन्नवसरे। एष देवः—जीवः स्वप्ने महिमानं रथगजादिरूपमनुभवति। यद्वा—अत्र—अस्मिन्नेव शरीरे वर्तमान एष एव देवः स्वप्ने महिमानमनुभवति। उपरतेष्वखिलेषु करणेषु यः किमपि साक्षात्करोति तेन हि देवेन भाव्यम्। स्वत एव द्योतनगुणेन भाव्यम्। स क इति पृष्टे न कश्चिदपूर्वस्तादृशः, य एव शरीरे वर्तमानः क्षेत्रज्ञो जाग्रद्दशायां करणसापेक्षः साक्षात्करोति स एव तदानीं करणनिरपेक्षः स्वयंज्योतिः स्वाप्नानर्थाननुभवतीति भावः। श्रूयते च बृहदारण्यके—'अत्रायं पुरुषः स्वयंज्योतिर्भवती'ति। कं महिमानमनुभवति? तं प्रपञ्चयति—यद्दृष्टमित्यादिना। सर्वः—सर्वशरीरकः सन्नित्यर्थः। स्वप्ने कदाचिदात्मानमत्यन्तविलक्षणमन्यान्याकारमनुभवति, तत् स्वाप्नसृष्टतत्तच्छरीरकः स्वात्मानमनुभवतीति भावः। परे देवे मनस्येकीभवतीति पूर्वमन्त्रे निर्दिष्टं मन एव वा एष देव इति परामृश्यते। यद्यपि मनसः करणत्वमात्रं न द्रष्टृत्वं, तत्त्वात्मन एव, तथापि स्वातन्त्र्यविवक्षया तदुपपत्तिः, स्वातन्त्र्यं च बाह्यचक्षुरादिनिरपेक्षं दर्शनाद्युपकरणत्वम्, तच्च तदानीमस्ति। सर्वः पश्यति—सर्वप्रकारः सन्ननुभवति। असत्यपि चक्षुषि, असत्यपि श्रवणे असत्यपि घ्राणे, स्वयमेव तत्तत्प्रकारो भूत्वा तांस्तानर्थाननुभवती-

१ तत्तन्निरपेक्षं तत्तत्कार्यनिर्वाहकत्वं तत्तत्प्रकारतापत्तिः।

त्याशयः । ननु—गौणः पक्षोऽयम्, यत् सुप्रसिद्धे आत्मनि द्रष्टरि सति करणे तद्वर्णनम् । नैष दोषः । विवक्षायां सत्यां स एव पक्षो विशिष्यते । सुप्रसिद्धे च द्रष्टरि कथं वा प्रश्नः 'कतर एष देवः स्वप्नान् पश्यती'ति प्रष्टा हि न मन्दः, जानात्येव करणमिन्द्रियं ततोऽन्यं च द्रष्टारम्, तथापि पृच्छतो ह्ययमाशयः । यदि प्रसुप्तानि चक्षुरादीनि बाह्यानि आन्तरस्य च तदसामर्थ्यात् स्वाप्नार्थप्रकाशकं किमिति । अत एव प्रश्ने कतरशब्दस्वारस्यमपि । द्वयोरेकस्मिन् जिज्ञासिते हि कतरशब्दः प्रवर्तते । जाग्रद्दशायां चक्षुरादिद्वारैव मनसो रूपादिप्रकाशकत्वनियमे सत्यपि स्वापदशायां विना तद्द्वारं स्वाप्नरूपादिप्रकाशनसामर्थ्यमस्ति, तद्धि रूपादि न बाह्यसजातीयं किन्त्वन्यादृशमेव । बाह्येऽर्थे एव तु तन्नियम इत्युत्तरितं भवति ॥५॥

**स यदा तेजसाभिभूतो भवति अत्रैष देवः स्वप्नान्न पश्यति। अथ तदेतस्मिञ्छरीरे एतत्सुखं भवति ॥६॥**

कस्यैतत्सुखं भवतीत्यस्योत्तरमाह—अत्र तेजःशब्दः सर्वस्य प्रकाशके परमात्मनि वर्तते । स एष देवः जीवः, मनो वा । यदा तेजसा—परमात्मना अभिभूतो भवति—परिष्वक्तो भवति । अत्र—अस्मिन्नवसरे स्वप्नान्न पश्यति । जीवस्य परमात्मनि सम्पत्तिदशायां मनसोऽप्यस्त्येव तत्संश्लेष इति न विरोधः । अथ तदेतस्मिञ्शरीरे एतत्सुखं भवति—तदेतत्सुखम्—सुप्तोत्थितेन प्रत्यभिमृश्यमानं सौषुप्तिकं सुखम्, एतस्मिन्नेव शरीरे भवति न बहिः। अयं भावः—यद्यपि सुषुप्तावनुभूयमानं सुखं न बाह्यशब्दाद्युपाधिसम्बन्धि, तदानीं तेषामनु-

भवासम्भवात् । तथापि शरीर एव, शरीरान्तरेव निरुपाधिकमात्मस्वरूपानुबन्धि यत्सुखमस्ति तदेवानुभूयत इति ॥६॥

स यथा सोम्य वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते ।
एवं ह वै तत्सर्वं पर आत्मनि सम्प्रतिष्ठते ॥७॥

कस्मिन्नु सर्वे सम्प्रतिष्ठिता भवन्तीत्यस्योत्तरमाह—यथा वयांसि-पक्षिण इतस्ततो विहृत्य सुचिरमन्ततो निवासवृक्ष एव प्रतिष्ठिता भवन्ति; तथा कार्यकारणात्मकोऽयमर्थोऽर्थग्राहकमिन्द्रियं यच्चान्यत्सर्वमेव परे आत्मनि प्रतिष्ठितं भवति ॥७॥

पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक्च स्पर्शयितव्यं च वाक्च वक्तव्यं च हस्तौ चादातव्यं चोपस्थश्चाऽऽनन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहंकारश्चाहंकर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥८॥

सर्वशब्देन क्रोडीकृतानर्थान्निर्दिशति—पृथिवीति । पृथिवीमात्रा चेत्यादि कार्यकारणभावापन्नार्थप्रदर्शकम् । इन्द्रियार्थौ निर्दिशति—चक्षुश्च द्रष्टव्यं चेति । मनस एव वृत्तिभेदेन बुद्धिश्च बोद्धव्यं चेत्यादि । तेजश्चेत्यनेन शारीरं तेजो विवक्षितम् । लक्ष्यते चौष्ण्येन तत् ८

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः स परेऽक्षर आत्मनि सम्प्रतिष्ठते ॥९॥

प्रत्यगात्मनोऽनन्योऽयमिति भ्रमं व्युदस्यन्नाह—यश्चायं प्रसिद्धो द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता स्वयं च विज्ञानस्वरूपः स प्रत्यगात्माऽपि परेऽक्षरे—क्षरणशून्ये परमात्मनि प्रतिष्ठितः ॥९॥

परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य । स सर्वज्ञः सर्वो भवति तदेष श्लोकः ॥१०॥

एवम्भूतपरमात्मवेदनस्य फलमाह—परमिति । अच्छायम्—छायाशब्देन तम उच्यते, अगुणमिति यावत् । अत एव अशरीरम्—गुणमयशरीररहितम् । अलोहितम्—लोहितशब्देन हेयं लक्ष्यते, हेयप्रतिभटमिति यावत् । अत एव शुभ्रम् । अक्षरं वेदयते—जानाति; उपास्ते इति यावत् । स परमेवाक्षरम्—परमात्मानमाप्नोतीत्यर्थः ।

१ अक्षरे परत्वविशेषणात् अक्षरपुरुषाद्व्यावृत्तिः ।

यस्तु परमक्षरं प्रतिपद्यते स सर्वज्ञो भवति सर्वश्च भवति—अभिलषितसर्वरूपो भवति, 'कामान्नी कामरूप्यनुसञ्चर'न्नित्युक्तप्रकारेण कामरूपो भवतीत्येतत्, अवाप्तसमस्तकामो भवतीति यावत्। तत्—अक्षरमधिकृत्य, एषः—वक्ष्यमाणः श्लोकः ॥१०॥

**विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र। तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाऽऽविवेशेति ॥११॥**

यस्तु विज्ञानात्मा—विज्ञानस्वरूपो जीवः। विज्ञानात्मेत्येतावता स न विज्ञातेति न भ्रमितव्यम्, अव्यवहितमन्त्र एव 'एष हि द्रष्टे'त्यादिना विज्ञातृताऽप्युक्ता। सह सर्वैरिन्द्रियैः, यत्राक्षरे सम्प्रतिष्ठितः, प्राणा भूतानि च यत्राक्षरे, तदक्षरं यो वेत्ति स सर्वज्ञो भवति। सर्वांश्च कामानाप्नोति। न हि ब्रह्मसुखे प्रविष्टस्य अवशिष्येत नाम किञ्चित्सुखं, सर्वमेव सुखं ब्रह्मसुखेऽन्तर्गतमेव। समुद्रे गोष्पदवदिति भावः ॥११॥

इति प्रश्नोपनिषद्भाष्ये चतुर्थप्रश्नभाष्यम्।

---

**अथ हैनं शैब्यः सत्यकामः पप्रच्छ। स यो ह वैतद्भगवन्मनुष्येषु प्रायणान्त-**

---

१ अयमेवार्थः समुचितः। उत्तरत्र 'सर्वो भवती'ति स्थाने 'सर्वमाविवेश' इति हि श्रूयते।

मोङ्कारमभिध्यायीत कतमं वा व स तेन
लोकं जयतीति । तस्मै स होवाच ॥१॥

एतदोङ्कारम्—लिङ्गव्यत्ययश्छान्दसः । प्रायणान्तम्—आशरीरपातम् । तस्मै—सत्यकामाय, सः—पिप्पलाद उवाच ॥१॥

एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः ।
तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति ॥२॥

ओङ्कार इति यदेतत्, द्विविधं परं ब्रह्मापरं ब्रह्मेति । हैरण्यगर्भान्तमपरं ब्रह्म, परं ब्रह्म च स्फुटम् । यद्यप्यक्षररूपेऽस्मिन्नुक्तोभयरूपता न घटेत, अथाप्यालम्बनत्वाद्वाचकत्वाद्वा तथा निर्देशः । तस्मात्—उभयरूपत्वात्, आयतनेन—अवलम्बनभूतेनैतेनैव परं वाऽपरं वा यथालम्बनमेकतरमनुगच्छति ॥२॥

स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति ॥३॥

तत्र प्रथममपरब्रह्मोपासनं तत्फलं चाह—स इति । सः—उपासकः, एकमात्रं प्रणवं यद्यभिध्यायीत—तदवलम्बनमपरब्रह्मोपासीत यदीति यावत् । तेनैवालम्बनभूतेन प्रणवेन विज्ञानं प्रापितस्तूर्णमेव जगत्यामभिसम्पद्यते । तत्रापि मनुष्यलोक एनमृच उपनयन्ते—प्राप-

यन्ति । स तत्र मानुषे दुराचारो न भवेत्, किन्तु तपःप्रभृतिभिः परिपूर्णः प्रकृष्टमैश्वर्यं मानुषमनुभवति ॥३॥

अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम् । स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥४॥

द्विमात्रेण मनसि सम्पद्यत इति । द्विमात्रोपासनं कुर्यादित्यर्थः । यजुर्भिरुन्नीयतेऽन्तरिक्षम् । तत्र विशेषमाह—सोमलोकमिति । तत्र च देवैश्वर्यमनुभूय प्रत्यावर्तते । अपरब्रह्मोपासकानां सर्वेषामेव पुनरावृत्तिरुक्ता भवति ॥४॥

यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परमपुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः । यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः ॥५॥

यः पुनरेतं परमपुरुषं त्रिमात्रेण प्रणवेनावलम्बनभूतेनोपास्ते, स सूर्ये सङ्गतः संस्ततः सर्प इव जीर्णया त्वचा पाप्मना विनिर्मुक्तः सामभिर्ब्रह्मलोकम्—परस्य ब्रह्मणो लोकमुन्नीयते । सः—उपासकः, तत्र

एतस्माज्जीवघनात्—क्षरात्पुरुषात् यः परः—अक्षरः, ततोऽपि यः परः, तं पुरिशयं सर्वहृदयगुहायामन्तर्यामितया वर्तमानं परमपुरुषमीक्षते । प्रणवमधिकृत्यैतौ श्लोकौ भवतः ॥५॥

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता
अनविप्रयुक्ताः । क्रियासु बाह्याभ्यन्तरमध्य-
मासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः ॥६॥

प्रणवस्य यास्तिस्रो मात्रास्ताश्चेन्मात्रा मात्राविवेचनशून्येनान्योन्यसक्ता अनविप्रयुक्ताश्च प्रयुक्ताः स्युः—अतिद्रुतोच्चारणतः मिथः-संयुक्ता विलम्बोच्चारणतोऽत्यन्तविप्रकृष्टाश्च यदि प्रयुक्ताः स्युस्तदा प्रयोक्तुर्मृत्युमत्यः—मृत्युप्रदाः, अनर्थप्रदा भवन्ति । ताश्चेत्कायिकवाचिकमानसिकासु तिसृषु क्रियासु सम्यक्प्रयुक्ताः स्युस्तदानीं प्रयोक्ता ज्ञः—विवेचनवान्, न कम्पते—न च्यवते ॥६॥

ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत्कवयो
वेदयन्ते । तमोङ्कारेणैवायतनेनान्वेति विद्वा-
न्यत्तच्छान्तमजरममृतमभयं परं चेति ॥७॥

एकमात्रप्रणवकरणकापरब्रह्मोपासक एतं मनुष्यलोकम्, द्विमात्रप्रणवकरणकापरब्रह्मोपासको यजुर्भिरन्तरिक्षलोकम्, त्रिमात्रप्रणवकरणकपरब्रह्मोपासको विद्वांस्तेनैवोङ्कारेणान्वेति—प्राप्नोति । किम् ? यत् कवयः—क्रान्तदर्शिनः सूरयो वेदयन्ते—सदा पश्यन्ति, यत्

शान्तम्–ऊर्मिषट्करहितम्, अजरममृतमभयम्–जरामरणभयवर्जितं मुक्तप्राप्यम् ॥७॥

इति प्रश्नोपनिषद्भाष्ये पञ्चमप्रश्नभाष्यम् ।

---

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन्हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत् । षोडशकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं नाहमिमं वेद यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति । समूलो ह वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुं स तूष्णीं रथमारुह्य प्रवव्राज तं त्वा पृच्छामि क्वासौ पुरुष इति ॥१॥

कौसल्यो राजपुत्र इत्यादिना वृत्तानुवादः क्रियते । इदं च जिज्ञासितार्थस्यानुपेक्षणीयत्वज्ञापनाय । तं यं पुरुषमधिकृत्य हिरण्यनाभो मामपृच्छत्, तं षोडशकलं पुरुषं पृच्छामि भवन्तम्, क्वासौ पुरुषः ॥१॥

तस्मै स होवाच । इहैवान्तःशरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडश कलाः प्रभवन्तीति ॥२॥

एताः–वक्ष्यमाणाः, षोडकलाः यस्मिन्प्रभवन्ति–आविर्भवन्ति, यस्माद्विभज्यन्त इति यावत् । स पुरुष इहैव शरीरे–यत्रैव जीवघ-

नस्तत्रैवायमपीत्यर्थः । ननु शरीरे चेदयम्, अनेन जीवघनेनैव भाव्यम् । मैवम् । जीवघनात्परात्परं पुरिशयमिति ततो भेदो हि स्फुटतरं श्रावितः प्राक् । पुरि शरीरे शेते, तथाऽपि जीवघनादन्योऽयमिति ततोऽवगम्यते ॥२॥

**स ईक्षांचक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भवि-ष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥३॥**

षोडशकलाप्रभवत्वमुपपादयति—योऽयमधुनाऽन्तःशरीरेऽन्तर्यामितयाऽवस्थितः स एवायं पुरा ईक्षांचक्रे—पर्यालोचितवान् । किमिति ? उच्यते । अहमभितः सर्वदैव व्याप्तो ह्यपरिच्छिन्नः सोऽहं स्वत उत्क्रमणशून्यः स्वतः परिमितदेशाधारकप्रतिष्ठाशून्यश्च । अथापि कस्मिन्नुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्प्रतिष्ठिते प्रतिष्ठितो भविष्यामि । किंद्वारा ममोत्क्रान्तिप्रतिष्ठादिकं घटेतेति । अयं च विहरणसङ्कल्प एव, भगवतः सर्वतनोरुत्क्रमणप्रतिष्ठादिकं शरीरभूतचेतनाचेतनद्वारा मुख्यं सम्भवद्विहरणविशेष एव ॥३॥

**स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनः । अन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम च ॥४॥**

एवं विहरणं सङ्कल्प्य विहरणोपकरणमिदं सर्वमसृजदित्याह—यद्यपि जीवस्य साक्षाद्विहरणोपकरणताऽस्ति शरीरत्वाविशेषात्, सम्भवति च सङ्कल्पितमुत्क्रमणं प्रतिष्ठितं च तत एव, स हि कर्मणा कुतश्चि-

दुत्क्रामति क्वचित्तिष्ठति च, तथाऽपि तस्य स्वरूपतः सृज्यत्वासम्भवात्, उत्क्रमणादेः स्वतस्तस्मिन्नसम्भवात्प्राणसम्बन्धायत्तत्वात्तस्य स प्राणमसृजतेत्युक्तम् । प्राणविशिष्टजीवद्वारोत्क्रमणादि विहरणं स्वस्य सम्पादयन् प्राणमसृजदित्यर्थः। प्राणात् श्रद्धां—तत्तत्फलाधायककर्मसु श्रद्धामसृजत् । असत्यां तस्यां देहाद्देहान्तरं प्रत्युत्क्रमणस्यैवासिद्धेः । आकाशादि नामान्तमप्यसृजत्। अन्यथोत्क्रमणादिविहरणस्यैवानिष्पत्तेः। तदेवं प्राणादिषोडशकलाप्रभवहेतुत्वात्स्वशरीरभूतचेतनाचेतनद्वारा तत्तद्विशिष्टत्वाच्चायमेव षोडशकलः पुरुष उच्यत इति भावः ॥४॥

स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति तदेष श्लोकः ॥५॥

अथास्यैव सर्वकलालयाधिष्ठानत्वेनाकलत्वमप्याह—स यथेमाः प्रसिद्धा गङ्गाद्या नद्यः, समुद्रायणाः—समुद्र एव अयनं प्राप्यस्थानं पर्यवसानस्थानं यासां ताः, समुद्रं प्राप्यास्तम्—अदर्शनं गच्छन्ति । भिद्येते तासां नामरूपे । सत्यपि वस्तुस्वरूपे पृथग्विवेचनासम्भवेन समुद्र इत्येव व्यवहारगोचरतां यान्ति । एवमेवास्य परिद्रष्टुर्जीवस्य भोगोपकरणभूता इमाः प्राणाद्याः कलाः पुरुषायणाः—पुरुष एव

सर्वात्मा अयनमाधारः पर्यवसानभूमिर्यासां तथाविधाः, प्रलये पुरुषं तमेव स्वाविर्भावास्पदं प्राप्य अदर्शनं गच्छन्ति। अपगच्छतश्च तासां नामरूपे । पुरुष इत्येव व्यपदेशभाजस्तदा भवन्ति । अतस्तदानीमेष परमपुरुषः अकल इत्युच्यते । अमृतो भवति—शरीरद्वाराऽपि जन्ममरणादिव्यवहारानर्हो भवति । तत् ईदृशं परमपुरुषतत्त्वमधिकृत्य, एषः—वक्ष्यमाणश्लोकः प्रवृत्तो भवति ॥ ५ ॥

**अरा इव रथनाभौ कला यस्मिन्प्रतिष्ठिताः । तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥६॥**

अरा इव रथनाभौ प्राणादयः सकलाः कला यस्मिन्पुरुषे परस्मिन्प्रतिष्ठिताः—यदेकाधारकाः कला इत्यर्थः । एतेन जीवघनाद्वैलक्षण्यं व्यज्यते । स हि कलानां वशगः भोक्ता च, अयं तु तन्निर्वाहक इति । तं वेद्यं मुमुक्षुभिः पुरुषं वेद—विजानीयात् । एवं मदुक्तप्रकारेण विजानतां वो मृत्युः संसाररूपः परितो व्यथां मा कुर्यादित्यर्थः। यद्वा—'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इत्यत्र प्रस्तुतो जीवघनो यश्च प्रस्तुतस्ततः परात्परः पुरिशयः पुरुषस्तयोर्मिथो यदन्तरं तदवगमयितुमयं प्रश्नः प्रवर्तते । तत्र प्रतिवचनतश्चेदमन्तरमवगम्यते, यदद्दष्टात्प्राणादिषोडशकलानामुदयः, यश्चासां भोक्ता, सोऽयं षोडशकलो जीवघनः । ततः परात्परः पुरिशयः पुरुष इति । वचनार्थस्त्वेवं नेयः । यस्यां पुरि शरीरे परात्परः पुरुषः शेते, इहैव शरीरे अन्तः षोडशकलः पुरुषोऽपि । परं तु वक्ष्यमाणाः षोडशकला यस्मिन्प्रभवन्ति—स्वकार्यमाधातुं समर्था भवन्ति, सोऽयं

प्राणादिषोडशकलानां भोक्ता, तत उच्यते षोडशकल इत्युक्तं भवति । स च जीवघनः । स ईक्षांचक्रे—कस्मिन्नहमुत्क्रान्ते उत्क्रान्तो भविष्यामीति । यद्यपि स्वयं चेतनः कर्ता च । अथापि कर्मनियन्त्रितोऽयं प्रलये अस्तोपकरण उत्क्रमणादिषु कार्येषु सहायमेकमाकाङ्क्षते स, आकाङ्क्षया च प्राणादिकमसृजत् । अदृष्टद्वारा सृष्टौ कर्तृत्वं बोध्यम् । अयं ह्यनीश्वरः । एतत्प्रारब्धबलेन प्राणादिसर्वमुदभूदिति तु तदाशयः । ततश्चायं षोडशकलो जीवघन इत्युपदिष्टं भवति । अथास्मादत्यन्तविलक्षण आसां कलानां लयस्थानमकलः पुरुष इत्युच्यते—यथेति । शिष्टं पूर्ववत् ॥६॥

तान्होवाचैतावदेवाहमेतत्परंब्रह्म
वेद नातः परमस्तीति ॥७॥

तान् षडपि शिष्यानुवाच पिप्पलादः । एतत्परंब्रह्माधिकृत्याहमेतावदेव जानामि । एतावदेवाहं जानामीत्युक्तिमात्रेण ज्ञातव्यमवशिष्यत इति न शङ्क्यमित्याशयेनाह—नातः परमस्तीति । इतोऽपि ज्ञातव्यमपरं नावशिष्यत इत्यर्थः । ब्रह्म तु स्वरूपतो गुणतश्चापरिच्छिन्नम्, तत्सर्वांशेन तस्य ज्ञानमिति त्वसम्भावितम् । यदि कश्चिन्मन्येत निरवशेषं ब्रह्म जानामीति स भ्रान्त एव । तन्मयोक्तं ब्रह्माधिकृत्यैतावदेवाहं जानामीति । तज्ज्ञातव्यं नावशिष्यत इति भावः । एतद्ब्रह्माधिकृत्य नेतः परमस्तीत्येतावदेवाहं जानामीति वाऽन्वयः । विविच्य तत्स्वरूपरूपगुणादिकं साकल्येन इदमित्थमिति निरूपयितुं केनापि न शक्येत, तदहं परंब्रह्माधिकृत्य इतः परं न

किञ्चिदित्येव जानामि, अपरिच्छिन्नतया जानामीति यावत् । अपरिच्छिन्नतया ज्ञानमेवास्मिन्विषये साकल्येन ज्ञानमिति भावः ॥७॥

**ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥८॥**

ते भारद्वाजादयः शिष्यास्तं गुरुं पिप्पलादमर्चयन्तः—प्रणिपातादिभिः पूजयन्तः अवोचन् । किमिति ? त्वं हि नः पिता—यस्तु बीजप्रदः स केवलं जरामरणादिभूयिष्ठं शरीरमात्रं प्रयच्छति, ततोऽपि त्वं जरामरणादिभयविवर्जितविज्ञानजन्मप्रदस्ततोऽपि महत्तरः पिता पूज्यतमो नः, योऽस्माकमविद्यायाः परं पारं तारयसीति । शान्त्यर्थं पठ्यते—नमः परमऋषिभ्य इति । आदराद् द्विरुक्तिः ॥८॥

इति प्रश्नोपनिषद्भाष्ये षष्ठप्रश्नभाष्यम् ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण—परमहंसवर्य-योगिराज—श्रीगोपालानन्दस्वामिविरचितं प्रश्नोपनिषद्भाष्यं समाप्तम् ।






# मुण्डकोपनिषत् ।

## गोपालानन्दस्वामिविरचितभाष्यसमेता ।



ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥१॥

यः सर्वज्ञः सर्वविच्च यस्यैष महिमा भुवि ।
तं नमामि घनश्याममक्षरात्परतः परम् ॥

इयमाथर्वणोपनिषत् विद्यायां श्रद्धामुत्पादयितुमादौ विद्याप्रवर्तकानां गुरूणां परम्परां निरूपयति—ब्रह्मा देवानामित्यादिना । विद्याप्रवर्तकवैलक्षण्यज्ञाने हि श्रद्धा विशेषतः स्याद्विद्यायाम् । ब्रह्मा—हिरण्यगर्भः । देवानाम्—इन्द्रादीनाम् । प्रथमः सम्बभूव । स हि विश्वस्यास्य कर्ता । गोप्ता च भुवनस्य । एवंभूतः सः, अथर्वाय ज्येष्ठपुत्राय, ब्रह्मणः—परब्रह्मणो विद्यां प्राह । कीदृशीम्? सर्वविद्याप्रतिष्ठाम्—सर्वस्या अपि विद्याया आश्रयभूताम् । ब्रह्मविदो ह्यविदितं न किञ्चित् । ज्ञातव्यमखिलं ब्रह्मणि विज्ञाते परिसमाप्यते । तदुच्यते

सर्वविद्याप्रतिष्ठामिति। अत एवेयं विद्या नार्वाचीनस्य ब्रह्मणो विद्या, अपि तु परस्यैव ब्रह्मणः ॥१॥

**अथर्वणे यां प्रवदेत ब्रह्माऽथर्वा तां पुरोवा-**
**चाङ्गिरे ब्रह्मविद्याम्। स भारद्वाजाय सत्यवा-**
**हाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥२॥**

यां ब्रह्मविद्यामथर्वणे ब्रह्मा प्रवदेत—प्रावदत्। तामङ्गिरे पुरोवाचाथर्वा। नाम्नाऽथर्वः अथर्वा वा, उभयथा निर्देशस्तु श्रौतः सोढव्यः। स भारद्वाजाय—भरद्वाजगोत्राय सत्यवाहाय प्राह। स च भारद्वाजः सत्यवाह अङ्गिरसे प्राह तां परावरां ब्रह्मविद्याम्। यतः परा अन्या विद्या अवराः—अपकृष्टाः सा परावरा ॥२॥

**शौनको ह वै महाशालोऽङ्गिरसं विधि-**
**वदुपसन्नः पप्रच्छ। कस्मिन्नु भगवो**
**विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥३॥**

शौनकः—शुनकसुतः, स चायं महाशालः—महती शाला यस्य स महाशालः, महागृहस्थ इति यावत्। अङ्गिरसं विधिवदुपसन्नः—अनुष्ठितसमित्पाणित्वादिनियमः सन् पप्रच्छ। यद्यप्यथर्वायेत्यादौ विधिवदुपसन्नायेति न श्रूयते, नैतावताऽनैयत्यमस्याशङ्क्यम्। 'समित्पाणि'रिति नियमस्य सर्वान्प्रत्यविशेषेण श्रुतेः। परन्तु गुरुपारम्पर्यनिरूपणमात्रे तत्र तात्पर्यात्तस्याश्रवणम्, इह तु विद्या प्रस्तूयत इति विशिष्य तस्य श्रवणं न्याय्यम्। मध्यदीपिकान्यायेनाङ्गिरसः प्राक्त-

नेष्वथर्वप्रभृतिषु ततोऽर्वाक्तनेष्वस्मासु चैतदन्वयो व्यज्यत इहैतच्छ्रवणेनेत्यपरे । किं पप्रच्छ तदुच्यते—कस्मिन्निति । हे भगवः—भगवन् ! कस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवेत् । सर्वस्यास्य किमुपादानमिति पृष्टं भवति । उपादाने हि विज्ञाते उपादेयं विज्ञातं भवति । इदं च लोकतो विदितमेव । यद्यपि 'कस्मिन्नु विज्ञाते सर्वं विज्ञातं स्या'दिति प्रश्नः केवलं लोकदृष्ट्या न घटेत, मिथो विलक्षणतयाऽनुभूयमानानामेषां भिन्नभिन्नोपादानतानियम एव हि लोकदृष्ट्याऽवगम्यते । अथापि सामान्यतो महद्भ्यः श्रुतं नामानेन सर्वस्यास्य किमप्यस्त्युपादानमिति । तदयं विशेषप्रश्नः 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'ति । घटशरावमणिकानामाकारतो मिथो विसदृशानामपि मृत्त्वादिनाऽनुस्यूतेन धर्मेण विशिष्टं किञ्चिदुपादानं भवति, तेनैव न्यायेनास्यापि सर्वस्य किमपि स्यादित्यभ्यूह्य वाऽयं प्रश्नः ॥३॥

तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च ॥४॥

एवं पृष्टः स अङ्गिरास्तस्मै शौनकायोवाच । यदुक्तं तदुच्यते—द्वे इत्यादिना । द्वे विद्ये वेदितव्ये—ज्ञातव्ये; सम्पाद्ये इति यावत् । अयं च निर्देशः 'पाकं पचती'त्यादाविवाख्यातार्थमात्रविवक्षया । ननु—'कस्मिन्विदिते सर्वमिदं विदितं भवती'ति पृष्टे यदुच्यते 'द्वे विद्ये वेदितव्ये' इति, तदिदमपृष्टोत्तरम् । अत्र केचित्—नैष दोषः, क्रमापेक्षत्वात्प्रतिवचनस्य, अपरा हि विद्याऽविद्या सा निराकर्तव्या,

तद्विषये हि विदिते न किञ्चिद्विदितं स्यादिति, निराकृत्य हि पूर्वपक्षं पश्चात्सिद्धान्तो वक्तव्यो भवतीति न्यायादिति। तान्पृच्छामः—युक्तं नाम क्रमापेक्षत्वं प्रतिवचनस्य। युक्तं च पूर्वपक्षं निराकृत्य पश्चात्सिद्धान्तो वक्तव्य इति। अपरा हि विद्याऽविद्या सा निराकर्तव्येत्येतत्कथमुपपद्यते। विद्या ह्यविद्येत्येतद्वीरप्रसूर्वन्ध्येतिवद्व्याहतम्। नन्वपरेत्युच्यतेऽविद्येतीति चेत्, तावता कथमविद्यात्वम्, न ह्यपरत्वविशेषणमात्रेण विद्यातो विरुद्धामविद्यां विद्याशब्दो बोधयितुं प्रभवेत्। ननु—धर्माधर्मसाधनतत्फलावबोधरूपत्वाद्विद्यात्वमपि, बन्धकत्वादविद्यात्वमपीत्युक्तमपरा हि विद्याऽविद्येति चेत्; अपरविद्यायास्तावन्मात्रविषयकत्वं बन्धकत्वं च कथमवगतम्। ननु—'अथ परा यया तदक्षरमधिगम्यते' इति निर्देशादिति चेत्; किं तेन निर्देशेनाक्षरप्राप्तिविरोधिताऽपरविद्यायामवगम्यते, येन तस्यां बन्धकत्वं सिध्येत्। व्यज्यतां नामाक्षरप्राप्तौ हेतुत्वाभावः, न हि कस्यचित् क्वचिद्धेतुत्वाभावमात्रेण विरोधिता सिध्येत्। न हि मुमुक्षाया मोक्षे हेतुत्वाभावमात्रेण मोक्षे विरोधित्वम्। न च मोक्षे मुमुक्षा हेतुः, सत्यामपि तस्यां मोक्षानुदयात्। मुमुक्षा ह्यधिकारिविशेषणम्। नाप्यक्षरप्राप्तौ यथाकथञ्चिदुपकारकताऽपि नापराया इति व्यज्यत इति वक्तुं शक्यम्। ययेति करणश्रुत्या हि साधकतमत्वमेव ह्यवगम्यते। प्रकृत्यर्थानुरूपं चैतदेव। तत्तदेवान्यस्य नेति व्यज्येत। प्रयोजकत्वमात्रप्रतिक्षेपे वा विरोधित्वं कथमवगम्येत? अक्षरप्राप्तिहेतुत्वाभावकथनमात्रेणापरविद्यया तदविषयकया भाव्यमिति च कोऽयं नियमः? न हि तद्विषयकेनापि शास्त्रजन्यज्ञानमात्रेण तत्प्राप्तिर्भवेत्।

परोक्षेण तज्ज्ञानेन तत्सिद्धिर्भवताऽपि हि नेष्यते । न चात्र ज्ञायत इति श्रूयते, अपि त्वधिगम्यत इत्येव । उपसर्गस्वारस्यं धात्वर्थस्वारस्यं च परित्यज्य ज्ञायते इत्यस्यार्थस्याश्रयणं त्वनुचितम् । अपरविद्यायामृग्यजुःसामाथर्वणां गणनादक्षरविषयकत्वं तस्याः सिध्यत्येव । न ह्युपनिषदां वेदतो बहिर्भावः । ननु—'ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद' इत्येव निर्देशादपरविद्या केवलं शब्दसन्दर्भरूपैव, परा विद्या तूपनिषद्वेद्याक्षरविषयं विज्ञानमिति चेत् । विद्याशब्दस्यैकस्यैव विज्ञानशब्दविशेषोभयपरताश्रयणं क्लिष्टम् । सह्यतां च क्लेशः, अपरा विद्या धर्माधर्मसाधनतत्फलविषयेत्येतन्न घटेत; शब्दस्वरूपस्य सविषयकत्वासम्भवात् । यदि पुनस्तद्विषयकज्ञानजनकत्वेन तद्विषयकत्वमुपचर्यते, स्यादेतत्; वेदितव्यमित्यनेन विधेयं वेदनं किं शब्दस्वरूपग्रहणं उत शब्दार्थविज्ञानम् । प्रथमे न कस्यचिदर्थस्य विज्ञानं प्रसक्तमिति, 'सा निराकर्तव्या तद्विषये विदिते न किञ्चित्तत्त्वं नो विदितं स्यादिति' न युक्तं वक्तुम् । यदि शब्दार्थावधारणम्, तदोपनिषद्भिरप्यर्थबोधोऽविशिष्ट इति, धर्माधर्मसाधनतत्फलविषयाऽपरा सा चाविद्यैवेत्ययं वादः कथमुपपद्येत । तद्विषये विदिते न किञ्चित्तत्त्वं नो विदितं स्यादिति च कथमुपपद्येत । किञ्च—सा चेदविद्याऽपरा विद्या निराकर्तव्या, विधेः कथमन्वयः, वेदितव्य इति हि परेवापरापि विधीयते । न चाधिकारिभेदेन तदुपपत्तिः, अविशेषेणैव विधानात् । 'ब्रह्मविदो वदन्ती'ति च श्रूयते । अब्रह्मविदां चेत्साऽपरा विद्या, 'द्वे विद्ये वेदितव्ये परा चापरा चे'ति ब्रह्मविदः कथं वदेयुः । नन्वपरा त्यागाय वेदितव्या परा तु श्रेयस इति विभागमभिप्रेत्य

वदन्ति ब्रह्मविदः 'द्वे विद्ये वेदितव्ये' इति । मैवम् । विभाजकः शब्दस्तु न श्रूयते । अभिप्राये व्यञ्जकं न पश्यामः । अथाप्यपरविद्याया अंशतः कर्मावलम्बित्वेऽप्यंशतोऽक्षरावलम्बित्वमप्यस्तीति, त्यागाय सा वेदितव्येत्ययं विभागो न घटेत, उपनिषदोऽपि हि वेदाख्यशब्दसन्दर्भे परिगणिताः । एतेन–'अविद्यायामन्तरे वर्तमानाः' 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं' इति वचनमेवोक्तविभागे व्यञ्जकमिति निरस्तम् । तस्य तत्र व्यञ्जकताऽपि न सिध्यति । न हि कर्मविचारेण प्राप्तनिर्वेदस्य ब्रह्मविविदिषोर्गुर्वभिगमनविधानमात्रेण प्राक् प्रस्तुतयाऽपरविद्यया त्यागशेषभूतेन कर्मविज्ञानेन भाव्यमित्यस्ति नियमः । ये द्वे विद्ये परा चापरा चेति, ते परस्परोपकार्योपकारकतया मुमुक्षुणा वेदितव्यतया प्रस्तुते इत्येव किं न स्यात् । न च–'ऋग्वेद' इत्यादिनाऽपरां विद्यां प्रस्तुत्य, 'अथ परे'त्यादिना प्रथमखण्डेन परां विद्यां निरूप्य, द्वितीयखण्ड आदौ 'तदेतत्सत्य'मित्यादिना कर्मणां स्वरूपं फलं तन्निष्ठानामविद्यानिष्ठत्वं चोक्त्वा, 'परीक्ष्य लोका'नित्यादिना कर्मसु सञ्जातनिर्वेदस्याक्षरविद्याधिगमाय गुर्वभिगमनविधानादपरा विद्याऽविद्या सा च कर्मावलम्बेति स विभागः स्वरसतः सिध्यतीति वाच्यम् । यद्यपरविद्याविवरणरूपता 'तदेतत्सत्य'मित्यादिवाक्यस्य सिध्येत्, सिध्येन्नाम स विभागः । प्रथमखण्डान्ते सर्वज्ञत्वेन प्रतिपादितं यत्सकलजगदुपादानं परं ब्रह्म, तदेव हि तच्छब्देन निर्दिश्य 'तदेतत्सत्य'मित्यनेन सत्यशब्दवाच्यता तस्मिन्नुच्यते । श्रूयते च द्वितीयखण्डान्ते 'येनाक्षरं पुरुषं

वेद सत्य'मिति सत्यशब्दो ब्रह्मणि । 'तान्याचरत नियतं सत्यकामा' इति च ब्रह्मविद्याङ्गभूतः कर्मयोगो विधीयते । ब्रह्मव्यतिरिक्तस्य मिथ्यात्वं वर्णयतां कर्मसु सत्यत्वबोधकतया तस्य व्याख्यानकरणं तु न शोभते । यथाकथञ्चित्सत्यत्वोपपादनेऽपि न कश्चित्तेन विशेषः, येनैतद्वाक्यं स्वरसं स्यात् । उपरिष्टात्तु केवलं कर्म बन्धकं निरूप्य तत्फलानामस्थिरत्वं, ततश्च निर्वेदसम्भवस्ततश्च विविदिषेत्यादि निरूप्यते । किञ्च—प्रथमखण्डप्रस्तुतापरविद्याविवरणरूपत्वस्य 'तदेतत्सत्य'मित्यादिवाक्यस्याश्रयणे स्यान्नामापरविद्यायाः कर्मावलम्बता, तथापि—'ऋग्वेदो यजुर्वेद' इत्यादेः कर्मभागपरत्वमेव समुचितम्, शब्दसन्दर्भपरताश्रयणं तु नैव योग्यम् । परे तु अपृष्टोत्तरत्वशङ्कां वारयन्तः 'प्राप्तु'मित्यध्याहारमाश्रित्य यत्प्राप्तुं द्वे विद्ये वेदितव्ये तस्मिन्विदिते सर्वमिदं विदितं स्यादिति भावं वर्णयन्ति । एषां त्वध्याहारकृतः क्लेशः । असत्यप्यध्याहारे तत्परिहारः स्यादेव । तथाहि—फलितः प्रश्नस्त्वस्य किमुपादानमिति, उत्तरं तु मुमुक्षोरपेक्षितं विद्याद्वयं, तत्र परया प्राप्यतेऽक्षरं, तदेव च भूतस्यास्य योनिरिति । न च यच्छब्दनैयर्थ्यम् । द्वे विद्ये वेदितव्ये, इदं च न मयोत्प्रेक्ष्योच्यते, यत्—यस्मात् इति—एवं प्रकारेण ब्रह्मविद एव वदन्तीत्यर्थात् ॥४॥

**तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ॥५॥**

तत्रापरां विद्यामाह—तत्रेति । तत्र—परापरयोर्मध्ये । यद्यप्युद्देश-

क्रमतः परायाः प्रथमतो निरूपणं न्याय्यम् । अथापि निरूपयिष्यमाणायाः शास्त्रजन्यशाब्दज्ञानरूपाया अपरविद्याया ब्रह्मापरोक्षरूपपरविद्यायामुपकारकत्वेन पूर्वभावित्वाच्च प्रथमतो निरूपणम् । अत्र वेदादिपदं तत्तदर्थावबोधपरम् । अत्र शिक्षेत्यादिनाऽङ्गानां परिगणनात्साङ्गवेदजन्यं तदर्थविज्ञानमपरा विद्येत्युक्तं भवति । ननु वेदार्थावबोधः कथमपरा विद्या गण्यते, उपनिषदामर्थो हि परं ब्रह्म, उपनिषदश्च वेदरूपाः । सत्यम् । उपनिषदर्थावबोधरूपोऽप्ययं केवलं शब्दज्ञानजन्यः परोक्ष एवेत्यपरोक्षरूपान्निरूपयिष्यमाणात्साक्षाद्ब्रह्मप्राप्तिहेतुभूतादुपासनात्मकादपकृष्ट एवेत्यपरा विद्येत्युच्यते । इयमपरा विद्या मुमुक्षूणामपेक्षितैव, परायामुपकारकत्वात् । ननु कर्माणि विविधफलसाधनानि वेदैरवबोध्यन्ते, तदवबोधश्चोपघातक एव ब्रह्मविद्यायाम्, तत्कथमुच्यते 'अपरा विद्योपकारिके'ति । सत्यम् । परन्तु कामसङ्कल्पवर्जितानां तेषामतथात्वात्, प्रत्युतानुकूलत्वात्, कर्मप्रतिपादकभागस्यापि तत्रैव तात्पर्यात्, साङ्गसशिरस्कसमग्रवेदविज्ञानरूपापरविद्यायाः परविद्यायामुपकारकत्वं युक्तमेव । अत एव द्वयोर्विद्ययोर्वेदितव्यत्वं ब्रह्मविदभिमतं सङ्गच्छते । परां विद्यां निरूपयति—अथेत्यादिना । यया—विद्यया तदक्षरं—यत्त्वया जिज्ञासितं कस्मिन्विदिते सर्वमिदं विदितमिति तदक्षरमित्यर्थः । अधिगम्यते—प्राप्यते । तच्छब्दस्योक्तार्थविवक्षया विनाऽध्याहारक्लेशमपृष्टोत्तरत्वशङ्का निवारिता भवति । अथापि द्वे विद्ये वेदितव्ये इत्येतदपृष्टोत्तरमिति नाशङ्क्यम्, अस्योपोद्घातत्वात् । ब्रह्मविद्याविशेषविधानपूर्वकं प्रतिवचनं समुचितमेव । वेदितव्ये विद्ये द्वे इति वान्वयः ॥५॥

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥६॥

यत्—परया विद्यया प्राप्यते, तदक्षरमद्रेश्यमग्राह्यम्—न कस्यचिद्दृशो गोचरं न वा वाचः । सति रूपे स्याद्दृशो गोचरं, सति नामगोत्रादौ तेन व्यपदेष्टुं स्याद्योग्यम्, न तदुभयमपि, तद्धि अवर्णमगोत्रं च—गोत्रशब्दश्च नामगोत्रादीनामुपलक्षकः । यद्वा—ज्ञानेन्द्रियस्य कर्मेन्द्रियस्य चागोचरम् । अवर्णम्—शुक्लनीलादिरहितम्, अगोत्रम्—अन्वयरहितम् । करणागोचरमित्येतावन्मात्रं न, स्वयं करणशून्यमपीत्याह—अचक्षुःश्रोत्रं तदपाणिपादमिति । ज्ञानेन्द्रियकर्मेन्द्रियरहितमिति यावत् । न तस्य कालतः परिच्छेद इत्याह —नित्यमिति । न केवलं कालतः परिच्छेदाभावः, अपि तु देशतोऽपीत्याह—विभुमिति । न केवलमखिलदेशसम्बन्धमात्रम्, तत्र तत्र बहिरिवान्तरपि सम्बद्धमित्याह—सर्वगतमिति । ननु सूक्ष्मेषु कथमस्यान्तः प्रवेश इत्यत्राह—सुसूक्ष्ममिति । सूक्ष्मात्सूक्ष्मतरमित्यर्थः । अव्ययम्—अपचयरहितम् । भूतस्यास्य सर्वस्य योनिम्—उपादानं यत्—अक्षरं धीराः परिपश्यन्ति—परितः साक्षात्कुर्वन्ति । अयं भावः—यदि सर्वस्यास्योपादानमक्षरं स्यादुपादेय उपादानस्याक्षरस्यान्वयेन भाव्यम् । जगदिदं त्वतदात्मकमुपलभ्यत इति चेत् । सत्यम् । पामरैस्तु तथैवोपलभ्यते । धीरैः परब्रह्मयाथात्म्यविज्ञान-

रसिकैस्तु सर्वत एव तत्साक्षात्क्रियते, सर्वं तदात्मकतयैव साक्षात्क्रियत इति तस्य सर्वभूतयोनित्वे न किञ्चिद्बाधकमिति ॥६॥

**यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम् ॥७॥**

ननु भूतयोनित्वं कथं घटेताक्षरे ? उपादानभावो हि स्वरूपे विकारमपेक्षते, क्षीरं हि दध्युपादानं भवद्विकृतमेव भवति, अक्षरं त्वविकृतं कथमुपादानं भवेत्, तच्चेद्विक्रियमाणस्वरूपमक्षरमिति कथमुच्यते । विविधा भावाः कथं वा एकस्मादक्षरात्स्युः ? विजातीयेषु विजातीयैरुपादानैर्हि भाव्यम् । तथैव ह्युपलम्भः । मृज्जातीया मृज्जातीयेषु, लोहजातीया लोहजातीयेषु । अथ च विरूपयोरनयोरुपादानोपादेयभावः कथं घटेत ? अक्षरं च ततोऽत्यन्तविलक्षणमित्याशङ्काः परिहरन् दृष्टान्तनिरूपणेन भूतयोनित्वमक्षरे सङ्गमयति—यथेति । ऊर्णनाभिः—कीटविशेषो यथा स्वशरीरात्तन्तुं सृजति यथा च गृह्णते—संहरति । अनेन दृष्टान्तेनाविकृतस्वरूपस्याप्यक्षरस्योपादानत्वं सङ्गमितं भवति । न हि कीटस्वरूपे विकारः, अथाप्युपादानं कीटविशेषस्तन्तौ । यथा चैकस्यां पृथिव्यां विविधा व्रीहियवादय ओषधयः सम्भवन्ति । अनेनैकस्यैवाक्षरस्य मिथो विजातीयानां भावानामुपादानत्वं सङ्गमितम् । व्रीहियवादयो हि विजातीयाः, उपादानं पृथिवी त्वेकजातीयैव । यथा सतः पुरुषात्—जीवतः पुरुषात्, ततो विरूपाणि केशलोमानि भवन्ति । अनेन विश्वतो विस-

दृशस्याप्यक्षरस्य विश्वं प्रत्युपादानत्वं सङ्गमितम् । ननु–किमेभिर्दृष्टान्तैर्निरूपितैः, न हि दृष्टान्तनिरूपणमात्रेण सङ्गमनमसङ्गतस्य स्यात्, प्रत्युतासङ्गत्याशङ्का तत्रापि प्रसरेदेव । विसदृशस्य विसदृशे उपादानत्वं मिथो विजातीयेषु विविधकार्येष्वेकस्योपादानत्वं अप्राप्तविकारस्योपादानत्वं चासङ्गतमेव । मैवम् । सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणः स्थूलचिदचिद्विशिष्टे ब्रह्मण्युपादानत्वात् । अविकृतस्वरूपस्यापि परस्य ब्रह्मणः स्वशरीरभूतचिदचिद्द्वारा विकारान्वयोऽस्त्येव । न च दृष्टान्तवैगुण्यम्, अविभक्ततन्तुको ह्यूर्णनाभिः स्वयमेव विभक्ततन्तुको भवतीत्यत्रैवोर्णनाभिदृष्टान्ततात्पर्यात् । शरीरद्वारा विकारान्वये निरूपणीयेऽनुगुणदृष्टान्तता चोर्णनाभेः । अयमेव विशेषोऽत्र दृष्टान्तान्तरतः । एवमेकेनाप्युपादानेन मिथो विसदृशानि विविधानि कार्याण्यारभ्यन्त एव । तैर्मिथो विसदृशैरप्युपादानसरूपैर्भाव्यमित्येव नियमः, आरभ्यन्ते खलु विविधा अपि तिलमाषादयः सरूपया पृथिव्या । आरभ्यते च तथैव विश्वम् । विश्वशब्दवाच्यं चेह तच्छरीरकं परं ब्रह्मैव । उपादेये विशेषणद्वारा वैचित्र्येऽप्युपादानेन ब्रह्मणा सह स्वरूपतः सारूप्यमनपायमेव । एवमुपादेयं ह्यंशतः सरूपं विरूपं चोपादानस्य दृश्यते । केशलोमादि हि भौतिकत्वेन पुरुषतः सरूपं विरूपं च केशत्वादिना । तथैव विश्वशब्दवाच्यं स्थूलशरीरकं परंब्रह्मोपादेयं सूक्ष्मचिदचिद्विशिष्टपरब्रह्मणः कारणस्य चिदचिद्विशिष्टत्वेन सरूपं विरूपं च स्थूलचिदचिद्विशिष्टत्वेनेति नोक्तशङ्कावकाशः ।

परे तु प्राहुः—परस्य ब्रह्मणो जगदुपादानत्वं यादृशं तादृशं दृष्टान्ततः सङ्गमयति—यथोर्णनाभिरित्यादिना । अयमाशयः—यद्यपि ब्रह्माविकृतस्वरूपं विश्वतश्चिदचिद्रूपादन्यदपि, अथाप्युपादानं तत्र तत् । उपादानत्वं हि परिणामिकारणत्वेनाधिष्ठानकारणत्वेन च द्वेधा सम्प्रतिपन्नम् । यद्द्रव्यं यदात्मना विकरोति तद्द्रव्यं तस्मिन्परिणाम्युपादानमुच्यते, यथा मृद्द्रव्यं घटशरावादिषु । यदधिष्ठानकं सत्कारणं यदात्मना परिणमति, तत्र तदधिष्ठानोपादानम्, यथोर्णनाभिस्तन्तुविशेषे । ऊर्णा हि कीटविशेषाधिष्ठानकैव तन्त्वात्मना परिणमति । बीजविशेषाश्च पृथिव्यधिष्ठानका एव तिलमाषादिरूपेण भवन्ति । पुरुषाधिष्ठानकमेव किञ्चित्सूक्ष्मद्रव्यं केशलोमात्मकं भवति । ईदृशं चोपादानत्वं कार्यभूताद्विश्वतोऽन्यस्मिन्नपि परब्रह्मणि घटेतैव । सूक्ष्मचिदचिद्वर्गयोः परमात्मनः शरीरतया तदधिष्ठानकयोरेव हि स्थूलचिदचिदात्मना परिणतिः । ईदृशोपादानत्वं ब्रह्मणि द्रढयितुं दृष्टान्तत्रयनिरूपणम् । एतेनोर्णनाभिपृथिवीपुरुषाणां तन्त्वोषधिकेशात्मना परिणामस्यासम्भवात्तेषां दृष्टान्तीकरणेन ब्रह्मणि विश्वोपादानत्वलाभः कथमिति शङ्का परास्ता । नन्वेवं सति 'सच्च त्यच्चाभवत्' 'ब्रह्म स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः' 'तदात्मानं स्वयमकुरुते'त्यादिश्रुतीनां व्याकोपः स्यात् । मैवम् । न वयं परिणाम्युपादानत्वं ब्रह्मणः प्रतिक्षिपामः, उक्तश्रुतिभिस्तदप्यभ्युपगच्छामः । श्रावयिष्यति चेहैव द्वितीयखण्डे तदपि

१ विशिष्टस्य विशिष्टं प्रत्युपादानत्वे तस्य विशेष्यांशं प्रत्यप्युपादानत्वमस्तीति तस्यैवायं प्रकारान्तरेण निर्वाहः प्रतिभाति ।

पावकविस्फुलिङ्गदृष्टान्तेन । उपादेयता च परस्यैव ब्रह्मणः स्थूलचिदचिद्विशिष्टतावेषेण । नैतावता अधिष्ठानोपादानत्वस्य प्रदर्शितदृष्टान्तबलादवगम्यमानस्योपमर्दः । अधिष्ठानोपादानतावच्छेदकं हि सूक्ष्मचिदचिद्धर्मत्वेनाऽऽकारेण । तत्प्रतिसम्बन्ध्युपादेयत्वं च प्रपञ्चे स्थौल्ययोगादुपपद्यते । उपादानसामान्यलक्षणं तु—तादात्म्यसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंयोगविशेषान्यतरसम्बन्धावच्छिन्नकारणताश्रयत्वम् । नन्वास्तां नाम विश्वं प्रति ब्रह्मणोऽधिष्ठानोपादानत्वम्, प्रतिपिपादयिषितं तु प्रकृते परिणाम्युपादानत्वमेव, 'कस्मिन्विदिते सर्वमिदं विदितं स्या'दिति हि पृष्टम्, अधिष्ठानोपादानत्वस्य ब्रह्मणि प्रतिपादनमात्रेण न तदुत्तरितं स्यात्, न ह्यधिष्ठानोपादाने विदिते उपादेयं विश्वं विदितं स्यात्, तयोर्भेदात्, विश्वापेक्षया परिणाम्युपादाने विदिते तु ततोऽनन्यतयोपादेयं विश्वमिदं विदितं भवेत् । सत्यम् । पृष्टं नाम कस्मिन्विदिते सर्वमिदं विदितं स्यादिति । प्रश्नस्तु नोपादानजिज्ञासया किन्तु इदं विदितमिदं तु न विदितं तदस्येयं न्यूनता फल इत्येतद्वैषम्यं यस्मिन्विदिते न स्यात्—सर्वमेव वेदनफलमन्तर्गतं स्यात्तत्किमिति जिज्ञासयाऽयं प्रश्नः । 'सर्वविद्याप्रतिष्ठा'मिति पदेन च ब्रह्मविद्यायामयमेव विशेषः प्रथमं प्रस्तुतश्च । सर्वविद्याप्रतिष्ठात्वं ह्यस्याः समुद्रे गोष्पदमितिवत् । सर्वविद्याजन्यफलानामेतत्फलेऽन्तर्गततैवेति ॥७॥

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥८॥

उपादानत्वेऽपि निमित्तत्वमूर्णनाभिदृष्टान्ततो व्यज्यमानमाकारविशेषतः सङ्गमयन्विश्वोत्पत्तिप्रकारमाह—तपसेति । यथोर्णनाभिर्विहर्तुकामः स्वस्मिन्विलीनमाविष्कुर्वन्सङ्कल्पते तथा परं ब्रह्म सङ्कल्पते । तेन सङ्कल्पेन तपसा चीयते—अनन्यनिरपेक्षं स्वयमेव चीयते—वर्धते, सृष्ट्युन्मुखं भवतीति यावत् । तथा चोपादानस्यापि परब्रह्मणः सङ्कल्पविशिष्टवेषेण निमित्तत्वं घटतेवेति भावः । ततः—सृष्ट्युन्मुखाद्ब्रह्मणोऽन्नमभिजायते—भोक्तुर्जीवस्य भोगायैव यस्य स्वरूपम्, तत्प्रधानमन्नमुच्यते । यत्तदन्नमनभिव्यक्तं सूक्ष्मतया तदेतन्महदादिरूपेणाभिजायते—अभिव्यक्तं भवतीति यावत् । अन्नात्—महदादिरूपेण अभिव्यक्तात्तस्मात्, यद्भोगोपकरणतया प्रथितं प्राणो मनश्च तदुभयं जायते । यश्च भोक्ता भोगावच्छेदके भोगोपकरणे विवर्तमानेऽपि स्वयमपि वर्तमानो जीवः सत्यशब्दवाच्यः सोऽपि देवादिरूपेण जायते । इह जनिश्च तत्तद्योनिसम्बन्धरूपा । भोगस्थानभूताश्च लोकाः—मानुषलोकादयश्च तस्माज्जायन्ते । तेषु तेषु लोकेषु यानि कर्माणि, तेषु यदमृतं तत्फलीभूतं यत्स्वर्गादि सर्वं ततो जायते । एतेन कीटविशेषाद्यधिष्ठितादूर्णादितः तन्त्वादिकमिवाक्षराधिष्ठितात्प्रधानात्सङ्कल्परूपाधिष्ठातृशक्तिविक्षोभिताद्भोक्तृभोग्यभोगोपकरणभोगस्थानरूपेण विभक्तमिदं विश्वमाविर्भवतीति दृष्टान्तानुगुणो विश्वसम्भवप्रकारः प्रदर्शितः ॥८॥

यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।
तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥९॥

उक्तं विश्वसम्भवमनुवदंस्तपःशब्दं विवृणोति—साधारणैरसाधा-

रणैश्च प्रकारैर्यः सर्वं जानाति, यस्य सिसृक्षोस्तपः सङ्कल्पान्नातिरिच्यते, तस्मादक्षराद्यत्सर्वस्य मूलं प्रधानं ब्रह्मशब्दवाच्यं तज्जायते। नन्वनादेरनन्तस्यास्य जनिः कथमित्यत्राह—नाम रूपं जायते—नामरूपान्तरविशिष्टतया जायत इति व्यपदेशो योग्य इति भावः। ननु किं रूपान्तरम्, येन नामान्तरं तत्राह—अन्नं च जायते—भोग्यपृथिव्याद्याकारविशिष्टं भवतीति यावत्। चकाराद्भोगोपकरणभोगस्थानाद्यात्मना परिणतिः सङ्गृह्यते। परे तु—पूर्वमन्त्रेऽपि ब्रह्मशब्दः प्रधानपर एव। यथा बीजमङ्कुरावस्थातः प्राक्पृथिव्यन्तरेवोच्छूनतां प्राप्नोत्यधिष्ठानमहिम्ना, तथा तपोलक्षणेनाधिष्ठानमहिम्नोच्छूनतां प्राप्नोतीत्युच्यते—तपसा चीयते ब्रह्मेति। एतेन प्रधानस्य महदवस्थातः प्राक्तनमक्षराव्यक्तावस्थाद्वयमुक्तं भवति। ततः प्रधानादुपचयं प्राप्तादन्नं महदादिपृथिव्यन्तं समष्टितत्त्वं जायते ततश्च यथासम्भवं प्राणादि। ननु चीयतां नाम तपसा सङ्कल्पलक्षणेन प्रधानम्, नैतावता दृष्टान्त इव दार्ष्टान्तिकेऽधिष्ठानोपादानत्वलाभः, परिणाम्युपादानं हि बीजादि पृथिव्याद्यधिष्ठानमहिम्नोपचीयमानं तदधिष्ठितं सदेवाङ्कुरात्मना परिणमति, न चेह तथेत्याशङ्कामपनुदन्नाह—तस्मादिति। न केवलं परस्य ब्रह्मणः सङ्कल्पेनोपचितमनन्याधिष्ठितं परिणमति, येन निमित्तत्वमात्राशङ्का स्यात्, किन्तु पृथिवीतो बीजमिवौषध्यात्मनोर्णनाभित ऊर्णेव तन्त्वात्मना तस्मात्सर्वज्ञात्तत्सङ्कल्पेनोपचितं प्रधानं विभक्तनामरूपमन्नाद्यात्मनाऽऽविर्भवति। तस्मादित्यपादाने पञ्चमीति प्राहुः ॥९॥

इति प्रथममुण्डकप्रथमखण्डभाष्यम्।

**तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यं-स्तानि त्रेतायां वहुधा सन्ततानि । तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके ॥१॥**

अथ परा यया तदक्षरमधिगम्यते सा विद्या वेदितव्येत्युक्तं प्राक् । केन कस्मात्कथं वेदितव्येति जिज्ञासायां द्वितीयः खण्डः प्रारभ्यते । फले स्पृहयालवो हि जनाः प्रवर्तेरन्फलसाधनेष्वेव कर्मसु प्रथमम् । न ते विद्यायामस्यामधिकारिणः । यस्तु परीक्ष्य लोकान्कर्मचितान्प्राप्तनिर्वेदस्तेनेयमधिगन्तव्येति बोधयन्निर्वेदाय कर्मसु दोषमाविष्कर्तुमादौ कर्मगतिं निरूपयति—यदा लेलायत इत्यादिना । तर्हि मुमुक्षुणा कर्माण्यशेषाणि स्वरूपतस्त्याज्यान्येवेति मन्येत कश्चित्, न तथेत्यादावेव ज्ञापयति—तदेतत्सत्यमित्यनेन । क्वचिदनवगतोऽप्युपदिष्टोऽर्थो नातिक्षतये । विपरीतमवगतो ह्यनर्थाय । तद्भाविनोऽपि भ्रमस्य युक्तं हि प्रथमतो निवारणम् । तत्—यदुपक्रमे परया विद्यया प्राप्यमित्युक्तम्, एतत्—अव्यवहितमन्त्रे सर्वज्ञः सर्वविदिति च यदुक्तम्, सत्यम्—स्वरूपतः स्वभावतश्च सततैकरूपतया सत्यशब्दवाच्यम् । कवयः—अतीन्द्रियार्थसाक्षात्कारसमर्था महर्षयो यान्यग्निहोत्रादीनि कर्माणि, मन्त्रेष्वपश्यन्—मन्त्रैकप्रकाश्यानि साक्षात्कृतवन्तः । त्रेताग्निषु सम्बद्धानि तानि कर्माणि मुमुक्षवोऽपि यूयं न त्यजत, किन्तु सत्यकामाः—उक्तलक्षणे सत्ये परब्रह्मणि कामो येषां तथाविधा

आचरत । लकारव्यत्ययश्छान्दसः । ननु यैः कर्मभिरयमसौ वा लोकस्तैरनुष्ठितैरवर्जनीयं लोकयोर्गतागतम्, उप्तं हि बीजं सजातीयमेवाङ्कुरमुत्पादयेदेवेत्यत्राह—एष वः पन्थाः सुकृतस्य लोक इति । सुकृतसाध्येऽस्मिन्नमुष्मिन्वा लोके पन्थाः—प्रापक एष एव—सत्यशब्दवाच्यः परमात्मैव । अयं भावः—कर्मणां हि न फलजननसामर्थ्यं बीजादाविव स्वतः किमप्यस्ति, इन्द्रादिशरीरद्वारा परमात्मनः सपर्यारूपाण्येवेति स एव तत्तच्छरीरकस्तेन तेन कर्मणाऽऽराधितस्तत्तत्फलं प्रयच्छति वाञ्छितम्, यदि सकामा यूयं कुरुत तदाऽपि वः स एव पन्थास्तत्र कामे, तत् कामनान्तरं त्यक्त्वा तदेककामनया यद्याचर्यते कथं बन्धः, प्रीतो हि परमात्मा वाञ्छितमेव तु फलं प्रयच्छेदिति । एतच्छब्दस्य परमात्मपरता कथमिति न शङ्क्यम् । सत्यकामा इत्यव्यवहितपदे हि सत्यशब्दः श्रूयते । यद्वा—किं नः कर्मणा सकामेनाकामेन वेत्यत्राह—एष वः पन्थाः सुकृतस्य लोक इति । यदि यूयं मुमुक्षामात्रेण सर्वथा त्यजत कर्म, इह लोके युष्माभिर्दुष्कृतमेव कृतं स्यात् । न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्, शरीरयात्राऽपि च वो न प्रसिध्येदकर्मणाम्, तथा च यथायथमाचरणेनावर्जनीयो दुराचारप्रसङ्गः, तस्मादिह लोके वः सुकृतस्य पन्थाः—मार्ग एष एव—सत्यकामतया कर्माचरणमेव न तु त्यागः । यावल्लोकेन सम्बन्धस्तावदपरिहार्यत्वात्कर्मणः कर्तव्यमेव सत्यकामतया कर्म, लोकातिगत्वे तु न तदपेक्षेति भावः । यदा लेलायत इत्यादेरिवास्यापि कर्मगतिनिरूपणपरताश्रयणे न वयं प्रत्यवतिष्ठामहे, सत्यशब्दस्यापेक्षिकताश्रयणं तु सोढव्यम् ॥१॥

यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने। तदा-
ऽऽज्यभागावन्तरेणाऽऽहुतीः प्रतिपादयेत् ॥२॥

अथ कामिनां कर्मगतौ क्लेशबाहुल्यं परिमितफलतां च निरूपयन्नारभते—यदेत्यादिना। हव्यवाहने समिद्धे यदाऽर्चिर्लेलायते—प्रचलति तदा आज्यभागावन्तरेण—आज्यभागयोर्मध्ये आहुतीः प्रतिपादयेत्। तथा सति श्रद्धया हुतं भवति, अन्यथा त्वहुतसममिति भावः ॥२॥

यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमना-
ग्रयणमतिथिवर्जितं च। अहुतमवैश्वदेवमवि-
धिना हुतमासप्तमांस्तस्य लोकान्हिनस्ति ॥३॥

यथाविधि हुतमप्यन्येन नित्येन कर्मणा विरहितं चेत्तदप्यननुष्ठितसममनर्थदं चेत्याह—यस्येति। यस्याग्निहोत्रं यथावद्विहितमपि दर्शादिरहितं तत्तस्य लोकानासप्तमान्हिनस्ति। तत्सन्ततौ यावत्सप्तपुरुषं अनर्थः स्यादिति भावः। एतेन फलकामनया क्रियमाणेषु कर्मस्वल्पेऽपि स्खालित्येऽनर्थबाहुल्यापादकत्वरूपो दोषः सूचितः ॥३॥

काली कराली च मनोजवा च सुलोहिता या
च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुची च देवी
लेलायमाना इति सप्त जिह्वाः ॥४॥ एतेषु
यश्चरते भ्राजमानेषु यथाकालं चाऽऽहुतयो

ह्याददायन् । तं नयन्त्येताः सूर्यस्य रश्मयो
यत्र देवानां पतिरेकोऽधिवासः ॥५॥ एह्येहीति
तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं
वहन्ति । प्रियां वाचमभिवदन्त्योऽर्चयन्त्य
एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥६॥

अप्रस्खलितमनुष्ठितानामपि फलं परिमितमेवेति प्रदर्शयन्फलोपलम्भप्रकारमाह—कालीत्यादिना ब्रह्मलोक इत्यन्तेन । हव्यवाहस्य सन्ति सप्त जिह्वाविशेषाः कालीत्यादयः, तेषु दीप्यमानेषु यथाकालमाहुतीराददायन्—अर्पयन्सन्यो यजमानः कर्माचरति, तमेता आहुतयः सूर्यस्य रश्मयो भूत्वा, सूर्यरश्मिद्वारेति यावत्, देवानां पतिश्चतुर्मुखो देवकोटावद्वितीयो यत्राधिवसति, तं देशं सत्यलोकं नयन्ति । नातः परं ते समर्थाः । कथं नयन्ति ? उच्यते—सूर्यस्य रश्मिभिः संसृष्टाः सुवर्चस आहुतय एह्येहीति प्रियां वाचं व्याहरन्त्यः, एष पावनः सुकृतफलभूतश्चतुर्मुखलोको वः—युष्माकमेव भोगायेति, अर्चयन्त्यः—पूजयन्त्यः, पूजावचनैः प्रीणयन्त्यः, वहन्ति—प्रापयन्ति ॥४-६॥

प्लवा ह्येतेऽदृढा यज्ञरूपा अष्टादशोक्तमवरं
येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति
मूढा जरामृत्युं ते पुनरेवापियन्ति ॥७॥

तदेवं सत्यलोके गतानामपि पुनरावृत्तिरवर्जनीयेति, कामनया क्रियमाणानि सर्वाणि कर्माणि परिमितफलान्येवेत्याह—प्लवा ह्येत इति । प्लवा ह्येते अदृढा यज्ञरूपाः—संसारसागरे निमज्जतां जनानामेते यज्ञरूपाः प्लवा अदृढाः, पारप्रापणासमर्थाः । यज्ञा विशिष्यन्ते—अष्टादशेति । लाक्षणिकोऽयं निर्देशः । षोडशर्त्विजः पत्नी यजमानश्चेत्यष्टादशभिर्निर्वर्त्यत्वात् । अष्टादशभिः साध्या इत्यर्थः । ननु कथं निन्द्यते अदृढाः प्लवा इति ? यान्येव प्राक् 'तान्याचरत सत्यकामा' इति श्रेयसे विहितानीत्यत्राह—उक्तमवरं येषु कर्मेति । येषु—फलकामनया क्रियमाणेषु यज्ञेषु सम्बद्धं कर्म, अवरमुक्तम्—अपकृष्टतया तत्त्वयाथात्म्यविद्भिरुक्तम् । उक्तं च भगवता 'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जये'ति । तद्युक्तमेते प्लवा अदृढा यज्ञरूपा इति । ये पुनरेतदेव श्रेयःसाधनं नान्यदित्येतत्साध्ये स्वर्गादावेवाभिनन्दन्ति, ते मूढाः पुनः पुनर्जरामृत्यू प्राप्नुवन्ति ॥७॥

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः
पण्डितंमन्यमानाः । जङ्घन्यमानाः परियन्ति
मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥८॥

अविचारितकर्मस्वरूपाः पण्डितम्मन्याः स्वयं धीराः—न परोपदेशश्रवणादिना, अत एवाविद्यायां मध्ये वर्तमानाः, अविद्यामध्यनिमग्ना इति यावत्, जङ्घन्यमानाः—जन्मजरादिभिर्निहन्यमानाः, मूढाः, अन्धेन नीयमाना अन्धा इव परियन्ति—परितोऽनर्थबहुलेष्वेवाटन्ति । न सुखलवभागिन एते ॥८॥

अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्य-
भिमन्यन्ति बालाः। यत्कर्मिणो न प्रवेदयन्ति
रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥९॥

अविद्यायां बहुधा वर्तमानाः—कर्तृत्वभोक्तृत्वाद्यनेकैः प्रकारैरविद्यायामेव निवसन्तः, अविद्याऽऽवृता इति यावत्। बालाः—अत्यल्पफलसाधनानुष्ठानमात्रेण वयमेव चरितार्था इत्यभिमन्यन्ते। किञ्च—यत्कर्मिणो न प्रवेदयन्ति रागात्। ते हि कर्मशीलाः स्वर्गाद्यल्पफलेषु रागावेशान्न कर्मणां न वा कर्माराध्यस्य नापि कर्मकर्तुः स्वस्य यथावस्थितं स्वरूपं प्रकर्षेण जानन्ति। तेन हेतुना क्षीणलोका अत एवातुराश्च्यवन्ते ॥९॥

इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेद-
यन्ते प्रमूढाः। नाकस्य पृष्ठे ते सुकृतेऽनुभू-
त्वेमं लोकं हीनतरं वा विशन्ति ॥१०॥

इष्टमिति श्रौतं लक्ष्यते, पूर्तमिति च स्मार्तं कर्म लक्ष्यते। परिमितफलसाधनमप्येतदेव वरिष्ठम्—सर्वपुरुषार्थसाधनतया श्रेष्ठं मन्यमानाः प्रमूढाः—प्रकर्षेण मूढाः श्रेयोऽन्यदुत्कृष्टं नैव जानन्ति। ते तु सुकृते—सुकृतफलीभूते, साध्ये साधनोपचारः। नाकस्य पृष्ठे—स्वर्गस्योर्ध्वभागे सुखमनुभूय, क्षीणे पुण्ये, इमं मानुषं ततोऽपि निहीनं वाऽन्यं लोकं विशन्ति ॥१०॥

**तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥११॥**

एवं कर्मणामल्पास्थिरफलत्वं निरूप्य ब्रह्मज्ञानस्यानन्तस्थिरफलतां निरूपयति—ये विद्वांसः—आत्मयाथात्म्यविदः, अत एव शान्ताः—निवृत्तरागाः, उपरतकरणाः, अरण्ये विजने प्रदेशे स्थिताः, भैक्षचर्यां चरन्तः—इदं चोपलक्षकम्, अयत्नोपनतेन शरीरधारणं कुर्वाणा इति यावत्, तपःश्रद्धे—तपः—आश्रमानुगुणं कर्म, श्रद्धा—विद्या, तदुभयमुपवसन्ति—सेवन्ते । न केवलं कर्म न केवलं विद्याम्, किन्तु वर्णाश्रमनियतकर्माङ्गेन सह ब्रह्मविद्यां सेवन्त इति यावत् । तपः—ब्रह्म, श्रद्धा—तद्विषयकत्वरा, तदुभयं सेवन्ते । त्वरापूर्वकं ब्रह्म सेवन्त इति भाव इत्यपरे । ते विरजाः—विरजसः, विधूतपाप्मानः, सूर्यद्वारेण—सूर्यो द्वारं यस्मिन् मार्गे, स चार्चिरादिः, तेन मार्गेण प्रयान्ति तं देशविशेषम् । यत्र देशेऽव्ययात्माऽमृतः स पुरुषोऽस्ति—अव्यय आत्मा स्वरूपं यस्य सोऽव्ययात्मा सततैकरूपः । अमृतः—भोग्यभूतः, निरतिशयसुखस्वरूप इति यावत् । सुखस्यैव भोग्यत्वाद-सङ्कोचन्यायाच्च । स पुरुषः—यः परविद्यागम्यतयोपक्रमे प्रस्तुतः । अयं च पुरुषशब्दो नार्वाचिनं बोधयेत्, विशेषणद्वयस्वारस्यभङ्गप्रसङ्गात्, न हि हिरण्यगर्भो निरतिशयसुखरूपो न वा सततैकरूपः । अव्यवहितमन्त्रे च 'येनाक्षरं पुरुषं वेद सत्य' मिति पुरुषशब्दः श्रूयते परे ब्रह्मणि ॥११॥

परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमाया-
न्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभि-
गच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥१२॥

तदेवमन्यदेवानन्तस्थिरफलम्, अन्यदेव तु कर्मफलं, तदनयोरन्तरमजानानो यः कर्मफलेष्वेव रमते, नासावधिकारी ब्रह्मविद्यायाम् । यस्तु परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्, य इत्यध्याहार्यम्, श्रूयते ह्युत्तरत्र तच्छब्दः, यो निर्वेदमायात्स गुरुमभिगच्छेदित्यन्वयः । तथा च यः स्वर्गकामः स यजेतेत्यादौ कामनासम्बन्धस्येव निर्वेदसम्बन्धस्याधिकारिविशेषणत्वलाभः । परीक्ष्य लोकान्कर्मचितान्—आपाततः सुखरूपतया प्रतीयमानानिमानर्थाभासान्स्वर्गादिलोकान्कर्मसाध्यान्परितः प्रमाणैर्विचार्य इदमीदृशमिति यथावदवधृत्य, यो ब्राह्मणः-वेदवित्, निर्वेदमायात्-प्राप्नुयात् । ननु कुतो निर्वेदस्तद्विचारेणेत्यत्राह—नास्त्यकृतः कृतेनेति । योऽयमकृतः-अनन्तस्थिरफलरूपः स कृतेन कर्मणा नास्त्येव, यस्मात्कर्मसाध्याः सर्वे लोकाः क्षयिष्णव एव, तद्विचारे निर्वेदः स्यादेवेति भावः । इतिशब्दाध्याहारेण नास्त्यकृतः कृतेनेति निर्वेदमायादिति वा योजना । सञ्जातनिर्वेदोऽयमधिकारी तस्याकृतस्य नित्यसुखरूपस्य ससाधनस्य विज्ञानार्थं गुरुमेवाभिगच्छेत् । एवकारेण न यतः कुतश्चिदियं विद्या सम्पादनार्हा, किन्तु वक्ष्यमाणलक्षणाद्गुरोरेवेति व्यज्यते । कीदृशम्? उच्यते—श्रोत्रियं ब्रह्मनिष्ठम्—श्रोत्रियादप्यब्रह्मनिष्ठान्न सा विद्याऽधिगन्तव्येति भावः । कथमभिगच्छेदित्य-

त्राह—समित्पाणिरिति । एतेन शिष्यभावासाधारणाकारो ज्ञाप्यते । तथाचानेनैव प्रकारेणोक्तलक्षणाद्गुरोरुक्तेनाधिकारिणोक्ता परा विद्या सम्पाद्येत्युक्तं भवति ॥१२॥

तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचि-
त्ताय शमान्विताय । येनाक्षरं पुरुषं वेद
सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥१३॥

स गुरुरुपसन्नाय—शिष्यभावेन स्वसन्निधिमुपगताय तस्मै—जिज्ञासमानाय प्रशान्तचित्ताय—अवहितमनसे शमान्विताय—अवहितबाह्यकरणाय ब्रह्मविद्यां तत्त्वतो—याथातथ्येन प्रोवाच—प्रब्रूयात् यया तमक्षरं सत्यं पुरुषं वेद—येनेति लिङ्गव्यत्ययश्छान्दसः । अत्र प्रशान्तचित्ताय शमान्वितायेत्याभ्यामुपदिष्टस्य यथावद्ग्रहणेऽपेक्षितमवधानं विवक्षितम् ॥१३॥

इति प्रथममुण्डकद्वितीयखण्डभाष्यम् ।

---

## अथ द्वितीयमुण्डकम् ।

तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः
सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति ॥१॥

उक्तमधिकारिविशेषादि । अथाधिकारिणे विधिवदुपसन्नाय ब्रह्म-

निष्ठेन गुरुणा यदुपदेष्टव्यं यद्विज्ञानादनन्तस्थिरफललाभस्तदेतद्दिशदयन्नुपदिशति—तदेतत्सत्यमित्यादिना खण्डान्तरेण । तत्सत्यमेतत्—यत्प्रस्तुतं 'वेद सत्य' मिति, तत्सत्यम्, एतत्—वक्ष्यमाणस्वरूपम् । सत्यशब्दवाच्यं परं ब्रह्मेदानीं निरूप्यत इति यावत् । यथा प्रदीप्तात्पावकाद्विस्फुलिङ्गास्तेजस्त्वेन तत्सरूपाः सहस्रश आविर्भवन्ति, एवमेवाक्षराद्विविधा वियदादयो देवादयश्च भावाः प्रभवन्ति, लीयन्ते च तत्रैवाक्षरे । ननु सरूपाः स्युरक्षरस्येमे भावाः, का नः क्षतिः, न च भेदभङ्गः । विशिष्टं ह्यक्षरं स्वविशेषणीभूतचिदचिद्द्वारा विविधं विभज्यते । एकमप्येतद्विशेषणद्वारा भावा इति बहुवचनान्तनिर्देशमर्हति । अस्यैव तैस्तैः प्रकारैर्भावशब्दवाच्यता च मुख्या । न चैतावता विशेष्यविशेषणयोर्मिथो विशेषणानां चाभेदः । सूक्ष्मचिदचिद्विशिष्टमक्षरं स्थूलचिदचिद्विशिष्टाक्षरात्मना स्वयमेव परिणमतीत्यन्यत्र विस्तरश उपपादितम् । दृष्टान्तोऽपि विशिष्टस्यैव । इयान्विशेषः । दृष्टान्ते विशेष्यः सावयवः, दार्ष्टान्तिके तु निरवयव इति ॥१॥

दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥२॥

इममाशयमनवगच्छतो मन्दस्यानेन दृष्टान्तेनापाततः प्रतीयमानमर्थान्तरं निरस्यन्नाह—दिव्यो ह्यमूर्त इति । यदीमे भावा विस्फुलिङ्गा इव पावकादक्षरात्सरूपाः सहस्रशः प्रादुर्भूतास्तर्हि वियदादिभ्यो न भेदोऽक्षरस्य विस्फुलिङ्गादिव पावकस्येति न भ्रमितव्यम्, स ह्यक्षरात्परतः परः—यद्वियदादेर्विकारस्यास्य सर्वस्य मूलमक्षरं प्रधानं

ततः परः, यश्च ततः परं जीवतत्त्वं ततोऽपि परः—भिन्नः । तत्र प्रधानादन्यत्वे लिङ्गं दिव्यो ह्यमूर्त इत्यादि । स हि दिव्यः—द्योतनगुणवान् । यदयं ज्ञानात्मा स्वयं विद्योतते तत एवायं जडात्प्रधानादन्यः । अमूर्तश्च—प्रधानं तु भवति पृथिव्यादिरूपेण मूर्तम्, अयं तु न जातु तथा, अपरिच्छिन्नस्वरूपो ह्ययम् । पुरुषश्च—प्रधानं हि वपुरात्मना परिणतं पूरिष्यते, अयं तु पुरि तस्यामन्तरात्मतया शेते । बाह्याभ्यन्तरश्च—बहिरन्तश्च सर्वं व्याप्य वर्तमानः, प्रधानं त्वस्मात्परिमितं व्याप्तमेतेन । अजश्च—प्रधानं तु महदाद्यात्मना स्वरूपतो जनिमत् । जीवतत्त्वात्परत्वे लिङ्गमुच्यते—अप्राण इत्यादि । जीवो ह्यनादिकर्मणा गुणमयेनावृतो रजसा धूसरः, अयं तु न तथा, शुभ्रः सर्वदा—अत एव प्राणेन मनसा च रहितः, स हि ताभ्यामितस्तत आकृष्यते ॥२॥

**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं**
**वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥३॥**

के ते भावा ये निगदिताः 'भावाः प्रजायन्ते तत्र चैवापि यन्ती' ति, तान्विविच्याऽऽह—एतस्मादिति । श्रूयते च प्रथममुण्डकेऽपि 'तथाऽक्षरात्संभवतीह विश्व'मिति सङ्ग्रहेणाभिहितस्यार्थस्यानुपदं विविच्यानुवर्णनं 'ततोऽन्नमभिजायते अन्नात्प्राणो मनः सत्य' मित्यादिना । यानि भोक्तुरुपकरणभूतानि प्राणादीनि, यानि च भोग्यानि वाय्वादीनि, तान्येतस्मादक्षरात्परतः पराज्जायन्ते । पृथिव्या अनेकभूताश्रयत्वाद्विश्वस्य धारणीति विशेषणम् ॥३॥

---

१ अक्षरात्परः अक्षरात्परतश्च पर इत्यन्वयमभिप्रेत्यैवं व्याख्यातम् ।

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥४॥

यतो विविधा भावाः प्राणादयस्तं विशिनष्टि—एष हि सर्वभूतान्तरात्मा—भूतानां सर्वेषामेषामन्तरात्मैषः। अयं च शरीरशरीरिभावः शाखान्तरप्रसिद्धः। एतेनार्णवतरङ्गयोरिव बिम्बप्रतिबिम्बयोरिव वा स्वरूपेऽनतिरेको जगद्ब्रह्मणोर्नेति व्यज्यते। सर्वशरीरिणोऽस्य पुरुषविधतां निरूपयत्यनुस्मृतये—अग्निर्मूर्धेत्यादिना। अस्येति सर्वत्रानुषज्यते। अग्निः—द्युलोकः, 'असौ वा लोकोऽग्नि'रिति श्रुतेः। वाग्विवृताः—वाग्विस्ताराः। हृदयं विश्वमस्य—विश्वमस्य सङ्कल्पविलसितमिति विश्वं मनस्त्वेन रूप्यते, साध्ये साधनोपचारात्। पद्भ्यां पृथिवी—एष इति सम्बध्यते 'प्रकृत्यादिभ्य उपसंख्यान' मिति तृतीया, पादावस्य पृथिवीति यावत् ॥४॥

तस्मादग्निः समिधो यस्य सूर्यः सोमात्पर्जन्य ओषधयः पृथिव्याम्। पुमान्रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात्सम्प्रसूताः ॥५॥

याः प्रजाः प्रजायन्ते योषिल्लक्षणपञ्चमाग्नौ ता अप्येतस्मादेव सर्वभूतान्तरात्मनः प्रजायन्त इत्याह—तस्मादग्निरिति। तस्मात्—सर्वभूतान्तरात्मनः पुरुषात्परस्मादेव बह्व्यः प्रजास्ता अपि सम्प्रसूताः, या एवं क्रमेण भवन्ति। कः क्रमः? उच्यते। यस्य सूर्यः समित्—

समिन्धे हि सूर्यः, स द्यौः प्रथमोऽग्निः, पर्जन्यो द्वितीयः, पृथिवी तृतीयः, पुमांश्चतुर्थः, योषित्पञ्चमः, तत्र प्रथमाग्नौ सोमभावं प्राप्तं भूतसूक्ष्मं सोम उच्यते, वृष्ट्यभिमानिनं पर्जन्यं द्वितीयमग्निं प्राप्तात्तस्मात् पर्जन्यो वर्षः प्रभवति, ततो वर्षात्मतामापन्नात्तृतीयेऽग्नौ पृथिव्यामोषधयो भवन्ति, ओषधिभावमापन्नात्ततः पुरुषाख्ये चतुर्थेऽग्नौ रेतो भवति, पुमान् रेतोभावमापन्नं तद्योषिति सिञ्चति, ततो योषिल्लक्षणे पञ्चमाग्नौ प्रजा इति ॥५॥

तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे
क्रतवो दक्षिणाश्च । संवत्सरश्च यजमानश्च
लोकाः सोमो यत्र पवते यत्र सूर्यः ॥६॥

वेदानां वैदिकानां कर्मणां तत्फलानां च तत एवोद्भव इत्याह—तस्मादृच इति । दीक्षाः—यजमानगता नियमविशेषाः । यज्ञाः—अग्निहोत्रादयः । क्रतवः—सयूपाः । पवते—पुनाति ॥६॥

तस्माच्च देवा बहुधा सम्प्रसूताः साध्या
मनुष्याः पशवो वयांसि । प्राणापानौ व्रीहियवौ
तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥७॥

कर्मसु यान्यङ्गानि तेषामपि तत एव सम्भव इत्याह—तस्माच्च देवा इति । वाय्वादिभेदेन बहुधा देवाः सम्प्रसूताः, यानुद्दिश्य कर्माणि विधीयन्ते । तथा साध्याश्च । ये च कर्मस्वधिकारिणो मनुष्याः । ये च पशवः पक्षिणः कर्मसु विनियुज्यमानाः । प्राणा-

पानौ—यच्च जीवनं कर्मस्वधिकृतये भवति । व्रीहियवौ—हविरर्थौ । यच्च तपः । या च श्रद्धा, यया कर्मणां सिद्धिः । सत्यम्—यदग्निहोत्रादावङ्गभूतम् । यच्च ब्रह्मचर्यम् । यश्च विधिर्योजकः । सर्वमिदं तस्मादेव ॥७॥

सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः
सप्त होमाः । सप्त इमे लोका येषु चरन्ति
प्राणा गुहाशया निहिताः सप्त सप्त ॥८॥

इन्द्रियाणि तद्विषयास्तद्व्यापारास्तदाश्रयाः सर्वमिदं तस्मादेवाक्षरात्प्रभवन्तीत्याह—सप्तेति । चक्षुषी श्रोत्रे घ्राणे नासिका चेति शीर्षण्याः सप्तप्राणाः—सप्तेन्द्रियाणि, त एव सप्तार्चिषः—अग्नयः, एते तस्मादक्षरात्प्रभवन्ति । समिधः—विषयाः । रूपादिभिर्विषयैर्हि प्राणाग्निः समिन्धे । ते च तस्मात्प्रभवन्ति । विषयेन्द्रियसंप्रयोगरूपा ये होमाः सप्त, ते च तस्मात्प्रभवन्ति । शरीराख्यगुहामधिशयानास्त एते प्राणाः प्रतिपुरुषं सप्त निहिता येषु लोकेषु चरन्ति, ते सप्त लोका गोलकरूपास्तस्मादेव प्रभवन्ति ॥८॥

अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते
सिन्धवः सर्वरूपाः । अतश्च सर्वा ओषधयो
रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥९॥

सर्वे समुद्रा गिरयश्चास्मादेवाक्षरात्प्रभवन्ति । गङ्गाद्या बह्व्यो नद्योऽप्यस्मादेव प्रभवन्ति । अस्मादेव सर्वा ओषधयः । अस्मादेव च

सर्वो रसः । ननु ते ते रसादयः स्वस्वोपादानेभ्य ओषधिप्रभृतिभ्यः प्रादुर्भवन्ति तत्कथमुच्यत अत इति तत्राह—येनैष भूतैस्तिष्ठते ह्यन्तरात्मा—शरीरतयाऽपृथक्सिद्धप्रकारभूतैर्भूतैर्विशिष्टस्तिष्ठति । स्वेतरसमस्तवस्तुप्रकारोऽयमेवेति ततस्ततो जायमाने तत्र तत्र तत्तदात्मा तत्तत्प्रकारोऽयमेव हेतुरिति भावः ॥ ९ ॥

पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृ-
तम् । एतद्यो वेद निहितं गुहायां सोऽ-
विद्याग्रन्थिं विकिरतीह सोम्य ॥१०॥

पुरुष एवेदं विश्वं—दृश्यमानमिदमखिलं परः पुरुष एव । स हि सर्वस्यास्यान्तरात्मा । न ह्यतदात्मकं किमप्यस्ति । रूपभेदेऽपि स एव तैस्तै रूपैस्तिष्ठतीति युक्तमुक्तं 'पुरुष एवेदं विश्व'मिति । तदिदमजानतामहमयमस्म्ययं चान्योऽस्तीति मुह्यतामन्यदेव कर्मान्यदेव ज्ञानम्, न हि तैरर्थकामपरैरव्यवसायिभिः फलवादरतैः क्रियमाणे कर्मणि लेशतोऽपि ज्ञानस्यान्वयः । जानतां तु कर्मैव तपः—ज्ञानम् । 'ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुत'मिति भावनया हि ते कर्म कुर्वन्ति । तत् कर्म ज्ञाने परिसमाप्यते । एवमजानतां भोग्यमन्यान्यदत्यल्पम् । जानतां तु ब्रह्मैव परामृतम्—सर्वतः परमुत्कृष्टं भोग्यम् । यद्वा—कर्मेति साधनं लक्ष्यते । साधनं तप एव ज्ञानमेव नान्यत् । अन्यत्तु फलाभाससाधनत्वात्साधनाभास एव । ब्रह्मैव हि परममृतम्—उत्तमं फलम् । अनेन तत्त्वोपायपुरुषार्थत्रयं शोधितं भवति । हे सौम्य यो वेदेममर्थं गुहायां निहितम्—अतिरहस्यम् । सर्वस्य हृदय-

गुहायामन्तरात्मतया सन्निहितमिमं परं पुरुषमक्षरं यो वेदेति वा । स उपासक इहैवाविद्याग्रन्थिम्—अविद्यामतिदृढामपि विकिरति—विनाशयति, कर्मबीजं दग्धं भवतीति यावत् ॥१०॥

इति द्वितीयमुण्डकप्रथमखण्डभाष्यम् ।

---

**आविः सन्निहितं गुहाचरं नाम महत्पदमत्रैतत्समर्पितम् । एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥१॥**

अधिगतयेऽक्षरस्योपायं निरूपयितुमुत्तरः खण्डः प्रवर्तते—आविरिति। आविरित्यव्ययम्, प्रकाशमयम् । स्वयंप्रकाशैकरसस्वरूपमिति यावत् । सन्निहितम्—सर्वस्य, न कस्यचिद्विप्रकृष्टम्, सर्वत्रैव सम्बद्धमिति यावत् । विशेषतो गुहाचरम्—हृदयगुहायामन्तरात्मतया सन्निहितम् । नेदमन्वेष्टव्यमन्यत्र, स्वस्यैव हृदयपथे सन्निहितमिति व्यज्यते । एजत् प्राणत् निमिषत् यच्चान्यत्, चकारोऽनुक्तसमुच्चये, सर्वमेतदत्राक्षरे परस्मिन्समर्पितम् । अत एवेदं महत्पदम्—महानाश्रयः । आत्मतयाऽस्य सर्वस्य धारकमिति यावत् । क्रियाविशेषग्रहणादिदं व्यज्यते । सदसत्—यत्कार्यं यत्कारणमुभयात्मकमेतत् । सूक्ष्मचिदचिद्विशिष्टत्वेन स्थूलचिदचिद्विशिष्टत्वेनोभयात्मकताऽस्य । वरेण्यम्—प्रार्थनीयं सर्वैः । तदिदं जानथ श्रेयसे । गुहाचरमित्येतावता न भ्रमितव्यं जीव एवायमिति । इदं तु परं विज्ञानात्—विज्ञानघनाज्जीवात् । यद्वरिष्ठं प्रजानाम् । इयं च षष्ठी शेषे । जीवघनस्य ह्यवर्जनीयो

जन्मसम्बन्धः । अकर्मवश्यस्याक्षरस्य प्रजातो वरिष्ठत्वं सुस्पष्टम् । तस्मादेतदक्षरं विज्ञानघनात्परमेव ॥१॥

**यदर्चिमद्यदणुभ्योऽणु च यस्मिँल्लोका निहिता लोकिनश्च । तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः । तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि ॥२॥**

यद्विहितं निःश्रेयसाय सामान्यतो जानथेति तच्च ज्ञानं ध्यानरूपमिति विशेषयन्नाह—यदर्चिमदित्यादिना । अर्चिःशब्देन प्रकाशो लक्ष्यते, नित्ययोगे मतुप्, प्रकाशैकरसस्वरूपमिति यावत् । समुचितोऽयमर्थः । श्रुतं ह्याविरित्यव्यवहितम् । अनूद्यते च प्रायः पूर्वः परेण । यदणुभ्योऽणु—सर्वतः सूक्ष्मम् । तन्महतोऽस्य कथं गुहाचरत्वमित्याशङ्काऽपास्ता । एजत्प्राणन्निमिषदेवास्मिन्समर्पितमिति न मन्तव्यम्, ये च लोकाः—भूरादयः, ये च लोकिनः—एजदादयः सर्वे यस्मिन्निहिताः । सर्वस्य धारकमिति यावत् । तदेतदक्षरं ब्रह्म—ईदृशमहिमशाल्यक्षरं ब्रह्म । स प्राणस्तदु वाङ् मनः—यानि लोकिनां मनुष्यादीनामुपकरणभूतानि प्राणादीनि तान्यपि तदात्मकत्वेन तदेकधार्यत्वात्तदेव । तदेतत्सत्यम्—सततैकरूपम् । तदमृतम् । आनन्दमयं हि तत् । तद्वेद्धव्यं विद्धि—लक्ष्यमिव शरेणावहितेन मनसा वेद्धव्यं जानीहि । एतेन न ज्ञानमात्रं साधनम्, श्रवणमात्रेण तदलाभात्, किं तु निध्यानमिति व्यज्यते । श्रावयिष्यति च कण्ठरवेण शेषवाक्यतः ॥२॥

**धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासा-**

निशितं सन्दधीत । आयम्य तद्भावगतेन
चेतसा लक्ष्यं तदेवाक्षरं सौम्य विद्धि ॥३॥

कथं केन वेद्धव्यमित्यत्राह—धनुरिति । धनुर्गृहीत्वौपनिषदम्—नेह लौकिकस्य धनुषः कार्यम्, उपनिषत्प्रसिद्धं धनुर्ग्राह्यम् । किं तत्? अनुपदं वक्ष्यति—प्रणव इति । तच्च महास्त्रम्—अस्यते क्षिप्यतेऽनेनेत्यस्त्रम् । धनुषा हि क्षिप्यते शरः । प्रणवाख्यं धनुस्तु महास्त्रम् । श्रूयते चास्य महत्ता 'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्' 'एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते' इति । शरं ह्युपासानिशितं सन्दधीत—उपासया—प्रकृतिविलक्षणात्मस्वरूपविषयेण निरन्तरचिन्तनेन, निशितम्—तीक्ष्णीकृतं शरमुक्ते धनुषि सन्दधीत । शरश्च बुद्धिः । सा चेत्प्रकृतिविलक्षणात्मस्वरूपचिन्तनविधुरा नालमक्षरं लक्ष्यमुपस्प्रष्टुमपि । तदुक्तमुपासानिशितं शरमिति । आयम्य—संहितशरं तद्धनुराकृष्य । हस्तेन धनुष इव नेहाकर्षणम्, किंतु तद्भावगतेन चेतसा—तस्य धनुःस्थानीयस्य प्रणवस्य यो भावः आशयः, जीवपरमात्मनोः शेषशेषिभावावगाही, तद्गतेन चेतसा । तदर्थपरिचिन्तनमेव तदाकर्षणमिति भावः । यथा धानुष्कः शरं धनुषि सन्धायाऽऽकर्णमाकृष्य धनुरेकाग्रया दृष्ट्या लक्ष्यं लक्षयति वेद्धुम्, एवमाकृष्य प्रकृतं धनुर्लक्ष्यं तदेवाक्षरं सौम्य विद्धीत्याह—विद्धि—लक्षयेत्यर्थः । तद्भावगतेन चेतसेत्यस्य मध्यमणिन्यायेन विद्धीत्यनेनापि सम्बन्धः । तस्मिन्नक्षरे भावः—

भावना, तद्गतेन—तदेकाग्रेण मनसेति यावत् । निरीक्ष्य लक्ष्यमप्रमत्तेन वेद्धव्यमित्युत्तरेण वाक्यार्थः परिसमाप्यते । तद्भावगतेन चेतसा धनुरायम्य लक्ष्यं तदेवाक्षरं वेद्धव्यं हे सौम्यैवं विद्धीत्यनेनैव वा वाक्यार्थः परिसमाप्यते । वेद्धव्यमिति चानुषङ्गः ॥३॥

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥४॥

किं धनुः कः शर इत्यत्राह—प्रणव इति । प्रणवो धनुः शरो ह्यात्मा—प्रणवेन ह्यालम्बनेन ब्रह्म लक्ष्यमभिविशति बुद्धिरप्रतिहता धनुषेव शरः । आत्मशब्देनेह बुद्धिरुच्यते । ब्रह्म तल्लक्ष्यमुच्यते—तत्—यदुपवर्णितमाविरित्यादिना तत् । अप्रमत्तेन वेद्धव्यम्—प्रमादश्चेह बाह्यवासना । शरवत्तन्मयो भवेत्—शरेणेव बुद्ध्या तन्मय्या भाव्यमित्यर्थः । मयडत्र प्राचुर्ये । शरः शूरेण प्रास्तो विदार्य लक्ष्यमन्तर्निलीनः परितो लक्ष्यसम्बद्धस्तदनालीढस्वांशरहिततया तत्प्रचुरो भवति, तथा बुद्ध्या ब्रह्मणि गाढं प्रविष्टया तदनालीढस्वांशरहितया तत्प्रचुरया भाव्यमिति भावः । एतेन ध्यानकाष्ठोक्ता । यद्वा—शरो ह्यात्मेत्यत्रात्मशब्देन जीव उच्यते, तस्योपासानिशितता च प्रकृतिविविक्तज्ञानैकाकारस्वरूपनिरन्तरचिन्तनाभ्यासबलेन सर्वदा स्वस्मै प्रकाशमानविविक्तस्वरूपता, ईदृशमात्मशरं प्रणवे धनुषि सन्धाय वेद्धव्यं ब्रह्म लक्ष्यम् । शरवत्तन्मयो भवेत्—यथा प्रक्षिप्तस्तीक्ष्णः शरः प्रविश्य लक्ष्यमन्तर्निलीनस्ततोऽविभक्तस्तत्प्राचुर्यात्पृथग्व्यवहारशून्यो भवति, तथा तद्भावगतेन चेतसा ब्रह्म लक्ष्यमालक्ष्य तत्र योजितोऽयमात्माऽस्तात्मव्य-

वहारो भवेत् । स्वातन्त्र्यज्ञानमूलककेवलाहंग्रहविधुरो ब्रह्मात्मकस्वात्मद्रष्टाऽहं ब्रह्मास्मीत्येवात्मस्वरूपं ब्रह्मसमाधिस्थः पश्येदिति भावः । ब्रह्मसमाधिस्थेन स्वात्मस्फूर्तिमताऽपि न भाव्यमिति वा ॥४॥

यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥५॥ अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः । ओमित्येवं ध्यायथाऽऽत्मानं स्वस्ति वः पाराय तमसः परस्तात् ॥६॥

निरूपणमुखेन विवक्षितं ध्यानं कण्ठरवेण विधास्यन्नाह—यस्मिन्नित्यादिना । तत्र प्रथमं जानथेति निर्देशः, अनन्तरं तस्यैव विशेषतो निर्देशो ध्यायथेति । यस्मिन्नक्षरे पृथिवी अन्तरिक्षं च ओतम्—सम्बद्धम् । चकारात्तत्रत्यानां सङ्ग्रहः । सर्वैः प्राणैश्चक्षुरादिभिः सह मनश्च यस्मिन्नोतम् । तमेवैकमात्मानं जानथ—सन्ति जीवात्मानः प्रतिशरीरं भिन्नभिन्नाः, यस्तेभ्योऽन्यः सर्वस्यास्यैक आत्मा—अभिन्न आत्मा, तं परमात्मानं द्युलोकादीनामाधारभूतं जानथ । अन्या वाचः—इतोऽन्यस्यावगमकं सर्वं वादमात्रम्, न तद्विज्ञानायालम्, तत्तां विमुञ्चथ । कस्मादुच्यते अन्या वाच एवेति, अमृतस्यैष सेतुः—एष एव हि संसारसागरसन्तरणोपायभूतो नान्यः । प्रथममन्त्रे 'गुहाचर'मित्यनेनाभिप्रेतमर्थं विशदयति—अरा इवेति । यत्र

नाड्यो रथनाभावरा इव सम्बद्धास्तत्रान्तः—हृदये स एष चरते—वर्तते । कथमयमकर्मवश्यः प्राणिनां हृदये वर्तते ? बहुधा जायमानः—अयं हि सर्वज्ञः सर्वशक्तोऽपारमहिमा व्यूहादिरूपेण स्वेच्छया जायमानः, तदथ-मन्तर्यामिस्वरूपेण सर्वेषां हृदि सन्निहितः । यद्वा—स एष सर्वान्तरात्मैकोऽपि प्रतिहृदयं विग्रहविशिष्टवेषेणाविर्भवन् बहुरूपो भवतीत्यभिप्रायेण 'बहुधा जायमान' इत्युक्तिः । ओमित्येवं ध्यायथात्मानम्—एवंभूतं परमात्मानं प्रणवेनावलम्बनेन ध्यायथ । कस्मै फलाय ?, तमसः परस्तात्पाराय—संसारस्य यत्परं तीरं तस्मै । एवमुपदिश्य स्वोपदिष्टार्थे श्रद्दधानान् शिष्यान्प्रत्याशिषं प्रयुङ्क्ते—स्वस्ति व इति ॥५–६॥

**यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठितः । मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय । तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥७॥**

'अन्तश्चरत' इति शरीरान्तः स्थित्युक्तेः स्यात्कस्यचिज्जीव एवायमिति भ्रमस्तमपाकरोति—यः सर्वज्ञ इति । भ्रमस्य चेदल्पोऽप्यवसरः सहि सपदि निराकर्तव्यः, अत एव 'गुहाचर'मिति निर्देशेन सम्भाव्यमानो जीवभ्रमः 'परं विज्ञाना'दित्यपाकृतः प्रथममन्त्रे । अन्तश्चरति नामैषः, प्रतिष्ठितस्तु दिव्ये व्योम्नि ब्रह्मपुरे हि—अप्राकृताकाशे ब्रह्माख्ये पुरे-स्थानविशेषे प्रकर्षेण दिव्यमूर्त्या स्थितः । एष महिमा भुवि सर्वो यस्यास्यैव—यः प्रतपति तपनः, यः पवते पवनः,

ये चान्ये विविधा भावाः सर्वमेतद्यस्यैश्वर्यैकदेशः । यः सर्वज्ञः सर्ववित् । तदस्य शरीरान्तःसञ्चरणोक्तिमात्रेण जीव एवायमिति न भ्रमितव्यमिति भावः । एवंभूतोऽप्ययमन्ने—शरीरे, हृदयं सन्निधाय—सङ्गत्य प्रतिष्ठितः । किं कर्मणा ? नेत्याह—मनोमयः—मनःशब्देन सङ्कल्पो लक्ष्यते, सङ्कल्पप्रचुरः, सङ्कल्प एवास्य हृदयगुहाप्रवेशे साधनं न कर्मेत्यर्थः । सङ्कल्पमात्रेण हृदयेऽवतीर्ण इति यावत् । कस्मै फलाय ? प्राणशरीरनेता—प्राणो जीवः, शरीरमन्नपरिणतिः, तयोरुभयोर्नियामकः । नियमनमेव प्रयोजनमित्युक्तं भवति । तद्विज्ञानेन—तस्यास्यान्तर्यामिस्वरूपस्य विज्ञानेन—विशिष्टज्ञानेन । परिपश्यन्ति-परितः साक्षात्कुर्वन्ति । किं तत् ? आनन्दरूपममृतं यद्विभाति—आनन्द एव रूपं दिव्याकारस्वरूपं वा यस्य तत् । विशेषेण परे व्योम्नि ब्रह्मपुरे प्रकाशते नित्यमुक्तानाम् । यद्वा—'अन्तश्चरते बहुधा जायमान' इति निर्देशमात्रेणायमेव जीव इति न भ्रमितव्यम्, द्वौ ह्यस्मिन् शरीरे निवसतः, निवसतोर्निरूपके च भिद्येते, तथा तत्तदधिष्ठेयाकारश्च, तदन्य एव जीवादयम् । तथाहि—यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि, एष हि सर्वज्ञः सर्वशक्तः सन्निहितः, अपरस्तु न तथा, किन्तु मनोमयः प्राणशरीरनेता—मनोमयः—जीवः स्वयं ज्ञानमयोऽपि कर्मणा सङ्कुचितज्ञानप्रभो मनसोपाधिना समाश्लिष्टस्तद्वृत्तिप्रचुरस्तन्मयो भूत्वा सङ्कल्पविकल्पादिसमुत्थितरागद्वेषाद्यभिभूतो दुःखसागरनिमग्नो वर्तते । मयडत्र प्राचुर्ये । मनःशब्दो मानसवृत्तिपरः । यतो मनोमयः, तत एव प्रयाणकाले मनो यदनुधावति, तदनु

प्राणानाम्–इन्द्रियाणां मुख्यप्राणस्य, सूक्ष्मशरीरस्य च नेता। यथा दह्यमाने कुटीरे भिक्षुकः सपदि दग्धावशिष्टं गृहीत्वाऽपसर्पेदेवमपसर्पन्नयं फल्गुः। यस्यैष महिमा भुवि, स तेन सहैकस्मिन्प्रदेशे वसतिमात्रेण कथं तदभेदी स्यात्। एवं यद्यपि द्वाभ्यामधिष्ठितं शरीरमेकम्, अधिष्ठेयाकारस्तु भिद्यते, दिव्ये ब्रह्मपुरे व्योमनि ह्येष प्रतिष्ठितः–एष सर्वज्ञः प्रजा रक्षितुं राजा पुर इव पुरेऽस्मिन् शरीरे प्रतिष्ठितः। अतो ब्रह्मणः पुरमिदमिति ब्रह्मपुरमिति निर्देशश्च स्वरसः। पुरशब्दस्वारस्यात् षष्ठी स्वस्वामिभावसम्बन्धमेवोत्सर्गतो बोधयेत्। पुरस्य रक्षणं च पौराणां नियमनद्वारैवेति पौरस्थानीयस्य जीवस्य नियाम्यत्वं गम्यते। दिव्यशब्द आश्चर्यपरः। 'विचित्रा देहसम्पत्ति' रिति हि स्मर्यते। उत्कृष्टपरो वा। मानुषशरीरस्य विद्याधिकारापादकतयेतरत उत्कृष्टता। पश्वादिभ्यो ज्ञानप्रसरणाधिक्येन द्योतनयोगाद्वा तथोक्तिः। व्योमनीति व्योमत्वेन विशिष्य निर्देशादधिवसितुर्मालिन्यानापादकता शरीरसम्बन्धस्य व्यज्यते। मनोमयस्तु प्रतिष्ठितोऽन्ने–अत्ताऽयमन्ने प्रतिष्ठितः, ममेदमत्तुः फलभोगायेति रमते इति यावत्। व्योमनीत्यनुक्त्वा हृदयं सन्निधायेति सलेपद्रव्यनिर्देशेन शरीरसम्बन्धेन जीवस्य सुखदुःखादियोगरूपमालिन्यसम्भवो व्यज्यते। तदेवमनयोर्वैलक्षण्यमुक्त्वा प्रकृतमुपसंहरति—तद्विज्ञानेनेति। तस्य जीवात्मनो विज्ञानेन–प्रकृतिविविक्तस्वरूपचिन्तनेनाङ्गभूतेन, तत्सन्निहितमानन्दरूपममृतं यद्विभाति परमात्मस्वरूपमुक्तसर्वज्ञत्वादिगुणविशिष्टम्, तद्धीराः साक्षात्कुर्वन्ति। एतेन प्रत्यगात्मस्वरूपमसाक्षात्कृतवतां पार्श्वस्थस्य परमात्मनः साक्षात्कारो

न भवेदिति व्यज्यते । तत् विज्ञानेनेति वा पृथक्पदच्छेदः । अनयोर्मध्ये यदानन्दरूपममृतं विभाति—विशेषतः प्रकाशते, तत्—परमात्मतत्त्वम्, विज्ञानेन पूर्वोक्तेन ध्यानरूपेण साक्षात्कुर्वन्तीत्यर्थः ॥७॥

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥८॥**

पश्यतां हृदयकमले परमात्मानं कर्मबीजं प्रणश्यतीत्याह—भिद्यते इति । हृदयस्य ग्रन्थिः—वासनामयः । छिद्यन्ते सर्वसंशयाः—संशया इत्युपलक्षकम्, सर्वेऽप्यन्यथाज्ञानविपरीतज्ञानसंशयाः प्रणश्यन्ति । यान्यस्य सर्वस्य मूलभूतानि कर्माणि, क्षीयन्ते नाम तानि। कदा ? परे अवरे यस्मात्, तस्मिन्नक्षरे परमात्मनि दृष्टे—निध्यानतः साक्षात्कृते । साक्षात्कारश्च निध्यानान्नार्थान्तरम्, किन्तु निध्यानमेव चिरकालाभ्यासपाटवेन साक्षात्काररूपं भवति । प्रारब्धादन्येषामेव कर्मणां क्षयो बोध्यः, प्रारब्धस्य भोगादेव क्षयात् ॥८॥

**हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥९॥**

दिव्ये ब्रह्मपुरे ह्येष इत्युक्तमर्थं पुनरप्याह प्रतिपत्तिदार्ढ्याय—हिरण्मय इति । हिरण्मये—प्रकाशमान इति यावत् । परे कोशे—प्रकृष्टे धनागारे, धनं च ज्ञानिनां ब्रह्मैव, तत् तदीयस्थानविशेष इहाभिप्रेतः । वर्तमानमिति शेषः । विरजम्—रजःशब्देन गुणत्रयं लक्ष्यते,

गुणत्रयासंसृष्टमिति यावत्। निष्कलम्—निरंशम्, उपचयापचय-शून्यमिति यावत्। तच्च शुभ्रम्—स्वच्छम्, निर्दोषमिति यावत्। ज्योतिषां—प्रकाशकानामपि ज्योतिः—प्रकाशकम्। तच्चैतन्न सर्वे प्राकृता जानन्ति, किंतु तद्यदात्मविद एव विदुः—आत्मसाक्षात्कार-कुशला महर्षय एव जानीयुः। यद्वा—अन्तर्यामिणो विज्ञाने प्रत्य-गात्मविज्ञानस्याङ्गत्वमाह—हिरण्मय इति। कोशे—कुड्मले, हृद-यकमले इति यावत्। विज्ञानप्रभाप्रसरणावच्छेदकदेशत्वेन सुवर्ण-कमलवद्दीप्यमानतया हिरण्मयश्चायं कोशः। अत एव कोशान्तरतः परश्च। तस्मिन्नेतस्मिन्कोशे यत् ब्रह्म वर्तते तदात्मविदो विदुरिति सम्बन्धः। कोशे वर्तमानमपि न तदीयेन रजसा धूसरमित्याह—विरजमिति। गुणत्रयसंस्पर्शरहितमिति यावत्। निष्कलमित्यादि यथाव्याख्यातम्। तदन्तर्यामिस्वरूपं प्रकृतिविविक्तात्मस्वरूपविद एव जानीयुर्नान्य इति भावः ॥९॥

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा वि-
द्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनु-
भाति सर्वं तस्य भासा सर्वमिदं विभाति ॥१०॥

ज्योतिषां ज्योतिष्ट्वमुपपादयति—न तत्रेति। तत्र—परे ब्रह्मणि सूर्यो न भाति—न प्रकाशते, सूर्यस्तस्य न प्रकाशको भवतीति यावत्। न चन्द्रतारकं नेमा विद्युतो भान्ति—ये च चन्द्रादयो दिव्यास्तेऽपि न प्रकाशकाः। कुतोऽयमग्निः—अत्यन्तसन्निकृष्टात्यल्प-

देशप्रकाशको भौमोऽयमग्निस्तु कुतः । ननु प्रकाशकतया लोके प्रसिद्धस्य सूर्यादेस्तत्प्रकाशकता कुतो नेत्यत्राह—तमेव भान्तमनुभाति सर्वम्—स हि भाति सर्वतो दीप्तिमान्निरन्तरम्, तमनु सर्वमिदं सूर्यादि भाति । ननु कथमुच्यते तमेव भान्तमनुभातीति ? तत्राह—तस्य भासा सर्वमिदं विभातीति । तस्यैव परमात्मनः प्रकाशलेशेनैषां प्रकाश इत्यर्थः । परमात्मसङ्कल्पाधीनप्रकाशा इति यावत् ॥१०॥

ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म
दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं
ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ११ ॥

तत्र तत्र प्राणिनां हृदयगुहायां सान्निध्यं 'गुहाचर'मित्युपक्रमे श्रावितम् । श्रावितं च मध्ये पुनः पुनः 'दिव्ये ब्रह्मपुरे' 'हिरण्मये परे कोशे' इति च । तदिदमन्तरात्मतयाऽवस्थानं न केवलं प्राणिमात्रापेक्षया, परं तु यदिदं विश्वं चराचरात्मकं सर्वत्रैवास्यान्तरात्मतयाऽवस्थितेर्विश्वमखिलं तदात्मकमित्यन्तरात्मतां प्रस्तुतामेवोपसंहरति—ब्रह्मैवेति । इदममृतं ब्रह्मैव पुरस्तादपि पश्चादपि दक्षिणतश्चोत्तरेणाधश्चोत्तरं प्रसृतम्, सर्वदिगवच्छेदेन वर्तमानमखिलमेतदात्मकमेवेत्यर्थः । अत एव विश्वमिदं चराचरं ब्रह्मैव—ब्रह्मात्मकमेव, तत्सर्वान्तरात्मतयेदमेव वरिष्ठम्—अत्युत्तमम् ॥११॥

इति द्वितीयमुण्डकद्वितीयखण्डभाष्यम् ।

---

# अथ तृतीयमुण्डकम् ।

द्वा सुपर्णा सयुजा सखाया समानं
वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं
स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥१॥

परविद्यागम्यतया प्रस्तुतस्य भूतयोन्यक्षरपुरुषस्य परस्य ब्रह्मणो हृदयगुहासम्बन्धोक्तेरात्मशब्देन निर्देशाच्च सम्भाव्यमानं जीवब्रह्मणोरभेदभ्रमं विशेषतः प्रतिक्षिपन्नुपायमक्षराधिगतौ निरूपयत्यनेन खण्डेन । यद्यपि निवर्तितो नाम भ्रमः प्राग्यःसर्वज्ञ इति मन्त्रे, उपायश्चोपदिष्टः प्रणवो धनुरित्यादिना, अथापि तत्प्रतिक्षेपो नातिस्फुटः प्राक्, इह तु स्फुटीक्रियते । सत्यादिसहकारिनिरूपणं चोपायनिरूपणे विशेषः । पक्षिणाविव वृक्षमिदं शरीरमाश्रयतो जीवपरमात्मानाविति सादृश्यमवलम्ब्य रूपयति—द्वा सुपर्णेति । द्विवचनेनैव यद्यपि द्वित्वमवगम्यते तथाऽपि जीवादर्थान्तरत्वं परमात्मनि द्रढयितुं द्वेति निर्देशः । आकारश्छान्दसः । सुपर्णौ–शोभने ह्यनयोः पर्णे, ते चैकस्य ज्ञानकर्मणी, परस्य तु सङ्कल्पशक्ती, तौ हि ताभ्यां तत्र तत्र पततः । सयुजौ–सहैव युञ्जतस्तत्र शरीरे । अविनाभूतत्वात्सखायाविवेति सखायौ । समानं वृक्षम्–एकं शरीराख्यवृक्षम् । परिषस्वजाते–प्रविष्टाविति यावत् । तयोरन्यः पिप्पलं स्वाद्वत्ति–तयोरिति निर्धारणे षष्ठी, योऽन्यः परस्मात्स जीवः पिप्पलमत्ति–पिप्पलमिति फलं लक्ष्यते । फलं च यं वृक्षमेष प्रविष्टस्तस्य । कर्मणः फलमिति यावत् ।

स्वाद्विति क्रियाविशेषणम्। स्वादुता चेह बौद्धा। प्रीतिपूर्वकमत्तीति यावत्। अन्यस्तु परमात्मा तदनश्नन् प्रकाशते केवलम्। अन्य इत्युभयत्र निर्देशादनयोर्भेदो दृढीक्रियते ॥ १ ॥

समाने वृक्षे पुरुषो निमग्नोऽनीशया शो-
चति मुह्यमानः। जुष्टं यदा पश्यत्यन्य-
मीशमस्य महिमानमिति वीतशोकः ॥२॥

समाने वृक्षे पुरुषो निमग्नः—एवमेकस्मिन्वृक्षे द्वौ स्तः, तत्रैकः पुरुषो योऽसौ भोक्ता कर्मणः फलस्य, स तस्मिन्नेव वृक्षे निमग्नः—गाढं सक्तः। अन्यस्त्वीशस्तत्र वर्तमानोऽपि पुष्करपलाश इव सलिलमश्लेषः। अयं त्वनीशया—असामर्थ्येन निमग्नः। अत एव मुह्यमानः—देवोऽहं मनुष्योऽहमिति स्वस्वरूपमोहं प्राप्तः शोचति—ममायमर्थो नष्टो ममायमापतितोऽनर्थ इति। यदा पुनरयमीशं स्वस्मादन्यं स्वाधिष्ठित एव वृक्षे वर्तमानम्, अथापीशितृत्वादेव जुष्टम्—हृष्टम्, जुष हर्षे कर्तरि क्तः। पश्यति—साक्षात्करोति। स वीतशोको भूत्वा महिमानमस्य—अपहतपाप्मत्वादिलक्षणमस्य महिमानम्, इति—एति, प्राप्नोति। गुणाभावश्छान्दसः॥ यद्वा—जुष्टं यदा पश्यत्यन्यमीशं तथा महिमानं च जगद्रूपमस्यैवेश्वरस्येति च पश्यति, तदा वीतशोको भवतीत्यन्वयः। अयं भावः—शरीरे निमग्नो ह्ययं जीवोऽन्वहमहं ममेति मुह्यन् शोचति, यदा पुनरयमवसरप्रतीक्षेण परमकारुणिकेन पार्श्वगेन परमात्मना रिरक्षुणाऽवसरे समुद्बोधितः समधि-

गत्य तत्त्वदर्शिनः प्रसन्नमुपदेशं—'नेह किमपि जगति स्वतन्त्रमस्ति वस्तु, किन्तु तस्यैवेश्वरस्य परमात्मनः शेषभूतम्, तन्नाहमस्मि स्वतन्त्रो न मम किञ्चित्, परमात्मैव नः स्वामी स चात्यन्तविलक्षण' इति साक्षात्कुर्यात्तदा वीतशोको भवतीति ॥२॥

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं
पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे
विधूय निरञ्जनः परमं साम्यमुपैति ॥३॥

उक्तम् 'अस्य महिमानमिती'ति, नैतावता तद्भावापत्तिरिति मन्तव्यम्, किन्तु परमं साम्यमेवेत्याशयेनाह—यदेति । यद्वा—न केवलं वीतशोको भवतीति, किन्तु तेन परमात्मना सत्यकामेन सत्यसङ्कल्पेनानन्दमयेन साम्यमापन्नो भवतीत्याशयेनाह—यदेति । पश्यः—द्रष्टाऽयं जीवः, कर्तारम्—अस्य सर्वस्य । ब्रह्मणः कार्यभूतस्य प्रधानस्य वा योनिम्—कारणम् । ब्रह्म योनिमिति वा पदच्छेदः । योनिमुपादानमित्यर्थः । ब्रह्मेति विशेष्यसमर्पकम् । ईशं सर्वस्य । रुक्मवर्णम्—देदीप्यमानदिव्यविग्रहम् । पुरुषं परमं यदा पश्येद्योगदृष्ट्या, तदाऽसौ विद्वान्—ब्रह्मस्वरूपवित्, पुण्यपापे बन्धमूलभूते सपदि विधूयाश्व इव रोमाणि, निरञ्जनः—निर्लेपो भूत्वा, अपेतवासन इति यावत् । परमं साम्यं पुरुषेण परमेणोपैति—अपहतपाप्मत्वादिभिरतिशयितं साम्यमुपैति । साम्यमुपैतीत्युक्त्या भेदस्यानपायित्वं व्यज्यते । अतश्च सूत्रितं 'जगद्व्यापारवर्ज'मिति ॥३॥

प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन्विद्वान्भवते नातिवादी । आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥४॥

जीवो हि शरीरतया परिणते तत्र तत्र भूतसङ्घाते निमग्नः शोचति, य एष सर्वस्येशः सर्वान्तरात्मा स तु सर्वभूतैर्विभाति—आब्रह्मपिपीलिकान्तैर्भूतपरिणामैरुपलक्षितः पद्मपत्रमिवांभसा निर्लेपो विशेषतः प्रकाशते । श्रुतं ह्यनुपदमभिचाकशीतीति । भूतैरित्युपलक्षणे तृतीया । प्राणो ह्येषः—समाने वपुषि सन्नप्यनिमग्नस्तस्मिन्नुपलक्षितस्तेन स्वयं सत्तयाऽन्यस्य प्राणने मुख्यसाधनं भवति । तदेष हि प्राणः । वायुविशेषस्तु नाम्ना । तमिमं विजानन्—विविच्य जानन् पुरुषः स एव विद्वान्—अन्ये त्वकृत्स्नविदो मन्दाः, ते त्वतिवादिनः—अर्थमतिक्रम्य वादोऽतिवादः, आत्मस्वरूपं यथावदजानन्तः शरीरमेवात्मानं तदतिरिक्तं वा केवलं कर्तारं भोक्तारमेव वाऽवधारयन्तः कामात्मानः स्वर्गादिविविधफलप्रवणा देवोऽहं मनुष्योऽहं ब्राह्मणोऽहं क्षत्रियोऽहमहमस्मिन्कर्मणि प्रभवाम्ययमस्मिन्कर्मणीदमस्मै महते फलायेति स्वरूपोपायपुरुषार्थेषु सर्वत्र सर्वदाऽतिवदन्ति; विद्वांस्त्वतिवादी न भवते । छान्दसमात्मनेपदम् । यो हि सर्वान्तरात्मना सर्वेश्वरेणैकेनात्मानमन्यांश्चाधिष्ठितांस्तदेकात्मकान्वेत्ति, स कथमर्थमतिलङ्घ्य वदेत्, पुरुषार्थे वा उपाये वा न क्वापि तस्य भ्रमावकाशः । यो ह्यात्मानमन्यथा वेत्ति तस्य भवत्युभयत्र भ्रमः,

देहमात्मानं जानन्मन्यते विषयमैहिकं वस्तुतोऽनर्थमपि फलमिति, तदतिरिक्तं भोक्तारं केवलमात्मानं जानंस्तु तमेव पारलौकिकं तादृशमपि फलमिति, अस्य तु वासुदेवात्मकमखिलं जानतो विदुषो न तेषु क्रीडा रतिर्वा, किंतु—अयमात्मक्रीड आत्मरतिः—उद्यानादिजन्या प्रीतिः क्रीडा, स्रक्चन्दनादिजन्या प्रीती रतिरिति विशेषः । एष एव क्रियावानेष एव ब्रह्मविदां वरिष्ठः—यद्यपि जातमात्राः शिशवश्चेष्टन्ते नाम, नैतावता क्रियावन्तस्ते व्यपदिश्यन्ते, न वा शलभा इव स्वात्मनाशाय चेष्टितमात्रेण, किन्तु यदि फलाय स्यात्कर्म तदा क्रियावन्त इति शोभनं वचः, तत् कामकामा यजन्तोऽपि बहून्देवानन्ततोऽनर्थे पतन्तो न क्रियावन्तः, एष एवात्मरतिरात्मक्रीडः क्रियावान् । यद्यपि बहवो ब्रह्म जानन्ति नाम श्रुतिशिरसामर्थावगमतः, ते तु श्रवणमात्रान्न ब्रह्मविदां वरिष्ठाः, एष एवात्मरतिरात्मक्रीडस्तेषु वरिष्ठः ॥४॥

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन
ब्रह्मचर्येण नित्यम् । अन्तःशरीरे ज्योतिर्मयो
हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥५॥

अथास्य परमात्मनः साक्षात्कारे उपकरणविशेषान् विदधन्नाह—सत्येति । अन्तःशरीरे ज्योतिर्मयो हि शुभ्रः—यो ह्यन्तःशरीरे ज्योतिर्मयः स्वप्रकाशज्ञानैकस्वरूपः, शुभ्रः—शोकमोहादिमालिन्यरहितो वर्तते । एतेनानीशया यः शोचति मुह्यमानस्ततो व्यावृत्तिः । यमिमं यतयः क्षीणदोषाः—प्रक्षीणचित्तदोषाः, अपेतविषयवासनाक-

लब्धाः, पश्यन्ति—साक्षात्कुर्वन्ति योगकलया । एष ह्यात्मा सत्येन नित्यं ब्रह्मचर्येण तपसा सम्यक् ज्ञानेन लभ्यः । सत्यम्—यथादृष्टार्थं भूतहितं वचः । ब्रह्मचर्यम्—अमैथुनम् । तपः—द्वन्द्वसहनम् । सम्यग्ज्ञानम्—ब्रह्मनिष्ठाद्गुरोर्यथावस्थितमात्मस्वरूपस्यावगतिः । एतेषां ध्यानोपकारकतया साधनत्वं बोध्यम् । स्मर्यते च योगे सत्यब्रह्मचर्ययोर्यमेषु परिगणना तपःसम्यग्ज्ञानयोर्नियमेषु—'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' 'शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' इति । भाषितं च—'तपो द्वन्द्वसहनम्', 'स्वाध्यायो मोक्षशास्त्राणामध्ययन'मिति । इदं च सत्याद्युपकरणविधानमुपकरणान्तरस्याप्युपलक्षकम् ॥५॥

सत्यमेव जयति नानृतं सत्येन पन्था विततो
देवयानः । येनाक्रमन्त्यृषयो ह्याप्तकामा
यत्र तत्सत्यस्य परमं निधानम् ॥६॥

उक्तेषूपकरणेषु सत्यं स्तौति प्राधान्यात् । जयो वा पराजयो वा न स्वतः सत्यानृतयोः, किन्तु सत्यमनृतं वा प्रोच्यमानं वक्तुर्जये पराजये वा साधनं भवति, तद्वक्तृनिष्ठो जयो वा पराजयो वा साधने उपचारतो निर्दिश्यते—सत्यमेव जयति नानृतमिति । सत्यमेव सर्वार्थसाधनमिति यावत् । यश्च विततो—विस्तृतो देवयानः—अर्चिरादिः सोऽपि सत्येन साधनेन सिध्यति । कोऽसौ देवयानः ?—येनाक्रमन्त्यृषयो ह्याप्तकामाः—ऋषयः—अतीन्द्रियात्मस्वरूपसाक्षात्कारसम्पन्नाः, अत एवाप्तकामाः—विगततृष्णा इति यावत्, येन पथा आक्र-

मन्ति—प्राप्नुवन्तीति यावत्, सोऽयं देवयानः। ननु किमाक्रमन्ति देवयानेन? यत्र तत्सत्यस्य परमं निधानं—यत्र देशे सत्यस्य परमं प्राप्यं तत्किञ्चित्सर्वातिशायि वर्तते तमाक्रमन्तीति पूर्वेण सम्बन्धः॥६॥

बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सू-
क्ष्मतरं विभाति। दूरात्सुदूरे तदिहान्तिके
च पश्यत्स्विहैव निहितं गुहायाम्॥७॥

ननु स्यात्परिच्छिन्नं दृष्टसजातीयं वा तत्, यस्य देशं देवयानेन पथा ऋषयः प्राप्नुवन्ति, देशो वा पन्था वा यस्य स हि परिच्छिन्नो दृष्टसजातीयश्चेति मन्दस्य शङ्कामपनुदन्विशिनष्टि—बृहच्चेत्यादिना। तच्च बृहत्—चस्त्वर्थे, भिन्नक्रमश्च, यत्सत्यस्य परमं निधानं तत्तु बृहत्, असङ्कोचन्यायेन सर्वतो बृहत्त्वं गम्यते। स्वरूपतः स्वभावतश्चापरिच्छिन्नमिति यावत्। स्थानविशेषेऽभिव्यक्तिर्न परिच्छिन्नत्वावहेति भावः। नापि दृष्टसजातीयं तत्, किन्तु दिव्यम्—अत एवाचिन्त्यरूपम्—अप्रतर्क्यस्वरूपम्, दृष्टसजातीये हि तर्कः। सूक्ष्माच्चाकाशाज्जीवात्मनश्च तत्सूक्ष्मतरम्, सर्वत्रान्तःप्रविष्टत्वात्, सर्वकारणत्वाच्च। विभाति—विशेषतः प्रकाशते। दूरात्सुदूरे—अत्यन्तं दूरे। इह—सन्निहिते प्रदेशे, तत्राप्यन्तिके—अत्यन्तसमीप इति यावत्। कथमेकस्यैव विप्रकृष्टता सन्निकृष्टता चेत्याशङ्कामधिकारिभेदेन वारयन्नाह—पश्यत्स्विहैव निहितं गुहायाम्—ये नाम योगकलया साक्षात्कर्तुं प्रभवन्ति तेषु विषये इहैव शरीरे हृदयगुहायां सन्निहितम्, तेषां

हृदयकमल एव प्रकाशमानतयाऽत्यन्तं सन्निहितम् । अविदुषां त्वगोचरत्वेनात्यन्तविप्रकृष्टमिति भावः ॥७॥

न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः ॥८॥

नन्विहैव हृदयगुहायां निहितमत्यन्तसन्निकृष्टमपि तत्कश्चिदेव पश्यति न सर्वो जन इत्येतत्कुत इत्याशङ्कामपनयन्नाह—न चक्षुषेति । सत्यं सन्निहितं नाम सर्वस्य हृदयगुहायां तत्परमात्मतत्त्वम्, तावता जातमात्रः सर्वः कथं द्रष्टुं समर्थः स्यात्, स्यान्नाम समर्थो यदि प्रभवेच्चक्षुरादिकं तस्मिन्, स हि परमात्मा न चक्षुषा गृह्यते नान्यैर्देवैः—त्वगादिभिरिन्द्रियैः, नापि वाचा—वाक् व्यवहारः, यो हि चक्षुराद्यगोचरः स कथं तन्मूलव्यवहारस्य गोचरो भवेत्, ननु माभूज्जातमात्रस्य तत्साक्षात्कारः, ये हि तपोनिष्ठाः कर्मनिष्ठा वा तेषां स्यात्, विप्रकृष्टमपि स्वर्गादि लभन्ते हि ते इत्यत्राह—तपसा कर्मणा वेति । वर्षसहस्रं वाताम्बुपर्णाशनीभूयानुष्ठितेन तपसा शतकृत्वोऽनुष्ठितेनाश्वमेधादिना वा कर्मणा नायं गृह्यते । ननु यो नाम पश्यति स केन साधनेन ? यदपरेषां नेति परेषां विप्रकृष्टोऽयं भवति, तं साधनविशेषमाह—ज्ञानप्रसादेनेति । यद्यपि सर्वे चैतन्यस्वभावतया ज्ञानधर्माण एव, ज्ञानं तु न प्रसन्नं किन्त्वाविलमेव, अनादिविपरीतवासनया ह्यनुक्षणमहं ममेत्यभिमानतः

कामक्रोधादिभिः कलुषीकृतम्, यदा पुनर्यथावस्थितात्मस्वरूपाधिगमस्तदा त्वपगताभिमानादि प्रशान्तरागादिदोषं प्रसन्नं भवति कतकाधिगमेनेव सलिलम्, एवम्भूतेन ज्ञानस्य प्रसादेन—निर्मलतया यस्य सत्त्वमन्तःकरणं विशुद्धम्—प्रवृद्धसत्त्वतया ध्यानयोग्यं भवति, स विशुद्धसत्त्वस्ततः पश्चात्तत एव हेतोर्निष्कलम्—निरवयवं नित्यं तं परमात्मानं ध्यायमानः—अविरतमन्वहमन्यप्रत्ययानन्तरितेन चेतसाऽनुसरन्कश्चिदेव योगिनामग्रणीः पश्यति। इदं च ध्यानं न सर्वेषां सुलभमिति कस्यचिदेवायमन्तिके अन्येषामतिदूरे इति युक्तमुक्तमिति भावः ॥८॥

एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश। प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे विभवत्येष आत्मा ॥९॥

इदमिह निष्पन्नम्, परमात्मसाक्षात्कारो ध्यानेन, ध्यानयोग्यता च ज्ञानप्रसादेनेति, ज्ञानप्रसाद एव परमात्मसाक्षात्कारे निदानमिति, इदमेव पुनर्विविच्यते—एषोऽणुरिति। सहजमपि ज्ञानं कलुषं भवति केन? अनात्मन्यात्माभिमानेन। तत्र केषाञ्चिदिन्द्रिये केषाञ्चित्प्राणे केषाञ्चिन्मनसि चात्माभिमानः। तेन तेनाभिमानेन तथा तथा सङ्कल्पः कामः क्रोधस्ततश्चान्ततो ज्ञाने सर्वतः कालुष्यम्। तत्तेभ्यो विलक्षणमविषमं सर्वत्र योनौ परमात्मशेषतैकवेषमात्मनः स्वरूपं यदाऽसाववलोकयेत्, कालुष्यमूलस्याभिमानस्यापगमेन ज्ञाननैर्मल्यं,

तेन च परमात्मध्यानयोग्यता चेतसस्ततो ध्यानं, तेन तस्य साक्षात्कारः स्यात्। तस्मात्प्रथममेषोऽणुरात्मा जीवश्चेतसा विवेकशीलेन वेदितव्यः। यस्मिन्-जीवे प्राणः पञ्चधा संविवेशोपकरणतया। यस्मिन्प्रजानां प्राणैः-चक्षुरादिभिरिन्द्रियैः सह सर्वं चित्तमोतम्-सम्बद्धमुपकरणतया। यद्यपि चित्तमेकमेवैकस्य, तथापि वृत्तिभेदाद्बहुत्वमभिप्रेत्य सर्वमित्युक्तिः। प्रत्येकमेकस्मिन्नेकं सम्बद्धमिति वाऽऽशयः। अणुरिति निर्देशात्स्थूलाच्छरीराद्वैलक्षण्यं व्यज्यते। प्राणादीनामुपकरणतया सम्बन्धाभिधानात्तेभ्योऽपि वैलक्षण्यं ज्ञापितम्। एवं विलक्षणस्यात्मनो जीवस्य स्वरूपं प्रथमतो वेदितव्यम्। यस्मिन्स्वात्मनि विशुद्धे-देहादिभ्यो विशोधिते, विजातीयतया यथावस्थितवेषेणावलोकिते एष आत्मा-बृहत्त्वादिधर्मविशिष्टतयाऽव्यवहितमन्त्रे उक्तः परमात्मा, विभवति-प्रकाशते। चेतसो ध्यानयोग्यतासम्पत्त्या ध्यानद्वारा साक्षात्कारपथगो भवतीति यावत्। यद्वा-पञ्चधाऽवस्थितो जीवोपकरणभूतः प्राणोऽपि यस्मिन्नेव संविवेश—यस्मिन्नेव प्रतिष्ठितः। प्रजानां चित्तं प्राणैरिन्द्रियैः सह यस्मिन्नेवौतम्, यच्चान्यत्सर्वं यस्मिन्नेवौतं, स सर्वस्य प्रतिष्ठाभूत एषोऽणुरात्मा सर्वतः सूक्ष्मः परमात्मा चेतसा वेदितव्यः। ननु चेतसा कथमस्य वेदनं? तद्धि प्रतिक्षणसमुन्मिषत्सङ्कल्पसहस्रसङ्कुलमित्यत्राह—यस्मिन्विशुद्धे विभवत्येष आत्मा—एष परमात्मा यस्मिन्विशुद्धे निर्मले सति विभवति-विशेषतः प्रकाशते, साक्षात्कारगोचरो भवति, तेन विमलेन चेतसा वेदितव्य इति पूर्वेण सम्बन्धः ॥९॥

यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥१०॥

साक्षात्कृतात्मतत्त्वस्य महिमाऽनुवर्ण्यते—यं यमिति । विशुद्धसत्त्वः-निर्मलान्तःकरणः, अधिगतात्मसाक्षात्कारः । यं यं लोकं मनसा संविभाति—सङ्कल्पयति, यांश्च कामान्, तं तं लोकं जयति तांश्च कामान्प्राप्नोतीति यावत् । तस्मात्—सत्यसङ्कल्पत्वलक्षणमहिमशालितया, आत्मज्ञम्—अधिगतात्मसाक्षात्कारं पुरुषं भूतिकामोऽर्चयेत् ॥१०॥

इति तृतीयमुण्डकप्रथमखण्डभाष्यम् ।

---

स वेदैतत्परमं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रम् । उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥१॥

ज्ञानप्रसादेन यो विशुद्धसत्त्वः सः एतत्—उक्तलक्षणं ब्रह्मधाम वेद । भोग्यपरिपूर्णत्वात् ब्रह्मधामेति रूपणम् । इदं च ब्रह्मधाम परमम्—सर्वतः प्रकृष्टम् । कुतः ? यत्र—यस्मिन् ब्रह्मणि, निहितम्—वर्तमानमिति यावत् । विश्वम्—सकलं शुभ्रं भाति । अन्यत्र हि धाम्नि सत्यपि सुखलवे बहुशो दुःखसम्बन्धादशुभ्रमन्ततो बह्वस्ति, तदखिलमेवेतोऽपकृष्टम् । अस्मिन्ब्रह्मस्वरूपे धाम्नि तु न कश्चिद्धेयसम्बन्धः ।

हेयप्रतिभटं ह्यस्य स्वरूपं कल्याणगुणानामाश्रयश्च । अतोऽस्मिन्वर्तमानमखिलमेव शुभ्रम् । यद्वा—यच्चास्येहास्ति यच्च नास्ति सकलमेव मनोरथपथगं यत्रास्मिन्निहितं तस्मात्सर्वतः प्रकृष्टमेतत् । श्रूयते च 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इति । इतश्चैतत्परमम्, यद्ब्रह्मधाम स्वयं शुभ्रं भाति—स्वयंप्रकाशत्वात् । तद्ब्रह्मधाम स वेदेति पूर्वेण संबन्धः । तं ब्रह्मविदं पुरुषं ये ह्यकामाः—विगतसांसारिकसमस्तकामना उपासते—परिचरन्ति परमिव देवम् । ते धीरा एतत् शुक्रं—जन्मबीजमतिवर्तन्ते ॥ १ ॥

कामान्यः कामयते मन्यमानः स कामभि-
र्जायते तत्र तत्र । पर्याप्तकामस्य कृतात्मन-
स्त्विहैव सर्वे प्रविलीयन्ति कामाः ॥२॥

ये ह्यकामा इति निर्देशेन विवक्षितं कामत्यागस्य प्राधान्यं प्रदर्शयति—कामान्य इति । यः पुनरनुदिनं कामान्—शब्दादीननुभूताननुभूतान्वा, अहो शब्दस्य मधुरिमा, अहो स्पर्शस्य सौकुमार्यम्, अहो रूपस्य रमणीयता, अहो रसस्य स्वादः, इति मन्यमानः पुनः पुनरनुचिन्तयन्कामयते । स तैः कामैः प्रवृत्तिबीजभूतैर्धर्माधर्मपरिणामैस्तत्र तत्र योनौ जायते । तत् संसरणबीजं कामनैव । यस्तु पर्याप्तकामः—परित आप्तः कामो विषयो येन सः, निवृत्तकामन इति यावत्, असति विषये हि कामना, समन्तादुपलब्धे तु विषये निवर्तते कामना, तस्य निवृत्तकामस्य । अत एव कृतात्मनः—कृतः संस्कृतः

आत्मा अन्तःकरणं यस्य तस्य, शुद्धान्तःकरणस्येति यावत् । कामनया हि रागद्वेषादिदूषितमन्तःकरणं भवति । अपगतायां च कामनायां भवति शुद्धात्मा । एवंभूतस्य तु सर्वे कामाः—शब्दादयः, इहैव—यस्मिन्देशे विषयाणां साम्राज्यं तस्मिन्नेवास्मिन्संसृतिमण्डले, प्रविलीयन्ति—अदर्शनं यान्ति । परितः प्रवर्तमाना अपि शब्दादयः प्रभवन्तोऽप्यन्यत्र पर्याप्तकामस्य कृतात्मनः क्षोभाय न प्रभवन्तीति भावः । असति च विषयतः क्षोभे जन्मबीजाभावाच्छुक्रमतिवर्तन्ते नाम ॥२॥

नायमात्मा प्रवचनेन लभ्यो न मेधया न
बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥३॥

अथ मुक्तौ मुख्यसाधनमाह—नायमिति । व्याख्यातमेतत्कठवल्ल्याम् ॥३॥

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्त-
पसो वाऽप्यलिङ्गात् । एतैरुपायैर्यतते यस्तु
विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥४॥

अथान्वयव्यतिरेकाभ्यां बलादेः परिकरत्वं निरूपयति—नायमात्मेति । अयमुक्तलक्षणलक्षितः परमात्मा बलहीनेन न लभ्यः । बलं च शारीरं मानसं च । तत्र शारीरं बलं व्याध्यादिभिरशिथिलता शरीरस्य । असति तस्मिन्बले व्याक्षिप्तं चित्तमात्मप्रणिधानाय न प्रकल्पेत । तथैवासति च मानसे बले धृत्यात्मके । नायमात्मा

लभ्यः । न च प्रमादात्—प्रमादोऽनवधानम् । तपसो वाऽप्यलिङ्गात्—यल्लिङ्गमाश्रमस्य वर्णस्य च तद्रहितेन तपसा न लभ्यः । 'तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोग' इति पातञ्जलदर्शने तपसो योगोपकारकत्वमुक्तम् । विहाय वर्णाश्रमलिङ्गमनुष्ठितं नोपकारकमिति भावः । यद्वा—लिङ्गं लक्षणम्, तपसो हि लक्षणं ज्ञानम्, विना ज्ञानलवं तपसे प्रवृत्तस्तु तपस्त्याभास एव । तस्माद्विना ज्ञानं क्रियमाणात्कायक्लेशमात्रफलकात्तपसो नायमात्मा लभ्यः । एवं व्यतिरेक उक्तः । अथान्वयमाह—यस्तु विद्वानेतैर्बलादिभिरुपायैरात्मध्यानाय यतते, तस्य विदुष आत्मा—स्वरूपं ब्रह्माख्यं धाम विशते—प्राप्नोति । स विद्वान् प्रविशतीति यावत् ॥४॥

सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो
वीतरागाः प्रशान्ताः । ते सर्वगं सर्वतः प्राप्य
धीरा युक्तात्मानः सर्वमेवाविशन्ति ॥५॥

अनिष्पन्नयोगस्य यतमानस्य बलादिपरिकरः प्रोक्तः । अथ निष्पन्नयोगस्य स्थितिर्निरूप्यते—सम्प्राप्यैनमिति । ऋषयः—तत्त्वदर्शिनः, निष्पन्नयोगा इति यावत् । एनम्—परमात्मानम् । सम्प्राप्य—समुपलभ्य समाधिसमये । ज्ञानतृप्ताः—तत्साक्षात्काररूपेण ज्ञानेनैव सर्वदा तृप्ताः । अत एव कृतात्मानः—कृतस्वरूपाः, निष्पन्नस्वरूपा इति यावत् । यस्त्वन्नपानादिना तृप्तः स ह्रस्तस्वरूपः । वीतरागाः प्रशान्ताः—प्रकर्षेण शान्ताः, निस्तरङ्गार्णववदप्रकम्पाशयाः, अस्तवासनोर्मय इति यावत् । भवन्तीति शेषः । ते हि धीरास्तं सर्वतः

प्राप्नुवन्ति—उपलभन्ते । कुतः ? स हि सर्वगः, न ह्यनेनात्मतयाऽनधिष्ठितमेकं वा, एते च ऋषयः, सम्रुपलब्धस्तु समाधौ यथावस्थितमयमात्मा, तदेतेषां धीराणां निष्पन्नयोगानां यतो यतो दृष्टिस्ततस्ततः सम्रुपलभ्यते परमात्मैव । भावास्तु सर्वे शब्दादय इवाकाशस्य तस्योपसर्जनभूताः प्रकाशन्ते । तत्तत्र तत्र तत्तदुपसृष्टः स एव सम्रुपलभ्यते, तत्ते सर्वगं सर्वतः प्राप्य युक्तात्मानः सर्वमेवाविशन्ति—तस्मिन्नेव सर्वान्तर्यामिणि स्वेतरसमस्तवस्तुप्रकारके युक्तः प्राधान्येन योजित आत्मा मनो येषां ते तथाभूताः सन्तः, 'ज्योतींषि विष्णुर्भुवनानि विष्णु'रिति सर्वमेवानुभवन्ति। 'अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मी'ति सर्वं स्वात्मात्मकतयाऽनुभवन्तीति वा । अपरे तु—मुक्तिदशा निरूप्यते, तत्र पूर्वार्धे नार्थभेदः, ते धीरा युक्तात्मानः सर्वतः सर्वगं सर्वदेशावच्छेदेन सर्ववस्तुगतं परमात्मानं प्राप्य स्वयमपि सर्वमाविशन्ति, सर्वव्यापिनो भवन्तीत्यर्थः । 'स चानन्त्याय कल्पते' इति श्रुतेः । आनन्त्यं च स्वरूपतः स्वभावतो वा । तत्राव्याकुलोऽन्तिमः पक्ष इति ॥५॥

वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयो-
गाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परा-
न्तकाले परामृताः परिमुच्यन्ति सर्वे ॥६॥

एवमुपायो निरूपितः, अथ फलप्रकारो निरूप्यते । वेदान्तानां श्रुतिशिरसां विज्ञानेन यथावस्थितार्थावगमेन सुनिश्चितः अर्थः उपायोपेयादिर्येषां तथाभूताः । सन्न्यासयोगात्—सर्वकामनात्यागयोगात् ।

शुद्धसत्त्वाः—निर्मलान्तकरणाः । यतयः—यतनशीलाः, परमात्मध्यान एव सर्वदा प्रवर्तमाना इति यावत् । ते सर्वे—एवम्भूतब्रह्मदर्शिनः सर्वे । परान्तकाले—जन्मानुत्तरतयाऽन्येभ्योऽन्तकालेभ्यः परः उत्कृष्टो योऽन्तकालः प्रारब्धशरीरावसानसमयः, तस्मिन्समये । परामृताः सन्तः—परं सर्वोत्कृष्टममृतमानन्दमयत्वाद्भोग्यभूतं ब्रह्मतत्त्वं येषां तथाभूताः सन्तः, अन्तिमसमये परमानन्दमयं परमात्मानं स्मरन्त इति यावत् । ब्रह्मलोकेषु परिमुच्यन्ति, ब्रह्मणस्तेषु तेषु लोकेषु सन्निधाय सर्वतो क्ता भवन्ति । श्रूयते च 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' ति । ते ब्रह्मलोकेषु परामृताः परान्तकाले परिमुच्यन्तीति वाऽन्वयः । आशयश्चायम्—ये नाम वेदान्तविज्ञानसुनिश्चितार्था न, न वा न्न्यासयोगाच्छुद्धसत्त्वाः अयतयो वा तेषां ह्यमृतमिहैव लोके, हि तेषां वित्तपुत्रादिभ्योऽन्यदमृतमस्ति । ये पुनर्वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वास्तेषां हि परममृतं ब्रह्मणो लोकेष्वेव, तत् ब्रह्मलोकेषु परामृतास्ते । तथाभूतास्ते प्रारब्धशरीरावसानकाल एव परिमुच्यन्ति, सर्वकर्मबन्धविनिर्मुक्ता भवन्तीति । परे तु—ये यतयः—तुर्याश्रमिणः, सन्न्यासयोगात्—एषणात्रयत्यागेन, शुद्धसत्त्वाः—निर्मलान्तःकरणाः, केवलं वेदान्तविज्ञानसुनिश्चितार्थाः—मुमुक्षया कृतवेदान्तविचाराः, ते हि न सपदि मुच्येरन् बन्धनतः, विरक्ता नाम ते वित्तपुत्रदारादिभ्यः, अत एव वैराग्ययोगात्तुर्याश्रमे प्रविष्टाश्च, आश्रमानुगुणया मुमुक्षया श्रुतश्च गुरुमुखत उपनिषदर्थः, तेन चायमुपायोऽयमुपेय इति च विनिश्चितं नाम, किं तावता परोक्षभूतेन तेन विज्ञानेन, यावदेभिर्न साधितस्तत्साक्षात्का-

रायोपायः, न सिद्धस्तत्साक्षात्कारः, तावदेतेऽनृषयः, केवलं यतयः कथं मुच्येरंस्तुर्याश्रमगौरवेण, परं तु ते सर्वे तेन गौरवेण ब्रह्मणो हिरण्यगर्भस्य लोकेषु प्रविश्य तत्र क्रमशः प्राप्तब्रह्मसाक्षात्काराः, ब्रह्मैव परममृतं भावयन्तः, योऽयमायुःपरिमाणः (हिरण्यगर्भस्य) पर इति नाम्ना प्रसिद्धस्तस्यान्ते परिमुच्यन्ति संसृतिबन्धनतः। एवमनेन मन्त्रेण यतीनामनिष्पन्नयोगानां क्रममुक्तिरुक्ता। ये पुनर्निष्पन्नयोगास्तेषां सत्यपि प्रारब्धशरीरे सर्वदा सर्वत्र ब्रह्मसाक्षात्कारयोगेन करस्थत्वान्मुक्तेः सपदि मोक्षस्तेषामिति पूर्वमन्त्रे सूचितम्। अत एव तत्र ऋषय इति पदमिति वदन्ति। ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे इति पाठे तु—परान्तकाले स्मर्यमाणात्परामृतस्वरूपात्परमात्मनो हेतोः ब्रह्मणो लोके प्रविष्टा मुक्ता भवन्तीत्यर्थः ॥६॥

गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे
प्रतिदेवतासु । कर्माणि विज्ञानमयश्च
आत्मा परेऽव्यये सर्व एकीभवन्ति ॥७॥

मुच्यमानस्य चरमशरीरं त्यजतः प्राणादयः पञ्चदश कला यथासम्भवं स्वस्य स्वस्य प्रतिष्ठाः—उपादानतत्त्वानि गता भवन्ति, लीयन्त इति यावत्। ताश्च कलाः प्रश्नोपनिषदि श्रुताः। वागादिस्थानेषु स्थितास्तत्तदभिमानिदेवता अग्न्यादयः प्रतिदेवतासु—स्वस्य स्वस्य प्रतिनियतदेवतास्वरूपे एकीभवन्ति। वागाद्यधिष्ठानं त्यक्त्वा स्वस्वरूपेण वर्तन्त इति यावत्। कर्माणि—भोगात्प्रक्षीणानि यानि तेभ्योऽन्यानि, योऽयं विज्ञानमय आत्मा—विज्ञानप्रचुरो जीवात्मा, सर्व एतेऽव्यये परे ब्रह्मणि एकीभवन्ति—अविभागं यान्ति। विभागो नाम भेदकाकारः, स च

नामरूपादिः, तत्प्रहाणमविभागः । उक्तं चोपनिषत्प्रकाशिकायाम्— 'परमात्मप्रीत्यप्रीतिरूपाणां कर्मणां तत्रैकीभावस्तद्धर्मभूतज्ञाने लय एव, जीवस्यैकीभावो नामरूपात्मकभेदकाकारप्रहाण'मिति ॥७॥

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्वि-मुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥८॥

एकीभवन्तीत्यनेन विवक्षितमेकीभावं श्रुतिः स्वयं व्याचष्टे—यथेति । अन्यथा ह्यर्थनिर्णयो न भवेत्, अनियतार्थो ह्ययं प्रयोगः । स्थानतो बुद्धित आकारतो वा एकत्वयोगविवक्षयाऽपि भवति तादृशप्रयोगः । यथा—सायं गोष्ठे गाव एकीभवन्ति, ब्राह्मणा राजकुल एकीभवन्ति, कीटो भ्रमर एकीभवतीति । एवं पृथक्प्रतिपत्त्यविषयत्वविवक्षयापि भवति तथा प्रयोगः । यथा क्षीरे नीरमेकीभूतमिति । नात्र स्वरूपतादात्म्यं गम्यते । न हि नीरस्वरूपं क्षीरतां क्षीरस्वरूपं वा नीरतां कदापि प्राप्नुयात् । न हि वस्तु वस्त्वन्तरतां गच्छेत् । नापि भ्रमराकारयोगः कीटस्येव क्षीराकारयोगो नीरस्य भवति । नितरां विशीर्णा नीरांशाः क्षीरांशेषु प्रविष्टाः केवलम् । आकारयोगश्चेत् हंसेन तयोर्यथावद्विभजनं कथमुपपद्येत । तत् इदं क्षीरं इदं नीरमिति पृथक्प्रतिपत्त्यनर्हतैवैकीभावः । संश्लेषविशेषनिबन्धनश्चायम् । संश्लेषविशेष एव वात्रैकीभावः । प्रणष्टे घटे घटाकाश आकाश एकीभवति, प्रणष्टे जले प्रतिबिम्बः सूर्ये एकीभवतीत्यत्र तु पृथक्प्रतिपत्त्यनर्हतैवैकीभावः । न च तत्र स्वरूपैक्यविवक्षा सम्भ-

वति । उपाध्यपगमे घटाकाशो वा प्रतिबिम्बो वा न हि वर्तते । तत्र कस्य कस्मिन्नैक्यं तदानीं भवति । घटाकाशमहाकाशयोः स्वरूपैक्यस्योपाधिसमयेऽप्यक्षततयाऽभूततद्भावे च्विप्रत्ययोऽपि न घटेत । इयान्विशेषः—क्वचित्संश्लेषविशेषात्पृथक्प्रतिपत्त्यनर्हता, इह तु पृथक्प्रतिपत्तेरुपाधिकल्पितत्वात्, वस्तुनि भेदाभावात्, उपाध्यपगमे भवति पृथक्प्रतिपत्त्यनर्हता । तत् एकीभवन्तीति प्रयोगमात्रेण वस्तुनि भेदाभावो न सिध्येत् । तदेवं सन्दिग्धार्थकतया आवश्यकमेवास्य विवेचनम् । यथा गङ्गाद्या नद्यः स्यन्दमाना हिमवदादितः प्रविष्टाः समुद्रे गङ्गेति नाम रूपं च गाङ्गं विहायास्तं गच्छन्ति—अदर्शनं यान्ति । विद्वानेवं देवो मनुष्य इत्यादिनाम्नः देवादिरूपाच्च विमुक्तः । परात्परं पुरुषमक्षरनिलयं याति । दृष्टान्तविशेषग्रहणाद्व्याख्यात एकीभावः । कथम्? इत्थम् । गङ्गाद्या नद्यः स्यन्दमानाः समुद्रसङ्गमतः प्राक्समुपलभ्यन्ते गाङ्गेन यामुनेन वा रूपेण, व्यवह्रियन्ते च नाम्ना गङ्गेति यमुनेति वा । एवमेवायं जीवः संसरन् ब्रह्मसम्पत्तेः प्राक्समुपलभ्यते दैवेन मानुषेण वा येन केनापि रूपेण । समुद्रं प्रविष्टानां तु तासामपगच्छतो नामरूपे, एवमेव विदुषस्तस्य ब्रह्मप्रविष्टस्यापगच्छतो नामरूपे । अन्ततस्ता अदर्शनं यान्ति, पुरेव व्यवहर्तृणां दर्शनपदं न प्राप्नुवन्ति, अयमपि पुरेव दर्शनपदं नोपयाति । तत्सिद्धमिहैकीभावः पृथक्प्रतिपत्त्यनर्हत्वरूप इति । पृथक्प्रतिपत्त्यनर्हता च नामरूपप्रहाणत इति च । ननु—यदि मुक्तस्य ब्रह्मणो भेदः, भवेदेव पृथक्त्वप्रतिपत्तिः स्वस्मिंस्तस्मात्, तत् कथं पृथक्प्रतिपत्त्यनर्हता । मैवम् । पुरा नामरूपसम्बन्धे यादृशी पृथक्प्रतिपत्तिरासीत् देवोऽहं मनुष्योऽहं स्वतन्त्रोऽहमिति, सा प्रतिपत्तिरिदानीं न घटेते-

वेत्यक्षतैव पृथक्प्रतिपत्त्यनर्हता। दृष्टान्तेऽपि नद्यो यथा येषां दर्शनपथगाः प्राक्; समुद्रं प्रविष्टास्तु न तथा तेषां दर्शनपथार्हा इत्येव खल्वस्तं गच्छन्तीत्यनेन विवक्षितम्, न हि सर्वथा सर्वस्यादर्शनं यान्तीति, दृश्यन्त एव हि सर्वज्ञेन तेऽप्ययपामंशाः। ननु—अनेन दृष्टान्तेन नदीनां नामरूपप्रहाणेन सामुद्रस्वभावयोगवत्, ब्रह्मसम्पन्नस्य विदुषो ब्राह्मस्वभावयोगः स्यात्। मैवम्। न हि दृष्टान्तगतः सर्वोऽपि प्रकारो दार्ष्टान्तिके नियतः, न वा विवक्षितः। 'नामरूपे विहायास्तं गच्छन्ती'त्येव हि श्रूयते। भवति चापहतपाप्मत्वादिना ब्राह्मस्वभावयोगः। वस्तुतो न गाङ्गस्य जलस्य समुद्रप्रवेशमात्रेण सामुद्रस्वभावयोगः, किन्त्वभिभव एव केवलं भूयस्तया सामुद्रांशस्य ॥८॥

**स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति। तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति॥९॥**

अथ ब्रह्मवित् स्तूयते—स इति। य एतदुक्तलक्षणं सर्वतः प्रकृष्टं ब्रह्म वेद, स विद्वान् ब्रह्मैव भवति। एवकारोऽत्र सौसादृश्ये वर्तते। अनुशिष्टोऽयमस्यार्थः। स्तुतिप्रकरणत्वादेवकारेणास्यार्थस्य ज्ञापनं समुचितं नाम। 'नास्याब्रह्मवित्कुले भवती'ति सह श्रवणात्स्तुतिः प्रकृतेति सुव्यक्तम्। तरति शोकमिहैव तरति तन्मूलं पाप्मानं च। गुहाग्रन्थिभ्यः—हृदयगुहागतेभ्यो ग्रन्थिवद्दुर्मोचेभ्यो वासनादिभ्यो विमुक्तो भूत्वा स्वयममृतो भवति। आविर्भूतापहतपाप्मत्वादिस्वरूपतयाऽऽनन्दघनोऽत्यन्तभोग्यस्वरूपो भवति ॥९॥

तदेतदृचाऽभ्युक्तम् । क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः । तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥१०॥

अथास्या विद्यायाः पात्रविशेषविधानं क्रियते । ऋचा—मन्त्रेण, तदेतत्—वक्ष्यमाणम्, किञ्चिदभ्युक्तम् । किं तत् ? उच्यते—क्रियावन्त इति । यथोक्तं कर्म कुर्वाणाः । ब्रह्मणि वेदे निष्ठा येषां तथाभूताः, वेदाध्ययनपराः । श्रद्धयन्तः—श्रद्धायुक्ताः, ये श्रोत्रियाः—श्रोत्रियलक्षणलक्षिताः । एकर्षिं—एकर्षिनामकमग्निं जुह्वते—जुह्वति । किञ्च—यदाथर्वणानां प्रसिद्धं शिरोव्रतमिति, तद्व्रतं च यैश्चीर्णम्—अनुष्ठितम्, तेभ्य एवैतां ब्रह्मविद्यां वदेत—वदेत् । इह विद्याशब्देन विद्याप्रतिपादकोऽयमुपनिषदात्मकः शब्दसन्दर्भः प्रतिपाद्यते ॥१०॥

तदेतत्सत्यमृषिरङ्गिराः प्रोवाच नैतदचीर्णव्रतोऽधीते । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥११॥

एतद्विद्यास्वरूपमचीर्णव्रतः कोऽपि नाधीते । यद्यपि पूर्वमन्त्रे अचीर्णव्रताय नेमां विद्यां वदेदित्युक्तं नाम । अथापि तत्राध्यापकान्प्रत्युक्तिः, इह तु अध्येतॄन्प्रतीति भेदो बोध्यः । विद्याप्रवर्तकमहर्षिपरम्परायाः प्रणामः समाप्तौ श्रेयसे वितन्यते—नमः परमऋषिभ्यो नमः परमऋषिभ्य इति । आदराद्द्विरुक्तिः समाप्तिद्योतनाय वा ॥११॥

इति तृतीयमुण्डकद्वितीयखण्डभाष्यम् ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण—परमहंसवर्य—योगिराज—श्रीगोपालानन्दस्वामिविरचितं मुण्डकोपनिषद्भाष्यं समाप्तम् ।

---



# माण्डूक्योपनिषत् ।

## गोपालानन्दस्वामिविरचितभाष्यसमेता ।

ओमित्येतदक्षरमिदꣳ सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव । यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥१॥

जाग्रत्स्वप्नसुषुप्तिवीचिनिचयक्षोभस्य यो नास्पदं
यस्मिन्नस्तमुपैत्ययं सुरनरप्रायः प्रपञ्चोऽखिलः ।
यस्मिन्न व्यवहार्यता यदुदये भेदो न सन्दृश्यते
सोऽयं ज्ञानघनश्चकास्ति विमलः कैवल्यतेजोमयः ॥

यश्चैतन्यघनः स एव तु गुणैरावेष्टितः संविश-
न्नानारूपविभेदवेषरचनास्तद्वासनामोहितः ।
बाह्यं स्वाप्नमनर्थमप्यनुभवँल्लीनः सुषुप्तौ क्वचि-
त्कालेनात्मनि तात्त्विकीं कलयते कश्चित्तुरीयां स्थितिम् ॥

इयमुपनिषदात्मकैवल्याविर्भावलक्षणां मुक्तिमधिकृत्य प्रवर्तते । यद्यपि परब्रह्मप्राप्तिलक्षणा मुक्तिस्तथाप्यविद्यानिवृत्तिगर्भतयाऽस्य

मुक्तिपर्वणि समावेशो न्याय्यः । तत्र प्रणवालम्बनमात्मोपासनं विधास्यन्प्रणवमादौ स्तौति—ओमित्येतदिति । ओमित्येतदक्षरमिदं सर्वम्—सर्वमिदमोङ्कार एव, तस्यैवायं विस्तार इति स्तुतं भवति । एवं सङ्ग्रहेणाभिधायोक्तस्य विवेचनं कुर्वन्प्रतिजानीते—तस्योपव्याख्यानमिति । तस्यास्योक्तस्योपव्याख्यानं—विवेचनं क्रियते । भूतं भवद्भविष्यदिति सर्वमोङ्कार एव, यच्चान्यत्रिकालातीतं तदप्योङ्कार एव—इह हि चिदचित्प्रपञ्चे योऽयमचित्परिणामो भूतभविष्यद्वर्तमानभेदेन विभिन्नः कालपरिच्छिन्नः स सर्वोऽप्योङ्कार एव । यच्चान्यदात्मतत्त्वं कालत्रयातीतं तदप्योङ्कार एव ॥१॥

सर्वꣳ ह्येतद्ब्रह्मायमात्मा ब्रह्म
सोऽयमात्मा चतुष्पात् ॥२॥

कुत एतत्? आह—सर्वं ह्येतत् ब्रह्म, अयमात्मा ब्रह्म—एतत्—दृश्यमानमखिलमेव सङ्घातलक्षणं भूतभविष्यद्वर्तमानविभेदविभिन्नं ब्रह्मैव—ब्रह्मकार्यत्वात् ब्रह्मशरीरत्वात् ब्रह्मात्मकमेव हि, यश्चान्यस्त्रिकालातीतोऽयं जीवात्मा सोऽपि ब्रह्म हि—ब्रह्मात्मको हि । न चान्तरं प्रणवब्रह्मणोः, वाच्यवाचकयोरभेदाध्यवसायात्, तदोङ्कार एव सर्वमिदमिति युक्तमुक्तमिति भावः । एवं प्रणवं स्तुत्वा, अथोपासनमुपदेष्टुमुपक्रमते—सोऽयमात्मा चतुष्पादित्यादिना । सः—ब्रह्मात्मकतया प्रस्तुतः, अयमात्मा—प्रत्यगात्मा, चतुष्पात्—चत्वारः पादा यस्य तथोक्तः ॥२॥

इति प्रथमखण्डभाष्यम् ।

---

जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंश-
तिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥१॥

पादान्क्रमशो निरूपयति—जागरितेति । जागरितं स्थानं यस्य स तथोक्तः । अधिष्ठाय चैतन्यप्रभया चक्षुरादि बाह्यान्रूपाद्यर्थाननुभवतीति बहिष्प्रज्ञोऽयम् । सप्ताङ्गः—यस्यास्य भूतसूक्ष्मपञ्चकं धर्माधर्मौ चेति सप्ताङ्गानि, एतैर्ह्ययमितस्ततो गमनागमनादिसाधनैर्भोगाय प्रभवति, अविनाभूतश्चायमेतैः, तदयमेतैः सप्ताङ्ग उच्यते । वासनापञ्चकं धर्माधर्मौ वा । एकोनविंशतिमुखः—ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि प्राणा अन्तःकरणचतुष्टयं चेत्येकोनविंशतिर्मुखानि यस्य स तथाभूतः, भुङ्क्ते ह्ययमेभिरर्थान् । स्थूलभुक्—स्थूलं बाह्यं रूपाद्यर्थं भुङ्क्ते इति स्थूलभुगुच्यते । सोऽयं जाग्रद्दशावस्थः स्थूलभुग्वैश्वानरः प्रथमः पादः । कथमस्य वैश्वानरसंज्ञा ? उच्यते । विश्वं बाह्यं देवादिप्रपञ्चं यथाकर्म यथासम्भवमहमहमित्यभिमन्यते तदयं नराभिमानी वैश्वानर उच्यते ॥१॥

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमु-
खः प्रविविक्तभुक्तैजसो द्वितीयः पादः ॥२॥

स्वप्नस्थानः—अभिसम्बध्य नाडीविशेषं स्वप्नमनुभवति, अतः स्थानविशेषसम्बन्धादुच्यते स्वप्नस्थान इति । तान्येवाङ्गानि तान्येव मुखानीत्याह—सप्ताङ्ग एकोनविंशतिमुख इति । स्वप्नेऽप्युपभोगस्थानपगमात् । यस्मादुपभुज्यमानाः स्वाप्नार्था नान्यसाधारणाः, तदुच्यते प्रविविक्तभुगिति । सोऽयं स्वप्नावस्थः तैजस उच्यते ॥२॥

**यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पादः ॥३॥**

यत्स्थानं जागरितस्य यच्च स्वप्नस्य तस्मादुभयस्मात्सुषुप्तिस्थानस्य विशेषं ज्ञापयन्सुषुप्तिस्थानमादावाह—यत्रेति। गहनं चैतत्स्थानम्। श्रूयते चान्यत्र 'तद्यथा हिरण्यनिधिमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तोऽपि न विन्दन्ती'त्यादि। विशदयति चानुपदं 'एष सर्वेश्वर' इत्यादिना। यत्र परमात्मन्यन्तर्यामिणि सुप्तो न कञ्चन रूपादिकामं कामयते, न कञ्चन स्वप्नं पश्यति, तदद्वितीयं किमपि सुषुप्तिस्थानम्। तस्मिन् सुषुप्ते स्थानविशेषे सङ्गतोऽयं सुषुप्तस्थानः प्रत्यगात्मा तदानीमेकीभूतः—अपगतचक्षुराद्युपकरणः स्वयमेकीभूतः। यद्वा—एकीभूतः—सुषुप्तिस्थानभूतेन परमात्मना सहाविभागं प्राप्तः। सुषुप्तस्थान इति सप्तम्यन्तं वा एकीभूत इत्यनेनान्वेति। प्रज्ञानघन एव च तदा; न सप्ताङ्गो न वैकोनविंशतिमुखः, अपेतसमस्ताभिमानतया तदानीं तेषां सतामप्यङ्गाङ्गिभावमुखमुखिभावापगमात्। औपाधिकाभिमानलक्षणतिरोध्यपगमेन स्वाभाविकानन्दस्याविर्भावात् स्वयमानन्दमयः। अतएवानन्दभुक्—आनन्दैकभुक्। किं तदस्य मुखम्?—चेत एवास्य

---

१ पूर्वं पादद्वये स्थाननिरूपणमकृत्वैव जागरितस्थानः स्वप्नस्थान इति यथा प्रक्रान्तमेवं तृतीयपादनिरूपणेऽपि सुषुप्तस्थान एकीभूत इत्येव किं नोपक्रान्तं 'यत्र सुप्तो न कञ्चने'त्यादि स्थाननिरूपणं किमर्थमिति शङ्कां परिहरन्नवतारयति—यत्स्थानमिति।

सुखम् । चेतो नेहाहङ्कारिकं किन्तु चैतन्यम् । स्वयंप्रकाशचैतन्यसुख इति यावत् । प्राज्ञस्तृतीयः पादः । यद्यपि 'प्राज्ञेनात्मना सम्परिष्वक्तः' 'प्राज्ञेनात्मनान्वारूढः' इति तत्र तत्र प्राज्ञशब्दः परमात्मनि सुषुप्तिस्थाने प्रसिद्धः, अथापि सुषुप्तौ तेन सह एकीभावादपेतनामरूपस्तन्नाम्नैव व्यवहार्यो भवति, तदुच्यते प्राज्ञ इति ॥३॥

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥४॥

ननु सुषुप्तस्थान एकीभूतस्यास्य कुत इदमैश्वर्यं, ? सपदि यदयमानन्दमय आनन्दैकभुक् च भवति, तत्र निमित्तं स्थानमहिमानमाह— एष इत्यादिना । यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति, एष हि सर्वेश्वरः, एष हि सर्वज्ञः, एष ह्यन्तर्यामी, एष हि सर्वस्य योनिः, एष हि भूतानां प्रभवाप्ययौ । तदनेनानन्दमयेनाविभागं प्राप्तस्य आनन्दैकभुक्त्वमुपपन्नतरम् ॥४॥

नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् । अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥५॥

अथ तुरीयं पादं निरूपयति—नान्तरिति । जाग्रदाद्यवस्थात्रयत उत्तीर्णः प्रकृतिबन्धविनिर्मुक्तः स्वस्वरूपमापन्नः प्रत्यगात्मा चतुर्थः

पाद उच्यते, तस्यास्य स्वरूपं विशिनष्टि । नान्तःप्रज्ञमिति स्वाप्नावस्थव्यावृत्तिः, न बहिःप्रज्ञमिति जाग्रदवस्थस्य । प्रत्येकं विश्वात्तैजसाच्च व्यावर्त्य दार्ढ्यार्थं पुनरुभयतो व्यावर्तयति—नोभयतःप्रज्ञमिति । लेशतो जाग्रद्दशया संवलिता स्वाप्नदशा वा काचिद्विलक्षणा व्यावर्त्यते—नोभयतःप्रज्ञमित्यनेन । यः प्रज्ञानघनः प्राज्ञः सुषुप्त्यवस्थ उक्तस्ततो व्यावृत्तिमाह—न प्रज्ञानघनं न प्रज्ञमिति । प्रतियोगिसमर्पकप्रज्ञानघनशब्दो नावयवार्थं बोधयति, शुद्धप्रत्यगात्मनि तन्निषेधायोगात्, किन्तु सुषुप्त्यवस्थं पूर्वप्रकृतम् । तदेवं व्यावर्तने किमथमन्ततो व्यपेतज्ञानः? तत्राह—नाप्रज्ञमिति । सर्वज्ञमित्यर्थः । अदृष्टम्—चक्षुराद्यगोचरम् । यद्यपि प्रत्यगात्मस्वरूपं जाग्रदादिदशायामपि चक्षुराद्यगोचरमेव, अथापि भूतसङ्घातोपाधिद्वारा औपचारिकं द्रष्टृत्वादि तत्र प्रसजति, तदपि नेहेत्याशयः । अव्यवहार्यम्—लौकिकसर्वव्यवहारानर्हम् । अग्राह्यम्—मनसोऽप्यगोचरम् । अलक्षणम्—जातिवर्णादिलक्षणशून्यम् । अचिन्त्यम्—इदमित्थमिति केवलया बुद्ध्या चिन्तयितुमशक्यम् । अव्यपदेश्यम्—देवो मनुष्य इत्यादिव्यपदेशानर्हम् । ऐकात्म्यप्रत्ययसारम्—जाग्रदवस्थायां स्वप्नावस्थायां मायातिरोहितस्वरूपो न यथावन्मन्यते स्वस्वरूपं, किन्तु अहमेवमाकारोऽयमेवमाकारः अद्यैवमाकारोऽस्मि पूर्वमेवमाकार आसमिति भौतिकानि विषमरूपाण्यध्यस्यात्मनि विविधात्मप्रत्ययाविष्टो भवति, सुषुप्तौ तु विलुप्तप्रत्ययः । अवस्थात्रयेभ्यो यदा विनिर्मुक्तोऽसंसार्यवस्थस्तु सर्वदाऽऽत्मानमेकमेवाविषममेव ब्रह्मात्मकमेव चानुभवतीति, ऐकात्म्यप्रत्ययसारोऽयम् । प्रपञ्चोपशमम्—देवादिसर्व-

प्रपञ्चो यस्योपशाम्यति । शान्तम्—ऊर्मिषट्करहितम् । शिवं—सुखमयत्वात् । अद्वैतम्—अपेतदेवादिवैषम्यतया सर्वतोऽविशेषाददद्वैतम् । चतुर्थं मन्यन्ते । स आत्मा विज्ञेयो विमुक्तये ॥५॥

इति द्वितीयखण्डभाष्यम् ।

---

सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति ॥१॥

एवमात्मनश्चतुष्पात्त्वमुपपाद्याथोपासनप्रकारमाह—सोऽयमात्मेत्यादि । यो ब्रह्मात्मकत्वेन चतुष्पात्त्वेनोक्तः सोऽयमात्मा अध्यक्षरमोङ्कारः—ओङ्कारे उक्तमात्मानं भावयेदिति यावत् । तत्र प्रणवमात्रासु पादानात्मनो विभावयेदित्याह—अधिमात्रमित्यादिना । अयमात्मा पादशोऽधिमात्रमुपास्यः । कथमेतत् ? पादा मात्रा मात्राश्च पादाः—पादा ह्यंशा आत्मनः, मात्राश्चाक्षरस्यांशाः, अतोंऽशत्वाविशेषात्पादा एव मात्रा मात्रा एव पादाः, ताश्च मात्राः प्रणवस्याकारादयः ॥१॥

जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राऽऽप्तेरादिमत्त्वाद्वाऽऽप्नोति ह वै सर्वान्कामानादिश्च भवति य एवं वेद ॥२॥

केनालम्बनेन कं पादं भावयेत्तदेतद्विशिष्याह—जागरित इत्यादिना । योऽकारः प्रथमा मात्रा स वैश्वानरः प्रथमः पादः । केन साम्येनेत्यत्राह—आप्तेरादिमत्त्वाद्वेति । अकारो हि सर्वमक्षरमा-

मोति, 'अकारो वै सर्वा वागि' ति श्रुतेः, विश्वश्चायमर्थानखिलान्, आदिश्चायमितरस्य वर्णस्य, आदिश्चैष तैजसाद्यपेक्षया। तदकारेणालम्बनेन विश्वमुपासीतेति भावः। य एवमुपास्ते आप्नोति ह वै सर्वान्कामान् आदिश्च भवति–प्रथमो भवति, मान्यो भवतीति यावत्। अत्रेदं बोध्यम्–स्तूयते उपासनमिदं फलश्रुत्या, न चेह पादस्यैकैकस्य स्वातन्त्र्येणोपासनविधाने तात्पर्यम्, अपि तु तत्तदवस्थोपलक्षितस्य तत्तन्मात्रावलम्बनतया अवस्थातीतस्य प्रणवालम्बनतया विशिष्टमेकमेवोपासनमिह विधीयते, अवस्थोपलक्षितस्य तदतीतस्य च ब्रह्मात्मकतयैव विभावनं कार्यमिति प्रथमत एव प्रोक्तम्, तस्यास्योपासकस्य ब्रह्मात्मकस्वात्मानुभवलक्षणकैवल्यलक्षणमोक्षप्राप्तिः फलम् ॥२॥

**स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वोत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित्कुले भवति य एवं वेद ॥३॥**

योऽयमुकारः प्रणवस्य द्वितीया मात्रा सोऽयं स्वप्नस्थानस्तैजसः–उकारे तैजसदृष्टिः कार्येति यावत्। तस्य तद्रूपत्वेन भावनानिमित्तं समानगुणयोगमाह—उत्कर्षादुभयत्वाद्वेति। विश्वतो हि बाह्येन्द्रियार्थसम्प्रयोगसापेक्षभोगात्तन्निरपेक्षानन्यसामान्यविचित्रार्थभोगसम्पत्तेस्तैजस उत्कृष्ट इव। यद्वा–उत्कर्ष उत्कर्षणम्, स्थूलादुत्कृष्ट इव हि प्रविविक्तमर्थं सूक्ष्ममनुभवति तैजसः। उकारश्च प्रणवावयवः अकारमकारमध्यसंलग्नः समुत्कृष्ट इव प्रकाशमेति। उभयत्वात्–जाग्रत्सुषुप्तिमध्यसंलग्ने स्वप्ने नियतो हि पूर्वापरांशसम्बन्धः।

उत्कर्षति ह वै ज्ञानसन्ततिं य एवं वेद—शिष्यप्रशिष्यपरम्परया ज्ञानानुवृत्तिर्भवतीति यावत्। समानश्च भवति—मानसहितो भवति, मानं प्राप्नोति लोक इति यावत्। नास्याब्रह्मवित्कुले भवति—नावेदविदस्य कुले भवति ॥३॥

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा
मितेरपीतेर्वा मिनोति ह वा इदꣳ सर्व-
मपीतिश्च भवति य एवं वेद ॥४॥

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा—मकारे प्राज्ञं भावयेदिति यावत्। तत्र निमित्तं समानगुणयोगमाह—मितेरपीतेर्वेति। मिनोति हि प्राज्ञो जाग्रदवस्थं स्वाप्नावस्थं च तादात्म्येन स्वात्मनि, एवमकारोकारौ हि मकारो मिनोति, प्रणवस्य मकारावधित्वात्। अपीतिः—अप्ययः, नाशः। सुषुप्तौ ह्यस्तं गच्छतो नामरूपे, अत एव च जाग्रत्स्वाप्नयोरवसानभूमिरयम्। एवं प्रणवे मकारो ह्यवसानभूमिः। मिनोति ह वा इदं सर्वं य एवं वेद—य एवमुपास्ते सर्वमिदं मिनोति परिच्छिनत्ति जानाति, अस्यापीतिश्च भवति—दुःखक्षयो भवति ॥४॥

इति तृतीयखण्डभाष्यम्।

---

अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः
शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्या-
त्मनात्मानं य एवं वेद य एवं वेद ॥१॥

अमात्रश्चतुर्थः—जाग्रदाद्यवस्थात्रयातीतश्चतुर्थः शुद्धः प्रत्यगात्मा, अमात्रः—न विद्यते मात्रा आलम्बनं यस्य । विश्वादयो ह्यस्यांशाः प्रणवांशभूतमात्रावलम्बनाः, अयं त्वंशी चतुर्थः न मात्रालम्बनः, किन्तु विशिष्टप्रणवालम्बन एवेति भावः । यद्वा—अमात्रः—परिच्छेद-शून्य इत्यर्थः । अद्वैत इत्यन्तं पूर्ववद्व्याख्येयम् । एवमोङ्कारः—अका-रादिमात्रासु विश्वादिचिन्तनपूर्वकं प्रणवे चतुर्थं शुद्धप्रत्यगात्मानं विचिन्तयेदिति भावः । न केवलमवस्थात्रयातीतत्वेन, अपि तु ब्रह्मा-त्मकत्वेनापीति बोध्यम् । प्रक्रमे हि 'सोऽयमात्मा चतुष्पादि' त्यत्र तच्छब्देन ब्रह्मात्मकत्वं प्रस्तुतम् । य एवं वेद सोऽयमात्मैव स्वय-मेव आत्मनैव स्वेनैव रूपेणैवमुपासितेन साधनेनात्मानं स्वस्वरूपमेव विशुद्धं संविशति । वस्तुतस्त्वस्या उपनिषदः प्राचीनैः विश्वो वैश्वा-नरः जाग्रद्दशानिर्वाहकः वैश्वानरविद्योक्तः परमात्मनोऽवतारविशेषः, तैजसः स्वाप्नदशानिर्वाहकः प्रद्युम्नो व्यूहविशेषः, प्राज्ञः सुषुप्तिनि-र्वाहकः सङ्कर्षणः, चतुर्थः परो वासुदेवः, एवं परमात्मा चतुष्पात्, अस्मिन्नेव यथाक्रमं व्यस्तसमस्तप्रणवदृष्टिर्विधीयत इति यद्व्याख्यातं तदव्याक्षेपम् । शब्दार्थक्रमस्तु तत एवावगन्तव्यः ॥१॥

इति चतुर्थखण्डभाष्यम् ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण—परमहंसवर्य—
योगिराज—श्रीगोपालानन्दस्वामिविरचितं
माण्डूक्योपनिषद्भाष्यं समाप्तम् ।





# तैत्तिरीयोपनिषत् ।

गोपालानन्दस्वामिविरचितभाष्योपेता ।

## शिक्षावल्ली ।

ॐ शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्माऽसि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि ऋतं वदिष्यामि सत्यं वदिष्यामि । तन्मामवतु तद्वक्तारमवतु अवतु मां अवतु वक्तारम् । ओं शान्तिः शान्तिः शान्तिः ॥१॥ (सत्यं वदिष्यामि पञ्च च)

अस्ति यो हृदयाकाशे पुरुषोऽयं मनोमयः ।
हिरण्मयं तममृतं नित्यानन्दमुपासहे ॥
स एष सहजानन्दो भगवान् पुरुषोत्तमः ।
आविरस्तु हृदम्भोजे धियं विमलयन्मम ॥

यत्प्रसादसमुद्भूतविशुद्धमतिसम्पदा ।
तैत्तिरीयोपनिषदां विवृतिः क्रियते मया ॥

अथ विद्यां श्रावयति, कर्मणां हि विद्यायां विनियोगः कार्यो निःश्रेयसकामेन, निःश्रेयससाधनीभूता हि विद्या मृदितमनःकषायस्यैव स्यात्, तदुपमर्दश्चानुष्ठितैरकामैः कर्मभिः । अकृते च विद्यायामुपयोगे गतागतश्रमफलकान्येव कर्माणि स्युः । तत्रादौ शान्तिमन्त्रः श्राव्यते, येन शान्तिमन्त्रेण पठितेन विद्याप्रत्यूहोपशमः स्यात्, ततश्च विद्यारम्भो निरन्तरायो निर्वर्तेत । शं न इत्यादि । शं प्रार्थ्यते मित्रादिभ्यः । मित्रः—सूर्यः, यः प्राणान् रश्मिभिः पुष्णाति, स एष प्राणवृत्तेरह्नश्चाभिमानी नः शं प्रयच्छतु । उत्तरत्र श्रूयमाणस्य भवत्वित्यस्य वाऽत्रापि सम्बन्धः, शमिति साधने साध्योपचारः, सुखकारी भवत्विति यावत् । पञ्चम्याः स्थाने छान्दसः सुप्रत्ययो वा, मित्रात् शं भवत्विति यावत् । तथा वरुणादिभ्यः शं प्रार्थ्यते । वरुणोऽपानवृत्त्यभिमानी रात्रेश्चाभिमानी देवताविशेषः । अर्यमा चक्षुषोऽभिमानी । इन्द्रः बलाभिमानी । बृहस्पतिः वाचो बुद्धेश्चाभिमानी । उरुक्रमो विष्णुः—यस्य क्रमणं सर्ववस्तुषु उरु—सर्वतोऽधिकम्, सोऽयं सर्वव्यापी विष्णुः । तत्तदभिमानिभ्यः सूर्यादिभ्यस्तत्र तत्र शिवं विष्णोश्च सर्वतः शिवं प्रार्थ्यते । अध्येष्यमाणोपनिषदात्मकं वेदं नमस्करोति—नमो ब्रह्मणे —नमो वेदाय । अथ वायुं प्रणिपत्य स्तौति—नमस्ते वायो इत्यादिना । वायुरेव हि प्राणापानाद्यात्मना भूत्वा शरीरमिदं धत्ते, वायुनैव सर्वाणीमानि विधृतानि । सर्वक्रियानिर्वहणे प्राधान्यं च

तस्यैव । वायो ते नमः । स्तूयते—त्वमेव प्रत्यक्षं ब्रह्मासि—यत् सर्वतो बृहत्त्वात् ब्रह्मेति ख्यायते तदप्रत्यक्षं नः, त्वं तु नः प्रत्यक्षं ब्रह्मासि, बृहत्त्वगुणयोगात् । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि—यदहं प्रत्यक्षं ब्रह्मोपनिषदात्मकं पठिष्यामि तद्ब्रह्मापि त्वमेव, वेदाक्षराणां वायोरेव ह्यभिव्यक्तिः, तदेकायत्तप्रकाशे तस्मिंस्त्वमेव तदिति स्तुतिः । यदृतं स्वरवर्णाद्यस्खलनलक्षणं वदिष्यामि तदृतमपि त्वमेवेति तदृतं त्वामेव वदिष्यामि । यदहं सत्यं यथावस्थितार्थावबोधकं वदिष्यामि तत्सत्यमपि त्वमेवेति त्वामेव सत्यं ब्रह्म वदिष्यामि । तदिदं ब्रह्म वेदाख्यं मामध्येतारं वक्तारमध्यापकं चावतु । आदरात्पुनराह—अवतु मामवतु वक्तारमिति । शान्तिः—विघ्नानामस्त्विति शेषः । त्रिःपाठ आदरात् । आध्यात्मिकादित्रिविधविघ्नोपशमनार्थो वा ।

इति प्रथमोऽनुवाकः ।

---

**ॐ शीक्षां व्याख्यास्यामः । वर्णः स्वरः मात्रा बलं साम सन्तानः । इत्युक्तः शीक्षाध्यायः ॥१॥ ( शीक्षां पञ्च )**

उपनिषद्युपदेक्ष्यन् अध्येतॄणामध्ययने ( उपनिषदां पाठे ) स्वरादिप्रमादो माभूदिति शीक्षाध्याय आदौ श्राव्यते । येन वेदाङ्गभूतशिक्षाध्ययनेनावगतस्वरादिनियमतया स प्रमादो न प्रसजेत् । ननु प्रमादे कोऽनर्थः, अन्यथाप्रतिपत्तिः स्यादिति दृष्टानर्थश्च, यथावदवबोधने ह्युपनिषदः प्रवृत्ताः । शीक्षामिति दीर्घश्छान्दसः, शिक्ष्यते इति शिक्षा, शिक्षणं—शिक्षणप्रकारं व्याख्यास्यामः । शिक्ष्यते अनयेति वा, वेदाङ्गभूता या शिक्षा तां व्याख्यास्यामः—विशेषेण अभि-

अस्मिन्विषये प्रवृत्तां व्याख्यास्यामः । शिक्षया के शिक्ष्यन्ते तान् निरूपयाम इति यावत् । शिक्ष्यत इति कर्मणि वा । वर्णः अकारादिः, स्वरः उदात्तादिः, मात्रा ह्रस्वाद्याः, बलं प्रयत्नविशेषः, साम-समता सा चोच्चारणे, सन्तानः-संहिता, शिक्षया शिक्षितव्या एते । ये वर्णादयः शिक्षाशास्त्रेण यथाशिक्षणमवगन्तव्यास्तेषां निरूपणलक्षणोऽयं शिक्षाध्याय उक्तः ॥१॥

इति द्वितीयोऽनुवाकः ।

---

सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः संहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासंहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः ॥१॥ वायुः सन्धानम् । इत्यधिलोकम् । अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । इत्यधिज्यौतिषम् । अथाधिविद्यम् । आचार्यः पूर्वरूपम् ॥२॥ अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनं सन्धानम् । इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्त-

ररूपम् । प्रजा सन्धिः । प्रजननं सन्धानम् । इत्यधिप्रजम् ॥३॥ अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् । इतीमा महासंहिताः । य एवमेता महासंहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ४

सह नाविति शान्तिपाठोऽयं संहितोपनिषदध्ययनशेषभूतः । शं न इत्यादिस्तु कृत्स्नोपनिषदध्ययनार्थः । शिष्याचार्यौ प्रार्थयेते–नौ शिष्याचार्ययोः अध्ययनजन्यमध्यापनजन्यं यद्यशः ब्रह्मवर्चसं च तदावयोरस्तु । अथ–शिक्षाया अनन्तरमुपनिषदं व्याख्यास्यामः । उपनिषच्च संहितायाः । संहितोपासनमित्येतत् । पर्वक्रमतो ब्रह्मविद्यायां पदमाधापयितुं संहितोपनिषत् प्रथमं प्रस्तूयते । प्रथमं शब्दोपासनं तत अर्थोपासनमिति पर्वक्रमः । वेदाख्यशब्दाध्ययनसंस्कृतचित्तस्यार्थोपासनात् प्रथमं शब्दविशेषलक्षणसंहितोपासनं सन्निहितमिति प्रथमं सन्निहितां संहितामेवालम्बनतया ग्राहयन्ती सेयं संहितोपनिषत् प्रवर्तते । वर्णानां सन्निकर्षः संहितोच्यते, सा च संहिता अधीतायाः शाखाया बोध्या, सान्निध्यात् तदिदमुपासनं पञ्चस्वधिकरणेषु–आश्रयेषु विषयेषु भिन्नभिन्नं प्रवर्तते । तत्राधिलोकमेकमधिज्योतिषमेकमधिविद्यमेकमधिप्रजमेकमध्यात्ममेकम्, लोकादिदृष्ट्योपास्यमानास्ता एता महासंहिता

इत्याचक्षते द्रष्टार आचार्याः, तत्र अधिलोकम्—लोके विषये उपासनमुच्यते। अ उ—ओ, इत्यस्यां वर्णसंहितायां पूर्वापररूपभूतौ पूर्वापरौ वर्णौ द्वौ, श्लिष्टोच्चारणलक्षणः 'परः सन्निकर्षः संहिते'त्युक्तलक्षणः सन्धिः, तदनुकूलयत्नलक्षणं सन्धानं इति द्वौ, संभूय संहिताया अवयवाश्चत्वारः। तेष्वेषु पूर्वरूपं पृथिवी, पूर्वरूपे पृथिवीदृष्टिः कार्या, उत्तररूपं द्यौः, उत्तररूपे द्युलोकदृष्टिः कार्या, आकाशः सन्धिः—सन्धावाकाशदृष्टिः कार्या, वायुः सन्धानम्—सन्धाने वायुदृष्टिः कार्या। इत्यधिलोकं संहितोपासनमुक्तम्। अथाधिज्योतिषमित्यादि। अतिरोहितार्थमेतत्। इतीमा महासंहिताः पञ्चस्वधिकरणेषु व्याख्याताः। एतद्वेदनस्य फलमाह—य एवमेता इत्यादिना ॥१–४॥

इति तृतीयोऽनुवाकः।

---

यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृतात् सम्बभूव। स मेन्द्रो मेधया स्पृणोतु। अमृतस्य देव धारणो भूयासम्। शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरि विश्रुवम्। ब्रह्मणः कोशोऽसि मेधया पिहितः। श्रुतं मे गोपाय। आवहन्ती वितन्वाना ॥१॥ कुर्वाणा चीरमात्मनः। वासांसि मम गावश्च। अन्नपाने च सर्वदा। ततो मे

श्रियमावह। लोमशां पशुभिः सह स्वाहा। आमायन्तु ब्रह्मचारिणः स्वाहा। ( विमायन्तु ब्रह्मचारिणः स्वाहा। प्रमायन्तु ब्रह्मचारिणः स्वाहा। दमायन्तु ब्रह्मचारिणः स्वाहा। शमायन्तु ब्रह्मचारिणः स्वाहा। ) यशो जनेऽसानि स्वाहा। श्रेयान्वस्यसोऽसानि स्वाहा। तं त्वा भग प्रविशानि स्वाहा। स मा भग प्रविश स्वाहा ॥२॥ तस्मिन्सहस्रशाखे। निभगाहं त्वयि मृजे स्वाहा। यथाऽऽपः प्रवता यन्ति। यथा मासा अहर्जरम्। एवं मां ब्रह्मचारिणः। धातरायन्तु सर्वतः स्वाहा। प्रतिवेशोऽसि प्रमा पाहि प्रमा पद्यस्व ॥३॥ वितन्वाना प्रविश स्वाहा सप्त च। ( वितन्वाना शमायन्तु ब्रह्मचारिणः स्वाहा। धातरायन्तु सर्वतः स्वाहैकं च ) ॥

मेधायाः श्रियश्च सिद्धये विनियोज्या मन्त्राः पठ्यन्ते चतुर्थेऽनुवाके। तत्र—'यश्छन्दसा' मित्यादीनां मेधासिद्ध्यर्थानां जपे विनियोगः, 'आवहन्ती वितन्वाने'त्यादीनां श्रीसिद्ध्यर्थानां होमे विनियोगो बोध्यः। 'लोमशा'मित्याद्युत्तरवाक्येषु स्वाहाशब्दयो-

गात् । मेधायाः श्रियश्च ब्रह्मविद्याशेषतयाऽऽशंस्यतेति विद्याप्रकरणेऽस्य श्रवणं सङ्गतम् । असत्यां मेधायां न प्रभवति श्रवणमननयोः, अनिष्पन्नश्रवणमननस्य न विद्यानिष्पत्तिः, तथा पश्वादिद्रव्यसम्पत्तिरहितो न प्रभवति कर्मसु । अननुष्ठितेषु कर्मसु न भवति विद्यान्तरायदुरितक्षयः, अप्रक्षीणदुरितस्य नान्तःकरणं प्रसीदति, अप्रसन्ने मनसि न विद्यानिष्पत्तिः । तत् मेधाश्रियोरपि विद्यार्थता युक्ता नाम । प्रणवः प्रार्थ्यते मेधाकामनया—यश्छन्दसामिति । प्रणवस्यायं विशेषो यत् परस्य ब्रह्मणो वाचक इति, वाच्यस्यैवायं महिमा यद्वाचकसमाश्रयणेनार्थसिद्धिरिति । यः—प्रणवः छन्दसां ऋषभः—श्रेष्ठः, त्रय्याः सारो हि सः । विश्वरूपः—विश्वमस्य रूपमिति स्तूयते वाच्यमहिमाश्रयणेन । विश्वं वाग्जातमस्यैव रूपमिति वा विश्वरूपम् । श्रूयते चान्यत्र 'तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णानि एवमोङ्कारेण सर्वा वाक् सन्तृण्णा ओङ्कार एवेदं सर्वम्' इति । छन्दोभ्योऽध्यमृतात् सम्बभूव—वेदेभ्यो ऋग्यजुःसामलक्षणेभ्यो यदमृतं व्याहृतित्रयम्, तस्मादप्यधिकतया प्रणवः सम्बभूव । त्रयीसारभूतव्याहृतित्रयसारभूत इति यावत् । सोऽयमिन्द्रः—परमेश्वरः, वाच्यगतमैश्वर्यं वाचके समारोप्य स्तूयते । मा—मां मेधया स्पृणोतु—उज्जीवयतु । मेधाबलं प्रयच्छत्विति यावत् । हे देव प्रणव अमृतस्य—प्रकरणात् विद्यालक्षणस्य, धारणो—धारको भूयासम् । विद्यासिद्धिर्मे भूयादिति यावत् । मे शरीरं विचर्षणम्—विचक्षणं बलारोग्यसम्पन्नं भूयात् । मे जिह्वा मधुमत्ता—प्रकरणात् ब्रह्मवदनशीलतया मधुरभाषिणी भूयात् । कर्णाभ्यां भूरि—भूयः विश्रवम्—

प्रकरणात् ब्रह्मविद्यावबोधकं शास्त्रं शृणवानि । शरीरवाक्श्रवणादि सर्वं विद्यानुकूलवृत्ति भूयादिति यावत् । हे प्रणव त्वं ब्रह्मणः- परमात्मनः कोशोऽसि । असिः कोश इव परंब्रह्म त्वयि वाचके आलम्बनभूते वा निहितमिति भावः । मेधया बाह्यलौकिकवस्त्व- वगाहिन्या पिहितोऽसि, लौकिकमतयस्त्वां न जानन्तीति यावत् । यद्वा-ब्रह्मणः कोशोऽसि-धनमिव कोशे त्वयि ब्रह्म निगूढमस्ति, तदिदं सर्वे न जानन्ति । त्वमसि मेधया-येयं प्रज्ञा जपादिसाधन- विशेषावलम्बिनी तया, पिहितोऽसि । शब्दब्रह्मनिष्ठा बहवो हि त्वदीयं शाब्दमेव महिमानमखिलवाङ्मयमूलत्वादिलक्षणं जानन्तो जपहोमादिषु केवलं त्वामाश्रयन्ते । कश्चिदेव तु त्वां परमाल- म्बनं परस्य ब्रह्मणो जानन् उपास्ते, लभते च ततः कोशादिव धनं परंब्रह्म । गुरुभ्यो यन्मया श्रुतं तद्गोपाय-परिरक्ष । अथ होमे विनियोज्याः श्रीसिद्धिप्रदा मन्त्रा उच्यन्ते—आवहन्तीत्या- दिना । आवहन्ती-उपनयन्ती, प्रकरणात् धर्माचरणौपयिकामर्थ- सम्पत्तिम्, वितन्वाना विस्तारयन्ती, चीरमिति दीर्घश्छान्दसः, चिरं कुर्वाणा-चिरकालमनुवर्तमानां कुर्वाणा, श्रीरस्तु, कस्य ? आत्मनः- मम । तथा वासांसि गावश्च मम सन्तु, तथाऽन्नपाने च सर्वदा- यावज्जीवं मम स्ताम् । धर्मैकशेषभूतधनसम्पत्तिलक्षणा श्रीः देहया- त्रोपयिकवासःप्रभृति चेति द्वयं प्रार्थितम्, तत्र प्रथमं देहयात्रौ- पयिकवासःप्रभृतेः प्राधान्यं ज्ञापयन् आह-ततो मे श्रियमाव- हेति । उभयोराशास्ययोर्मध्ये प्रथमं वासःप्रभृति देहि, तदनन्तरं

तां श्रियं ममावह । प्रणव एव प्रार्थ्यते, स एव हि प्रकृतः । सा च श्रीर्धर्मैकशेषभूतेति व्यञ्जयन्नाह—लोमशां पशुभिः सहेति । अव्यादिप्रधानां पशुभिरन्यैश्च सह युक्तां श्रियमावहेति यावत् । यागादिधर्मैकशेषता व्यज्यते । स्वाहाशब्दो होमे विनियोगज्ञापकः । अथानुकूलशिष्यसम्पत्तिः प्रार्थ्यते—आमायन्त्विवति । ब्रह्मचारिणः—विद्यार्थब्रह्मचर्यव्रतनिष्ठाः मा—माम् आयन्तु—आयान्तु । जने—जनानां मध्ये यशः—यशस्वी असानि । वस्यसः—वसुमत्तराणां मध्ये श्रेयान्—प्रशस्यः असानि । हे भग—ऐश्वर्यप्रदत्वात् साधने साध्योपचारेण भगेति प्रणवः सम्बोध्यते, भगवन् इति वाऽर्थः । तं त्वा प्रविशानि—वाच्यस्य ब्रह्मणः वाचकस्य प्रणवस्य चाभेदभावनयेदमुच्यते, सर्वाश्रयं त्वामहं प्रविशानि, त्वदेकाश्रयोऽहमसानीति यावत् । स त्वं सर्वात्मको मां प्रविश । हे भग—भगवन् तस्मिन्सहस्रशाखे त्वयि—त्रयीमूलत्वात् प्रणवः स्तूयते सहस्रशाख इति, अहं निमृजे—शोधयामि, त्वत्संश्लेषेण व्यपेतपापः स्यां इति यावत् । हे धातः—यथा आपः प्रवताः—प्रवणा यन्ति, आपो यथा निम्नदेशे स्वतः प्रवणा यन्ति, यथा वा मासा अहर्जरम्—संवत्सरं यन्ति तथा मां ब्रह्मचारिण आयान्तु सर्वतः । अहोभिः परिवर्तमानो लोकान् जरयतीत्यहर्जरः संवत्सर उच्यते । त्वं प्रतिवेशोऽसि आसन्नगृहस्थानीयोऽसि, सन्निहितोऽसीत्येतत् । मां प्र पाहि । मां प्रपद्यस्व—प्रपदयस्व । अन्तर्भावितण्यर्थोऽयम् ॥१–३॥

इति चतुर्थोऽनुवाकः ।

---

भूर्भुवःसुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मैतां चतुर्थीम् । माहाचमस्यः प्रवेदयते । मह इति तद्ब्रह्म । स आत्मा अङ्गान्यन्या देवताः । भूरिति वाऽयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः ॥१॥ मह इत्यादित्यः । आदित्येन वा सर्वे लोका महीयन्ते । भूरिति वाऽग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वा सर्वाणि ज्योतींषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूंषि ॥२॥ मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वा सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ॥३॥ (असौ लोको यजूंषि वेद द्वे च ॥)

अथ परविद्यामुपदेक्ष्यन् प्रथमं तदङ्गभूतव्याहृत्युपासनमुपदिशति—भूर्भुवःसुवरित्यादिना । भूर्भुवःसुवरित्येता व्याहृतयस्तिस्रः प्रसिद्धाः, तासां व्याहृतीनां चतुर्थीं व्याहृतिं मह इत्येतां माहाचमस्यः—महाचमसस्यापत्यं कश्चिदृषिः प्रवेदयते, उ हेति वृत्तानुवादे, चतुर्थीं व्याहृतिं महाचमस्यो महर्षिर्मन्त्रद्रष्टा ददर्शेति यावत्। मह इति ब्रह्म, महत्त्वात्, ब्रह्मैव हि सर्वतो महत्, महत् बृहदित्यनन्यार्थम् । स एवात्मा सर्वस्य। तस्य महःशब्दवाच्यस्य परस्य ब्रह्मणः अङ्गान्यन्या देवताः । एवं चतुर्थ्या व्याहृतेर्यो मुख्यार्थः स निरूपितः । अथ चतुर्विधं व्याहृतिचतुष्टयोपासनमुच्यते—भूरिति वा अयं लोकः—भूलोकः, भूरिति व्याहृतौ भूलोकदृष्टिः कार्येति यावत्। भुव इत्यन्तरिक्षम्—भुव इति व्याहृतिमन्तरिक्षं भावयेत् । सुवरित्यसौ लोकः—स्वर्गो लोकः, सुवरित्येतां व्याहृतिं स्वर्गं चिन्तयेत्। मह इति चतुर्थी व्याहृतिरादित्यः, तामादित्यं भावयेत्। तस्यां तथा दृष्टौ निमित्तमाह—आदित्येन वा सर्वे भूरादयो लोका महीयन्ते, तथा चतुर्थ्या मह इत्यनया व्याहृत्या भूरादयो व्याहृतयो महीयन्ते। भूरिति वाऽग्निरित्यादि। भूरादिषु क्रमादग्न्यादिदृष्टिः कार्या। चतुर्थ्यां चन्द्रदृष्टौ निमित्तमाह—चन्द्रमसा वा सर्वाणि ज्योतींषि महीयन्ते इति। भूरिति वा ऋच इति। मह इति ब्रह्म—प्रणवः भूरादिषु क्रमादृगादिदृष्टिः कार्येति यावत्। चतुर्थ्यां व्याहृतौ प्रणवदृष्टौ निमित्तमाह—ब्रह्मणा वावेति। भूरिति वै प्राण इत्यादि। भूरादिषु क्रमात् प्राणादिदृष्टिः कार्येति यावत्। चतुर्थ्यां व्याहृतावन्नदृष्टौ निमित्तमुच्यते—अन्नेन वेति। ता वा एता

भूरादयो व्याहृतयश्चतस्रश्चतुर्धा भवन्ति दृष्टिभेदात् । तस्मात् चतस्रोऽपि व्याहृतयः प्रत्येकं चतस्रः । प्रथमां व्याहृतिं भूलोकात्मना अग्न्यात्मना ऋगात्मना प्राणात्मना च पश्येत्, द्वितीयामन्तरिक्षात्मना वाय्वात्मना सामात्मना अपानात्मना च पश्येत्, तृतीयां स्वर्गात्मना आदित्यात्मना यजुरात्मना व्यानात्मना च पश्येत्, चतुर्थीमादित्यात्मना चन्द्रात्मना प्रणवात्मना अन्नात्मना च पश्येदिति चतसृणामपि चतुर्विधं मिलितमुपासनं कार्यमित्युक्तं भवति । ता एता व्याहृतीरुक्तेन प्रकारेण वेद, स वेद ब्रह्म—वक्ष्यमाणब्रह्मविद्यां लभते, ततश्चासै ब्रह्मविदे सर्वे देवा बलिमुपहरन्ति—पूजयन्तीत्येतत् । अङ्गिफलमङ्गे प्रोच्यते ॥१–३॥

इति पञ्चमोऽनुवाकः ।

---

स एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ ॥१॥ सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति

मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति । आकाशशरीरं ब्रह्म । सत्यात्मप्राणारामं मन आनन्दम् । शान्तिसमृद्धममृतम् । इति प्राचीनयोग्योपास्स्व ॥२॥ ( वायावमृतमेकं च ॥ )

अङ्गभूता विद्या प्रोक्ता, अथ तदङ्गिभूतां परविद्यामाह—स इति । य एष प्रसिद्धः अन्तर्हृदये आकाशः, तस्मिन् सोऽयं पुरुषः—यो मह इत्येतस्याश्चतुर्थ्या व्याहृतेर्वाच्यः परमात्मा यस्याङ्गान्यन्या देवताः सन्निधत्ते सोऽयं मनोमयत्वादिधर्मविशिष्टः । मनोमयः—विशुद्धेन मनसा ग्राह्यः । अमृतः—जन्ममरणादिसांसारिकधर्मरहितः । हिरण्मयः—कमनीयदिव्यविग्रहः । मनोमयत्वादिगुणविशिष्टतया सोऽयं पुरुषो हृदयाकाशे उपास्य इति यावत् । अथास्योपासकस्य ब्रह्मप्राप्तौ या गतिर्मार्गः स उच्यते—अन्तरेणेत्यादिना । अस्ति काचित् सृतिः सुषुम्णाख्या नाडी, या इन्द्रस्य—परमेश्वरस्य परमात्मनः योनिः—प्रापिका । प्रापकत्वाद्योनिरुच्यते । सेयं लक्ष्यते—अन्तरेण तालुके—तालुकयोरन्तरेण निर्गता, तथा तालुकयोरन्तरेण यः स्तन इव लम्बते मांसखण्डः तस्मान्निर्गता, तथा यत्रासौ केशानामन्तो मूलं विवर्तते तत्र मूर्धप्रदेशे अभिसम्बद्धेत्येतत्, व्यपोह्य शीर्षकपाले विनिर्गता । तयाऽयमुपासको विनिर्गतः अर्चिरादिना मार्गेण परं ब्रह्म प्राप्नोति । अस्योपासकस्यैतावान्विशेषः—यदेष व्याहृत्युपासकस्तत एव भूरित्येतत्प्रथमव्याहृत्युपास-

नमहिम्ना मुक्तिमार्गवशात्प्राप्तेऽग्निलोके कञ्चित् कालं प्रतितिष्ठति । प्रथमव्याहृतावग्निदृष्टिर्ह्यनेन कृता, तथा द्वितीयायां वायुदृष्टिस्तृतीयायामादित्यदृष्टिः, ततोऽग्नेर्निर्गतो भुव इत्यनया व्याहृत्योपासितया वायौ–वायुलोके । ततश्च सुवरित्यनयाऽऽदित्यलोके । तदिदमुच्यते– भूरित्यग्नौ प्रतितिष्ठति भुव इति वायौ सुवरित्यादित्ये इति । अथानेनैवातिवाहिकमार्गक्रमेण मह इत्येतस्या व्याहृतेर्वाच्यस्य परस्य ब्रह्मणो मनोमयत्वादिगुणविशिष्टस्योपासनात् परब्रह्मणि प्रतितिष्ठति । तदिदमाह–मह इति ब्रह्मणीति । स एष स्वाराज्यम्–अकर्मवश्यतां प्राप्नोति । नच पुनरावर्तत इत्येतत् । यतोऽयमकर्मवश्यः, अत एवेन्द्रियवशगो न भवति । किन्तु मनःप्रभृतीनां पतिर्भवति । तत्तदिन्द्रियप्रकाश्यानामर्थानां तत्तदिन्द्रियनिरपेक्षं प्रकाशने समर्थो भवति । स्वसङ्कल्पायत्तसकलार्थप्रकाशो भवतीति यावत् । तदिदमुच्यते—आप्नोति मनसस्पतिमिति । मनस्पतित्वमित्यर्थः । मानसवाचिकचाक्षुषश्रावणादिसकलविज्ञानानामेष प्रभविता भवति । ततो–ब्रह्मप्राप्तेरेतच्च भवति–आकाशशरीरं ब्रह्म– आसमन्तात् काशमानदिव्यशरीरमसङ्कुचितज्ञानैकस्वरूपं च । ब्राह्मेण रूपेण परब्रह्मसाम्यं सम्पद्यते इति भावः । किञ्च–सत्यात्मप्राणारामं च भवति–सत्यमित्यविकृतमुच्यते, स्वरूपतः स्वभावतश्च यदविकृतं सर्वस्यात्मभूतं च सर्वप्राणनहेतुत्वात् प्राणभूतं च यत् परं ब्रह्म तदेकारामोऽयं मुक्तो भवति । मुक्तस्वरूपमिति विशेष्यमपेक्ष्य नपुंसकनिर्देशः, छान्दसो वा । मन आनन्दं च भवति– मनःशब्दः सङ्कल्पपरः । सङ्कल्पमात्रसिद्धसर्वानन्दश्च भवतीति

यावत् । कश्चिदाचार्यः प्राचीनयोग्यनामानं शिष्यमाह—हे प्राचीनयोग्य ! उक्तेन प्रकारेणोपास्स्व इति । अयमाचार्यवचनोपन्यास आदरार्थः ॥१-२॥

इति षष्ठोऽनुवाकः ।

---

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक् त्वक् । चर्म मांसं स्नाय्वस्थि मज्जा । एतदधिविधाय ऋषिरवोचत् । पाङ्क्तं वा इदं सर्वम् ॥१॥ पाङ्क्तेनैव पाङ्क्तं स्पृणोतीति ( सर्वमेकं च )

अथ पाङ्क्तोपासनमुपदिश्यते—पृथिव्यन्तरिक्षमित्यादिना । अधिभूतं पञ्चकत्रयमध्यात्मं च पञ्चकत्रयम् । तत्र प्रत्येकं पञ्चत्वसङ्ख्यासाम्यात् पाङ्क्तदृष्टिर्विधीयते—पाङ्क्तं वा इदं सर्वमिति । शारीरमान्तरं प्राणाद्यध्यात्ममुच्यते बाह्यं पृथिव्याद्यधिभूतमुच्यते । तत्र पृथिव्यादि दिगन्तमेकं पञ्चकम्, अग्न्यादि नक्षत्रान्तमपरं पञ्चकम्, अबाद्यात्मान्तं तृतीयं पञ्चकम् ( आत्माऽत्र विराड्देहः ) ।

तथा–प्राणादिपञ्चकम्, चक्षुरादिपञ्चकम्, चर्मादिपञ्चकं चैत्य-ध्यात्मम् । एतदधिविधाय–एतदधिकृत्य कश्चिदृषिरवोचत् पाङ्क्तं वा इदं सर्वमिति । पङ्क्तिच्छन्दसः पञ्चाक्षरत्वेन पञ्चत्वसङ्ख्यासाम्यात् पञ्चकेऽस्मिन् पाङ्क्तदृष्टिर्विधेयेति यावत् । पाङ्क्तेन–पाङ्क्तदृष्ट्योपास्यमानेनानेन पाङ्क्तं पृथिव्यादि स्पृणोति–पालयति, साम्राज्यं लभते इति भावः ॥१॥

इति सप्तमोऽनुवाकः ।

---

ओमिति ब्रह्म । ओमितीदं सर्वम् । ओमित्येतदनुकृतिर्ह स्म वा अप्यों श्रावयेत्याश्रावयन्ति । ओमिति सामानि गायन्ति । ओं शमिति शस्त्राणि शंसन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति ओमिति ब्रह्मा प्रस्तौति । ओमित्यग्निहोत्रमनुजानाति ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवाप्राप्नोति ॥१॥ (ओं दश) ॥

परब्रह्मोपसनालम्बनभूतं प्रणवं स्तौति–ओमितीति । इतिशब्दः शब्दस्वरूपपरिच्छेदकः । ओमित्येतत् प्रणवस्वरूपं ब्रह्मैव–वाचको वाच्याभेदारोपेण स्तूयते । ओमितीदं सर्वम्–प्रणव एव सर्वमिदं वाङ्मयम् । सकलशब्दानां वेदप्रभवत्वात् वेदस्य चैतन्मूलत्वात् । सर्वमिदं वाच्यं प्रणव एवेति वा स्तूयते । अतः प्रणवो ब्रह्मैव अत

एव ब्रह्मप्रभवमिदमखिलं प्रणव एवेति स्तूयते । ओमित्येतदनुकृतिः—अनुकृतिरनुकरणमनुज्ञाक्षरम्। ह स्म वा इति प्रसिद्धौ । कार्यमात्रमनुजानन्नोमिति ह्युच्चारयति । अपि—अपिच । ओं श्रावयेति प्रैषपूर्वकमाश्रावयन्ति। ओमित्युपक्रम्यैवोद्गातारः सामानि गायन्ति। ओं शमित्युपक्रम्यैव शस्त्राणि शंसन्ति। गीतिरहिता ऋचः शस्त्राण्युच्यन्ते। अध्वर्युः ओमित्येव प्रतिगरं—प्रतिशंसनं प्रतिगृणाति—प्रतिशंसति। होतरि शंसति तच्छंसनमनु अध्वर्युः प्रतिशंसति ओमिति। ब्रह्मा—ओमिति हि प्रस्तौति—अनुजानाति । ओमिति अग्निहोत्रमनुजानाति—जुहोमीत्युक्ते ओमित्यनुजानाति । प्रवक्ष्यन्—वेदप्रवचनं करिष्यन् प्रथममाह ओमिति, ब्रह्म—वेदं अध्ययनमुखेनोपाप्नवानि इति प्रवृत्तः, ओमित्येतदुच्चारणपूर्वकमेवाध्यापि प्राप्नोति। तदेवं वैदिकक्रियामात्रस्य प्रणवपूर्वकत्वेन प्रणवस्यैतावान् महिमा, सोऽयं प्रणव उपास्य इति भावः ॥१॥

इत्यष्टमोऽनुवाकः ।

---

ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रं च स्वाध्यायप्रवचने च। अतिथयश्च

स्वाध्यायप्रवचने च । मानुष्यं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च ॥१॥ प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च । सत्यमिति सत्यवचा राथीतरः । तप इति तपोनित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ॥ (प्रजा च स्वाध्यायप्रवचने च षट् च) ॥

विविदिषोरपि कर्मणामावश्यकतां ज्ञापयन् कर्मणामवश्यानुष्ठेयतामाह—ऋतमित्यादिना । ऋतम्—सूनृतवचनम्, स्वाध्यायप्रवचने—अध्ययनाध्यापने, इत्येतान्यनुष्ठेयानि । सत्यम्—यथादृष्टार्थं भूतहितवचनम्, समदर्शनं वा । तथा च वचनम्—'ऋतं च सूनृता वाणी सत्यं तु समदर्शनम्' इति । ऋतं सत्यं तपः अन्यच्च वक्ष्यमाणमनुतिष्ठता स्वाध्यायप्रवचने न त्याज्ये इत्येदर्थज्ञापनाय प्रत्येकं सत्यादिभिः सह स्वाध्यायप्रवचनयोर्निर्देशः । तपः—कृच्छ्रचान्द्रायणादिलक्षणम्, दमः—बाह्यकरणजयः, शमः—अन्तःकरणजयः संपाद्यः । अग्नयः आधातव्याः । अग्निहोत्रं कार्यम् । अतिथयः सत्कार्याः । मानुषम्—भृत्यबन्धुजनपोषणादिलक्षणं कर्म यथासंभवमनुष्ठेयम् । प्रजा—धर्मप्रजा सम्पाद्या, तदर्थं प्रजननम्—ऋतौ भार्यागमनं कार्यम् । प्रजातिः प्रकर्षेण जातिर्जननम्—पौत्रादिसन्तानसम्पादनं कार्यम् । सर्वमिदमाश्रमाङ्गं कर्म यथाधिकारं स्वाध्याय-

प्रवचनाभ्यां सहैवानुष्ठेयम् । तथाभूतस्यैव विद्याभिमुख्यौपयिकत्वात् । अत्र सत्यवचा राथीतरो नाम ऋषिः सत्यमेवैषु प्रधानमित्याह । तपोनित्यः पौरुशिष्टिस्तप एव प्रधानमाह । नाको मौद्गल्यः स्वाध्याय-प्रवचने एव प्रधाने इत्याह । तदेव—स्वाध्यायप्रवचनमेव हि तपः इति स एव नाको मौद्गल्यो मन्यते । आदराद्द्विर्वचनम् । अत्र अनुष्ठेयतया निर्दिष्टेषु ऋतादिप्रजात्यन्तेषु सत्यतपःस्वाध्यायप्रवचनानामार्षाभिमतप्राधान्यपक्षनिरूपणमितरापेक्षया तेषां प्राधान्यज्ञापनार्थ ॥१॥

इति नवमोऽनुवाकः ।

---

अहं वृक्षस्य रेरिवा कीर्तिः पृष्ठं गिरेरिव । ऊ-र्ध्वप्रवित्रो वाजिनीव स्वमृतमस्मि । द्रविणं सुवर्चसम् । सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ॥१॥ ( अहं षट् ) ।

अथ विविदिषुणा विद्यासिद्ध्यर्थं जप्यं मन्त्रमाह—अहमित्या-दिना । अहं वृक्षस्य रेरिवा—छेद्यस्वभावस्य शाखोपशाखासहस्रसङ्कुल-स्याहङ्काराख्यसंसारतरोः क्षपयिता, समुच्छिन्नदेहात्माभिमान इति यावत् । मम कीर्तिर्विज्ञानजनिता गिरेः पृष्ठवदत्युन्नता । समधि-ककीर्तिशाल्यहमिति यावत् । यद्वा—देहो ह्येष वृक्ष इव छेद्यस्वभावः, पामरा हि वृक्षेऽस्मिन्निमग्नमात्मानं वृक्षसधर्माणं पश्यन्तो वृद्धि-ह्रासादिभिरुपश्लिष्टं पश्यन्ति, नाहं तथा मन्ये, किन्तु वृक्षस्यास्य रेरिवा—प्रेरकः, जडोऽयं वृक्षो देहः, अजडेन मयाऽधिष्ठात्रा चेष्टते ।

अजडतामेव द्रढयति—कीर्तिः पृष्ठं गिरेरिव—कीर्तिः—दीप्तिः सा च नैसर्गिकचैतन्यज्योतिषः, सेयं दीप्तिः गिरेः पृष्ठमिव—अप्रकम्प्या समधिकोच्छ्राया च । देहोऽयं मलमयः केवलमपवित्रः । अहं तु—ऊर्ध्वपवित्रः—इतरेभ्यः पवित्रेभ्य ऊर्ध्वं वर्तमानः पवित्रः । पवित्रतम इति यावत् । न हि ज्ञानघनादन्यत् पवित्रम् । अविजानतां त्वात्मज्योतिःपवित्रतापादनाय जडवस्त्वन्तरान्वेषणम् । न केवलं पवित्रतमत्वम्, किन्तु भोग्यतमता च, मलमयं हि देहाख्यं हेयद्रव्यं किमपि, अहं तु वाजिनीव स्वमृतमस्मि । वाजिनि—वाजमन्नम्, तदस्येति वाजी आदित्यः, आदित्याज्जायते वृष्टिस्तस्मादन्नं प्रजायते, तदन्नमादित्यस्य हि । (जन्यजनकभावलक्षणः सम्बन्धोऽत्र विवक्षितः) तस्मिन्निव—तस्मिन्वर्तमानं स्वमृतमिव, अहं स्वमृतमस्मि । आदित्ये हि परमपुरुषः परमानन्दमयः सन्निहितो योगिभिरुपास्यः, स चामृतं ब्रह्मदर्शिनामिति प्रकृष्टामृततया स्वमृतमुच्यते । तद्वदहं स्वमृतमस्मि, न तु तदेवामृतमहम्, किन्तु नैसर्गिकशुद्धस्वभावतस्तत्साधर्म्यात् तत्सदृशोऽहमस्मि । सुवर्चसं द्रविणम्—ज्ञानैकघनतया दीप्तिमद्द्रव्यमस्मि । सुमेधाः—आत्यन्तिकदुःखोच्छेदकविज्ञानसम्पन्नतया सुमेधाः । अमृतोऽक्षितः—मरणरहितः क्षयवर्जितश्च । इति—इत्ययं मन्त्रः त्रिशङ्कुनामकस्य कस्यचिदृषेर्मन्त्रद्रष्टुर्वेदानुवचनम्—वेदो वेदनमात्मविज्ञानं तदनुवचनम्, विज्ञानज्ञापकं वचनमित्येतत् ॥१॥

इति दशमोऽनुवाकः ।

---

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ॥१॥ देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि तानि सेवितव्यानि। नो इतराणि। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि ॥२॥ नो इतराणि। ये के चास्मच्छ्रेयांसो ब्राह्मणाः। तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ॥३॥

ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः ।
अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु ।
ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः ।
अलूक्षा धर्मकामाः स्युः । यथा तेषु वर्तेरन् ॥४॥
तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः ।
एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपासितव्यम् ॥ (स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं तानि त्वयोपास्यानि विचिकित्सा वा स्यात्तेषु वर्तेरन् सप्त च) ॥

इदमाचार्यानुशासनमुखेन प्रवर्तते वेदानुशासनम्, विविदिषोः कर्मकर्तव्यतानियमज्ञापनार्थम् । विद्याप्रकरणे श्रवणाच्चैवं हार्दमुन्नीयते । न विविदिषामात्रेण कर्मभ्यो विरतिरुचिता । आविद्यानिष्पत्तेरनुष्ठेयं नाम कर्म, विद्या चापरोक्षलक्षणा, सा हि ध्यानपरिपाकनिष्पाद्या, कर्मभिरुपमर्दितदुरितान्तरायस्यैव तत्सिद्धिः । यद्यपि निःश्रेयसे विद्यैव साधनम्, अथापि तन्निष्पत्तौ कर्मणामस्त्युपयोग इति कर्मावश्यमनुष्ठेयम् । श्रूयते च 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा' इति । अतएव च कर्मणो विद्याङ्गत्वम् । अध्याप्य वेदमाचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद—सर्वतः श्रेयानयं धर्मः,

यत् सत्यवदनम्, समूलो वा एष परिशुष्यति योऽनृतं वदति । धर्मं चर–श्रौतं स्मार्तं च यथाधिकारमाचर । स्वाध्यायादध्ययनान्मा प्रमदः, अध्ययने त्वनुदिनमवहितेन भाव्यम्, विज्ञानमूलं हि तत्, आचार्याय तस्य यत्प्रियं धनं तदाहृत्य–आनीय समर्प्य तेनानुज्ञातः कृत्वा दारसङ्ग्रहं प्रजातन्तुम्–पुत्रपौत्रादिलक्षणं प्रजासन्तानं मा व्यवच्छेत्सीः । सन्तानसम्पत्तये दारानुद्वहेः, इति यावत् । धर्मानुष्ठानशेषतयैतद्विधानम् । सत्यात्–सत्याचरणान्न प्रमदितव्यम्, प्रमादतोऽपि नासत्यं कुर्याः, पूर्वमनृतवदनं प्रतिषिद्धमिह तदाचरणं प्रतिषिध्यते, प्रमादतोऽपि न कार्यमित्यपि विशेषः । धर्मान्न प्रमदितव्यम्, अत्र प्रमादो निषिध्यते इति विशेषः, अनुष्ठेयेष्वेकोऽपि प्रमादेन न त्याज्य इति यावत् । कुशलात्–क्षेमात्, न प्रमदितव्यम् । आपदि गौणधर्माचरणादिभिरात्मा रक्ष्य इति यावत् । भूत्यै न प्रमदितव्यम्–मङ्गलावहं कर्मावहितः समाचरेः, इति यावत् । अध्ययनाध्यापनाभ्यां न प्रमदितव्यम् । अध्ययने प्रमादो निषिध्यते, अध्यापनेऽपीत्यपि विशेषः । धर्मान्न प्रमदितव्यमिति सामान्यतः समादिष्टमपि विशेषतः समादिशति तदाचरणदार्ढ्याय–देवपितृकार्याभ्यां न प्रमदितव्यम्–दैवं–वैश्वदेवादि, पित्र्यं श्राद्धम् । स्वाहाकारस्वधाकारविरहितमन्यत् कर्म कृतमप्यकृतप्रायमिति यावत् । मात्रादयस्त्वया देवतावदुपास्याः । अथ शिष्टाचारप्राप्तानि यान्यनवद्यानि–दोषरहितानि तानि त्वया सेवितव्यानि । नो इतराणि–सदोषाणि शिष्टानुष्ठितान्यपि न त्वया सेव्यानि । शिष्टानामपि जातु रजसः समुन्मेषेण भवेदेव निन्दिताचरणम्, तदाचरणं न

प्रमाणं कर्तव्ये कर्मणि, इति भावः। अस्माकमप्याचार्याणां यानि सुचरितानि श्रुतिस्मृत्यविरुद्धानि तान्येव त्वयोपास्यानि। नो इतराणि। आचार्याणामप्यस्माकमवर्जनीयो नाम गुणमयसङ्घात् कामलोभोन्मेषः, तन्मूलकानि प्रामादिकान्यसदाचरितानि नैव सेव्यानि। ये के च अस्मत्—अस्मत्तः श्रेयांसः—श्रेष्ठाः विद्यया वृत्ततो वा ब्राह्मणाः, तेषां त्वया आसनेन—आसनदानादिना प्रश्वसितव्यम्, विनयेन वर्तितव्यमित्येतत्। यद्देयं तच्छ्रद्धयैव देयम्, अश्रद्धयाऽदेयम्, श्रिया देयम्—श्रीरत्र मनस्तुष्टिलक्षणा, तया देयम्। ह्रिया देयम्—लज्जया देयम्, बहु दीयमानमपि इदमत्यल्पमस्मै कथं दद्यामिति लज्जापूर्वकं देयम्, न तु मया बहु दीयते इत्यभिमतिपूर्वकम्। भिया देयम्—अदत्ते तस्करादिभ्य इह भयात् परतश्च प्रत्यवायतो भयात् देयम्। संविदा देयम्—संविदा—मैत्र्या देयम्, प्रयोजननिरपेक्षमिति यावत्। अथैवं वर्तमानस्य ते कर्मणि वृत्ते वा विचिकित्सा संशयः स्यात्, तदा तत्र देशे काले वा, ये वक्ष्यमाणगुणविशिष्टा ब्राह्मणाः स्युः; कीदृशाः? संमर्शिनः—सर्वत्र कर्तव्ये कर्मणि शास्त्रीये वृत्ते वा विचारक्षमाः, युक्ताः—न केवलं विचारक्षमाः अपि तु युक्ताः—नियमेन कर्मसु युक्ताः, आयुक्ताः—समन्ताद्युक्ताः साङ्गोपाङ्गं सकलेषु श्रौतेषु स्मार्तेषु च कर्मसु युक्ताः, अलूक्षाः—अरूक्षा अक्रूरमतयः, क्रोधादिरहिता इति यावत्। धर्मे एव कामो येषां नार्थे तथाभूताः, त एते ब्राह्मणाः तेषु—सन्दिग्धेषु कर्मसु वृत्तेषु वा यथा वर्तेरन् तथा त्वं तत्र वर्तेथाः। अथ अभ्याख्यातेषु—अभिशस्तेषु, दोषग्रस्ततया सन्दिह्यमानेषु, पूर्ववत् तेषु ये संमर्शिनो ब्राह्मणा युक्तत्वाद्युक्तगुणवि-

शिष्टा ब्राह्मणा यथा वर्तेरन् तथा त्वं तेषु वर्तेथाः। तद्विनिर्णयेऽपि तेषां वचनमेव प्रमाणम् । एष आदेशः—प्रशासनम्, राज्ञः प्रशासनमिवा-नतिलङ्घनीयमिदमनुशासनमिति यावत् । एष उपदेशः—पुत्रं प्रति पित्रादेरिव हितैषिवचनम् । एषा वेदोपनिषत्—वेदैः क्रियमाणो रहस्यो-पदेशो हितोपदेशो वा । एतदेव शिष्यं प्रति सर्वैराचार्यैः क्रियमाण-मनुशासनम् । एवम्—उक्तेन प्रकारेण उपासितव्यम्—अनुष्ठेयम् । एवमु—एवमेव उपासितव्यम्—अनुष्ठेयम् । अवधारणार्थं पुनर्वचनम् ॥

इत्येकादशोऽनुवाकः ।

---

शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्माऽसि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋत-मवादिषम् । सत्यमवादिषम् ॥१॥ तन्मामावीत् । तद्वक्तारमावीत् । आवीद्वक्तारम् । ओं शान्तिः शान्तिः शान्तिः । ( सत्यमवादिषं पञ्च च )

इयमुत्तरशान्तिः । अध्ययनावसाने पठितव्या शान्तिः । व्याख्या-तोऽयं मन्त्रः । भूतार्थत्वात् वदिष्यामीति स्थाने अवादिषमिति । अवतु इति स्थाने आवीदिति प्रयोगः ॥

इति द्वादशोऽनुवाकः ।

इति तैत्तिरीयोपनिषद्भाष्ये शिक्षावल्लीभाष्यम् ।

---

# आनन्दवल्ली ।

ओं । सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ओं शान्तिः शान्तिः शान्तिः ।

योऽयमन्नमयादीनामात्मा तेभ्योऽन्य आन्तरः ।
यद्वेदनेन सत्ता स्यात् असत्ता यदवेदनात् ॥१॥
वाति वातो यतो भीतः सूर्यश्चोदेति यद्भयात् ।
तमानन्दमयं सर्वप्रशासकमुपास्महे ॥ २ ॥

विद्याप्राप्त्यन्तरायप्रशमनाय विद्यारम्भे पठनीयः शान्तिमन्त्रः प्रथमं श्राव्यते—सह नाविति । अधीयमानो मन्त्रः अधीयमाना विद्या वा अधीयमानविद्यागम्या वा देवता नौ—शिष्याचार्यौ सहावतु—रक्षतु अनर्थात् । अन्यतरमात्ररक्षणस्यानिष्टत्वं गम्यते सहशब्देन । सह नौ भुनक्तु—अर्थं भोजयतु, अन्तर्भावितो णिच् । अनर्थाद्रक्षणमर्थप्रापणं चेत्युभयमाशंस्यते । अध्ययनेनाध्यापनेन च वीर्यं विद्यायाः फलाधायकं शक्तिप्रकर्षलक्षणं सहैव करवावहै । नौ इदमधीतं तेजस्व्यस्तु—परैरनभिभाव्यमस्तु । मा विद्विषावहै—आवयोरविद्वेषः सततमनुवर्तताम् । अध्ययनाध्यापनयोः प्रमादतोऽपि धर्मात् प्रस्खलने यो विद्वेषप्रसङ्गः स माभूत् । प्रमादतोऽपि तथाविधं प्रस्खलनं माभूदित्येतत् ।

ब्रह्मविदाप्नोति परम् । तदेषाऽभ्युक्ता । सत्यं

ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति । तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः । ओषधीभ्यो ऽन्नं अन्नात् पुरुषः । तस्य इदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥१॥

ब्रह्मविद्या प्रस्तूयते—तत्रादौ साधनफले निर्दिशति—ब्रह्मविदिति । एतेन प्रथममभिधेयप्रयोजननिर्देशात् अधिकारिणां शुश्रूषायामभ्युपायः प्रदर्शितो भवति । ब्रह्मवित् परमाप्नोति—यदन्यतो ब्रह्मविद्यायास्तदखिलमपरम्, विद्यया यदाप्यते तदेव तु परम् । स्वरूपतः स्वभावतश्च यन्निरतिशयबृहत्तदेव ब्रह्म, यस्तद्वेद—उपास्ते स परं तदेवाप्नोति, यदेव निरतिशयबृहत्तदेव हि परम् । यदुपास्यते तदेव च प्राप्यते, तत्क्रतुन्यायात् । न ह्यन्यदुपास्यमन्यत् प्राप्यम् । तत् ब्रह्माधिकृत्य एषा ऋक् अभ्युक्ता—समाम्नाता । ब्राह्मणोक्तमर्थं मन्त्रोऽयं व्याचष्टे इत्येतत् । सकलेतरव्यावृत्तं ब्रह्मणः स्वरूपमभिधीयते—सत्यमित्यादिना । सत्यम्—निरुपाधिकसत्तायोगि, रूपान्तरनामान्तरभजनानर्हमेव तु तथाभूतम् । एतेनाचेतना-

त्प्रधानात्तत्तत्संसृष्टाज्जीवाच्च व्यावृत्तिर्गम्यते । ज्ञानम्—नित्यासङ्कुचितज्ञानगुणसारत्वात्, एतेन मुक्तेभ्यो व्यावृत्तिर्गम्यते । ते ह्याविमुक्तेः सङ्कुचितज्ञानाः प्राक् । अनन्तम्—देशतः कालतो वस्तुतो वा योऽन्तः परिच्छेदस्तद्रहितम् । अस्मिन् देशे नास्तीत्येष देशतः परिच्छेदः, तद्रहितम्, सर्वत्र व्याप्तेः । अस्मिन् समये नास्तीत्ययं कालपरिच्छेदः, तद्रहितम्, नित्यत्वात् । वस्तुस्वभावतो योऽन्तः स वस्तुतः परिच्छेदः, सा च सातिशयता, तद्रहितम्, निरतिशयस्वभावमित्येतत् । एतेन नित्या व्यावृत्ताः । यद्वा—इदमिदं न भवतीति प्रतीत्यनर्हता वस्तुतोऽपरिच्छेदः, सर्वान्तर्यामितया सर्वप्रकारत्वेन सर्ववस्तुसामानाधिकरण्यार्हत्वम् । सर्वात्मत्वात् सर्वं ब्रह्मेति भवति हि निर्देशः । यद्वा—अस्मिन् देशे नास्ति, अस्मिन् काले नास्तीतिवत् अस्मिन् वस्तुनि नास्तीति निषेधो वस्तुतः परिच्छेदः, तद्रहितम्, सर्ववस्तुषु अन्तर्यामितयाऽनुप्रवेशात् । तदिदं परं ब्रह्म गुहायां हृदयगुहायां निहितं यो वेद—उपास्ते । एतेन 'ब्रह्मविदाप्नोति पर' मित्यस्मिन्वाक्ये ब्रह्मविदित्येतद्व्याख्यातम् । अथ 'आप्नोति पर'मित्येतद्व्याख्यायते—परमे व्योमन्नित्यादिना । स उपासकः परमे व्योमन् परव्योम्न्यक्षरे दिव्यस्थाने सर्वान् कामान्—काम्यन्ते इति कल्याणगुणाः, तेच परस्य ब्रह्मणः, तान् ब्रह्मणा सह अश्नुते—अनुभवति, ब्रह्म तदीयदिव्यगुणांश्चानुभवतीति यावत् । दध्ना सहौदनं भुङ्क्ते इतिवत् कर्मसाहित्यमिह विवक्षितम् । नच सहशब्दयोगादनुभवे ब्रह्मणोऽप्राधान्यं गम्येत, नहि तदीयैर्गुणैरनुभूयमानैस्तस्याप्राधान्यम् । ब्रह्मणो निर्विशेषत्वं प्रतिक्षेप्तुं ब्रह्म विशिनष्टि—विपश्चितेति ।

सर्वज्ञत्वं सर्वशक्त्यादिकल्याणगुणानामुपलक्षकम् । नन्वयमन्वयोऽनुपपन्नः । ऋक्लक्षणानन्वयात् । अर्थवशेन पादव्यवस्था हि ऋचो लक्षणमुच्यते । वाक्यार्थश्चायमुपपाद्यमानः श्रूयमाणपादव्यवस्थाननुगुणः । नैतत् । यत्रार्थवशेन पादव्यवस्थेत्येतदुपलक्षणमात्रम् । अतएव व्याख्यातारः 'अर्थवशेन वृत्तवशेन वा पादव्यवस्थे'त्याचक्षते । अर्थवशेन पादव्यवस्थायामाग्रहे त्वयमर्थः—हृदयगुहायां यद्व्योम—आकाशम्, परमम्—प्रकृष्टं बाह्याकाशात्, परब्रह्मणोऽभिव्यक्तिस्थानं तदिति तस्य परमता, तत्र निहितं यो वेद, स उपासकः सह—युगपदेव सर्वान् कामान्—तैस्तैः काम्यन्ते ये मानुषानन्दादयो हैरण्यगर्भानन्दपर्यन्ताः, तान् सर्वानानन्दान् युगपदेवानुभवति, नतु पुण्यविशेषनियन्त्रिताः कर्मपरिपाककालभेदेनेव । कथमिदमुपपद्यते आह—ब्रह्मणा—अनुभूयमानेन ब्रह्मणा साधनेन, सह्यानन्दमयः, सर्व एव मानुषानन्दप्रभृतय आनन्दाः समुद्रे गोष्पदवदन्तर्गता एव, तत् अनवधिकानन्दमयेन तेनानुभूयमानेन युगपदेव सर्वानानन्दाननुभवन्ति । ब्रह्मानन्दे सर्वानन्दसमन्वयं 'सैषाऽऽनन्दस्य मीमांसा भवती'त्यादिना श्रावयिष्यति श्रुतिः । पराभिमतान्वयानुसारेणायमर्थ उन्नीतः । प्राचां व्याख्यानमनुसृत्य प्रदर्शितः पूर्वं वाक्यार्थः श्रेयान् । ब्रह्मविदाप्नोतीत्यत्र प्रस्तुतं ब्रह्म मन्त्रे 'सत्यं ज्ञानमनन्त'मित्यनेनेषद्विवृतम् । अधुना तद्विस्तरेण व्याख्यातुं प्रवर्तते—तस्माद्वा एतस्मादित्यादिना । तस्मात्—ब्रह्मविदाप्नोतीति ब्राह्मणे प्रस्तुतात्, एतस्मात्—सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रोक्तात्, आत्मनः—सर्वान्तरात्मनः, आकाशः सम्भूतः, आकाशाद्वायुर्वायोरग्निरग्नेराप

अद्भ्यः पृथिवी, आकाशादीनामुपादानमात्मा यत्प्रस्तुतं ब्रह्मेत्युक्तं भवति। नन्वात्मनोऽर्थान्तरमाकाशादि, कथं तस्यात्मोपादानं भवितुमर्हति। नैतत्। अनन्यदेव कार्यमाकाशादि, आत्मन इत्युपादानताश्रुतेः। ननु व्याहतमेतत्, अचेतनं ह्याकाशादिशब्दैः श्रूयते। नैतत्। आकाशादिशरीरकं ब्रह्मैवाकाशादिशब्दैर्बोध्यते। सर्वान्तर्यामिणः स्वेतरसर्वप्रकारतया तत्तद्रूपेण प्रकारविशेषेण निर्देशो हि सूपपन्नः, तत्त्वस्थित्यानुगुण्यात्। सद्विद्यायां तत्तेज ऐक्षतेति चेतनधर्मेणैव निर्देशः। पृथिव्या ओषधयः ओषधीभ्य अन्नम्, अन्नात् पुरुषः शिरःपाण्यादिलक्षणः, सोऽयं पुरुषः अन्नरसमयः—अन्नरसप्रचुरः, अस्थिमांसादयो ह्यन्नरसविकृतय एव। तस्यास्य पुरुषस्य शिरःपाण्यादिलक्षणतां प्रदर्शयति—तस्येति। तस्य इदमेव शिरः—यदिदं दृश्यते प्रसिद्धं शिरः इदमेव शिरः। इदमेवेत्यवधारणात् प्राणमयादिषु कल्प्यमानेभ्यः शिरःप्रभृतिभ्यो व्यावृत्तिर्गम्यते। अयं दक्षिणः पक्षः—दक्षिणः पाणिः। अयमुत्तरः पक्षः—वामः पाणिः। अयमेव प्रसिद्ध आत्मा मध्यकायः। धारकत्वेन प्राधान्यादात्मेत्युच्यते। यदिदं प्रसिद्धं चरणद्वयमाधारत्वात्पुच्छमुच्यते। प्रतितिष्ठत्यनयेति प्रतिष्ठा। चरणेन हि पुरुषः प्रतितिष्ठति। तत्—अन्नमयमधिकृत्य एष वक्ष्यमाणः श्लोको भवति ॥१॥

इति प्रथमोऽनुवाकः।

---

**अन्नाद्वै प्रजाः प्रजायन्ते। याः काश्च पृथिवीं श्रिताः।**

**अथो अन्नेनैव जीवन्ति। अथैनदपि यन्त्यन्ततः।**

अन्नं हि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते । अन्नं हि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते इति । तस्माद्वा एतस्मादन्नरसमयात् अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥१॥

अन्नमयः स्तूयते । अन्नाद्वै रसात्मना परिणतात् प्रजाः प्रजायन्ते । कास्ताः ?, याः काश्च पृथिवीं श्रिताः—न सङ्ख्याताः, किन्त्वसङ्ख्याताः पृथिव्याश्रयाः सर्वा एव प्रजाः । जाताश्च ता अन्नेनैव जीवन्ति । अन्ततः—अवसाने एतदेवान्नमपियन्ति—अभिसंविशन्ति । अन्ने विलीयन्ते इति यावत् । भूतानां पार्थिवानां सर्वेषामन्नमेव हि—यस्मात् ज्येष्ठम्, तस्मात् सर्वौषधमुच्यते—सर्वविधमौषधं देहारोग्यकरमुच्यते । येऽन्नं ब्रह्मेत्युपासते ते सर्वमन्नमाप्नुवन्ति । अन्ने ब्रह्मदृष्टौ निमित्तं समानगुणयोगमाह—अन्नं हीत्यादिना । ब्रह्म सर्वतो ज्येष्ठम्, इदं च भूतेभ्यः, ब्रह्म तापत्रय-

दाहनिवारकत्वात्परममौषधम्, इदं च प्रायो देहोपचायकमिति सर्वौषधम् । भूतज्येष्ठत्वमुपपाद्यते—अन्नादित्यादिना । ब्रह्मदृष्टिनिमित्तभूतगुणसाम्यमेव वा । अन्नाद्भूतानि जायन्ते जीवन्ति वर्धन्ते च । भूतजननादिहेतुत्वसाम्यादन्ने ब्रह्मदृष्टिर्युक्तेति भावः । अन्नशब्दनिर्वचनमाह—अद्यते इति । इदमपि स्तुतिशेषभूतम् । यस्मादनुदिनं सर्वैर्भूतैरद्यते, अतएव अदनकर्मत्वात्, स्वयमत्ति चान्ते भूतानि, तस्माददनकर्तृत्वाच्चान्नमुच्यते । इतिः समाप्तौ । आकाशादिक्रमेणात्मनः सम्भूतो यः पुरुषः प्रस्तुतः सोऽयमन्नरसमयो निरूपितः । यद्वेदनादाप्नोति परम्, यतस्तस्मादात्मन इदमाकाशादिपुरुषान्तं जगत्, तमात्मानं स्थूलारुन्धतीन्यायेन[1] प्रदर्शयन्नुपक्रमते—तस्माद्वा इति । यः सर्वस्योपादानमात्मा स एतस्मिन्नेवान्तर्वर्तते, अस्मादन्नरसमयादन्यः । स कः ? प्राणमयः, सर्वान्तरस्य सर्वतः सूक्ष्मतमस्यात्मनः सहसा सोऽयमिति बोधयितुमशक्यतया प्राणमयादिक्रमेण तदवबोधनम्, यद्यपि पामरा अन्नरसमयान्नापरं मन्येरन्नात्मानम्, परमस्मादन्नरसमयादन्य एव स इति अन्नरसमयात्प्रच्याव्यात्मदृष्टिं तस्यान्तरे क्वचित्सा दृष्टिः प्रथमं सङ्क्रामिता, क्रमशस्ततस्ततः प्रच्याव्य साक्षादन्तरात्मन्यानन्दमये परब्रह्मणि तां दृष्टिं व्यवस्थापयिष्यति । योऽयं पञ्चवृत्तिः प्राणः स प्राणवृत्ति-

---

१ स्थूलारुन्धतीन्यायो यथा—अरुन्धत्याख्यां सूक्ष्मां तारकां प्रदर्शयितुं प्रवृत्तः सहसा तत्प्रदर्शनस्य दुर्घटतां मत्वा प्रथमं स्थूलां 'इयमरुन्धती'ति प्रदर्श्य पश्चात् तत्सन्निहितां सूक्ष्मामन्यां इयमरुन्धती, न सेति प्रदर्श्य ततः सन्निहितां सूक्ष्मां अरुन्धतीं तारकामियमेवारुन्धती न पूर्वा इति प्रदर्शयति ।

प्राचुर्यात् प्राणमय उच्यते। तेन प्राणमयेन एषः—अन्नरसमयः पूर्णः—व्याप्तः। सोऽयं प्राणमयोऽपि पुरुषविध एव—पुरुषाकृतिरेव, न वास्तवं पुरुषाकृतित्वम्, किन्तु—तस्यान्नरसमयस्य पुरुषविधतामनु—अनुकृत्य अयमपि पुरुषविधः। अत्रापि शिरःपाण्यात्मपुच्छात्मना पुरुषविधता निरूप्यते इति भावः। किं शिरः कौ पक्षौ क आत्मा किं पुच्छम्? आह—प्राण इत्यादि। प्राणः—प्राणवृत्तिः। आकाश आत्मा—मध्यकायः, आकाशाधारो ह्ययं वायुः प्राणः, पृथिवी पुच्छं प्रतिष्ठा—मध्यकायस्थानीयस्याकाशस्य हि पृथिव्या उपरिस्थितिः। तत् मध्यकायाश्रयत्वेन पुच्छत्वेन निरूपणम्। यद्वा—आकाशः—आकाशस्थो वायुवृत्तिविशेषः समानाख्यः। पृथिवी—पृथिव्यधिष्ठिता देवता, सा ह्याध्यात्मिकस्य प्राणस्य धारयित्रीति। तत्—तस्मिन् प्राणमये एष वक्ष्यमाणः श्लोको भवति।

इति द्वितीयोऽनुवाकः।

---

प्राणं देवा अनु प्राणन्ति। मनुष्याः पशवश्च ये। प्राणो हि भूतानामायुः। तस्मात् सर्वायुषमुच्यते। सर्वमेव त आयुर्यन्ति। ये प्राणं ब्रह्मोपासते। प्राणो हि भूतानामायुः। तस्मात् सर्वायुषमुच्यते इति। तस्यैष एव शारीर आत्मा यः पूर्वस्य। तस्माद्वा एतस्मात्प्राणम-

यात् अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥

देवा मनुष्याः पशवश्च सर्व एव प्राणमनु प्राणन्ति—जीवन्ति, प्राणायत्तजीवना इति यावत् । कस्मात् ?, प्राणो हि भूतानामायुः, श्रूयते चान्यत्र—'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदेवायुः' इति । तस्मात् सर्वायुषमुच्यते—आयुरेव आयुषम् । ये प्राणं ब्रह्मेत्युपासते ते सर्वमेवायुः—पूर्णमायुर्यन्ति—प्राप्नुवन्ति, न तेषामपमृत्युरिति यावत् । तत्र हेतुरुच्यते—प्राणो हि भूतानामित्यादि । अतएव न पौनरुक्त्यम् । एवं प्राणमये समारोपितामात्मबुद्धिं ततोऽन्यत्रापसारयति—तस्यैष एव शारीर आत्मा यः पूर्वस्येति । सोऽयं प्राणमय एवान्नमयान्तस्य कार्यवर्गस्यात्मेति न मन्तव्यम्, तस्य प्राणमयस्याप्यन्य एव भवति शारीर आत्मा—यस्येदं सर्वं शरीरम्, स शारीर आत्मा यः पूर्वस्यान्नमयस्य । अन्नमय इव प्राणमयोऽपि नान्तरात्मा, उभयोस्तयोरन्य एवान्तरात्मेत्येतत् । स कः ?, आह—मनोमय इति । मनोवृत्तिप्राचुर्यात् मनोमय उच्यते । तेनैष पूर्ण इत्यादि व्याख्यातप्रायम् । यजुरेव शिरः—यद्यपि यजुरादि वाग्रूपम्,

अथापि तत्तद्विषयकज्ञानजनकमनोव्यापार इह यजुरादिशब्देन विवक्षितः। आदेशः—विधिनिषेधलक्षणमनुशासनम्। अथर्वाङ्गिरसः—तैर्दृष्टा मन्त्रविशेषाः । तन्मनोमयमधिकृत्य एष—वक्ष्यमाणः श्लोको भवति ॥

इति तृतीयोऽनुवाकः ।

---

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा यः पूर्वस्य । तस्माद्वा एतस्मान्मनोमयात् अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥

यतो ब्रह्मानन्दात् इयत्तारहितात् अप्राप्य पारं वाचो मनसा सह निवर्तन्ते, तथाविधमनवधिं ब्रह्मानन्दं योगसुसंस्कृतेन मनसा विद्वान् न जातु कुतोऽपि बिभेति । अपैति संसरणभीतिरिति यावत् । इयं च मनसः स्तुतिः, सकलभयनिवारकब्रह्मानन्दानुभवोपकरणत्वनिरूपणात् । अथ मनोमये समारोपितामात्मबुद्धिं ततोऽ-

न्यत्रापसारयति—तस्यैष एवेत्यादिना । व्याख्यातप्रायम् । विज्ञानमयः-विज्ञानप्रचुरो विज्ञाता जीवः । श्रद्धादयो ज्ञानस्यैवावस्थाविशेषलक्षणा ज्ञातुर्जीवस्य धर्मभूता इति तत्तदवच्छिन्नं ज्ञातुः स्वरूपमेव श्रद्धादिशब्दैर्निर्दिश्य शिरस्त्वादिना रूप्यते । योगोऽपि ध्यानविशेषलक्षण इति ज्ञानविशेष एव । महः—योगविरोधिनिरसनसामर्थ्यलक्षणम् । विज्ञानमयमधिकृत्यैष—वक्ष्यमाणः श्लोको भवति ॥

इति चतुर्थोऽनुवाकः ।

---

विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुते इति । तस्यैष एव शारीर आत्मा यः पूर्वस्य । तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मा आनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।

विज्ञानमिति । अयं विज्ञानशब्दो विज्ञातर्यात्मनि वर्तते । विज्ञातुः स्वरूपं स्वयम्प्रकाशतया ज्ञानैकनिरूपणीयतया च विज्ञान-शब्देन निर्देशमर्हति । कृत्यल्युटो बहुलमित्यनुशासनात् कर्तरि ल्युड्वा । नन्द्यादित्वाश्रयणात् कर्तरि ल्युर्वा । श्रूयते च 'यो विज्ञाने तिष्ठन्' इति काण्वानां पाठः 'आत्मनि तिष्ठ'न्नित्यस्य माध्यन्दिन-पाठस्य स्थाने । विज्ञातृपरतयैव च तनुते इति कर्त्राख्यातोप-पत्तिः । सोऽयं विज्ञानैकलक्षणो जीवात्मा यज्ञं तनुते, कर्माणि च लौकिकानि तनुते । सर्वे देवाः—सर्वे सत्त्वप्रकृतयो विज्ञानम्—जीवा-त्मानं ब्रह्मज्येष्ठम्—ब्रह्मणः प्रधानात् प्रकृष्टमुपासते । प्रकृतिविल-क्षणत्वेनोपासते इति यावत् । तमिमं विज्ञानात्मानं ब्रह्म चेद्वेद—अपहतपाप्मत्वादिना गुणाष्टकेन सरूपतया ब्रह्मेत्युपासीत, ब्रह्म-रूपतया वेदेति यावत् । तस्मात्—तथोपास्यमानात् अन्तिमसमये न प्रमाद्यति चेत्—अन्तिमस्मरणमपि तद्विषयं स्याच्चेदित्येतत् । शरीरे प्रारब्धफले वर्तमानः सन्नेव पाप्मनः पूर्वोत्तराघान् हित्वा सर्वान् कामान् समश्नुते देहपातानन्तरम् । शरीरे पाप्मनः, शरीरयोगेन सम्पादितान् पाप्मनो हित्वेति वा । विज्ञानमये समारोपितामन्तरात्म-बुद्धिं ततोऽन्यत्रापसारयति—तस्यैष एवेत्यादिना । व्याख्यात-प्रायम् । आनन्दमयः—आनन्दप्रचुरः, निरवधिकानन्दः परमात्मा । स्वयमानन्दस्वरूप आनन्दगुणकश्चेत्यानन्दप्रचुरता युक्ता नाम । आनन्दविशेषविशिष्टवेषेण शिरःपक्षादिनिरूपणं क्रियते—तस्य प्रिय-मेवेत्यादिना । आनन्दस्यैवावस्थाविभेदाः प्रियादयः । ब्रह्मण आनन्दरूपस्याप्यानन्दत्वेन मध्यकायता ब्रह्मत्वेन पुच्छतेति

विवेकः। ब्रह्मणः अन्नमयादिष्ववयवत्वेनानिरूपणादानन्दमय एव तथा निरूपणात् ब्रह्मविदाप्नोतीत्युपक्रान्तं ब्रह्म आनन्दमय एवेति गम्यते। स्थूलारुन्धतीन्यायेन ज्ञाप्यमानस्यान्तरात्मनो निरूपणविश्रान्तिरानन्दमय एवेति व्यक्तम्। पूर्वपर्यायेष्विवान्योऽन्तर आत्माऽऽनन्दमयादिति उत्तरत्राश्रवणात्। तस्यैष एव शारीर आत्मा यः पूर्वस्येति तु आनन्दमयस्यानन्यात्मताज्ञापनाय। आनन्दमयमधिकृत्यैष श्लोको भवति।

इति पञ्चमोऽनुवाकः।

---

असन्नेव स भवति असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। अथातोऽनुप्रश्नाः। उताविद्वानमुं लोकं प्रेत्य। कश्चन गच्छती३ आहो विद्वानमुं लोकं प्रेत्य कश्चन समश्नुता३ उ। सोऽकामयत बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा इदं सर्वमसृजत। यदिदं किञ्च। तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्। निरुक्तं

चानिरुक्तं च। निलयनं चानिलयनं च। विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्। यदिदं किञ्च। तत्सत्यमित्याचक्षते। तदप्येष श्लोको भवति॥

असन्नेवेति आनन्दमयस्यैवेयं स्तुतिः, आनन्दमयादनन्यदेव हि ब्रह्म। एतेन पुच्छस्यैवेयं स्तुतिः पुच्छमेव तु ब्रह्मेत्येतदपास्तम्। अन्नमयादिपर्यायेषु अन्नमयादिरेव स्तूयते न पुच्छं शिरो वा, तदवयवस्तुतिरिति प्रकरणाननुगुणम्। ब्रह्म नास्तीति चेद्वेद, ब्रह्म वेदेति यत् तन्नास्ति चेदिति वा। स पुरुषः असन्नेव भवति—अहमयमसीति व्यवहरन्नप्यसत्कल्प एव सः, स ह्यर्थविधुरः, योऽर्थविधुरः स ह्यसन्नेव। सतो ह्यर्थान्वयो लक्षणम्। अस्ति ब्रह्मेति चेद्वेद सन्तमेनं तत्त्वदर्शिनो विदुः। ब्रह्मवेदनात्सत्ता तदवेदनादसत्तेत्येतत्। तस्यैष एवेति आत्मान्तरास्तित्वशङ्का व्यावर्त्यते। सोऽयमानन्दमय अनन्यात्मेति यावत्। 'ब्रह्मविदाप्नोति पर' मित्यत्र प्रस्तुतस्य ब्रह्मणः स्वरूपं निरूपितम्, अथ आप्नोतीत्यनेन विवक्षितां प्राप्तिं विशदीकर्तुं प्रवर्तते—अथात इत्यादिना। अथ—आनन्दमयं परं ब्रह्मेत्येतन्निरूपणानन्तरम्, अतः आप्नोतीति पूर्वमाप्तेः प्रस्तुतत्वादेव अनुप्रश्ना भवन्ति। प्रश्नरूपमाह—उतेत्यादिना। उता इति दीर्घश्छान्दसः। विद्वान्—ब्रह्मोपासकः प्रेत्य अमुं लोकं परमं व्योम गच्छती, प्लुतः प्रश्नव्यञ्जकः। उत न गच्छति इहैव

ब्रह्माप्नोति ? इत्यर्थात्प्रश्नान्तरं गम्यते । अयमपरः प्रश्नः—आहो विद्वानमुं लोकं प्राप्याश्नुते कामान् ? उत नाश्नुते, ब्रह्मणा सहैकीभवति ? इत्यार्थिकोऽनुप्रश्नः । प्रश्नमिमं प्रतिवक्तुमारभते—सोऽकामयतेत्यादिना । विद्वानमुं लोकं प्राप्य निरतिशयानन्तकल्याणगुणविशिष्टं ब्रह्मानुभवतीति प्रतिवचनं प्रतिपिपादयिषितम्, जगत्स्रष्टृत्वोपपादनमुखेन तु कल्याणगुणयोगो निरूपणीयः । तदुपपाद्यते सोऽकामयतेत्यादिना । एतेन निर्विशेषब्रह्मात्मभावो नैःश्रेयसमित्यपास्तम् । परमकारणं हि परं ब्रह्म, तच्च सत्यसङ्कल्पत्वसर्वात्मताद्यनेकगुणविशिष्टम् । सः—आत्मा सर्वान्तर आनन्दमयः अकामयत, किमिति ?, बहु स्यां प्रजायेयेति । एतेन चेतनानधिष्ठितजडप्रकृतिकत्ववादः चेतनाधिष्ठितजडप्रकृतिकत्ववादः निमित्तोपादानानन्यत्वप्रतिषेधपक्षश्च व्युदस्तः । कामनाश्रवणमात्रात् नायं संसरणधर्मैव, संसरन् पुरुषो ह्यनाप्तकामः कामयते केवलम्, कामनया च नियन्त्रितः खिद्यते च, अयं च स्वतन्त्रः कामयते लीलायै, यथाकामं सृजति च । ईष्टे ह्येषः । स एषः देवादिरूपेण बहु स्याम्, प्रजायेय चाकाशादिरूपेणेत्यकामयत । यद्वा—बहु स्यामित्येतदेव बहु प्रजायेयेत्यनेन व्याख्यायते । एतेन—बहुभवनं न बौद्धमाभासमात्रं न वा नभस इवौपाधिकम्, किन्तु वास्तवम्, बहुधा प्रजननादिति गम्यते । असत्यप्यर्थतत्त्वे अवभासमात्रमिति तु बौद्धाः, 'बहिर्वदवभासते' इति । प्रजननमप्याभासमात्रमिति तु तदनुगामिनः । तथा च प्राप्तम्—न बहिव स्यामिति सङ्कल्पः, किन्तु बहु स्यामेवेति । अयमाशयः प्रजायेयेत्यनेन प्रकाशितो भवति । नचाविकृतस्य प्रजननमनुपपन्नम् ।

नामरूपविभागापत्तिमात्रं हि प्रजननम् । तद्विभागापत्तिश्च स्वतनुद्वारेणेति न स्वरूपे विकारप्रसङ्गः । कृतबहुभवनसङ्कल्पः सः तपोऽतप्यत—तप आलोचने, पर्यालोचनमकरोत्, जगद्रचनाप्रकारपर्यालोचनमकरोत् । स तपस्तप्त्वा—पर्यालोच्य देवादिविषमभावापन्नमिदं सर्वं यथाकर्म असृजत । यदिदं किञ्च—नैकमप्यत्र तत्सृष्ट्यगोचरमस्तीत्येतत् । तत् सृष्ट्वा तदेवानुप्राविशत् । ननु सर्वदा सर्वत्र व्याप्तस्य कोऽयमनुप्रवेशः ?, पुष्कलाभिव्यक्त्यर्हः स्थितिविशेषोऽयम् । उक्तं चोपनिषत्प्रकाशिकायाम् 'गोजठरगतवत्सवत् सर्वव्याप्तस्य ब्रह्मणः प्रत्येकं सर्ववस्तुषु पुष्कलाभिव्यक्त्यर्हः स्थितिविशेष एवानुप्रवेशः' इति । अयमेव स्थितिविशेषः 'यो वेद निहितं गुहायाम्' इति पूर्वं हृदयगुहानिहितत्वलक्षणः प्रतिपादितः । तदनुप्रविश्य सच्च त्यच्चाभवत्—सततैकरूपश्चेतनः सदित्युच्यते, पूर्वपूर्वावस्थापरित्यागेन परिणामस्वभावमचेतनं त्यदित्युच्यते, चेतनाचेतनयोरनुप्रवेशेन तत्तद्रूपोऽभूत्, तत्तन्नामरूपभागभूदिति यावत् । परस्यैव ब्रह्मणः सृज्यवस्त्वनुप्रवेशमूलकं सृज्यतत्तन्नामरूपभाक्त्वं भवतीति यावत् । सोऽयमानन्दमयः परमात्मा बहु स्यामिति सङ्कल्प्य यथासङ्कल्पं सर्वमिदं सृष्ट्वा तत्र तत्रानुप्रविश्य तत्तद्रूपो भूत्वा स्वयं बहुरूपोऽभवत् । अनेनोपादानोपादेयभावः परब्रह्मणो निरूपितः । सर्वभावेऽपि परस्य ब्रह्मणो न विकृततेत्याह—निरुक्तं चानिरुक्तं चेत्यादिना । जातिगुणादिभिर्यन्निरुच्यते तन्निरुक्तमचेतनमाकाशादि, यत्तैर्निर्वक्तुमशक्यं तदनिरुक्तं चेतनजातम्, तदेव चेतनाचेतनजातं प्रकारान्तरेण निर्दिश्यते निलयनं चानिलयं च विज्ञानं चाविज्ञानं चेति । चेतन-

तत्त्वमचेतनाधारत्वात् निलयनमुच्यते, निलयनादन्यदाधेयभूतमचेतनजातमनिलयनमुच्यते, विज्ञानस्वाभाव्याद्विज्ञानं चेतनः, ततोऽन्यदविज्ञानमचेतनजातम्, सततैकरूपतया चेतनजातं सत्यम्, विकारास्पदतयाऽचेतनजातमनृतमुच्यते । परंब्रह्म चेतनाचेतनयोरनुप्रवेशेन अनिरुक्तादिलक्षणचेतनजातं निरुक्तत्वादिलक्षणाचेतनजातं भवदपि स्वयं सत्यमेव—अविकृतमेवाभवत् । अत एव ब्रह्मस्वरूपयाथात्म्यविदः यदिदं किञ्च—आकाशादिभूतजातं देवमनुष्यादिप्राणिजातं वा सर्वं तत् सत्यमित्याचक्षते—शास्त्रदृष्ट्या ब्रह्मेत्येवाचक्षते । तत्—तस्मिन्नेवार्थे, ब्रह्मैव बहुधा प्रविभक्तमित्यस्मिन्नर्थे एष—वक्ष्यमाणः श्लोको भवति ।

इति षष्ठोऽनुवाकः ।

---

असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मानं स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत इति । यद्वैतत्सुकृतम् । रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति । को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं

कुरुते अथ तस्य भयं भवति। तत्त्वेव भयं विदुषो मन्वानस्य। तदप्येष श्लोको भवति॥

असत्कार्यवादव्यावर्तनमुखेन सत्कार्यवादं प्रकाशयन् एकस्यैवावस्थाभेदेनोपादानोपादेयभावं च ज्ञापयन् ब्रह्मणो जगदुपादानतां निरूपयति—असद्वेति। अग्रे—सृष्टेः प्राक् आसीत्, न हि विना हेतुं कार्यं स्यात्। किं तदाऽऽसीत्?, इदं आसीत्, सृष्टेः प्राक् इदमासीदिति व्याहतम्। नैतत्। असदासीत्—इदंशब्दाभिप्रेतनामरूपविभागरहितमासीत्। एतेन—असदासीदिति व्याहतमिति शङ्काया नावकाशः, न ह्यसदित्यनेनात्यन्तासत्ता विवक्षिता। ततो वै सदजायत—नामरूपविभागावस्थरहितादत एव सूक्ष्मात् तस्मात् इदं सत् नामरूपप्रविभक्तमजायत। न चान्य आसीदसतः सद्भावापादकः, तदेवात्मानमसद्रूपेणावस्थितं स्वयं विभक्तनामरूपमकुरुत। नामरूपविभागापन्नस्थूलचिदचिच्छरीरकमिदं ब्रह्म प्राक् नामरूपविभागरहितसूक्ष्मचेतनाचेतनशरीरकमासीत्, तदेव स्वयं स्वात्मानं सदकुरुत, नामरूपविभागापन्नस्थूलचिदचिच्छरीरकमकुरुतेति भावः। ननु कथमयं भावो गम्यते। प्रकरणात्। प्रकरणं हि ब्रह्मण उपादानतानिरूपणे प्रवर्तते। तत् इदमित्यनेन ब्रह्मणोऽनन्यदेव ग्राह्यम्, दृश्यमानप्रपञ्चमात्रपरिग्रहे आनुमानिकप्रधानारभ्यजगद्वादः कापिलः प्रोक्तः स्यात्। तथासत्यौपनिषदः पक्ष एव समुल्लङ्घितः स्यात्, तत् इदंशब्देन समुपलभ्यमानस्थूलचेतनाचेतनप्रपञ्चमुखेन ब्रह्म बोध्यते। गवादिशब्दैर्जात्यादिमुखेन व्यक्तिरिव। जात्यादिरिव जगत् ब्रह्मणोऽपृथक्सि-

द्धविशेषणम्। तस्मात्—यस्मात् स्वयमेव स्वात्मानमकुरुत तस्मात् तत् ब्रह्म सुकृतम्—सुखेन कृतं कार्यं यस्य तथाभूतमुच्यते, अक्लिष्टकार्यं ब्रह्मेति यावत्। यत्रान्यदारम्भकमारब्धा चान्यः, तत्र कारणभेदेन कार्यस्य न सुखेन सिद्धिः, यत्र सर्वविधकारणभाव एकस्यैव, तत्र न कार्यसिद्धौ क्लेशः। इतिशब्दः श्लोकपरिसमाप्तौ। तस्यैवास्य परस्य ब्रह्मण उपास्यत्वं प्राप्यत्वं च निरूपयन्नाह—यद्वैतत्सुकृतमित्यादिना। यद्वैतत्सुकृतं ब्रह्म रसो वै सः, स ह्यानन्दस्वरूप आनन्दमयश्च। अयमुपासको रसं तमेव लब्ध्वा ह्यानन्दीभवति। तद्रसभूत आनन्दमयः स एवोपास्यः प्राप्यश्च। सकलफलप्रदश्च स एव, यद्येष आकाशः—प्रकाशमय आनन्दः परमात्मा न स्यात् इह को वाऽन्यात् को वा प्राण्यात्—अननलक्षणं लौकिकसुखयोगं प्राणनलक्षणमापवर्गिकसुखं च कः प्राप्नुयात्, अननप्राणनहेतुः स एवेत्यर्थः। यद्वा—अननं सामान्यतो जीवनम्, प्रकृष्टमननमपहतपाप्मत्वादिलक्षणस्वाभाविकरूपाभिनिष्पत्तिलक्षणम्, एतदुभयं परमात्मायत्तमिति। यद्वा—अन्यात् प्राण्यादिति क्रियाभेदग्रहणं प्राणापानादिवृत्तिभेदोपलक्षकम्, यद्ययमानन्दमयोऽन्तरात्मतया न सन्निहितः स्यात् को वा प्राणापानादिवृत्तीः प्रवर्तयितुं प्रभवेत्। तथा चान्यत्र श्रूयते 'ऊर्ध्वं प्राणमुन्नयति अपानं प्रत्यगस्यति। मध्ये वामनमासीनं विश्वेदेवा उपासते' इति, इति भावः। एष एवानन्दं प्रापयति च। एष उपासकः यदा एतस्मिन् अदृश्ये—चक्षुराद्यगोचरे अनात्म्ये—अशरीरे (प्राकृतशरीररहिते) अत एवानिरुक्ते—नामजात्यादिनिरुक्तिशून्ये अनिलयने—अनाधारे आनन्दमये परब्रह्मणि अभयम्—भयाभावाय प्रतिष्ठां निर-

न्तरस्मृतिलक्षणां विन्दते, अथ तस्योपासकस्य अभयम्–आत्यन्तिकी भयनिवृत्तिर्भवति । यदा उपासक एतस्मिन्नल्पमप्यन्तरम्–स्मृतिविच्छेदं पूर्वोक्तप्रतिष्ठाव्यवधानलक्षणं कुरुते अथ तस्य भयं भवति सांसारिकम् । न तस्य संसारभयनिवृत्तिरिति यावत् । प्रतिष्ठापदेन योऽर्थोऽवगम्यते तत्प्रतिद्वन्द्व्यर्थकेनैव ह्यन्तरपदेन भाव्यम्, प्रतिष्ठा च प्रकर्षेण निष्ठा, साच निरन्तरस्मृतिलक्षणैव, तस्या विरोध्यन्तरं च स्मृतिविच्छेद एव, तदयमेवान्तरपदार्थः समुचितः । अविदुषां साधारणमिदं सांसारिकभयम् । विदुषो मन्वानस्य–मननैकशीलस्य तु तत्त्वेव–स्मृतिविच्छेदलक्षणमन्तरमेव स्वतो भयम् । प्रमादतोऽपि स्मृतिविच्छेदे विच्छेदमेव ते भयं मन्यन्ते इति भावः । तथा च वचनम्–'यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते । सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥' इति । तत्–तस्मिन्नर्थे, आनन्दमयविषये इति यावत् । एषोऽपि श्लोको भवति ॥

इति सप्तमोऽनुवाकः ।

---

भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति । सैषाऽऽनन्दस्य मीमांसा भवति । युवा स्यात् साधु युवाध्यापकः । आशिष्ठो द्रढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स

एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितॄणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवानामानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्र-

स्यानन्दाः। स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य । स यश्चायं पुरुषे यश्चासावादित्ये स एकः । स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रामति । एतं प्राणमयमात्मानमुपसङ्क्रामति । एतं मनोमयमात्मानमुपसङ्क्रामति । एतं विज्ञानमयमात्मानमुपसङ्क्रामति । एतमानन्दमयमात्मानमुपसङ्क्रामति । तदप्येष श्लोको भवति ॥

उक्तं सर्वप्राणिप्राणनमानन्दमयायत्तमिति । न केवलं प्राणनमात्रमानन्दमयायत्तं किं तु पवनादिमहाभूतचेष्टितमादित्यादिग्रहपरिभ्रमणमिन्द्राद्यसाधारणलोकनिर्वहणादिव्यापारः मृत्योः संहरणव्यापारश्च सर्व आनन्दमयायत्तमित्यधुनोच्यते । अस्मात्–आनन्दमयात्परब्रह्मणः भीषा–भीत्या वातः पवते । भीषा सूर्यः प्रत्यहं काले काल उदेति । अस्माद्भीत्या अग्निरिन्द्रश्च स्वस्वकार्यं निर्वहतः । पञ्चमो मृत्युरस्माद्भीत्या अतन्द्रितः स्वकार्ये धावति । इति आनन्दमयस्य

परममैश्वर्यमुपवर्णितं भवति । आनन्दप्रचुरस्य परस्य ब्रह्मणः निरवधिकानन्दलक्षणं आनन्दप्राचुर्यं गमयितुमानन्दस्य मीमांसा—विचारो भवति । स्वयं युवा स्यात् । यूनां च स्वयमध्यापकः स्यात् । एतेन सवयसामध्यापकत्वमैश्वर्यमुक्तं भवति । साधु—सम्यक् स्वरवर्णादिभ्रंशरहितम् । अध्यापकः । आशिष्ठः—अशनसमर्थः । अरोग इत्येतत् । द्रढिष्ठः—शारीरबलसम्पन्नः । बलिष्ठः—मानसबलसम्पन्नः । सर्वेयं पृथिवी वित्तपूर्णा तस्य स्यात्—तदधीना स्यात् । सम्राडित्येतत् । तस्य योऽयमानन्दः स एको मानुष आनन्दः । सोऽयं मानुषानन्दः श्रोत्रियस्य—श्रुतवेदान्तस्य ब्रह्मनिष्ठस्य अकामहतस्य—कामैः प्राकृतैरनुपहतस्य मुक्तस्य भवति । समुद्रे गोष्पदवत् ब्रह्मानन्दे निरवधौ मानुषानन्दोऽप्यन्तर्गत इत्येतत् । ते ये शतं मानुषा आनन्दाः स एकः मनुष्यगन्धर्वाणामानन्दः—मनुष्या एव सन्तस्तपोबलेन विद्याबलेन वाऽन्तर्धानादिशक्तिविशेषं प्राप्ताः मनुष्यगन्धर्वा उच्यन्ते । सोऽयं मनुष्यगन्धर्वानन्दः श्रोत्रियस्य चाकामहतस्य—अतिरोहितार्थमेतत् । ते ये शतमित्यादि—शतगुणितोत्तरक्रमेण देवगन्धर्वादीनामानन्दानभ्यस्य तेषां ब्रह्मानन्देऽन्तर्गततां प्रदर्श्य ब्रह्मानन्दस्य सर्वतः प्रकृष्टतां प्रदर्शयन्ती सेयमानन्दमीमांसाऽऽनन्दमयशब्दाभिप्रेतमानन्दप्राचुर्यं निगमयति । देवगन्धर्वाः—देवलोके निवसन्तो गन्धर्वाः । चिरकालस्थायी लोकश्चिरलोकः, स लोको येषां ते चिरलोकलोकाः । आजानो देवलोकः, तस्मिन् स्मार्तकर्मोपात्तैः सुकृतैः सञ्जाताः आजानजा देवाः । श्रौतकर्मोपात्तैः सुकृतैरग्नीन्द्रादिसायुज्यं प्राप्ताः कर्मदेवाः । देवाः—वसुरुद्रादयः । इन्द्रः प्रसिद्धः । तथा बृहस्पतिश्च ।

प्रजापतिश्चतुर्मुखः । ते ये शतं प्रजापतेरानन्दाः स एकः ब्रह्मणः—'ब्रह्मविदाप्नोति पर'मिति प्रस्तुतस्य परस्य ब्रह्मणः आनन्दः । न च एक इति निर्देशाद्ब्रह्मानन्दस्य परिच्छिन्नता । प्रजापत्यानन्दात्प्रकृष्टताज्ञापनमात्रे तात्पर्यात् । 'इषुवत्सविता गच्छती'ति वचनस्य गतिमान्द्यनिवृत्तौ तात्पर्यवत् । तस्यास्य आनन्दमयस्य परस्य ब्रह्मणः उपासनास्थानविशेषं गमयन्ती श्रुतिरियं देवताविशेषतां व्यनक्ति—स यश्चायमित्यादिना । यश्चासावादित्ये—'हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्व एव सुवर्ण' इति श्रुतः, यश्चायं पुरुषे—विज्ञानमयस्याप्यन्तरात्मतया हृदयगुहायां सन्निहितः स एकः—अभिन्नः । हृदयगुहावर्तितया तादृशदिव्यविग्रहविशिष्टत्वेन च ध्यानं कर्तव्यमित्येतत् । एवं प्राप्यत्वोपयुक्ता गुणा उपवर्णिताः । 'उताहो विद्वानमुं लोक' मित्यादिना पूर्वं प्रस्तुतानां प्रश्नानामुत्तरमाह—स य एवमित्यादिना । एवंवित्स उपासकः अस्माल्लोकात्प्रारब्धावसाने प्रेत्य अर्चिरादिना मार्गेण निर्गतः एतमन्नमयं—अन्नमयान्तर्यामिणं एतं मनोमयं—मनोमयान्तर्यामिणं, एतं विज्ञानमयं—विज्ञानमयान्तर्यामिणं एतमानन्दमयमात्मानं उपसङ्क्रामति—प्राप्नोति । अत्र प्रेत्य सङ्क्रामतीत्युक्त्या प्राप्तृप्राप्ययोर्भेदः देशविशेषगमनं चेति मुक्तौ विशेषो निरूपितो भवति । तस्मिन् मीमांसिते आनन्दप्राचुर्ये एष वक्ष्यमाणः श्लोको भवति ॥

इत्यष्टमोऽनुवाकः ।

---

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति

कुतश्चनेति। एतꣳ ह वाव न तपति किमहꣳ साधु नाकरवम्। किमहं पापमकरवमिति। स य एवं विद्वानेते आत्मानꣳ स्पृणुते। उभे ह्येवैष एते आत्मानꣳ स्पृणुते। य एवं वेद। इत्युपनिषत्॥

यतो निरतिशयानन्दाद्वाचः अप्राप्य पारं इयत्तालक्षणं मनसा सह निवर्तन्ते तादृशं निरतिशयं ब्रह्मानन्दं विद्वान्—निरतिशयानन्दब्रह्मोपासक इत्येतत्। न बिभेति कुतश्चन—सकलभयातीतो भवतीत्येतत्। अनेन 'अभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति' इत्युक्तोऽर्थः व्याख्यातो भवति। अहं किं साधु नाकरवम्, अहं किमिति पापमकरवम्, इति सुकृताकरणदुष्कृतकरणचिन्ते एतं विद्वांसं न तपतः। तौ हि तापौ स्वर्गमभिलषतः नरकपाताद्भीतस्य च भवतः। अकामकामस्य विद्याविहतपाप्मनोऽस्य न तयोः प्रसङ्गः। एते— साध्वसाधु च य एवं विद्वान्—अनाचरितमाचरितं वा नार्थाय नानर्थायेति च जानन् आत्मानं स्पृणुते—रक्षति। य एवमुभे एते वेद, एष ह्यात्मानं स्पृणुते। पुनरुक्तिरियमुक्तार्थदार्ढ्याय।

इति नवमोऽनुवाकः।

इति तैत्तिरीयोपनिषद्भाष्ये आनन्दवल्लीभाष्यम्।

---

## भृगुवल्ली ।

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै। ओं शान्तिः शान्तिः शान्तिः ॥

भृगुर्वै वारुणिः वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । तं होवाच । यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

'सत्यं ज्ञानमनन्तं ब्रह्मे'ति सत्यत्वादिभिर्धर्मैर्ब्रह्मणः स्वरूपं निरूपितम् । तथाविधं ब्रह्म येन लक्ष्येत तल्लक्षणं प्रतिपाद्यते वक्ष्याम-स्याम् । तपसो विद्यासाधनत्वं च ज्ञाप्यते—भृगुर्वै इत्यादि । आख्यायिकेयं विद्यास्तुतये। पित्रा प्रियाय पुत्रायोपदिष्टेति विद्या हि स्तुता भवति । वारुणिः—वरुणस्य सुतः भृगुः वरुणं पितरं ब्रह्मजिज्ञासया उपससार—उपजगाम । भगवः—भगवन् अधीहि—अध्यापय ब्रह्म—ब्रह्मोपदिशेति । उवाचेति शेषः । तस्मै पुत्राय जिज्ञासवे पिता एतत् प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमित्येतानि प्रोवाच । ननु ब्रह्मजिज्ञासुं प्रति कथमिदं प्रतिवचनम् ? । अयमिदं

ब्रह्मेति साक्षादुपदेशं नार्हति, तपो हि यथावत्तत्प्रतिपत्तौ प्रथमं साधनम्, व्याकुलचेता अयम्, लक्षणं तु ब्रूमः, अनेन लक्षणेन ब्रह्म तपसा ज्ञास्यति—एष्वन्यतमो वाऽन्य एव वेति स्वयमेवेत्याशयेनैवमुक्त्वा लक्षणमाह—यतो वा इत्यादिना । इमानि भूतानि आब्रह्मस्तम्बपर्यन्तानि चराचरलक्षणानि यतः—यस्मात् । हेतौ पञ्चमी । जातानि । येन आत्मभूतेन हेतुना जीवन्ति । प्रयन्ति सन्ति—लीयमानानि सन्ति यदभिसंविशन्ति । यत्प्रयन्ति मोक्षदशायामिति वा । तद्ब्रह्म, तद्विजिज्ञासस्व । एतेन जन्मकारणत्वं स्थितिकारणत्वं लयकारणत्वं चेति त्रितयं समुदितं लक्षणमित्युक्तं भवति । प्रत्येकं चेल्लक्षणं विवक्षितं स्यात्, यतो वा इमानि भूतानि जायन्ते तद्ब्रह्म, येन जातानि जीवन्ति तद्ब्रह्म, यदभिसंविशन्ति तद्ब्रह्मेति प्रत्येकं ब्रह्मशब्दः श्रूयेत । न च तथा । यद्यपि एकैकमपि लक्षणं भवितुमर्हति, अनतिप्रसङ्गात् । अथापि जन्मकारणत्वमात्रे सति स्थितिलययोः कारणं किमन्यदिति शङ्कया परब्रह्मता न सिध्येत् 'तत् कारणान्तरव्यावृत्तिज्ञापनमुखेन परब्रह्मतादार्ढ्याय त्रयं समुदितं लक्षणं विवक्षितम् । विशेषोऽत्र प्रकाशिकायां बोध्यः । तदिदं पितुर्वचनमुपश्रुत्य ईदृशलक्षणलक्षितं किमिति जानन् तद्विज्ञानं विना तपसा न घटेतेति निश्चित्य स तपोऽतप्यत । स तपस्तप्त्वा—उत्तरेण सम्बन्धः ॥

इति प्रथमोऽनुवाकः ।

---

अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

प्रथममन्नं ब्रह्मेति व्यजानात् । कस्मात् ? उक्ताल्लक्षणात् । कथम् ? । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । हीत्यस्य उत्तरत्रापि सम्बन्धः । जातान्यन्नेन हि जीवन्ति । प्रयन्त्यन्नं ह्यभिसंविशन्ति । तदेवं जन्मादिकारणत्वावधारणेन तत्—अन्नं ब्रह्मेति विज्ञाय स्वयमपरितुष्यन् पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेत्युवाच । तं पिता उवाच—उक्तं नाम लक्षणम् । तपसा तल्लक्षणलक्षितं विजिज्ञासस्व । तपो ब्रह्म—ब्रह्मप्रतिपत्तौ साधनम् । एवमुक्तः स तपोऽतप्यत । उत्तरेण सम्बन्धः ॥

इति द्वितीयोऽनुवाकः ।

---

प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञा-

य पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा ॥

पूर्ववत् ।

इति तृतीयोऽनुवाकः ।

---

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

स्पष्टोऽर्थः ।

इति चतुर्थोऽनुवाकः ।

---

विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय

पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

विज्ञानमत्र जीवः । इतरत् स्पष्टम् ।

इति पञ्चमोऽनुवाकः ।

---

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति । सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥

भूयस्तपसा विशुद्धमना भृगुरन्नादिविज्ञानान्तस्यान्तरात्मभूतं तेभ्योऽत्यन्तविलक्षणमानन्दं ब्रह्मेत्यवधृतवान् । कस्मात् ?, आनन्दाद्ध्येव खल्विमानि भूतानीत्यादि । जन्मादिकारणत्वादुक्तलक्षणात् । सैषा भार्गवी वारुणी—भृगुणा वरुणात् समधिगता विद्या परमे व्योमन्—परमव्योमशब्दवाच्ये आनन्दे परमात्मनि प्रतिष्ठिता—अन्नादीनतिक्रम्य तस्मिन्नेव प्रतिष्ठिता, न तु तमतिक्रम्यान्यत्र प्रसर्पतीति यावत् । अथ विद्याफलमुच्यते—य एवं वेदेति । य एवमन्नादि-

क्रमेणानन्दं सकलजगज्जन्मस्थितिलयहेतुं वेद—उपास्ते स तस्मिन् प्रतितिष्ठति, न ततश्च्यवति। तमानन्दं प्राप्य पुनर्नावर्तते इति यावत्। विद्यामाहात्म्यादृष्टं चेदं फलं तस्य सिध्यतीत्याह—अन्नवानित्यादि। प्रभूतमन्नं सिध्यति, अन्नादनसमर्थश्च भवति, अरोगः प्रदीप्तजाठराग्निर्भवतीत्येतत्। प्रजापशुभिर्ब्रह्मवर्चसेन महांश्च भवति, प्रजादिसमृद्धिर्भवतीति यावत्। कीर्त्या च महान् भवति॥

इति षष्ठोऽनुवाकः।

---

अन्नं न निन्द्यात्। तद्व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥

तस्यास्य ब्रह्मविद्यानिष्ठस्येदं व्रतम्, यदन्नं समुपनतं तदपकृष्टमपि न निन्द्यादिति। अन्नं ह्यस्य ब्रह्मोपलब्धौ प्रथमं पर्व। अथोपासनविशेषो निरूप्यते—प्राणशरीरादि यदिदं कार्यजातं तदखिलमन्नमन्नादं च पश्येदिति। ननु कः प्रसङ्गोऽस्यात्र, अविशुद्धसत्त्वो ब्रह्मविद्यायामनधिकारी यः स दर्शनेनानेन विशुद्धहृदयः सन्नधिकुर्यात्। सत्यां कामनायां फलं चेदं लभेतेति। प्रथमं ब्रह्मदृष्टावन्नं

प्रस्तुतमिति च प्रसङ्गः । यदिदं पृथिव्यादिशरीरान्तं सर्वमेतदन्नान्नादोभयात्मकमर्वाचीनमनित्यम्, तस्यास्य सर्वस्य जन्मादि यतः, तद् ब्रह्म, इति विभागश्च ध्वन्यते । प्राणो वा अन्नं शरीरमन्नादः, कस्मात् निमित्तात्?, उच्यते—प्राणे शरीरं प्रतिष्ठितम्, असति प्राणे शरीरविनाशात्, यत् यत्प्रतिष्ठं तत्तस्यान्नं हि । सोऽयं प्राणः शरीरे प्रतिष्ठितः—शरीरे ह्यन्तस्तिष्ठति, तस्मादाश्रयः प्राणस्य शरीरमिति प्राणः शरीरे प्रतिष्ठितः । तथाच शरीरमन्नं प्राणोऽन्नादश्चेत्यपि भवति । एवमनयोः परस्परप्रतिष्ठत्वेन यः प्राणलक्षणमन्नमन्ने शरीरलक्षणे प्रतिष्ठितं वेद—उपास्ते स प्रतितिष्ठति चिरमिह, प्रभूतान्नवान्भवति अन्नादश्च भवति प्रजादिभिः समृद्धो भवति, ब्रह्मणो वेदस्याधीतस्य यद्वर्चस्तेजस्तेन च सम्पन्नो भवति ॥

इति सप्तमोऽनुवाकः ।

---

अन्नं न परिचक्षीत । तद्व्रतम् । आपो वाऽन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥

प्राणशरीरयोरन्नान्नादत्वेन परस्परप्रतिष्ठत्वेन च यो वेद, तस्येदं व्रतम्, अन्नं पात्रे समुपनतमवरमपि न परिचक्षीत—न निराशकुर्यादिति । अप्ज्योतिषोरन्नान्नादत्वेन परस्परप्रतिष्ठत्वेन दर्शनं तत्फलं चोच्यते—आपो वा इत्यादिना । स्पष्टम् ॥

इत्यष्टमोऽनुवाकः ।

---

अन्नं बहु कुर्वीत । तद्व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥

अप्ज्योतिषी अन्नान्नादत्वेन यः पश्यति तस्येदं व्रतम्, अन्नं बहु कुर्वीत—बहु मन्वीतेति । अथ पृथिव्याकाशयोरन्नान्नादत्वेन दर्शनं तत्फलं चोच्यते—पृथिवी वेत्यादिना । व्याख्यातप्रायम् ॥

इति नवमोऽनुवाकः ।

---

न कञ्चन वसतौ प्रत्याचक्षीत । तद्व्रतम् । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा

अन्नमित्याचक्षते। एतद्वै मुखतोऽन्नꣳ राद्धम्। मुखतोऽस्मा अन्नꣳ राध्यते। एतद्वै मध्यतोऽन्नꣳ राद्धम्। मध्यतोऽस्मा अन्नꣳ राध्यते। एतद्वा अन्ततोऽन्नꣳ राद्धम्। अन्ततोऽस्मा अन्नꣳ राध्यते ॥१॥

पृथिव्याकाशे अन्नान्नादत्वेन पश्यतः इदं व्रतम्, न कञ्चन पथिकमन्यं वा निजवसतिमुपागतं वसतौ–निवासे विषये प्रत्याचक्षीत–निराकुर्यात् इति। निजवसतिमुपगतश्चेदप्रत्याख्येयः, स भोजयितव्यश्च। तदर्थं बह्वन्नं यया कया च विधया—मुख्येन गौणेन वा प्रकारेण प्राप्नुयात्–सम्पादयेदित्येतत्। मुख्यः प्रकारो याजनादिः, गौणश्चेतरः। धर्मज्ञा ह्येवमाचक्षते–अस्मै–वसतिमभ्यागतायास्मै अन्नं राद्धम्–निष्पन्नम्, यन्नः सदने निष्पन्नमन्नं तन्नोऽर्थे निष्पन्नम्, अपि त्वतिथ्यभ्यागतजनायैव निष्पन्नमित्याचक्षते इति यावत्। तस्माद्वसतिमुपागतोऽवश्यं भोजयितव्य इति भावः। मुख्यमध्यमाधमभेदेन येयमन्ननिष्पत्तिर्भवति सर्वाऽपि सा अतिथ्यभ्यागतजनायैवेत्याह—एतद्वै मुखत इत्यादिना। मुखतः–प्रधानतः, प्राधान्येन यदेतदन्नं राद्धम्, तदप्यस्मै राध्यते। यन्मध्यतः, तदप्यस्मै। यदन्ततः–कनिष्ठतः, तदप्यस्मै। यदन्नं निष्पद्यते जगति सर्वमतिथ्यभ्यागतजनैकशेषभूतं धर्मज्ञा मन्यन्ते इति यावत् ॥१॥

य एवं वेद। क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोः। गतिरिति

पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति ॥२॥ यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति ॥३॥ तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद्ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः सपत्नाः परि येऽप्रिया भ्रातृव्याः स यश्चायं पुरुषे यश्चासावादित्ये ॥४॥

य एवं वेद—वसतिमभ्यागता अवश्यमन्नदानेन सत्कर्तव्या इति, स यया कयाचन विधया बह्वन्नं प्राप्नुयादिति पूर्वेण सम्बन्धः। अथोपासनान्तराण्युपदिश्यन्ते, शरीरप्राणजलतेजःपृथिव्याकाशान्युपास्यत्वेन पूर्वं प्रस्तुतानि, तदनुबन्धीन्यप्येवेहोपास्यतया प्रस्तूयन्ते इति पूर्वेण सङ्गतान्येतानि । तत्र वागादीनि शरीरानुबन्धीनि, जलानुबन्धिनी वृष्टिः, तेजोऽनुबन्धि विद्युदादि, पृथिव्यनुबन्धि पश्वादि, आकाशं च तदेव। वाचि क्षेमदृष्टिं कुर्यात्, वाचा हि क्षेमः। एवं साध्यसाधनभावसम्बन्धेन तत्र तत्तद्दृष्टिविधिर्बोध्यः। मानुषीः

समाज्ञाः—वागादिशारीरालम्बनान्युपासनानि । अथ दैवीः—अधिदैवमुपासनान्युच्यन्ते इति यावत्। यश इति पशुषु—पशवो यजनसाधनम्, यजनेन च यशः। पशवः पृथिव्यां जाता इति पृथिव्यनुबन्धिनः। ज्योतिरिति नक्षत्रेष्वित्येतत्। बलमिति विद्युतीत्यनेनाधिदैविकेन सङ्गतम्। उपस्थ इत्येतन्मानुषे सङ्गतम्। सर्वमित्याकाशे—सर्वस्य मूर्तजातस्याकाशेन सम्बन्धात्। तत्—आकाशं प्रतिष्ठेत्युपासीत—सर्वमूर्तप्रतिष्ठास्पदत्वात्, अप्रकम्पत्वेन प्रतिष्ठात्वगुणयोगाद्वा। प्रतिष्ठात्वेन य उपास्ते स तत्क्रतुन्यायात् प्रतिष्ठावान् भवति। एवं महत्त्वगुणयोगात् मह इत्युपासीत, स महान्भवति। मन इत्युपासीत—मननसाधनत्वगुणविशिष्टमुपासीत, स मानवान् मननसमर्थो भवति। तत्—आकाशं नम इत्युपासीत—नमनगुणविशिष्टतयोपासीत। अस्मै उपासकाय सर्वे कामाः नम्यन्ते—स्वयमुपनमन्ते इत्येतत्। तत् ब्रह्मेत्युपासीत, बृहत्त्वगुणयोगात्। स उपासको ब्रह्मवान्—बृहत्त्वगुणयोगवान् भवति। परितो म्रियन्तेऽनेनेति परिमरः—संहरणसाधनम्, ब्रह्मणो यत् संहरणसाधनं वायुः सोऽयमित्युपासीत। एनं द्विषन्तः सपत्नाः परितो म्रियन्ते। ये चाप्रियाः सपत्नास्तेऽपि म्रियन्ते। प्रसक्तान्युपासनान्युपदिष्टानि। अथ यत् प्रधानप्रकृतं परब्रह्म, तदुपासनमुपदिशति—स यश्चायमित्यादिना। आनन्दवल्ल्यामानन्दमयं परमात्मानं प्रस्तुत्य 'स यश्चायं पुरुषे यश्चासावादित्ये' इति श्रुतम्, इहापि अन्नादिक्रमेण तेभ्यो विलक्षणं तदन्तरात्मभूतमानन्दस्वरूपं जगज्जन्मादिकारणतया दृष्टत्वेन यदुपश्रुतम्, तदेवाधिकृत्य श्रूयते—स यश्चायमित्यादि। व्याख्यातमेतत् ॥२-४॥

स एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुपसङ्क्रम्य । एतं मनोमयमात्मानमुपसङ्क्रम्य । एतं विज्ञानमयमात्मानमुपसङ्क्रम्य । एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्। एतत्साम गायन्नास्ते हा३ वु हा ३ वु हा ३ वु ॥५॥

स एवंविदस्माल्लोकात्प्रेत्यान्नमयाद्यन्तर्यामिणमानन्दमयमुपसङ्क्रामतीत्यानन्दवल्ल्यामुक्तम्, तमुपसङ्क्रान्तस्य यः फले विशेषस्तं विस्तरेण वक्तुमुपक्रमते—स एवं विदित्यादिना आनन्दमयमात्मानमुपसङ्क्रम्येत्यन्तेन। व्याख्यातमेतत्। आनन्दवल्ल्यामुपक्रमे 'सोऽश्नुते सर्वान् कामान् स ह ब्रह्मणा विपश्चिता' इति फले विशेषः सङ्क्षिप्योक्तः, स एवेह विशिष्योच्यते—इमान् लोकानित्यादिना। आनन्दमयं परं ब्रह्मोपसङ्क्रम्य एतत्सामगायन्नास्ते, न च पुनरावर्तते नाम कर्मगत्येव। अकर्मवश्यो ह्ययम्। अनुसञ्चरति नामेमान् लोकान् कामतः, सत्यसङ्कल्पो ह्ययमाविर्भूतस्वस्वरूपः। कामान्नी कामरूप्यनुसञ्चरति, नतु कर्मनियन्त्रित इवाकामान्नी अकामरूपी। 'स एकधा भवति त्रिधा भवति' 'स यदि पितृलोककामः स्यात् सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ते' इति चान्यत्र श्रूयते। नचायं तानिमान् लोकान् अनात्मदर्शीव स्वतन्त्रान् (ब्रह्मणः पृथग्भूतान्) अनुभवति। अपितु ब्रह्मणा सहैव—ब्रह्मणोऽविभक्तान् तत्प्रकार-

भूतानेव । एतेन कथमानन्दमयमात्मानमुपसङ्क्रान्तस्यैतल्लोकानुभव इत्याशङ्काऽपास्ता । एवमनुसञ्चरन्नेतत् वक्ष्यमाणं साम गायन् आस्ते । हा ३ वु इत्यादि स्तोभाक्षराण्येतानि ॥५॥

अहमन्नमहमन्नमहमन्नम् । अहमन्नादोऽहमन्नादोऽहमन्नादः । अहꣳ श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत् । अहमस्मि प्रथमजा ऋत ३ स्य । पूर्वं देवेभ्योऽमृतस्य ना ३ भा ३ इ । यो मा ददाति स इ देव मा ३ वा ३ः । अहमन्नमन्नमदन्तमा ३ द्मि । अहं विश्वं भुवनमभ्यभवा ३ म् । सुवर्णज्योतीः । य एवं वेद । इत्युपनिषत् ॥६॥

( राध्यते विद्युति मानवान् भवत्येको हा ३ वु य एवं वेदैकं च । )

अत्र अहमिति आत्मना मुखेन ( प्रकारेण ) परमात्मा निर्दिश्यते । जातिगुणादिभिः प्रकारैर्धर्मीव । अयमेवानुभवप्रकारस्तत्त्वदर्शिन आविर्भूतस्वरूपस्य समुचितः । सर्वमेव हि परमात्मनः प्रकारतैकस्वभावम् । सर्वशरीरी हि सः । अतो यथावस्थितरूपेण परमात्मानमनुभवतो वचनमिदम् । यदन्नं यश्चान्नादः तदुभयमहमेव—मच्छरीरकोऽन्नादशरीरकश्च परमात्मैव । तदहमेवान्नमन्नादश्च । सर्वान्तरात्मभूतं सर्वैः प्रकारैरवस्थितमेकमपश्यन्तो हि व्यवहरन्त्यहमत्ता इदम-

न्नमिति । तत्त्वदर्शिनस्तु अहमन्नमहमेवान्नाद इति । सर्वैरुपश्लोक्यमानानां सर्गाद्याश्चर्यकर्मणां च कर्ता अहमेव । त्रिरुक्तिरनुभवदार्ढ्यं गमयति । उत्तरत्राप्यस्मत्पदेन परमात्मन एव निर्देशः । ऋतस्य सत्यभूतस्य मूर्तामूर्तलक्षणस्य प्रथमजः—प्रथमं जातो हिरण्यगर्भश्चाहमेव । देवेभ्यः सर्वेभ्यः पूर्वमेवाहमस्मि । अमृतस्य-मोक्षस्य नाभिः—नाभिरिवाश्रयभूतोऽहमेव । यो दाता मा—माम् ददाति स इत् एव (इदित्यनर्थको निपातः) स एव मा—मां अवाः—प्राप्तो भवति । देयं गोभूहिरण्यादि परमात्मनः पृथग्भूतं मत्वा यो ददाति स परमात्मानं नाप्नोति, किन्तु परमात्मनः प्रकारतया पश्यन् देयं मामेव (परमात्मानमेव) मत्वा यो ददाति स मां (परमात्मानं) प्राप्नोति । यद्वा —यो गुरुः मां पात्राय शिष्याय ददाति स मां प्राप्तवान् । अहमेवान्नम्—अचेतनम्, अन्नमचेतनमदन्तम्—भोक्तारं चेतनं चाभिव्याप्नोमि । चेतनाचेतनजातं मया व्याप्तमित्येतत् । अहमेव प्रलयसमये इदं भुवनं अभ्यभवम्—अभिभूतवान्, मयैव संहृतमित्येतत् । य एवं वेद स सुवर्णज्योतिः—कमनीयप्रकाशमानदिव्यरूपो भवति । इत्युपनिषत्—भार्गवी विद्या सेयं समाप्तेत्येतत् ॥६॥

इति दशमोऽनुवाकः ।

इति भृगुवल्लीभाष्यम् ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण—परमहंसवर्य—योगिराज—श्रीगोपालानन्दस्वामिविरचितं

तैत्तिरीयोपनिषद्भाष्यं समाप्तम् ।

---



# ऐतरेयोपनिषत् ।

## गोपालानन्दस्वामिविरचितभाष्यसमेता ।

**आत्मा वा इदमेक एवाग्र आ-**
**सीत् । नान्यत् किञ्चन मिषत् ।**

अग्रे सृष्टेः प्राक् आसीत् । ननु व्याहतम्, इदं सृज्यं सृष्टेः प्रागासीदिति । नैतत्, एवं नासीत् किन्तु आत्माऽऽसीत्—आप्नोति—व्याप्नोति सकलमिदं सर्वात्मनाऽऽधारतया नियन्तृतया शेषितया च सोऽयं परमात्माऽऽसीत् । ननु सृज्यं चेदात्मनोऽन्यत् इदं आत्माऽऽसीदिति व्याहतम्, यद्यनन्यत् इदानीमप्यात्मैवेति अग्रे आत्माआसीदित्यपेतार्थम्, अविशेषात् । न । एक एवाऽऽत्माऽऽसीत्—नामरूपविभागरहित आत्माऽऽसीत् । ननु—अविकारिणोऽस्य नामरूपान्वयायोगान्नामरूपापन्नमिदं तद्रहित आत्माऽऽसीदित्यनुपपन्नम् । नैतत् । अविकारिणोऽप्यस्य 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति नामरूपान्वयो हि श्रुतः । 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इति च । स्वतनुभूतचिदचिद्द्वारा हि तद्योगतदभावौ कालभेदेन

तस्मिन् घटेते । एक एवेत्यवधारणार्थं विशदयति—नान्यत् किञ्चनेति । मिषत्—उन्मिषन्निमिषद्वा किमपि नासीत्, क्रियाग्रहणं नामरूपयोरुपलक्षकम् । नामरूपविकारापन्नं किमपि नासीदिति । आसीदिति निर्देशात् नासीदिति सौगतः शून्यवादः, इदमग्रे आसीत् इति निर्देशात् कार्यस्य सर्वात्मना प्रागसत्तावादः काणादः, पूर्वमात्माऽऽसीदिति निर्देशात् आनुमानिकप्रधानोपादानकजगद्वादः कापिलश्च व्यावर्तितः । यदिह वृत्तवर्तिष्यमाणयोः सङ्गतिमुपपादयता निर्विशेषाद्वितीयनित्यविज्ञानवादिना मुमुक्षोरविदुषो विदुषश्च पारिव्राज्य एवाधिकार इति समर्थयितुं पराक्रान्तम्, तदेतत्तदभिमतनित्यविज्ञानवादस्योपनिषदि नावकाश इत्यन्यत्र निरूपणादेवोपहतप्रायमिति नेह तन्निरसनप्रयासः पृथगपेक्ष्यते ।

स ईक्षत लोकान्नु सृजा इति । स इमान् लोकानसृजत । अम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः ॥

स आत्मा ईक्षत—ऐक्षत, सङ्कल्पितवान् । किमिति ?, लोकान् सृजै इति। एवं सङ्कल्प्य यथासङ्कल्पमसृजत। ऐक्षत अथ सपद्यसृजत; सङ्कल्पमात्रमेवास्य सर्गे विलम्बः, सर्वज्ञः सर्वशक्तः सर्वप्रकारैरवस्थितो ह्येष सर्वस्यात्मा, नास्य कुलालादेरिव सिसृक्षोः सामग्रीसम्पादनविलम्बः, न ह्यात्मनोऽन्यत्रोपादानमुपकरणं वा, येन स्यात् स-

ङ्कल्पसर्गयोर्व्यवधानम्। कान् लोकान्? आह—अम्भ इति। अम्भो, मरीचिः, मरम्, आपः, इत्येतान् लोकान्। इयं सिसृक्षा सर्गश्च महदादिक्रमेणाण्डान्तसिसृक्षासर्गसमनन्तरभाविनी। तदुपलक्षकमेतन्महदादिसर्गस्य। अम्भःप्रभृतिशब्दैर्विवक्षितान् लोकान् श्रुतिः स्वयमेव व्याचष्टे—अद इत्यादिना। यदिदमम्भः—अम्भःशब्देन विवक्षितम्, स तु लोकः परेण दिवम्—द्युलोकादूर्ध्वम्, द्यौरस्योपरितनस्य प्रतिष्ठा, तथाचाम्भःपदेन द्युलोकाश्रया ये उपरितना लोका यश्च द्युलोकः स सर्वोऽपि विवक्षित इति भावः। वृष्टिलक्षणाम्भःप्राधान्यात् तेन शब्देन निर्देशः, ततो वृष्टिरुद्भवति। अन्तरिक्षं मरीचयः, मरीचिप्राधान्यादन्तरिक्षं मरीचिशब्देन निर्दिश्यते। यद्यप्यन्तरिक्षमेकम्, अथापि तत्र वर्तमानानां मरीचीनां बाहुल्याद्बहुवचनम्। पृथिवी मरः—म्रियन्ते हि पृथिव्याम्, मरणप्राचुर्यात् पृथिवी मरमुच्यते। पृथिव्या अधस्ताद्ये लोकास्ते आप उच्यन्ते। तदेवमण्डान्तर्वर्तिनो लोकाश्चतुर्धा प्रविभज्य प्रदर्शिताः।

**स ईक्षत इमे नु लोका लोकपालान्नु सृजा इति। सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्॥**

स लोकानुक्तान् सृष्ट्वा पुनरैक्षत—सङ्कल्पितवान्, इमे नु लोकाः सृष्टाः, अथ लोकपालान्नु सृजै इति, लोकपालरहिता लोका हि विनश्येयुरिति। एवं सङ्कल्प्य स परमात्मा अद्भ्य एव—अद्भ्य इत्युपलक्षकं भूतानाम्, पञ्चीकृतेभ्यो भूतेभ्य इति यावत्, पुरुषम्—पुरुषाकृतिम्, समुद्धृत्य सङ्कल्पमात्रेण समुत्पाद्य तं पुरुषममूर्च्छयत्—

स्वात्मकजीवानुप्रवेशाधानेन उच्छ्रायविशिष्टमकरोत्, अवर्धयदित्येतत्। असति जीवानुप्रवेशे शिरःपाण्यादिलक्षणः पिण्डविशेषोऽपक्षीयेत, नोपचीयेत। सोऽयं समष्टिपुरुषो हिरण्यगर्भः॥

तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाऽण्डम्। मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुः अक्षिणी निरभिद्येतामक्षिभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशः त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमाः नाभिर्निरभिद्यत नाभ्या अपानोऽपानात् मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः॥

अथ स परमात्मा तं पुरुषमभ्यतपत्—सङ्कल्पोष्मणा, सङ्कल्पविशेषगोचरमकरोत्, अयं लोकपालादिनिर्माणद्वारकारणं भवत्विति सङ्कल्पमकरोदित्याशयः। तस्याभितप्तस्य—सङ्कल्पगोचरीकृतस्य मुखं निरभिद्यत। यथाऽण्डं—पक्षिणो निःसरतः निःसरणावकाशमापादयत् यथाऽण्डं विदीर्यते तथा निरभिद्यत। संवृतं मुखं विवृतमभूदिति यावत्। तस्मान्मुखाद्वाक्—भविष्यत्प्राण्युपकरणभावमापत्स्यमानं

वागाख्यकरणं ( जातावेकवचनम् ) प्राभवत्, न मुखं वाचः प्रकृतिः, अहङ्कारस्य हि विकृतिः सा, किन्तु निःसरतो वाग्जातस्य निःसरणावधिर्गङ्गाया इव हिमवान् । अतो मुखादिति पञ्चम्युपपत्तिः । वाचोऽग्निः—वाचः प्रभवस्थानात् अग्निर्लोकपालः प्राभवत् । वाच इति ल्यब्लोपे पञ्चमी वा, वाचमधिष्ठायाग्निर्मुखात्प्राभवत् इति तदर्थः । नासिके निरभिद्येताम् । पूर्ववत् । निःसरिष्यमाणनिःसरणोपयुक्तावकाशविशिष्टमभूदित्याशयः । नासिकाभ्यां प्राणः, प्राण इति घ्राणो लक्ष्यते, प्राणाद्वायुः—पूर्ववत् । वायुर्देवविशेषः । अक्षिणी इत्यादि व्यक्तम् । दिश इति दिगभिमानी देवताविशेषो लक्ष्यते । लोमानीति । साहचर्यात् स्पर्शनेन्द्रियमुपचर्यते । ओषधिवनस्पतय इति । तदभिमानी देवताविशेषः, लोम्नामप्ययमेवाभिमानी देवः । हृदयमिति । हृदयकमलमित्येतत् । मृत्युः—यमः । रेत इति रेतःसहचरितं प्रजननेन्द्रियं लक्ष्यते । आप इति तदभिमानी देवताविशेषः । एवं सकरणा लोकाः प्रादुरभवन् । इति लोकपालसृष्टिरुक्ता ।

इति प्रथमाध्यायप्रथमखण्डभाष्यम् ।

---

ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतन् । तमशनापिपासाभ्यामन्ववार्जत् । ता एनमब्रुवन् आयतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥

ता एता अग्न्यादयो लोकपालाः सकरणाः सृष्टा अस्मिन् महत्यर्णवे दुर्निर्गमे भवमहार्णवे स्वाविर्भावस्थानभूतपुरुषोपलक्षिते न्यपतन्। अर्णवे निपतितस्येव भव एव परिभ्रमणमेषाम्। तं पुरुषमशनापिपासाभ्यामन्ववार्जत्—संयोजितवान्। ता एता अग्न्याद्या अपि ताभ्यां पीड्यमानाः एनं परमेश्वरमब्रुवन्, नः आयतनं प्रजानीहि—सम्पादयेत्येतत्। यस्मिन् प्रतिष्ठिता वयमन्नमदामेति ॥

ताभ्यो गामानयत् ता अब्रुवन् न वै नोऽयमलमिति ताभ्योऽश्वमानयत् ता अब्रुवन् न वै नोऽयमलमिति। ताभ्यः पुरुषमानयत् ता अब्रुवन् सुकृतं बतेति। पुरुषो वाव सुकृतम्। ता अब्रवीद्यथायतनं प्रविशतेति ॥

अथ ताभिस्तथोक्तः परमेश्वरः ताभ्यो देवताभ्यो गाम्—गवाकृतिं पिण्डविशेषं निर्माय पुरतः समानयत्। तं दृष्ट्वा ता अब्रुवन्, न वै नोऽयमलम्—अयं पिण्डविशेषो नास्माकं भोगाय पर्याप्त इति। अरुचिमासां विज्ञाय तत उभयतोदन्तत्वेन प्रकृष्टमश्वमानयत्, विवेकशक्तिवैधुर्यमालक्ष्य तस्मिन् अब्रुवन् न वै नोऽयमलमिति। गवाश्वसृष्टिरियं तिर्यङ्मात्रसृष्टेरुपलक्षिका। अथ स ताभ्यः पुरुषमानयत्, पुरुषाकृतिं तं पिण्डविशेषमवलोक्य ताः प्रहृष्टा अब्रुवन्—सुकृतं बतेति। बतेति हर्षे। सुकृतम्—शोभनं कृतम्। तिर्य-

कृसृष्ट्यपेक्षया पुरुषसृष्टेः प्रकृष्टतया अग्न्यादिभिरभिमतत्वेनाद्यापि पुरुष एव–पुरुषयोनिरेव सुकृतम्–सुकृतसाधनं भवति । अथ स ता अब्रवीद्यथायतनम्–यथास्थानमिह प्रविशतेति ॥

अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन् ॥

अथेश्वरेणाभ्यनुज्ञाता अग्न्यादयो यथास्थानं प्राविशन्, तत्राग्निर्वाग्भूत्वा वागभिमानिनी भूत्वा वाचमधिष्ठाय तद्रूपा सती मुखम्–स्वप्रभवसजातीयं स्थानं प्राविशत् । वाय्वादयोऽप्येवमेव घ्राणाद्यधिष्ठाय तत्तद्रूपाः सत्यः नासिकादिस्थानं प्राविशन् ॥

तमीश्वरमशनापिपासे अब्रूताम् । आवाभ्यामभिप्रजानीहीति । स ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति । तस्माद्यस्यै कस्यैचिद्देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः ॥

अथैनमीश्वरमशनापिपासे अब्रूतामायतनमावाभ्याममिप्रजानीहि—विचिन्तय, सम्पादयेत्येतत् । एवमभ्यर्थित ईश्वरः प्राह—एतास्वेवाग्न्यादिदेवतासु युवामाभजामि—पृथग्युवयोरायतनं न घटते, क्रियारूपयोर्युवयोर्नहि पृथगुपभोक्तृता सम्भवेत्, तद्देवतास्वाभजाम्यवकाशप्रदानेनानुगृह्णामि । एतासु युवां भागिन्यौ—एताभ्यो दीयमानहविरादिभागिन्यौ करोमि इति । तस्मादेव हेतोः यस्यै कस्यैचिद्देवतायै अर्पयितुं हविश्चरुपुरोडाशादिलक्षणं गृह्यते, अस्यां देवतायां तद्धविर्भागिन्यामेते अशनापिपासे भागिन्यौ भवतः । एतेन व्यष्टिसृष्टिर्निरूपिता ॥

इति प्रथमाध्यायद्वितीयखण्डभाष्यम् ।

---

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति । सोऽपोऽभ्यतपत् । ताभ्योऽभितप्ताभ्यो मूर्तिरजायत । या वै सा मूर्तिरजायतान्नं वैतत् ॥

स परमेश्वरः पुनरेवमैक्षत—सङ्कल्पितवान् । किमिति, इमे यथासङ्कल्पं लोका लोकपालाश्च सृष्टाः, अथैभ्यः अन्नं सृजै इति । एवं पर्यालोच्य स आपः—भूतानि अभ्यतपत् सङ्कल्पोष्मणा, व्रीह्याद्यन्नमेभ्यः प्रभवत्विति सङ्कल्पमकरोदिति यावत् । अभितप्ताभ्यस्ताभ्यो

मूर्तमपि घनीभूतमजायत । यत्तन्मूर्तं तदेवान्नं व्रीह्यादिलक्षणं मानुषयोग्यम्, मार्जारादियोग्यं मूषकादि च ॥

तदेतत्सृष्टं पराङत्यजिघांसत्तद्वाचाऽजिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुं स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् । तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेन ग्रहीतुम् । स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् । तच्चक्षुषाऽजिघृक्षत्तन्नाशक्नोच्चक्षुषा ग्रहीतुं स यद्धैनच्चक्षुषाऽग्रहैष्यत् दृष्ट्वा हैवान्नमत्रप्स्यत् । तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुं स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् । तत्त्वचाऽजिघृक्षत्तन्नाशक्नोत् त्वचा ग्रहीतुं स यद्धैनत्त्वचाऽग्रहैष्यत् स्पृष्ट्वा हैवान्नमत्रप्स्यत् तन्मनसाऽजिघृक्षत्तन्नाशक्नोन्मनसा ग्रहीतुं स यद्धैनन्मनसाऽग्रहैष्यत् ध्यात्वा हैवान्नमत्रप्स्यत् । तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रहीतुं स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्न-

मत्त्रप्स्यत् । तदपानेनाजिघृक्षत् तदावयत् सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः ॥

तदेतदन्नं सृष्टं इमे अत्तारोऽस्मान् भक्षयिष्यन्तीति भीत्या पराग् भूत्वा अत्यजिघांसत्–अतिक्रम्य गन्तुमैच्छत्, पलायितुं प्रावर्ततेत्येतत् । यद्यपि व्रीह्यादेरन्नस्य सेयमिच्छा नोपपद्यते । अथापि मूषकादिप्राणिजाते सम्भाव्यमाना व्रीह्यादौ बहिःस्थितिमात्रेणोपचर्यते । स चात्तृवर्गः प्रथमं जातः अदनप्रकारमजानन्नशिशिषावेगेन तदन्नं वाचाजिघृक्षत् गृहीत्वात्तुमैच्छत्, नाशक्नोद्वाचा गृहीत्वात्तुम् । वाचा यद्यग्रहैष्यत् इदानीन्तनोऽपि लोको वाचाऽन्नं व्याहृत्यैवात्रप्स्यत् । नहि तथा । एवमेव घ्राणादिभिर्ग्रहीतुमशक्ता अन्ततोऽपानेन प्राणवृत्तिविशेषेण मुखादन्तः प्रसर्पताऽजिघृक्षत्, तदावयत्–जग्राह गृहीत्वा प्राशीत् इत्येतत् । यो वायुर्मुखबिलादधः प्रसर्पन्नपानाख्यः स एषोऽन्नस्य ग्रहः–गृह्यतेऽनेनेति ग्रहः, ग्राहकः । प्रसिद्धमेतत् । अत एवैष वायुरन्नायुः–अन्नेन प्राश्यमानेन जीवनवान्, असत्यन्ने प्राणो हि क्षीयते ॥

स ईक्षत कथं न्विदं मदृते स्यादिति स ईक्षत कतरेण प्रपद्या इति स ईक्षत यदि वाचाऽभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि

**त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्य-पानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति ॥**

स परमेश्वरः सृष्ट्वेदं करणकलेवरलक्षणप्राणिजातमीक्षत—विचारितवान्, इदं मद्दते—मां विना कथं स्यात्—सत्तां प्राप्नुयात्, स्थितिरस्य कथं घटेतेत्येतत् । तदवश्यमिहानुप्रविश्य मया स्थेयमिति । पुनरीक्षत—विचारितवान् कतरेण—मुखनासिकादिद्वारेषु कतरेण द्वारेणेदं प्रपद्यै—प्रविशेयेति । सर्वमिदं मुखादिद्वारं ममैव प्रेष्यवर्गैरभिव्याप्तम्, तन्मम सर्वस्वामिन इदं द्वारं तु न प्रवेशार्हम्, तदन्येन द्वारेण प्रवेष्टव्यमिति । स पुनरीक्षत—विचारितवान् । इह शिरःपाण्यादिलक्षणे पिण्डविशेषे कर्त्रा केनचित् भाव्यम्, इमानि वागादीनि तु व्याहरणादिक्रियाकरणान्येव, नच तान्येव कर्तॄणि, यदि वाचा व्याहृतम्—वाक्कर्तृकमेव व्याहरणम्, यदि प्राणेनाभिप्राणितम्—प्राणकर्तृकमेवाभिप्राणनम्, एवं चक्षुरादिकमेव दर्शनादिकर्तृ, अथाहमिति—अहं व्याहरामि अहं पश्यामि अहं शृणोमीति सर्वक्रियाकर्तृतयाऽनुगतः ख्यायमानः कः, तत् व्याहरणादितत्तत्क्रियामात्रकरणानां न कर्तृतोपपद्येत, तेभ्यो विलक्षणेन जीवेनाहमर्थेन कर्त्रा भोक्त्रा सन्निधातव्यमिह, तदहं जीवो भूत्वा प्रविशामि, यथाऽग्निर्वाग्भूत्वा यथाऽऽदित्यश्चक्षुर्भूत्वा तथा । वागादिकमधिष्ठायाग्न्यादिरिव जीवमधिष्ठायाहमिहापूर्वेण द्वारेण प्रविशामीति सङ्कल्पमकरोदिति यावत् ॥

**स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम् ॥**

स सर्वेश्वर एवं कृतसङ्कल्प एतमेव सीमानं मूर्धाख्यं, मूर्धा ह्यस्य पिण्डविशेषस्य सीमा, विदार्य एतया—मूर्धानमभिनिःसृतया सुषुम्णाख्यया नाड्या द्वारा प्रापद्यत। द्वारं स्तौति—सैषा द्वाः विदृतिर्नाम—विदारणेन विनिष्पत्तेः। तदेतत् द्वारं नान्दनम्—आनन्दमयस्य परमात्मनः प्रवेशद्वारतया आनन्दमयप्राप्त्याधायकद्वारतया च नान्दनम्। इतराणि तु दुःखैकमूलवागादिप्रवेशास्पदतया दुःखमयान्येव॥

तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति॥

तस्य—जीवेनात्मना शरीरमिदं प्रविष्टस्य परमात्मनस्त्रय आवसथाः—आवासस्थानानि—जातु नेत्रं जातु कण्ठः जातु हृदयाकाशमिति। जीवशरीरकत्वविशिष्टवेषेणेह शरीरे सन्निहितो जाग्रद्दशायां नेत्रे सन्निधत्ते, स्वप्नदशायां कण्ठे, सुषुप्तिदशायां हृदयाकाशे। तत्तद्दशानिर्वाहकतया तस्यास्य तत्र तत्र सन्निधिः। तानेवावसथभेदान् अयमावसथोऽयमावसथोऽयमावसथ इति प्रसिद्ध्या निर्दिशति। त्रयः स्वप्नाः—शरीरमिदमनुप्रविष्टस्यास्य जाग्रदाद्यास्त्रयः स्वप्नाः। कथमेतेऽस्य स्वप्ना उच्यते। सत्यमवस्थाभेदा जीवमपेक्ष्य, परमात्मनस्तु ततोऽन्यस्य तद्रूपयोगेन तदात्मना भूत्वा तदवस्थात्मदर्शनं स्वप्न एवेति न तदवस्थावैषम्यम्, स्वयमसाधारणान्यरूपोऽतद्रूपस्तद्रूपतां प्राप्य तदात्मना तद्रूपं तदवस्थं च पश्यतीति यत् स्वप्न एव हि सः। नचापारमार्थ्यं बाह्यार्थस्य, स्वप्नोऽपि हि नापरमार्थः। एवं स्वप्नसाम्यात् स्वप्न

इति निर्देशः । अयं भावः—यथा कश्चित् स्वेन रूपेण देवदत्तः स्वयमक्षत्रियोऽप्यश्रोत्रियोऽप्यव्याघ्रोऽपि स्वप्ने विजातीयदेहयोगमापन्नः पश्यत्यात्मानं क्षत्रियं श्रोत्रियं व्याघ्रं वाऽन्यं कमपि, तथाऽयं स्वयमानन्दमयः स्वेनासाधारणेन रूपेण स्थितः सन्नपि तत्तज्जीवरूपशरीरान्तरयोगमापन्नः स्वयमजाग्रदवस्थोऽपि जाग्रदवस्थमस्वप्नावस्थोऽपि स्वप्नावस्थमसुषुप्त्यवस्थोऽपि सुषुप्त्यवस्थं क्षणमात्रमनुभवति । अकालपच्यदेशविशेषैकनिलयस्य सर्वः प्रपञ्चसमयोऽत्यल्प एवेति न वैषम्यम् । स्वाप्नेन नानुलिप्यते पुरुषः, ( न पुण्यपापोपलेपः ) परमात्मा जीवात्मना भूत्वा साध्वसाधु पश्यन् कुर्वन् न लिप्यते पुण्येन पापेन वा, तदस्य जाग्रदादयोऽपि स्वप्ना एवेति । एतेन सर्वप्रकारेणावस्थितस्य सर्वात्मना सर्वमनुभवतोऽस्य त्रीणि जागरितान्येव वक्तुं युक्तमिति शङ्काऽपास्ता ॥

स जातो भूतान्यभिव्यैख्यत्
किमिहान्यं वावदिषदिति ।

स परमात्मा जीवेनात्मना देहमिमनुप्रविष्टः, अत एवापूर्वदेहयोगेन जातः, न कर्मणा किन्तु स्वेच्छया, सोऽयमेवं जातमात्रो भूतानि जीवात्मभूतेन ( जीवशरीरकेण ) स्वेनानुप्रविष्टानि मानुषादिसंस्थानानि अभिव्यैख्यत्—स्वस्याभिमुख्येन स्वासाधारणधर्मतया व्यैख्यत् विशेषतो निश्चितवान्, तत्प्रकारमात्मानमपश्यदित्येतत् । सर्वोऽपि वाचकः शब्दः इह प्रकारप्रकारिभावेनावस्थितेऽस्मिन् मदनुप्रविष्टे प्रपञ्चे मत्तोऽन्यं किमवदिषत्—अवदिष्यत्, छान्दसः

प्रयोगः, वक्तुं शक्नुयादित्येतत् । इति च व्यैख्यत् निश्चितवान् ।

स एतमेव पुरुषं ब्रह्म ततम-
मपश्यदिदमदर्शमिति ३ ॥

पूर्वं जातस्य तस्याचेतनप्रकारतया स्वात्मदर्शनमुक्तम् । अधुना चेतनप्रकारतयाऽऽत्मदर्शनमुच्यते—स एतमिति । सः—सर्वस्य स्रष्टा सर्वेश्वरः इदं—सन्निहितमर्थजातं अदर्शम्—अपश्यम्, इदमुपलक्षकम-शृणवमित्यादेः, इति अपश्यत्, सन्निहितार्थदर्शनादिक्रियाकर्ताऽ-हमस्मीत्यपश्यत् इति यावत् । इती इति प्लुतेन लीलारसानुभवजनितो हर्षो गम्यते । ननु स्रष्टुः सर्वेश्वरस्य भोक्तृधर्मभूतं सन्निहितार्थदर्श-नादिकर्तृत्वं कथमुपपद्यते येनैवं दर्शनं लीलारसानुभवः स्यात्, उपपाद्यते—स तदाऽहमिति ततमं ब्रह्मैतमेव पुरुषमपश्यत्, तत-मम्—पिण्डेऽस्मिन् सन्निहितेषु करणभोक्तृनियन्तृषु अन्यतमं मुख्यं नियन्तृभूतं परब्रह्मलक्षणमेतमेव पुरुषम्—जीवात्मभावेन ( जीवश-रीरकतया ) अनुप्रविष्टं पुरि शयनात्पुरुषमेवापश्यत् । पिण्डविशेष-शरीरकजीवविशेषशरीरकत्वविशिष्टवेषेण स्वात्मानमेवाहमर्थतयाऽप-श्यदिति इदमहमदर्शमिति सन्निहितार्थानुभवकर्तृतया स्वानुभव-स्तस्य समुचितः । यद्वा—सः—सर्वस्य स्रष्टा स्वात्मभूतेन जीवेनेम-मनुप्रविष्टः, एतमेव पुरुषम्—अग्न्यादिभिर्लोकपालैर्वागाद्यात्मना प्र-विश्य मुखादाववस्थितैस्ततमपि—व्याप्तमपि पुरुषं शिरःपाण्यादिल-क्षणं पिण्डविशेषं ब्रह्म ततमम्—ब्रह्मणा स्वेन व्याप्ततमम्, जीवात्म-

नोऽप्यात्मतया ह्यनुप्रविष्टः, अपश्यत् निश्चितवान्। एकस्तकारोऽत्र लुप्तः। एवमवधार्य जीवकर्तृकानपि दर्शनादिव्यापारांस्तदात्मभूते तत्प्रकारेणावस्थिते स्वस्मिन्नेवान्वितान् पश्यन् अहमिदमदर्शमहमदोऽपश्यमित्यपश्यदात्मानम्॥

तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः॥

यस्मात् सर्वान्तरात्मा सोऽयं तत्तदात्मनाऽनुप्रविश्य सर्वमिदमिति पश्यति तस्मादिदन्द्रो नाम, यस्मादिदन्द्रो नाम तस्मादिदन्द्रं सन्तमेनमिन्द्र इति परोक्षनाम्नाऽऽचक्षते, 'इन्द्रो मायाभि'रिति च श्रूयते। तथा व्यवहारे निमित्तमाह—परोक्षप्रिया इति। देवा हि परोक्षनाम्ना निर्देशे प्रीतिमावहन्ति। महतां साक्षान्नाम्ना निर्देशो हि न समुचितः। अध्यायपरिसमाप्त्यर्थो द्विरुक्तिः॥

इति प्रथमाध्यायतृतीयखण्डभाष्यम्।

इति ऐतरेयोपनिषद्भाष्ये प्रथमाध्यायः।

---

पुरुषो ह वा अयमादितो गर्भो भवति यद्रेतः॥

अतीतेऽध्याये परमात्मा समष्टिपुरुषप्रभृतिदेवादिव्यष्टिपुरुषान्तमिदं ससर्ज, अनुप्रविष्टश्चायमेषु सर्वात्मतयेत्युक्तम्। अथ यथावस्थितात्मतत्त्वमविजानतो जन्मपरंपरां दुःखैकबहुलां विजानतस्ततो विमुक्तिं च

निरूपयन्नुपक्रमते । कर्मगत्या इतो लोकादमुं लोकममुष्मादिमं च लोकमसकृत्पर्यटन्नयं पुरुषः आदितः—प्रथमं गर्भो भवति—गर्भात्मना भवति, कोऽसौ गर्भः ?, यदेतत् प्रसिद्धं रेतो बीजं भाविनः शरीरस्य । भुक्तावशिष्टेन कर्मणाऽमुष्माल्लोकादिमं लोकमनुपतन्वृष्ट्यादिक्रमेणान्नं सङ्गत्य तेन भुक्तेन परिणतेन द्वारा पुरुषशरीरमनुप्रविष्टो रेतःसंश्लेषमनुप्रपन्नः सन् भाविव्यक्तजन्मारम्भकगर्भस्थितिमाप्नोति ॥

तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म ॥

तदेतद्रेतः—कर्मगत्या वृष्ट्यादिक्रमेण समापतितजीवगर्भं रेतः सर्वावयवेभ्योऽन्नरसेभ्यः समुद्भूतं सारांशं आत्मगर्भत्वादात्मानं आत्माभिमानगोचरीभूतदेहारम्भकत्वाद्वाऽऽत्मानं आत्मन्येव स्वशरीर एव बिभर्ति । तदेतद्रेतो यदा स्त्रियां ऋतुमत्यां सिञ्चति अथैनज्जनयति—पिता स्वशरीरे रेतोगर्भात्मनाऽवस्थितं जनयति, तदस्य पुरुषशरीरे रेतोगर्भात्मनाऽवस्थितस्य पुंसः ततो निर्गमनेनाभिव्यक्तः रेतःसेक एवायं प्रथमं जन्म ॥

तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति साऽस्यैतमात्मानमत्र गतं भावयति ॥

तत् योनौ सिक्तं रेतः तस्याः स्त्रिया आत्मभूयम्—आत्मभावम्,

ततोऽपृथग्भावं, तदङ्गादविभागेनावस्थितिमिति यावत्, गच्छति, यथा स्वमङ्गमुदरादि तथा । तस्मादेवाङ्गाव्यतिरेकभावात् स गर्भः एनामन्तर्वर्तीं न हिनस्ति—न पीडयति । सा अस्य भर्तुरात्मानमेवात्र स्वोदरे समागतं भावयति । विभाव्यैवं तं गर्भं सम्रुचितान्नसेवनेन संरक्षतीति यावत् ॥

**सा भावयित्री भावयितव्या भवति तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति ॥**

सम्रुचितान्नपानादिना तं गर्भं भावयित्री पोषयन्ती सा भर्त्रा भावयितव्या संरक्षणीया । एवं भर्त्रा सादरं संरक्ष्यमाणा उक्तेन प्रकारेण अग्रे जन्मनः प्राक् गर्भं बिभर्ति—संरक्षतीत्येतत् । अथ स पिता प्रसूतं तं कुमारं जन्मनोऽग्र एव जन्मनः प्रारम्भ एव, जातमात्र एवेत्येतत्, अधिभावयति जातकर्मादिना संस्कारेण । प्रासङ्गिकमेतत् ॥

**स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म ॥**

स पिता जातमात्रं कुमारमधिभावयतीति यत् आत्मानमेव भावयति तत् । स्वयमेव हि जायते जायायां पुत्ररूपेण । ननु कस्मै प्रयोजनाय पिता पुत्ररूपेणात्मानं जायायां जनयति ?, उच्यते, एषां लोकानां सन्तत्यै—अविच्छेदाय । एवमेव हि पुत्रपौत्रादिना लोकाः सन्तता—अविच्छिन्ना भवन्ति । एवं प्रासङ्गिकमुक्तम्, अथ प्रकृतमुच्यते—यन्मातुरुदरान्निर्गमनं तदस्य द्वितीयं जन्म ॥

**सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते।**

अस्मिन् संसरतः पुंसोऽवर्जनीयदुःसहदुःखाभिघातव्यञ्जके गर्भजन्मनी निरूपिते। तत्र यः प्रथमो गर्भश्चरमधातुः, स हि मलमयस्यैव सारः कश्चिदस्पृश्यः, तद्भावेन पितुः शरीरे स्थितिः, अथ ततो विनिःसृत्य मातुरुदरे मलमूत्रमये शुक्रशोणितसंश्लेषलक्षणगर्भात्मना स्थितिः, ततो योनिमार्गेण दुःसहवेदानापूर्वकं निःसरणं चेति गर्भजन्मनी निरूप्यमाणे दुःखैकास्पदतया कस्य न स्यातामुद्वेगाय। अथ कथमपि मातुरुदरान्निःसृतस्यापि यावज्जीवं नास्मिन् लोके सुखरूपा स्थितिः, यदनेन पुत्रभावं प्राप्तेन पितुः प्रत्यनन्तरेण भूत्वा तेन कृतानि कर्माणि क्लेशैकफलकान्यवश्यमनुष्ठेयानि, इत्येतदवबोधयितुं प्रवर्तते—सोऽस्यायमित्यादिना। सोऽयं जातः कुमारः पुत्ररूपः पितुरेवात्मा पुण्येभ्यः—विहितेभ्यः कर्मभ्यः विहितानि कर्माणि कर्तुं प्रतिधीयते—पितुः स्थाने प्रतिनिधीयते। श्रूयते चान्यत्र—'अथातः सम्प्रत्तिः यदा प्रेष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञः त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति' इति॥

**अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते। तदस्य तृतीयं जन्म॥**

अथास्य कुमारस्येतर आत्माऽयं पिता, पितापुत्रयोरैकात्म्यविवक्षया इतर आत्मेत्युक्तिः, पुत्रे आत्मीयं कर्मभरं विन्यस्य कृतकृत्यः सन्, एतेन पित्रा आहितः सर्वकर्मभरो यावज्जीवं वहनीय

इति गम्यते, वयोगतः—समधिकं वयः प्राप्तः, गतवया इति यावत्, प्रैति, स इतः प्रयन्नेव—इतः शरीराद्विमुच्यमान एव पुनर्जायते—यथाकर्म देहान्तरयोगं प्राप्नोति । तदस्य तृतीयं जन्म, मरणं विचार्यमाणं देहाद्देहान्तरयोगलक्षणमेवेति तृतीयं जन्मेति । ननु पितुस्तत्तृतीयं जन्म नास्य कुमारस्य, यस्य प्रथमं द्वितीयं जन्मोक्तं तस्यैव तु तृतीयं जन्म वक्तव्यम् । सत्यम् । अथापि पितरि निर्दिष्टं न्यायसाम्यात् कुमारेऽप्युक्तप्रायम् । ननु साक्षादेव निरूपणं समुचितम् । सत्यम् । अथापि सम्प्रत्तिप्रसङ्गेनाव्यवहितमत्रे पिता प्रकृत इति तस्य तन्निरूपितम् । ऐकात्म्यविवक्षया चास्मिन्नपि तदुपपादितप्रायम् । एवमवर्जनीयजन्मचक्रपरिभ्रमणे संसारे संसरतोऽविदुषो नोपरतिर्दुःखान्वयस्य ॥

तदुक्तमृषिणा—गर्भेनु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा । शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति । गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥

एवमविदुषो जन्मचक्रपरिभ्रमणमनर्थशताकुलमशुभैकास्पदमुक्तं वैराग्याय । अथ विद्यायां प्रवर्तनाय विदुषो विमुक्तिं ज्ञापयन्ती महर्षेरात्मनिष्ठस्य वचनमनुवदति—तदुक्तमित्यादिना । अहं गर्भे सन्नेव एषां देवानामग्न्यादीनां सकरणानां जनिमानि—जन्मानि, यानि चान्येषां लोकानां गवादीनां प्राणिनामन्नानां च जन्मानि विश्वा—

विश्वानि, तान्यन्ववेदिषं यथावत्। यत आत्मनो येन प्रकारेण यानि यानि लोकलोकपालादीन्युत्पन्नानि सर्वं तदहं ज्ञातवान् । एतद्वेदनतः प्राक् मां शतम्—बह्वयः आयस्यः—लोहमय्यः, अभेद्याः, पुरः पुरवदनेकभोगोपकरणसम्पन्ना देहाः अरक्षन् निर्गमादात्यन्तिकात् । स्वस्मादपसर्पणं यथा न घटेत तथा स्थापितवत्यः । तत्राप्यध एव—अधोयोनिष्वेव । यथा लेशतोऽपि निर्गमनप्रसङ्गो न स्यात्तथेत्येतत् । आयसीरिति विभक्तिव्यत्ययश्छान्दसः । इदानीं तु वेदनानन्तरं अञ्जसा—वेदनजनितवीर्यातिशयेन शीघ्रं श्येन इव जालं विदीर्य निरदीयम्—निर्गतवान् इति । गर्भ एव शयानो वामदेवो महर्षिरेवमुवाच ॥

स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वामृतः समभवत् ॥

एवं वामदेवस्य वचनमनूद्य श्रुतिः स्वयमाह—स इति । स वामदेवः एवं विद्वान्—लोकलोकपालादीनां सृष्टिं स्रष्टारं चात्मानं विद्वान् जानन् साक्षात्कुर्वन् अस्माच्छरीरभेदादूर्ध्वं प्रारब्धशरीरविनाशादनन्तरं उत्क्रम्यार्चिरादिनाऽमुष्मिन् स्वर्गे लोके—अप्राकृते दुःखासंभिन्ने लोकविशेषे सर्वान् कामांस्तेनात्मना सह प्राप्य अमृतः—अपुनरावृत्तोऽत एव जननमरणादिरहितः आनन्दमयात्मामृतानुभवैकनिष्ठः समभवत् ॥

इति ऐतरेयोपनिषद्भाष्ये द्वितीयोऽध्यायः ॥ २ ॥

---

कोऽयमात्मेति वयं कतरमुपास्महे कतरः स आत्मा।

आत्मैवास्य सर्वस्य देवमनुष्यादिप्राणिवर्गस्य स्रष्टा, स एवम-

मनुप्रविष्टः, तमविदुषां गर्भजन्मादिक्लेशः, विदुषां तु निःश्रेयसमित्युक्तम् । अथ तस्यात्मनः स्वरूपं वक्तुमुपक्रमते विचारमुखेन विनिर्णयमात्मविदामनुवदन्ती श्रुतिरधुना । केवलकर्मसु श्रेयोऽपश्यन्तः श्रेयःकामा आत्मोपासने प्रवृत्ताः मिथो विचारेणात्मस्वरूपं निश्चिन्वन्तो विचारमिममकुर्वन्—कोऽयमात्मेति । आत्मोपासनान्नान्यत् श्रेयः, अयमात्मा कः इति । नन्वनुदिनमनुभूयते सर्वैरेवाहमहमित्यात्मा, सत्यम्, न तेन तस्य विनिर्णयः, शरीरमिदं यो व्याप्नोति चेतयंस्तेन ह्यात्मना भाव्यम् । इहान्तः प्राणः करणं चक्षुरादि द्रष्टा च विज्ञानमयः सन्निहितः, तेष्वेषु कोऽयम्, अथान्य एव कश्चित् सन्निधत्ते, तत् भवति विचारः । वयं यमुपास्महे—(सामीप्याद्वर्तमानप्रयोगः) उपासितुं प्रवृत्ताः सः, स कतरः ॥

येन वा पश्यति येन वा शृणोति येन वा
गन्धान् जिघ्रति येन वा वाचं व्याकरोति
येन वा स्वादु चास्वादु च विजानाति ॥

विचार्य अथैवं निर्णयमकुर्वन्—यः पश्यति शृणोति जिघ्रति सोऽयं द्रष्टा श्रोता घ्राता विज्ञानात्मा जीवः सुखदुःखशतसमाकुलः नोपास्य आत्मा भवितुमर्हति । कर्मनियन्त्रितश्चायं न प्रभवति स्वतो द्रष्टुं श्रोतुं वक्तुं वा, दृष्टिश्च दर्शनादिलक्षणा द्रष्टुरस्य धर्म इति सुतरां न तथा, चक्षुरादीनि तु द्रष्टुर्दृष्टौ द्वाराणि केवलं अन्यान्यानि चेति नात्रात्मता, तत् द्रष्टुरस्य दृष्टौ यः साधकतमम्—अतिशयितं

साधनम्, येनैवैकेनायं सर्वो द्रष्टा पश्यति येनैवैकेनायं सर्वः श्रोता शृणोति येनैवैकेनायं सर्वो घ्राता जिघ्रति गन्धान् येनैवैकेन सर्वो व्याकर्ता वाचं व्याकरोति येनैवैकेन सर्वो रसयिता स्वादु चास्वादु च विजानाति स सर्वस्यात्मा चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं वाचो वाक् समुपास्य आत्मेति । श्रूयते चान्यत्र 'येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान् । एतेनैव विजानाति ।' इति ।

यदेतद्धृदयं मनश्चैतत् ।

ननु यद्यपि चक्षुरादीन्यननुगतानि, अथापि हृदयमेकमनुगतम्, तेनैव पश्यति तेनैव शृणोति जिघ्रति वदति च । सत्यमनुगतं दर्शनादौ द्वारं भवति यदेतद्धृदयम्, अथाप्येतन्मनस्तु—मननसाधनमिन्द्रियं तु तत्, दर्शनादौ चक्षुरादिवदसाधारणं द्वारमात्रं तु तत् करणसाजात्यात् । इयानेवेतरेभ्यो विशेषः, चक्षुरादिषु प्रविशतो द्रष्टुः प्रथमं द्वारमनुगतमिति । सर्वतः समतिशयितं दर्शनादिसाधनं त्वन्यदेवास्मात् यन्मनसो मनः । यद्वा—यदेतदान्तरकरणं हृदयं मन इति तदप्येनदेव—यश्चक्षुरादीनां चक्षुरादितया दर्शने साधकतमतयोक्त एतदात्मकमेव । येन वा पश्यतीत्यस्यैवं वा भावः—अस्मिन् शरीरे ये प्राणाश्चक्षुरादयो यश्च मुख्यः प्राणश्च न ते भवन्त्यात्मानः, जडा ह्येते, द्वावात्मानौ तु हृदयगुहां प्रविष्टौ, तत्रैकः क्षेत्रज्ञो द्रष्टा श्रोता घ्राता रसयिता विज्ञानात्मा, अपरस्तु तस्यात्मनोऽप्यात्मा, सर्वज्ञः सर्वशक्तिः सर्वान्तरात्मा, तत्र द्रष्टेति प्रसिद्धोऽप्येष येनात्मनाऽधिष्ठितः पश्यति शृणोति जिघ्रति वक्ति रसयति,

द्रष्टुं श्रोतुमाघ्रातुं वक्तुं च प्रभवतीत्येतत्, सोऽयमन्तरात्मोपास्य इत्येतत् । एतेन मुख्यं द्रष्टृत्वं परमात्मन्येवेति ज्ञापितं भवति । अदृष्टो द्रष्टा अश्रुतः श्रोता सोऽयमन्तरात्मा । अथ मुख्यां दृशिकारणतामप्यस्मिन्नेव सङ्गमयति—यदेतदित्यनेन । एष द्रष्टा हृदयेन मनसा चैकीभूतेन चक्षुषा पश्यति श्रोत्रेण शृणोति वाचा वदतीति लोकतो गम्यते नाम । अथापि यदेतद्धृदयं मनश्च (मनस एवावस्थाभेदाद्धृदयस्य पृथग्ग्रहणम्) चकारात् तदुभयाधिष्ठितं बाह्यं चक्षुरादि गृह्यते, तदेतत्सर्वमेतदेव—एतदात्मकमेव । करणस्याप्यन्तरात्मतया करणमपि मुख्यं तदेव । श्रूयते चात एव 'चक्षुषश्चक्षु'रिति ।

संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टि-
र्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः
क्रतुरसुः कामो वश इति । सर्वाण्ये-
तानि प्रज्ञानस्य नामधेयानि भवन्ति ॥

यतोऽयं द्रष्टा येनैवान्तरात्मना पश्यति दृशिसाधनं मनश्च यदात्मकतयैव दृशौ साधनभावमर्हति, अत एव द्रष्टुर्धर्मभूता या दृशिः संज्ञानादिलक्षणा साऽप्यस्यैव परमात्मनः प्रज्ञानस्वरूपस्य गुणभावं प्राप्नोतीत्याह—संज्ञानमित्यादिना । संज्ञानं प्रबोधसामान्यलक्षणम्, आज्ञानम्—आदेशः, विज्ञानं—विशेषतो ज्ञानम्, प्रज्ञानम्—शास्त्रजन्यं विज्ञानम्, मेधा—अर्थावधारणनैपुण्यलक्षणा, दृष्टिः—ऐन्द्रियकं विज्ञानम्, धृतिः—धैर्यम्, मतिः—मननम्, मनीषा—मननसामर्थ्यम्, जूतिः—दुःखम्, स्मृतिसङ्कल्पौ प्रसिद्धौ, क्रतुः—उपासनम्,

असुः—प्राणनमात्रासाधरणं चैतन्यम्, कामः—विषयाभिलाषः, वशः—परवशतालक्षणं ज्ञानाप्रागल्भ्यम्, इत्येतानि प्रज्ञानस्य प्रज्ञानैकस्वरूपस्य परमात्मनः नामधेयानि—गुणीभूतानि, नाम ह्यर्थस्य गुणीभूतम्, शेषभूतमित्येतत्। यद्वा—नामधेयानि—बोधकानि। अयं भावः—यो भावो यस्य करणस्य यस्य कर्तुर्वा धर्मः, तेन भावेन तत् करणं सच कर्ता व्यवह्रियते, तद्बोधकशब्देनावबोध्यते, तत् द्रष्ट्रात्मको दर्शनकरणात्मकश्चायं प्रकृष्टज्ञानस्वरूपः परमात्मा सर्वप्रकारेणावस्थितः दृशिभेदैः संज्ञानादिभिर्भावैर्व्यवहारमर्हतीति तान्येतानि तस्यावबोधकानि, तद्वाचिभिरपि तैः शब्दैः स एव बोध्यते॥

एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि क्षुद्रमिश्राणीव। बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म॥

तस्यास्यात्मनः सर्वात्मतां प्रपञ्चयति—एष ब्रह्मेत्यादिना। 'उपक्रमे 'आत्मा वा इदमेक एवाग्र आसीत्' इति यदनन्यत्वं कार्य-

१ बोधने निमित्तानीत्येतत्। अयमपि लाक्षणिकोऽर्थः।

कारणयोर्ज्ञापितं तदुपसंहारे प्रपञ्च्यते । शरीरात्मभावनिबन्धनमिदं सामानाधिकरण्यम् । ब्रह्माण्डोदरवर्तिनो ब्रह्मादयो देवा एष एव, सर्वात्मा ह्येषः, यानि चेमानि महाभूतानि ब्रह्माण्डारम्भकाणि पृथिव्यादीनि तान्यप्येष एव । यानि चेमानीतराणि बीजानि यानि चेतराणि बीजानीमानि, योनिजायोनिजभेदेन द्वैराश्यमभिप्रेत्य द्वेधा निर्देशः, तानि च बीजानि क्षुद्रमिश्राणीव—इवशब्दोऽनर्थकः, एवार्थो वा, क्षुद्रैरत्यल्पजीवितैरत्यल्पसुकृतैः समधिकतमस्कैरत एव क्षुद्रैर्जीवैर्विमिश्राणि बीजानीमानि । ब्रह्मादिदेवदृष्ट्या मानुषो मशक इवेति क्षुद्रयोनिरेव । तानि कानि द्वैराश्यमापन्नानि बीजानि, आण्डजानि जारुजानि—जरायुजानीत्ययं योनिजराशिः, स्वेदजान्युद्भिज्जानि चेत्ययोनिजराशिः । तानीमानि बीजान्येष एव । तेभ्यो बीजेभ्यो जाताः पुरुषा हस्तिनो गावोऽश्वाः पतत्रिप्रभृति यच्च जङ्गमं प्राणिजातं यच्च स्थावरं तरुगुल्मादि सर्वं तत् प्रज्ञानेत्रम्—नीयतेऽनयेति नेत्रम्, प्रज्ञा—प्रज्ञानं परमात्मा, स नेताऽस्य सर्वस्यात्मतयेति प्रज्ञानेत्रम् । जन्मस्थितिलयसमयेऽस्य प्रतिष्ठा प्रज्ञाने परमात्मन्येवेति तदिदं प्रज्ञाने प्रतिष्ठितम् । लोकोऽयं सर्वः प्रज्ञानेत्रः—प्रज्ञाननयनः, सर्वस्य सर्वार्थप्रकाशनमनेनैवेति भावः । सर्वस्यास्य प्रतिष्ठा—स्थितिस्थानं प्रज्ञैव—प्राज्ञः परमात्मैव । तदेतत् सर्वप्रतिष्ठाभूतं प्रज्ञानमेव परं ब्रह्म । 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यन्यत्रापि ज्ञानशब्देन ब्रह्म श्रूयते । स्वयम्प्रकाशस्वरूपतयाऽस्य स्वरूपं ज्ञानमेवेति ज्ञानशब्देन निर्देशः, सर्वज्ञश्चायं न ज्ञप्तिमात्रम् ॥

स एतेन प्राज्ञेनात्मनाऽस्माल्लोकादु-
त्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान्
कामानाप्त्वाऽमृतः समभवत्समभवत् ॥

तदुपास्यः सोऽयमेव प्रज्ञात्मा परमात्मा, यः पूर्वं प्रस्तुतो वामदेव आत्मदर्शी स उपासितेनैव प्राज्ञेनात्मनोपायेनास्माल्लोकादुत्क्रम्य प्राप्य सर्गं लोकमप्राकृतं मोक्षस्थानममुष्मिन् स्वर्गे लोकेऽक्षरे सर्वान् कामान् ब्रह्मणा सह प्राप्यामृतः—मरणरहितः, पुनर्भवरहितः समभवत् । द्विरुक्तिरध्यायपरिसमाप्तौ ॥

लोकाश्च लोकपालाश्च प्राणिनश्च गवादयः ।
येन सृष्टाः प्रविष्टाश्च प्रज्ञात्मानं तमाश्रये ॥
भगवत्सहजानन्दपदपद्मैकसेविना ।
ऐतरेयोपनिषदो व्याख्येयं रचिता मया ॥
अनया तत्प्रसादैकप्राप्तविज्ञानसंपदा ।
कृतिरेषा सुनिष्पन्ना स सर्वात्मा प्रसीदतु ॥

इति ऐतरेयोपनिषद्भाष्ये तृतीयोऽध्यायः ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण—परमहंसवर्य—योगिराज—श्रीगोपालानन्दस्वामिविरचितं
ऐतरेयोपनिषद्भाष्यं संपूर्णम् ।





श्रीस्वामिनारायणो जयति ।

# छान्दोग्योपनिषत् ।

## गोपालानन्दस्वामिविरचितभाष्यसमेता ।



ओमित्येतदक्षरमुद्गीथमुपासीत ।
ओमिति ह्युद्गायति तस्योपव्याख्यानम् ॥१॥

---

ॐनमः सर्वभूतानामादिमध्यान्तभूमये ।
अव्यक्तव्यक्तरूपाय विष्णवे परमात्मने ॥१॥
दृश्यते योऽन्तरादित्ये पुरुषोऽयं हिरण्मयः ।
पुण्डरीकं यथाऽस्याक्षि नमस्तस्मै विपाप्मने ॥२॥

इयमुपनिषदष्टाध्यायी । यद्यपीहादिमो भागः कर्माङ्गभूतोद्गीथादिकमवलम्बते, अथापि तदुपासनपरतया विद्यात्वाविशेषात्तस्याप्युपनिषदि गणना । विद्यारूपत्वेऽपि कर्माङ्गविषयत्वात्पूर्वकाण्डेन सहैव तस्य परिगणना समुचिता, नोत्तरेण ब्रह्मकाण्डेनेति चेत् । किमनौचित्यमुत्तरकाण्डेन परिगणनायाम् । विद्यात्वाविशेषादौचित्यमिति

तूक्तमेव । किं वा कर्माङ्गविषयतामात्रमस्य पूर्वकाण्डेन सह परिगणनायां विनिगमकम्, न ह्युद्गीथस्येवोद्गीथोपासनस्य कर्मण्यङ्गता, यदङ्गनिरूपणभागस्याङ्गिनिरूपणभागेन सह प्रकरणैक्यं स्यात् । श्रूयते ह्यस्य कर्मणः पृथक् फलम्—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'ति । श्रूयते च कर्मस्वरूपनिष्पत्तेरुद्गीथाद्युपासननिरपेक्षता—'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदे'ति । अथाप्यानुरूप्यमस्य कर्मप्रकरण एव, फलतः कर्मभिरेव सारूप्यादिति चेत् । किं तेन । विषयतः फलतो विभेदेऽप्यस्य ब्रह्मविद्यातः विद्येति स्वरूपे सारूप्यमस्तीति ब्रह्मविद्याप्रकरणे समावेशः समुचित इत्युक्तमेव । किंवा न सन्त्युपनिषदन्तरेऽर्वाचीनफलकान्युपासनानि । कर्माङ्गविषयाण्यपि तानि ब्रह्मदृष्टिरूपाण्यपि विधीयन्त इति चौचित्यमिह । प्रायो विषयः परस्य ब्रह्मणोऽभिधानमिति च । 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति हि श्रूयते । प्रणवो हि परस्य ब्रह्मणोऽभिधा । ननु स्यादेवं अंस्यार्थस्तु नेहं लक्ष्यते कश्चित् । मैवम् । पदमाधाप्यते ह्यनेन विद्यायाम् । सहजतया सुकरेण बाह्येन्द्रियवृत्तिरूपेण कर्मणाऽभ्युदयं विन्दन्न प्रवर्तेत मनोवृत्तिविशेषरूपतया दुष्करायां विद्यायाम् । ब्रह्मविद्यायां तु सुतराम् । अधिकमभ्युदयमुद्गीथविद्यायां चेत् विजानीयात्, कर्मनिष्ठोऽपि सान्निध्यात्प्रयतेत तत्र । अधिगतविद्यारुचिस्ततोऽपि प्रकृष्टायां विद्यायामिति पर्वक्रमेण समारोहणं हि सुकरम् । अपरं चैतत्—कर्मसमृद्ध्यर्थस्यास्यानभिसंहितफलकर्मद्वारा भवत्युपयोगो ब्रह्मविद्यायामिति ।

१ उद्गीथोपासनस्य । २ ब्रह्मविद्याप्रकरणे ।

अक्षरमुपासीत, किं तदक्षरं ओमित्येतत् । एतेन—अक्षरशब्दस्यावयवार्थमाश्रित्य परमात्मपरताश्रयणं व्युदस्तम्[1] । इत्येतदिति निर्देशो हि शब्दस्वरूपपरतां ज्ञापयति । यद्यपि इतिपरतामात्रेण तत्सिद्धिः, अथापि 'ओमित्यात्मानं युञ्जीते'त्यादाविव अक्षरं ओमित्युपासीतेत्यन्वयः प्रसजेदिति तद्व्यावृत्तये एतदिति । समभिव्याहारविशेषस्वाभाव्यादयमेतच्छब्दः श्रुतौ सन्निहितमेवोपस्थापयेत्, नतु यथाकथञ्चित् बुद्धौ । उपास्यं विशिनष्टि—उद्गीथमिति । कथं प्रणवस्योद्गीथत्वम्? तत्र निमित्तं श्रुतिरेवाह—ओमिति ह्युद्गायतीति । उद्गाता ओमित्यारभ्य हि उद्गायति । उद्गीथावयवत्वादुद्गीथ इत्युक्तमिति यावत् । तस्योपव्याख्यानम्—उपास्यतया विहितस्य प्रणवस्योपव्याख्यानम्–सन्निहितविवेचनम्, अपेक्षितविवेचनं क्रियत इति यावत् । उपासने प्रस्तुते कथमुपासनं कस्मै फलायेति गुणविशेषफलविशेषाकाङ्क्षा हि भवेदेव ॥१॥

**एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः ॥२॥**

तत्रादावुद्गीथे रसतमत्वं गुणं विधातुं रसानुत्तरोत्तरं गरीयसो निर्दिशति—एषामिति । एषां दृश्यमानानां भूतानां तरुगुल्मपशुपक्षिप्रभृतीनां स्थावरजङ्गमानां पृथिवी रसः, सा ह्येषां प्रकृतिः प्रतिष्ठा निलयनं च । पृथिव्या आपो रसः, आपो हि पृथिव्यास्तथा ।

१ एतेन माध्वव्याख्याने कटाक्षः पातितः ।

अपामोषधयो हि रसः, ता हि तत्परिणतिविशेषः । ओषधीनां पुरुषो रसः, पुरुषः शिरःपाण्यादिलक्षणपिण्डविशेषः, स ह्योषधीनां परिणतिविशेषः । पुरुषस्य वाग्रसः, विना वाचं पुरुषो हि शुष्यत्यविन्दज्जीविकाम्, तदुच्यते पुरुषस्य वाग्रस इति । वाचः ऋग्रसः, विद्यमानाऽपि वाक् विहीना ऋचा नीरसेति न मान्यते लोकैरत उच्यते वाचः ऋग्रस इति । ऋचः साम रसः, रस्यते हि साम्ना गीतिप्रधानेन ऋक् । साम्नः उद्गीथः, योऽयं प्रस्तुत ओमित्युद्गीथः स प्रणवः साम्नोऽपि रसः, सामापि विना प्रणवेन न फलाय कल्पते, अफलं हि नीरसम् ॥२॥

स एष रसानाꣳ रसतमः परमः
परार्ध्योऽष्टमोऽयमुद्गीथः ॥३॥

सः—प्रथममन्त्रे उपास्यतया प्रस्तुतः एषः—अव्यवहितमन्त्रे साम्नो रसतया प्रोक्तः, अष्टमोऽयम्, इदंशब्देन रसः परामृश्यते । पृथिव्यादिरसापेक्षया अष्टमरसत्वेन रूपितः, उद्गीथः प्रणवलक्षणः, रसानां रसतमः पृथिव्यादीनां रसानां मध्ये अतिशयितो रसः । यदितो नान्यो रसतमः तत्परमश्चायम् । रसतमत्वेनोपास्य इत्यत्र तात्पर्यम् । परार्ध्यः यस्मादयं रसतमत्वेनोपास्यः, अत एव परस्य ब्रह्मणोऽर्धं स्थानमर्हतीति परार्ध्य उच्यते । इत्थं च पराध्यं इति महिमानुवर्णनम् ॥३॥

कतमा कतमर्क्कतमत्कतमत्साम कतमः
कतम उद्गीथ इति विमृष्टं भवति ॥४॥

अथ गुणान्तरविधानाय ऋगादीन्विमृशति—कतमेति । कतमा कतमेत्यादरार्थे वीप्सा । प्रस्तुता ऋक् का, ऋग्जातीया हि बह्वचः, एवं प्रस्तुतं साम उद्गीथश्च कः इत्यन्यतमावधारणार्था जिज्ञासेह विवक्षिता, डतमत्स्वारस्यात् । विमृष्टं भवति—विमृष्टं विमर्शः, भावे क्तः, प्रस्तुतस्य विशेषप्रतिपत्तये जिज्ञासा विमर्शः ॥४॥

वागेवर्क्प्राणः सामोमित्येतदक्षरमुद्गीथः । तद्वा एतन्मिथुनं यद्वाक्च प्राणश्चर्क्च साम च ॥५॥

एवं विमर्शे कामाप्तिरूपं विशेषं श्रावयन्नाह—वागेवेति । यद्यपि ऋग्जातीया बह्वचः, परं तासु या काऽपि ऋक् वागेव, ऋचां वाक्साध्यत्वात् साध्ये साधनाध्यासः । प्राणः सामेत्यत्राप्येवमेव । ओमित्येतदक्षरमुद्गीथः । उक्तादनधिकमपीदं गुणान्तरप्रापकेऽस्मिन्वाक्यान्तरेऽपेक्षितमेव । तद्वा एतन्मिथुनं यद्वाक्च प्राणश्च ऋक्च साम च । वाग्रूपा ऋक् प्राणरूपः सामेत्येतदुभयमेकं मिथुनमित्यर्थः । वाक्प्राणश्चेत्येकं मिथुनं ऋक्साम चेत्यपरं मिथुनमिति न भ्रमितव्यम्, वागेव ऋक् प्राणः सामेति साध्यस्य साधनात्मता ह्यध्यस्ता ॥५॥

तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे सꣳसृज्यते यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् ॥६॥

ननु किमायातं मिथुनभावनायां तदुच्यते । तदेतन्मिथुनं—वा-

क्प्राणरूपं ऋक्सामात्मकं मिथुनं संसृज्यते । क्व संसृज्यते? विभक्ते एव ऋक्सामनी वाक्प्राणौ वा? तदुच्यते—ओमित्यस्मिन्नक्षरे इति । प्रणवस्य वाक्साध्यतया प्राणसाध्यतया च तस्मिन्नंशे वाक्प्राणाख्यमिथुनस्य संसर्गो भवतीति भावः । परे तु—ऋगारूढसामभक्तिरूपत्वेनोद्गीथस्य उद्गीथावयवे प्रणवे ऋक्सामात्मकमिथुनस्य संसर्गोऽस्तीति तदभिन्नतया भाव्यमानस्य वाक्प्राणात्मकमिथुनस्यापि तत्र संसर्गो बोध्य इत्याहुः । स्यादस्य मिथुनस्य क्वचित्संसृष्टिः, किं तेन प्रकृते इत्यत्राह—यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् । लोके स्त्रीपुंसौ ग्राम्यधर्माय मिथः सङ्गच्छतस्तदाऽन्योन्यस्य कामं प्रापयतः, प्रसिद्धमेतत् । अनेन दृष्टान्तनिरूपणेन दार्ष्टान्तिके कामप्रापकत्वं ज्ञापितं भवति । अयं भावः—लोके मिथुनं मिथः संसृष्टमन्योन्यस्य काममिव वाक्प्राणात्मकं मिथुनमोमित्यक्षरे संसृष्टं सत् ये वाग्रूपाया ऋचः कामा ये च प्राणरूपस्य साम्नः कामास्तान्सर्वान्कामान्सम्पादयतीति । एतेन ऋक्सम्बद्धकर्मनिष्पाद्यसकलफलसाधनत्वं सामसम्बद्धकर्मनिष्पाद्यसकलसाधनत्वं च प्रणवेऽस्तीति कामाप्तिसाधनत्वरूपगुणविशेषान्तरमनेन निरूपितं भवति ॥६॥

आपयिता ह वै कामानां भवति य
एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥७॥

उक्तगुणविशिष्टतयोद्गीथोपासनस्य फलमाह—आपयितेति । यो विद्वानेतदक्षरमुद्गीथं एवं कामाप्तिगुणवत्तयोपास्ते स यजमानस्य

कामानां आपयिता ह्येव भवति । वैशब्दोऽवधारणे । हेति प्रसिद्धौ । प्रसिद्धिश्च तं यथा यथोपासते तदेव भवतीति श्रुतिसिद्धा ॥७॥

**तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्येव तदा हैषो एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै का-मानां भवतिय एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥८॥**

अथैतस्मिन्गुणान्तरं तद्विशिष्टतयोपासनस्य फलविशेषं चाह—तद्वा एतदिति । तदेतत्—यदुपास्यतया प्रस्तुतमोमित्येतत्, अनुज्ञाक्षरम् । कथमेतत्? धनमन्यद्वा यत्किञ्च परेण प्रार्थितः स्वामी तदनुजानन् ओमित्येव ह्याह तदा । तदनुज्ञापरत्वादनुज्ञाक्षरत्वमस्य सुप्रसिद्धमिति भावः । अनुज्ञाक्षरत्वेन सिद्धं गुणमाह—एषो एव समृद्धिरिति । एषा उ इति पदच्छेदः । उशब्दः प्रसिद्धौ । अनुज्ञेति यत् एषैव समृद्धिः । न ह्यसमृद्धः पुरुषो वसनमशनमन्यद्वा परेण प्रार्थितोऽनुजानाति । साध्ये साधनारोपः । यो विद्वानेतदक्षरमुद्गीथं एवं समृद्धिगुणविशिष्टतयोपास्ते स यजमानस्य कामानां समर्धयिता समृद्धिसम्पादको भवति । यद्यपि तत्तद्गुणविधानावसरे तत्तद्गुणविशिष्टतयोपासनस्य फलं पृथक् पृथक् श्रूयते, नैतावतोपासनभेदविवक्षा, उपासीतेत्यादावेकत्रैव विधिश्रवणात्, वाक्यभेदकल्पनाया अन्याय्यत्वात् । अनेकगुणविशिष्टैकोपासनेनैकेनाप्युपास्यतावच्छेदकगुणवैविध्यानुगुणफलवैविध्यस्य सम्भवात् ॥८॥

**तेनेयं त्रयी विद्या वर्तते ओमित्याश्रा-**

**वयत्योमिति शꣳसत्योमित्युद्गायत्येत-
स्यैवाक्षरस्यापचित्यै महिम्ना रसेन ॥९॥**

अथ स्तूयते प्रणवः प्ररोचनाय तदुपासने । इयं त्रयी विद्या ऋग्यजुःसामरूपा, तेन—प्रस्तुतेन प्रणवेन, वर्तते—स्थितिमाप्नोति, तदुपलक्षितैव सती तत्र तत्राध्ययनमुखेन वर्तत इति यावत् । स्मर्यते च—'ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा । स्रवत्यनोंकृतं पूर्वं पुरस्ताच्च विशीर्यती'ति । वैदिकं कर्माप्यनेनैव वर्तत इत्याह—ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायति । यदाश्रवणादि सोमयागे तदोङ्कारपूर्वकमेव प्रवर्तते । परे तु—त्रयी विद्येत्यनेन वैदिकं कर्म लक्ष्यते, प्रणवेनैव वैदिकं कर्म वर्तत इत्यर्थः, तदिदमुपपाद्यते ओमित्याश्रवयतीत्यादिनेत्याहुः । आश्रावणादीनामोङ्कारपूर्वकत्वनियमे निमित्तमाह—एतस्यैवाक्षरस्यापचित्यै महिम्ना रसेनेति । प्रणवस्य ह्ययं महिमा त्रय्या रस इति । स्मर्यते च तथा—'अकारं चाप्युकारं च मकारं च प्रजापतिः । वेदत्रयान्निरवृहत् भूर्भुवःस्वरितीति चे'ति । तेन महिम्ना हेतुना एतस्यैवाक्षरस्यापचित्यै पूजार्थं ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायति ॥९॥

**तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद ।
नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति
खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥१०॥**

नन्वीदृशमहिमशालिनोऽस्याक्षरस्योपासनं कर्तव्यमित्यनेन प्राप्तम् । उपासनं च विदुष एव घटेत, अन्यत्र चाविदुषामप्यार्त्विज्यं कर्मनिष्पत्तिश्च श्रूयते । यद्येवं किमनेन कर्माङ्गभूतोद्गीथोपासनेनेत्याशङ्क्य परिहरति—तेनेति । यद्यपि यश्चैतदक्षरमेवं वेद यश्च न वेद तावुभौ, तेन—ओमित्युद्गीथेन कुरुतः कर्म । तथापि नानर्थक्यमेकस्यापि । कुतः ? उच्यते । नाना तु विद्या चाविद्या च । तुशब्दः शङ्काव्यावृत्तौ । विद्याऽविद्या च नाना—मिथो विभिन्नफलके । नहि विद्याविशिष्टेन सिध्यन्नर्थो विद्याविहीनेन कदाऽपि लभ्येत । कर्माङ्गभूतोद्गीथस्वरूपे ऐक्यं ह्यप्रयोजकं फलैक्ये । कथमेतत् ? उच्यते । विद्या—विज्ञानेन उक्तगुणविशेषविज्ञानेन, श्रद्धया—आस्तिक्यबुद्ध्या, उपनिषदा—उपासनेन चोपलक्षितः सन् यदेव करोति तदेव कर्म वीर्यवत्तरं भवति । न तु केवलमुद्गीथस्य कर्माङ्गत्वविज्ञानमात्रतः क्रियमाणं कर्म । तत्तु वीर्यवत् । सिद्धमेतेनाङ्गगतातिशयेन फलस्यातिशयवत्त्वम् । अतिशयश्च प्रबलतरकर्मान्तराप्रतिबद्धफलत्वरूपः, तदिदमन्यत्र सुस्पष्टम् । तदेवमाशङ्कां परिहृत्योपसंहरति प्रकृतम्—इति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥१०॥

इति प्रथमाध्याये प्रथमः खण्डः ।

---

देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति ॥१॥

अथास्यैवोद्गीथस्योपासनान्तराणि विधीयन्ते । तत्र अध्यात्मं मुख्यप्राणदृष्ट्योपासनं शत्रुपराजयफलकमादौ विधास्यन् आख्यायि-

कामुखेन ये प्राणादयोऽवराः प्राणा आत्मनि¹ तद्दृष्ट्युल्लङ्घने निमित्तं च व्यञ्जयन् विधित्सितस्योपासनस्य फलाधायकतां ग्राहयति— देवासुरा इत्यादिना। आख्यायिका हि सुखप्रतिपत्तये भवति। देवाश्चासुराश्च प्रजापतेरपत्यतया प्रसिद्धाः पुरा यत्र—यस्मिन्समये यस्मिन्नर्थे वा संयेतिरे—अयुद्ध्यन्त। तत्—तदा तस्मिन्नर्थे वा देवा उद्गीथमाजह्रुः—प्रणवलक्षणमुद्गीथं स्वीकृतवन्तः। किमवधार्य?। अनेनैवोद्गीथेनोपासितेनैतानसुरान् अभिभविष्याम इति। परे तु—शास्त्रोद्भासिता इन्द्रियवृत्तयो देवाः, तद्विपरीतास्तमआत्मिका इन्द्रियवृत्तय असुराः, ते मिथः संयेतिरे, सोऽयं सङ्ग्रामः सर्वप्राणिषु प्रतिदेहमनादिकालप्रवृत्त इति व्याचक्षते। इयदत्र वक्तव्यम्। सङ्ग्रामस्त्वयं वास्तवः। प्राणादिदृष्ट्या उद्गीथोपासनमनुपदमनुवर्ण्यमानमिन्द्रियवृत्तिविशेषरूपदेवेषु न तथा, न हि तत्र तत्सम्भवः। ननु किं सम्भवासम्भवचर्यया, आख्यायिका हीयम्। मुख्यप्राणदृष्ट्योद्गीथस्योपास्यत्वज्ञापन एव ह्यस्यास्तात्पर्यम्। तत्र न काचिदनुपपत्तिः। सत्यम्। तर्हि² देवासुराणां प्रसिद्धानां परित्यागे न किञ्चित् बीजम्, सङ्ग्रामोऽपि तेषां प्रथितः। नन्वस्ति बीजम्, ज्ञाप्यते ह्यनेन धर्माधर्मविवेकः। तामसीभिरिन्द्रियवृत्तिभिरधर्मः सात्त्विकीभिस्तु धर्म इति। किं तेनाप्रकृतेन ज्ञापितेन। श्रुतेरियमाख्यायिकेत्यर्थविशेषज्ञापनमेव मण्डनमिति चेत्। ध्वनितोऽपि तल्लाभात् रूढ्यर्थत्यागे न किञ्चित् निमित्तम्। किञ्च—असुराः पाप्मनाऽविध्यन्नित्यत्र श्रूयमाणमंशतोऽनुप्रविश्यासुरैः क्रियमाणं प्राणादिदूषणं सत्त्वाभिभवद्वारैवेति धर्माधर्म-

१ शरीरे। २ आख्यायिकत्वाविशेषात् स्वार्थे तात्पर्याभावात्।

विवेकविज्ञानमनपायमस्मिन्पक्षेऽपि । किञ्च—ह वै इति प्रसिद्धार्थको निर्देशः संयेतिरे इति भूतकालनिर्देशश्चास्मिन्पक्षे स्वरसः ।

वस्तुतः किमहाक्षेपैः, नहि नस्तत्त्वविप्लवः ।
आख्यायिकाया गाम्भीर्यमन्यस्मादपि गृह्यते ॥१॥

ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे तꣳ हासुराः पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः ॥२॥

ते ह देवास्तमाहृतमुद्गीथं नासिक्यं प्राणं घ्राणं उपासाञ्चक्रिरे—घ्राणोऽयमित्युपासितवन्तः । तदा तद्विदित्वा असुरास्तमुद्गीथं पाप्मना स्वांशेन अविध्यन्—असुरा अनुप्रविश्य पाप्मना अदूषयन् । कस्तस्य तेन दोषः ? उच्यते—तस्मादिति । यस्मादेष पाप्मना विद्धः, तस्मात् तेन घ्राणेन पुरुषः सुरभिमसुरभिं च गृह्णाति । न केवलं सुरभिं किन्त्वसुरभिं च गृह्णाति, पाप्मना तमःप्राचुर्यरूपेण आसुरांशेन विद्धत्वादिति यावत् । एवमुत्तरत्रापि ॥२॥

अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे ताꣳहासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धा ॥३॥ अथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं चाद-

र्शनीयं च पाप्मना ह्येतद्विद्धम् ॥४॥ अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतद्विद्धम् ॥५॥ अथ ह मन उद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ सङ्कल्पयते सङ्कल्पनीयं चासङ्कल्पनीयं च पाप्मना ह्येतद्विद्धम् ॥६॥

अथ देवाः घ्राणस्य दूषिततां ज्ञात्वा सपदि तं त्यक्त्वा वाचमुद्गीथमुपासाञ्चक्रिरे । वागियमदुष्टोत्कृष्टा चेति तद्भावनामुद्गीथे अकुर्वन् । उत्कृष्टदृष्टिर्ह्युपासनं न त्वपकृष्टदृष्टिः । अविशिष्टमवशिष्टम् ॥३–६॥

अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे तꣳहासुरा ऋत्वा विदध्वंसुर्यथाऽश्मानमाखणमृत्वा विध्वꣳसेत ॥७॥

अथ ह वागादीन्दूषितानवधार्यान्ततो य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे । तं दूषयितुमसुरा ऋत्वा—प्राप्य स्वयं विदध्वंसुः अकिञ्चित्करस्ववृत्तयः स्वयं व्यनश्यन् । तत्र दृष्टान्तः—यथेति । आखन्यते अनेनेत्याखनं कुद्दालकादि यत्किञ्चित् । छान्दसं णत्वं सामान्ये नपुंसकम् । यथा अश्मानं प्राप्य विध्वंसेत । अजानता स्थलविवेकमुत्क्षिप्य प्रक्षिप्तं कुद्दालकादि शिलातलं प्राप्य स्वयं यथाऽव-

शीर्येत तथेति भावः । एवं मुख्यामुख्ययोः प्राणयोः शुद्ध्यशुद्धिनिरूपणेन विशुद्धमुख्यप्राणदृष्टिरेवोद्गीथे विधेयेति सहेतुकमुक्तं भवति ॥७॥

एवं यथाऽश्मानमाखणमृत्वा विध्वꣳसत एवꣳ हैव स विध्वꣳसते य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणः ॥८॥

अथास्योपासनस्य फलमाह—एवमिति । यथाऽश्मानं प्राप्याखणं विनश्यति, एवमेव स विनश्यति । य एवंविदि—उद्गीथं मुख्यप्राणतया भावयितर्युपासकविशेषे । पापं कामयते—अनिष्टमनुचितं यत्किञ्चिदाकाङ्क्षते । यश्चैनमुपासकमभिदासति—हिनस्ति । भर्त्सनताडनादिभिः पीडयति । तस्मात् स एषोऽश्माखणः । स—उपासकः अश्मा अश्मवदविभेद्यः । एष त्वनिष्टकृत् आखणः, आखणवद्विशीर्यमाणमुख इति यावत् ॥८॥

नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति । एतमु एवान्ततोऽवित्त्वोत्क्रामति व्याददात्येवान्तत इति ॥९॥

इतरेभ्योऽस्य मुख्यप्राणस्य श्रैष्ठ्यं सनिमित्तमनुवर्णयति—नैवैतेनेति । यस्मादेष मुख्यः प्राण आसुरवृत्तिभिरनुपहतस्तस्मान्नैवैतेन मुख्येन प्राणेन घ्राणेनेव सुरभिमसुरभिं वा लोको विजानाति । नैवैतेन सत्यम-

नृतं च वदतीत्याद्युपलक्षणम् । तेन ह्येष अपहतपाप्मा—विशुद्धः । अयमपरो विशेषो मुख्यप्राणस्य, यदयमनुदिनमश्नाति यत्पिबति तेनाशितेन पीतेनावरान् प्राणान् घ्राणादीन् अवति—रक्षति । तदस्य न घ्राणादेरिव स्वोदरभरणे प्रवृत्तिः, किन्तु परार्थैवेति । अन्ततः—अन्तसमये स्वस्यान्नपानादिप्रदानेन रक्षकमेतमेव मुख्यप्राणमवित्त्वा—अलब्ध्वा अशिशिषापिपासाव्याकुलोऽयमुत्क्रामति शरीरात् घ्राणादिरितरः प्राणः । अत एव व्याकुलतया अन्ततो मरणसमये व्याददाति—व्यात्तास्यो भवति । आस्यव्यादानं ह्यशिशिषापिपासाकार्यम् ॥९॥

तꣳ हाङ्गिरा उद्गीथमुपासाञ्चक्र एतमु
एवाऽऽङ्गिरसं मन्यतेऽङ्गानां यद्रसः ॥१०॥

अथ मुख्यप्राणे उपास्यप्रकारे गुणान्तरविधानायाग्रिमो ग्रन्थः प्रवर्तते । तत्र आङ्गिरसत्वं नाम गुणविशेषो विधीयते प्रथमेन । तं ह उद्गीथमङ्गिरा ऋषिः उक्तेन प्रकारेण प्राणदृष्ट्योपासाञ्चक्रे, तमिममेवाङ्गिरसोद्गीथेऽप्यस्योपास्यमानं प्राणं आङ्गिरस इत्याचक्षते । कथमुपास्यस्यायं निर्देश इत्यत्राह—अङ्गानामिति । यदयं मुख्यः प्राणोऽङ्गानां रसः, धारकत्वात् । अङ्गरसेऽस्मिन् आङ्गिरस इति निर्देश ईषद्विकृतोऽप्युपासकनामतोऽभिन्न एव । देवानां परोक्षप्रियत्वाद्वा तथा निर्देशः ॥१०॥

तेन तꣳ ह बृहस्पतिरुद्गीथमुपासाञ्चक्रे एतमु एव
बृहस्पतिं मन्यते वाग्घि बृहती तस्या एष पतिः ॥११॥

अथ बृहस्पतित्वं गुणान्तरं विधीयते। बृहस्पतिः तेन—अङ्गिरसत्वगुणविशिष्टेन प्राणेन उपलक्षितमुद्गीथमुपासाञ्चक्रे। तथाविधप्राणात्मनोपासितवानित्यर्थः। प्राणमेतेनोपास्यमानं बृहस्पतिमेव मन्यते। कुतः। लोके वागेव हि बृहती। तस्या अप्येष प्राणः पतिः, प्राणाधीनत्वात् ॥११॥

तेन तꣳ हायास्य उद्गीथमुपासाञ्चक्रे एतमु
एवायास्यं मन्यन्ते आस्याद्यदयते ॥१२॥

अथायास्यत्वं गुणान्तरं विधीयते। अयास्यनामा ऋषिः तेन—पूर्वोक्तगुणविशिष्टप्राणात्मना तमुद्गीथमुपासाञ्चक्रे। अतस्तं प्राणमेव अयास्य इति मन्यन्ते, यस्मादास्यात् अयते—निर्गच्छति ॥१२॥

तेन तꣳह बको दाल्भ्यो विदाञ्चकार। स ह नैमिशीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायति ॥१३॥

दल्भ्यस्यापत्यं नाम्ना बकः तेन—अयास्यत्वादिगुणविशिष्टप्राणात्मना तमुद्गीथं विदाञ्चकार—उपासितवान्। स ह नैमिषीयाणामुद्गाता बभूव। स ह्युद्गीथे पूर्वोक्तसकलगुणविशिष्टप्राणभावनाबलेन एभ्यः—नैमिषीयेभ्यो यजमानेभ्यः, कामान्—शत्रुपराजयादीन्, आगायति—गानेन सम्पादितवानित्यर्थः ॥१३॥

आगाता ह वै कामानां भवति य एतदेवं
विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ॥१४॥

अथ फलेनोपसंह्रियते। य एवं विद्वान् अन्योऽप्येतदक्षरमुद्गीथमेवमुपास्ते स यजमानस्य शत्रुपराजयप्रभृतीनां कामानामागाता—गानेन सम्पादको भवति। इत्यध्यात्मम्—शरीरे. शरीरस्थप्राणात्मना उद्गीथस्योपासनमुक्तमिति शेषः ॥१४॥

इति प्रथमाध्याये द्वितीयः खण्डः।

---

**अथाधिदैवतम्—य एवासौ तपति तमुद्गीथमुपासीतोद्यन्वा एष प्रजाभ्य उद्गायति। उद्यꣳस्तमोभयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद ॥१॥**

उक्तमध्यात्ममुद्गीथोपासनमथाधिदैवतमुपदिश्यते। अथ—अध्मात्ममुद्गीथोपासनोपदेशानन्तरम्, अधिदैवतम्—देवतासु, उपासनमुपदिश्यते इति शेषः। य एवासौ तपति प्रसिद्ध आदित्यः, तमुपासीतोद्गीथम्। उद्गीथं तद्दृष्ट्योपासीतेति यावत्। नन्वादित्यात्मताभावनमुद्गीथे कस्मिन्नंशे साम्यात्? उच्यते—उद्यन्वा एष प्रजाभ्य उद्गायति। उद्गीथ इवायमादित्योऽप्युद्यन्नेव प्रजानामर्थे उद्गायति। यद्यपि उद्गीथः उद्गातृमुखेनोद्गच्छन्नुद्गायति नाम प्रजाभ्यः। यजमानस्यार्थे ह्युद्गानम्। आदित्यस्तु नोद्गायति तथाऽप्ययमुद्गच्छन् प्रजाभ्य एवान्नं पुष्णाति पृथिव्याम्। न ह्यनुदितेऽस्मिन् सस्यसम्पत्तिः। तदयमपि प्रजाभ्य उद्गायतीव। वस्तुत उद्गायत्युद्गातैव। उद्गीथस्तूद्गीयते, तदुद्गीथे उद्गायतीति निर्देश औपचारिक एव। धातुतो विवक्षितं तु प्रवृत्तिमात्रं तदिदमादित्येऽपि समानम्। अथ फलमु-

च्यते—उद्यन्निति । उद्यन्नेष तमसोऽन्धकारात् भयमपहन्ति यस्मात्, तस्मादेवमादित्यात्मना उद्गीथं यो वेद—उपासीत, स तमसः—अन्धकारात् भयस्यापहन्ता भवति ॥१॥

समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिममं चोद्गीथमुपासीत ॥२॥

यद्विहितमनुपदमध्यात्मम्, यच्चाधुना विधीयते अधिदैवतम्, तदुभयं न स्वतन्त्रमुद्गीथोपासनं किन्तु प्राणादित्योभयदृष्टियुक्तमेकमुपासनमित्येतत्सोपपत्तिकमाह—समान इति । एतमुद्गीथं इमं—अनुपदोक्तप्राणात्मकम्, अमुं—अधुना निरूप्यमाणादित्यात्मकं चोपासीत । प्राणादित्योभयरूपतयोद्गीथ उपास्य इति यावत् । कथमेकस्मिन्नुपासने विरुद्धशीलयोरुपासनरूपतेत्याशङ्कामुभयोरविरुद्धत्वज्ञापनेन परिहरति—समान उ एवायमित्यादिना । अयं चासौ च—प्राण आदित्यश्च समान एव । तथाहि—उष्णोऽयं प्राण उष्णोऽसावादित्यः, प्रसिद्धमेतत् । स्वर इति इमं—प्राणमाचक्षते । इह शरीरे चक्षुरादयः प्राणायत्तप्रकाशाः प्राणस्तु न तदायत्तः, अतः प्राणः स्वयं राजत इति स्वरः । स्वर इति प्रत्यास्वर इत्यमुमाचक्षते—देवतास्वसावादित्यः तेजोमयः स्वयं राजत इति स्वरः । प्रतिदिशमासमन्तात् स्वयं राजत इति प्रत्यास्वरः । यद्वा—उदात्तानुदात्तादिभेदहेतुत्वादकारादिवर्णमयशब्दहेतुत्वाद्वा प्राणः स्वरः । स्वृधातोः शब्दार्थकादप्प्रत्यये स्वर इति रूपम् । प्राणवृत्तिविशेषेणैव ह्युदात्तादिभेदा वर्णभेदाश्च भवन्ति ।

तथा देवतास्वसावादित्यः स्वरः, उदिते ह्यादित्ये परितः शब्दाः प्रसर्पन्ति प्रतिदिशम्, अस्तमिते च तस्मिन् सर्व एव प्राणिनः नीरवाः स्वनिलयनमधिशेरते, तदमुं स्वर इत्याचक्षते। यद्वा—स्वरति गच्छतीति स्वरः, गच्छति हि प्राणः, तमिमं स्वर इत्याचक्षते। तथा—असावादित्यः स्वरति, न केवलं स्वरति किन्तु प्रत्यास्वरति च—प्रत्यागच्छति च। तदमुं स्वर इति प्रत्यास्वर इत्याचक्षते। धातूनामनेकार्थतया स्वृधातोर्गमनार्थकादच्चि स्वर इति रूपम्। परे तु—'इमममुं वोद्गीथमुपासीते'ति पाठमाश्रित्य प्राणादित्ययोः समत्वात् प्राणं वा आदित्यं वा उपासीतेति विकल्पेन व्याचक्षते। यद्यपि पाठे न शङ्कावसरः, श्रौतो ह्ययं परिगृहीतः, श्रुतिस्तु यथाश्रवणं मान्यैव। अथापि 'एवं हैव स विध्वंसते य एवंविदि पापं कामयते' 'अपहन्ता ह वै भयस्य तमसो भवति य एवं वेद' इति श्रूयमाणं फलभेदं कथं ते सङ्गमयन्त्येतावद्विचार्यम्। विकल्पे हि फलैक्यमपेक्ष्यते। स्यादप्येवम्। कर्माङ्गभूतोपासनसामान्यात् कर्मणो वीर्यवत्तरत्वरूपं फलं त्वेकम्। तत्र तत्र श्रूयमाणः फलभेदस्त्वधिक इति। इत्यध्यात्ममित्यन्तेन प्राणात्मना एकमुपासनं अथाधिदैवतमित्यनेन आदित्यात्मनोपासनमपरं निरूप्य प्राणादित्योभयात्मनोपासनमिदं तृतीयं निरूपयति—समान उ एवायमित्यादिनेति कश्चित् ॥ २॥

अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानः। अथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः

सा वाक् । तस्मादप्राणन्ननपानन्वाचमभिव्या-
हरति ॥३॥ या वाक्सर्क्तस्मादप्राणन्ननपानन्नृ-
चमभिव्याहरति यर्क्तत्साम तस्मादप्राणन्नन-
पानन्साम गायति यत्साम स उद्गीथस्तस्माद्-
प्राणन्ननपानन्नुद्गायति ॥४॥ अतो यान्यन्यानि
वीर्यवन्ति कर्माणि यथाऽग्नेर्मन्थनमाजेः सरणं
दृढस्य धनुष आयमनमप्राणन्ननपानꣳस्तानि
करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥५॥

प्रकारान्तरेणाध्यात्ममुपासनमुच्यते—अथेति । व्यानमेवोद्गीथमुपासीत—उद्गीथं व्यानात्मनोपासीतेत्यर्थः । कोऽसौ व्यानः ? उच्यते—यद्वै प्राणिति स प्राणः । यदपानिति सोऽपानः । अथ यः प्राणापानयोः सन्धिः स व्यानः । प्राणितीति यत्—प्राणनव्यापारं मुखनासिकाभ्यां वायोर्निःसरणलक्षणं करोतीति यत् स वै प्राणः—स एव प्राणः । मुखनासिकाभ्यां वायोरन्तराकर्षणलक्षणमपानव्यापारं करोतीति यत् स एवापानः । यद्यपि निःसारणमाकर्षणं च प्रयत्नविशेषः पुरुषधर्मः, न वायोर्धर्मः, तथाऽपि तत्प्रयोज्यो वायोर्वृत्तिविशेषस्तेन लक्ष्यत इति न क्षतिः । उक्तलक्षणयोः प्राणापानाख्ययोः शरीरान्तस्थवायुवृत्तिविशेषयोर्यः सन्धिः—तयोरन्तराले भवस्ताभ्यां विरहितो वृत्तिविशेषो वायोः स व्यानः । ननु को विशेषस्तस्मिन् यत्प्राणमपानं चातीत्यैतदात्मनोपासनं विधीयते इत्याशङ्कां परिह-

रन् यानि वाग्व्याहरणादीनि वीर्यवन्ति कर्माणि तान्यनेनैव वृत्तिविशेषेण भवन्तीत्याह—यो व्यानः सा वागित्यादिना तानि करोतीत्यन्तेन । यो व्यानः सा वाक्, कतिपयपदसमुदायरूपा हि वाक् व्यान एव । कस्मात् ? यस्मादप्राणन्ननपानन् वाचमभिव्याहरति तस्मात्, यदा हि पञ्चषपदानि व्याहरेत्पुरुषस्तदा हि निरुध्य प्राणापानौ तयोरन्तरालरूपं व्यानमवलम्ब्य व्याहरति, तस्मात्तद्बलनिर्वर्त्यत्वेन व्यान एव वाक् । एतेन वाचो व्याहरणरूपवीर्यवत्कर्माधायकत्वरूपो विशेषो व्याने कीर्तितः ॥३॥ अथ वाग्विशेषाभिव्याहरणरूपवीर्यवत्कर्माधायकत्वरूपा विशेषाः कीर्त्यन्ते—वागित्यादिना । या वाक् सा ऋक्—वाग्विशेषो हि ऋक् । व्यानत्वेन निरूपिताया वाचो विशेषो ऋगित्युक्त्या ऋचो व्यानत्वं प्रतिज्ञातं भवति । तस्यास्तथात्वमुपपाद्यते—तस्मादिति । यस्मादप्राणन्ननपानन्नृचमभिव्याहरति तस्मादृचो व्यानरूपवाग्विशेषत्वमुपपद्यते इति भावः । एवमेवोद्गायतीत्यन्तं नेयम् ॥ ४ ॥ अतो—वागाद्यभिव्याहरणादिरूपात् कर्मणो यान्यन्यानि कर्माणि वीर्यवन्ति अग्नेर्मन्थनं, आजेः—मर्यादायाः सरणं—धावनं, दृढधनुषः समाकर्षणं इत्यादीनि, तान्यप्राणन्ननपानन्नेव करोति । निगमयति—एतस्येति । एतस्य—वीर्यवत्कर्माधायकत्वरूपविशेषस्य हेतोः, वीर्यवत्कर्माधायकत्वादिति यावत्, उद्गीथं व्यानमेवोपासीत—व्यानदृष्ट्योपासीत ॥५॥

**अथ खलूद्गीथाक्षराण्युपासीतोद्गीथ इति प्राण एवोत्प्राणेन ह्युत्तिष्ठति वाग्गीर्वाचो ह गिर इ-**

त्याचक्षतेऽन्नं थमन्ने हीदꣳ सर्वꣳ स्थितम् ॥६॥

उद्गीथ इत्यस्मिन्पदे यान्यक्षराणि तेषामुपासनं विधीयते—अथेत्यादिना । यद्यपि उद्गीथोपासननिरूपणसन्दर्भे अक्षरोपासननिरूपणमनुचितम् । अथाप्युद्गीथस्यैव नामाक्षराणीति नाम्न्युपासिते अर्थं उपासित एव भवतीति नानौचित्यम् । उत् गी थ इतीमान्युद्गीथस्य नाम्नोऽक्षराण्युपासीत । तत्र प्राण एवोत्—प्रथमं श्रूयमाणं उदित्यक्षरं प्राणात्मनोपासीतेत्यर्थः । तत्र निमित्तमाह—प्राणेन ह्युत्तिष्ठतीति । सर्वमेव प्राणिजातं प्राणबलेन ह्युत्तिष्ठति, असति तु तस्मिन्नधः पतति नाम, तत् प्राण एवोत्थितिः, उत्थितिरेव च उत्, तथा च प्राण एवोत् । अयमाशयः—उत्थितेः प्राणसाध्यत्वेन तस्याश्च उदित्युपसर्गविशेषितधातुविशेषगम्यत्वात् साध्यसाधनयोर्बोध्यबोधकयोश्चाभेदाध्यवसायेन तत्र तद्दृष्टिविधानमिति । वाग्गीः—अयं गीशब्दो गीत्यस्याक्षरस्य निर्देशः । यद्द्वितीयमक्षरं गीति तत् वाक्, वाक्त्वेन तदुपासनं कार्यमिति यावत् । तत्र निमित्तमाह—वाचो ह गिर इत्याचक्षते । वाच इति द्वितीयान्तम् । वाच्यवाचकयोरभेदभावना युक्तेति भावः । यद्यपि गीरिति रेफान्तशब्दो वाचि, इह नाम्नि तु न तदन्तम्, अथापि ईषत् विकृतमनन्यत् । अन्नं थम्—यत्तृतीयमक्षरं थमिति तदेतदन्नम् । अन्नत्वेनोपासीतेति यावत् । तत्र निमित्तमाह—अन्ने हीदं सर्वं स्थितमिति । यस्मादिदं दृश्यमानं सर्वं प्राणिजातमन्ने स्थितं तस्मात् स्थानमन्नं स्थितिरेव वान्नम्, तदभिधायिपदं च थकारेणावयवेनावयवि । तदेवमन्नेन सम्बन्धात् थकारेऽन्नदृष्टिः कार्येति भावः ॥६॥

द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवोद्वायुर्गीरग्निस्थᳪ सामवेद एवोद्यजुर्वेदो गीः ऋग्वेदस्थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥७॥

अध्यात्ममुपासनमुक्तम् । प्राणो वागन्नमित्ययं हि समुदायः शरीरे सम्बध्यते । अथ अधिलोकमधिदैवमधिवेदं चाह । द्यौरेवोत्—योऽसौ द्यौर्नाम लोकः स एवोत्, स ह्युत्क्रम्य वर्तते सुखेनेतरान्मानुषादीन्, उच्चैःस्थितेर्वा । अन्तरिक्षं गीः—शब्दो ह्यन्तरिक्षस्यैव धर्मः, गिरणाद्वा लोकानाम् । द्युपृथिव्योर्मध्यस्थितेर्वा । उक्तं[1] द्यौरेवोदिति वक्ष्यति च पृथिवी थमिति । पृथिवी थं, पृथिव्यां हीदं सर्वं स्थितम् । आदित्य एवोत्—स ह्युदेति, ऊर्ध्वमेवैति सर्वदा, न केवलमुदेति उद्गमयति च स्वमण्डलं प्रविष्टान् । वायुर्गीः—वायुरेव गीः, तेनैव हि सा, गिरो हि वर्णरूपाः, वर्णाश्च वायुनैव निमित्तेन, दण्डाभिहतात् भेर्यादेरिव शरीरान्तःस्थवायुविशेषाभिहतात् कण्ठताल्वादेर्हि तेषामाविर्भावः । अग्न्यादीनां गिरणाद्वा वायुर्गीः । अग्निस्थं—अग्निर्हि प्रजानामवस्थानम्, स्मर्यते हि—'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इति । सामवेद एवोत्—वेदेषु साम ह्युत्कर्षेण गण्यते । 'वेदानां सामवेदोऽस्मि'

---

१ ननु द्युपृथिव्योर्मध्ये स्थितिरन्तरिक्षस्यैव न गीत्यक्षरस्येति शङ्कायामाह—उक्तमिति ।

इति । 'सामवेदो वै स्वर्गलोक' इति स्वर्गलोकत्वेन श्रवणाद्वा । यजुर्वेदो गीः, मध्यतः परिकलनात्साम्यात् । स्वाहास्वधादिना दत्तस्य हविषो गिरणाद्वा । अथ फलमुच्यते—दुग्ध इत्यादिना । य एतानि नामाक्षराणि एवमुक्तेन प्रकारेण विद्वान् जानन्नुपास्ते, अस्मै वाक् ऋगादिरूपा दोहं दुग्धे—फलं जनयति । किं तत् ?, यो वाचो दोहः स्यात् स्वयमन्नवानन्नादनशक्तश्च भवति । इतिशब्दः प्रक्रान्तोपासनप्रकारपरिसमाप्तौ भवति ॥७॥

अथ खल्वाशीःसमृद्धिरुपसरणानीत्युपासीत ।
येन साम्ना स्तोष्यन्स्यात्तत्सामोपधावेत् ॥८॥
यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन्स्यात्तां देवतामुपधावेत् ॥९॥ येन छन्दसा स्तोष्यन्स्यात्तच्छन्द उपधावेद्येन स्तोमेन स्तोष्यमाणः स्यात्तꣳ स्तोममुपधावेत् ॥१०॥
यां दिशमभिष्टोष्यन्स्यात्तां दिशमुपधावेत् ॥११॥
आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृद्ध्येत यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥१२॥

अथ प्रासङ्गिकम्, उद्गीथोपासनं हि प्रकृतम् । आधास्यते चानुपदं प्रकृत एव पदं 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति । इदं तु मध्ये

सामादीनामुपासनं सर्वकाम्योपासनशेषभूतं विधीयते । फलं च 'यदस्मै स कामः समृध्येते'ति सामान्यतः श्रूयते । अथ खलु-उद्गीथनामाक्षरोपासनानन्तरं मध्ये[1] किञ्चिदिदमुच्यते । कुतः ? आशीः-समृद्धिरुपसरणानीति, उपसरणानि-उपासनानि, आशिषः कामस्य समृद्धिः सम्पादकानीति हेतोः । उपासीत-सामान्यतो विधिरयं वक्ष्यमाणाभिसन्ध्या[2] । तत्रैकैकं क्रमशो विदधाति-येन साम्ना स्तोष्यन्स्यादयमुद्गाता तत्सामोपधावेत्-उपासीतेति यावत् । तत्साम यस्यामृचि सम्बद्धं तामृचमुपधावेत् । यदार्षेयं यदृषिकं तत्साम तमृषिमुपधावेत् । तेन साम्ना यां देवतामभिष्टोष्यन्स्यात् तां देवतामुपधावेत् । येन छन्दसा गायत्र्या स्तोष्यन्स्यात् तच्छन्द उपधावेत् । येन स्तोमेन स्तोष्यमाणः स्यात् तं स्तोममुपधावेत् । स्तोमः ऋक्संख्याविशेषः । शानचा स्तोमफलं न परस्येति व्यज्यते । यां दिशमभि-अभिव्याप्य स्तोष्यन्स्यात् तां दिशमुपधावेत् । अन्ततः सामाद्युपासनानन्तरम्, आत्मानमुपसरेत्-चिन्तयेत् उपसृत्यैवमात्मानं च सामादिभिः सहायमुद्गाता काममभिलषितं ध्यायन्-चिन्तयन्स्तुवीताप्रमत्तः-स्वरादिष्ववहितः । असौ एवं स्तुवते यत्कामः स्तुवीत स कामः समृध्येत-सम्पद्येत, कदा ? अभ्याशः-अचिरेण । वीप्सा आदरे अध्यायसमाप्तौ वा ॥१२॥

इति प्रथमाध्याये तृतीयः खण्डः ।

---

१ शेषपूरणेन व्याचष्टे-मध्ये किञ्चिदिदमुच्यते इति । २ वक्ष्यमाणोपास्यभेदान् मनसि निधायेति यावत् ।

ओमित्येतदक्षरमुद्गीथमुपासीतोमिति
ह्युद्गायति तस्योपव्याख्यानम् ॥१॥

गतः प्रासङ्गिको विचारः, इतः प्रकृत एव प्रवर्तत इति ज्ञापयन्नाह । व्याख्यातमेतत् ॥१॥

देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशꣳस्ते छन्दोभिरच्छादयन्यदेभिरच्छादयꣳस्तच्छन्दसां छन्दस्त्वम् ॥२॥

प्रणवोपासनस्य फलविशेष आख्यायिकामुखेन निरूप्यते । देवा मृत्योर्बिभ्यतः—मरणतो भीताः त्रयीं विद्यां प्राविशन् । त्रय्येव विद्या तत्र प्रवेशस्तद्विहितकर्मद्वारा । वैदिकं कर्मारेभिरे इति यावत् । प्रविश्य तत्र ते छन्दोभिर्मन्त्रैः स्वात्मानमच्छादयन्—आवृतवन्तः । छन्दोभिस्तिरोहितानस्मान् मृत्युर्न पश्येदिति । अमरणमाकाङ्क्षमाणाः कर्मसु प्रवृत्ता मन्त्रजपादिपरा अभूवन्निति यावत् । मन्त्रेषु छन्दःशब्दप्रवृत्तौ निमित्तमाह—छन्दसां छन्दस्त्वमिति । छन्दसां मन्त्राणां छन्दस्त्वं छन्दशब्दप्रवृत्तौ निमित्तम् । तत्, यदाच्छादकतया परिग्रहणम् ॥२॥

तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि ते नु वित्त्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥३॥

यथा क्वचिदुदकाशये उपर्युपर्येव सञ्चरन्तं मत्स्यं धीवरस्तद्ग्रहणप्रतीक्षः परिपश्येत् । तथा ऋचि यजुषि साम्नि च प्रविष्टाँस्तान्मृत्युरुपायैर्गृहीतुमेव परितोऽपश्यत् । कर्मफलस्य क्षयित्वात् । न कर्ममात्रेण मृत्युतरणमित्युक्तं भवति । ते तद्विज्वा ऋचः साम्नो यजुषः ऊर्ध्वाः ऋगादिभ्य उपरि भूत्वा, वैदिकं कर्ममात्रमतिलङ्घ्येति यावत्, स्वरमेव प्राविशन्–प्रणवं प्राविशन् । व्युत्थाय केवलान्मृत्युग्रस्तात्कर्मणः स्वरशब्दवाच्यं प्रणवमुपासितुं प्रवृत्ता इति यावत् ॥३॥

यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवꣳ सामैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया अभवन् ॥४॥

प्रणवे स्वरशब्दप्रवृत्तौ निमित्तमाह–यदा वेति । यदा कश्चित्पुरुषः ऋचमाप्नोत्यध्ययनद्वारा, अधीत इति यावत् । तदा आदौ ओमित्येव अतिस्वरति–अतिशयेन स्वरति–शब्दं करोति । एवं साम, एवं यजुः । साम यदाऽऽप्नोति तदाप्योमित्येवातिस्वरति यदा यजुराप्नोति तदाप्योमित्येवातिस्वरतीत्यर्थः । तस्माद्यदेतदक्षरमोमिति एष उ स्वरः । उकारोऽवधारणा । एतदक्षरं अमृतम्–मरणनिवर्तकम्, अतएवाभयम् । तदक्षरमुपासनद्वारा प्रविश्य देवा अमृता अभया अभवन् ॥४॥

स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरꣳ स्वरममृतमभयं प्रविशति तत्प्रवि-

इय यदमृता देवास्तदमृतो भवति ॥५॥

य एतदक्षरमेवममृतमभयमिति विद्वान्–जानन्सन् प्रणौति–स्तौति, उपास्त इति यावत्। स पुरुषः अमृतमभयं स्वरं प्रविशति–उपायतया आश्रयतीति यावत्। यथा देवा अमृता अभूवन् तथाऽयममृतो भवति ॥५॥

इति प्रथमाध्याये चतुर्थः खण्डः।

---

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेति ॥१॥ एतमु एवाहमभ्यागासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीꣳस्त्वं पर्यावर्तयाद्बहवो वै ते भविष्यन्तीत्यधिदैवतम् ॥२॥ अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेति ॥३॥ एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणाꣳस्त्वं भूमानमभिगायताद्बहवो वै मे भविष्यन्तीति ॥४॥

उद्गीथावयवस्य प्रणवस्याध्यात्मं प्राणदृष्ट्या अधिदैवमादित्यदृष्ट्या चोपासनमुक्तं प्राक् । अधुना तस्य प्रणवसामान्येनैक्यमाकलय्य[1] अध्यात्मं केवलप्राणदृष्ट्या अधिदैवं च केवलादित्यदृष्ट्योपासने फलन्यूनतां ज्ञापयन् गुणविशेषविशिष्टतद्दृष्ट्या तत्र तदुपासनमधिकफलकं विदधाति—अथ खल्वित्यादिना । अथेत्युपासनान्तरोपदेशारम्भे । य उद्गीथश्छान्दोग्यः—उद्गीथावयवत्वादुद्गीथशब्दवाच्यो योऽयं छन्दोगानां प्रणवः स एव बह्वृचानां[2] प्रणवः, यः प्रणवो बह्वृचानां स एव छन्दोगानामुद्गीथः । अनेनोद्गात्रा प्रयुज्यमानस्योद्गीथावयवस्य प्रणवस्य होत्रा प्रयुज्यमानेन शाखान्तरीयप्रणवेनैक्यदृष्टिरुपदिष्टा भवति । इतिशब्द ऐक्यदृष्टिप्रकारपरः । एवमैक्यदृष्टिमुपदिश्य तस्मिन्नुद्गीथे अधिदैवमादित्यदृष्टिं सनिमित्तमनुवदति—असौ वा आदित्यः—असावुद्गीथः आदित्यः । कुतः ? उद्गीथ एष प्रणवः—एष उद्गीथः प्रणवो हि । किं ततः ? ओमिति ह्येष स्वरन्नेति—ओमित्यानुपूर्व्यैव कण्ठतो निर्गच्छन्नेति[3] सर्वेषां ग्रहणपथे । एवमेवैष आदित्य ओमित्यानुपूर्वीकमनुज्ञाक्षरं अन्धकाराद्यपनयनेन स्वरन्[4] उच्चारयन्नुदेति । तस्मादेष आदित्यः प्रणव एव ततश्चायमुद्गीथ इति । एष उद्गीथः प्रणवः असावादित्य इति वा योजना । प्रणवादनन्य एष उद्गीथः असावादित्य इत्यर्थः । कर्मसु सन्निहितत्वादेष इत्युद्गीथविशेषणम् ।

---

१ शाखान्तरीयप्रणवेनेति यावत् । २ ऋक्शाखीयानाम् । ३ स्वरन्नित्यस्य विवरणं निर्गच्छन्निति । ४ सर्वे एव प्राणिनो निरुद्धा अन्धकारेण चिरमुदितमात्रे त्वादित्ये सपद्यनुज्ञाता इव स्वामिना स्वस्वकर्मसु प्रवर्तन्ते । ततोऽयमनुज्ञाक्षरमुच्चारयन्निवोदेतीत्यभिसन्ध्या ओमिति स्वरन्नुदेतीत्युक्तिरिति भावः ।

देशविप्रकर्षादसावित्यादित्ये । अस्यां योजनायां आदित्यदृष्टेरुद्गीथे प्रणवैक्यभावनपूर्वकत्वनियमस्य स्फुटप्रतिपत्तिर्विशेषः ॥१॥

एतमु एवाहमभ्यगासिषम्—एतमादित्यमेवाहं गीतवान् । एवकारो वक्ष्यमाणरश्मिबाहुल्यरूपगुणविशेषयोगव्यवच्छेदः । यद्यप्यादित्यस्य न गानकर्मताप्रसङ्गः, अथाप्युद्गीयमाने उद्गीथे आदित्याभेदभावनया तथा निर्देशः । केवलादित्यदृष्ट्या उद्गीथं ध्यातवानस्मि, नतु रश्मिबाहुल्यगुणविशेषविशिष्टादित्यदृष्ट्येति भावः । तस्मान्मम त्वमेक एवासि पुत्रः । त्वमेवं मा कुरु । किन्तु रश्मीन् पर्यावर्तयात् । रश्मयो ह्यस्य बहवः, तान् पर्यावर्तय । बहुरश्मिविशिष्टादित्यभावनां कुर्विति यावत् । पर्यावर्तयादिति छान्दसः प्रयोगः । बहवो वै तव भविष्यन्ति पुत्रा इति ह कौषीतकिः पुत्रमात्मन उवाच । इत्यधिदैवतमुपासनमुक्तम् ॥२॥

अथाध्यात्ममिति । उपदिश्यत इति शेषः । उद्गीथमुपासीत । किमिति ? य एवायं मुख्यः प्राणस्तं तत्त्वेनोपासीतेत्यर्थः । कुतः ? एष प्राणो हि ओमिति स्वरन्नेति, वागादीनामिन्द्रियाणां स्वस्वव्यापारे अनुज्ञां प्रयच्छन्निवायमुदेति । प्रणवस्वरूपस्योद्गीथस्येव प्राणस्याप्यनुज्ञाप्रापकत्वसाम्यात्तस्मिंस्तद्दृष्टिरुचितेति भावः ॥३॥

एतं प्राणमेवाहमभ्यगासिषम् । एवकारो वागादिव्यवच्छेदपरः । वागादयो हि मुख्यप्राणस्यैव महिमानः । यस्मादवधूय तान्महिम्नः केवलप्राणदृष्ट्योद्गीथोपासनं कृतवानत एव मम त्वमेक एवासि पुत्रः । त्वमेवं मा कुरु । किन्तु भूमानं मुख्यप्राण-

स्यैव बाहुल्यरूपान्, धर्मधर्मिणोरभेदोपचारः, प्राणान् वागादीन् । मुख्यः प्राणो हि स्ववृत्तिविशेषेण वागादिषु सन्निधाय व्यापारयति । तत् वागादयस्तस्यैव रूपान्तराणीव । अभिगायतात्—वागादिविशिष्टमुख्यप्राणदृष्ट्योद्गीथोपासनं कुर्विति यावत् । बहवो वै मे पुत्रा भविष्यन्तीत्यभिसन्धाय, अभिगायतादिति पूर्वेणान्वयः । इति कौषीतकिः पुत्रमुवाच ॥४॥

अथ खलु य उद्गीथः स प्रणवो यः प्रण-
वः स उद्गीथ इति होतृषदनाद्धैवापि दुरु-
द्गीथमनुसमाहरतीत्यनुसमाहरतीति ॥५॥

उद्गीथप्रणवयोरैक्यानुसन्धानस्य फलविशेष उच्यते—अथेति । उद्गाता स्वस्य दुरुद्गीथं—दुष्टमुद्गीथं, प्रमादत उद्गाने प्रसक्तदोषमिति यावत्, अनुसमाहरति—समादधाति । अदुष्टं करोतीति यावत् । कस्माद्धेतोः ? होतृषदनात् होतुः सदनात्—स्थानात् । अदुष्टादित्यर्थसिद्धम् । स्थानं चात्र होतुः कर्मैव । प्रसक्तोऽप्युद्गानदोषः होतुः प्रणवप्रयोगरूपात् कर्मणः सम्यक् निष्पन्नात् समाधीयत इति भावः । कथमन्यस्य कर्मणा अन्यस्य कर्मणि दोषपरिहारः ? य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यैक्यविभावनाद्धेतोरिति भावः ॥५॥

इति प्रथमाध्याये पञ्चमः खण्डः ।

---

इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढꣳसाम
तस्मादृच्यध्यूढꣳ साम गीयते इयमेव साऽग्निर-

मस्तत्साम ॥१॥ अन्तरिक्षमेवर्ग्वायुः साम तदे-
तदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ सा-
म गीयतेऽन्तरिक्षमेव सा वायुरमस्तत्साम ॥२॥
द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यू-
ढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते
द्यौरेव साऽऽदित्योऽमस्तत्साम ॥३॥ नक्षत्राण्ये-
वर्क् चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढꣳ
साम तस्मादृच्यध्यूढꣳ साम गीयते नक्ष-
त्राण्येव सा चन्द्रमा अमस्तत्साम ॥४॥

अथ मुखान्तरेण अधिदैवमध्यात्मं चोपासनं प्रस्तूयते । ऋगिय-मेव—पृथिव्येव । सामाग्निरेव । ऋचं पृथिवीत्वेन सामाग्नित्वेन भावयेदिति यावत् । कस्मादेतत् ?, पृथिव्यामग्निरिव एतस्यां ऋच्यध्यूढं हि तदेतत् साम, अध्यूढम्—उपरिस्थितम्, उपरिस्थितेः साम्यादेवं भावनमिति भावः । ननु पृथिव्यामग्निरध्यूढ इति तु सुप्रसिद्धम्, न तथा ऋचि सामेत्याशङ्कां प्रसिद्ध्या परिहरति—तस्मादृच्यध्यूढं साम गीयत इति । अधुनाऽपि साम ऋच्यध्यूढं हि गीयते । योऽयं सामेति वाचकः शब्दस्तदवयवो यः सेत्यंशः सा पृथिवी । योऽयममेत्यपरोंऽशः सोऽग्निः । एवमन्तरिक्षे वायुरिव दिवि सूर्य इव ऋच्यध्यूढं सामेत्यन्तरिक्षमेवर्ग्वायुः साम द्यौरेवर्गादित्यः सामेति दृष्टि-

विशेषो विधीयते । सामशब्दावयवेऽप्ययमेव दृष्टिविशेषो विधीयते—अन्तरिक्षमेव सेति । नक्षत्राण्येवेति–यद्यपि पृथिव्यादावग्न्यादेरिव न नक्षत्राणामुपरि चन्द्रमसः स्थितिः, अथापि आधिपत्येनोपरि स्थितिरित्यौपचारिकमध्यूढभावमाश्रित्य नक्षत्रचन्द्रमसो ऋक्सामदृष्टिविधानम् । अन्यत्पूर्ववत् ॥१-४॥

अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳसाम गीयते ॥५॥

यदेतत्सर्वैः सपदि गृह्यते शुक्लमादित्यस्य सैव भाः—दीप्तिः ऋक् । अथ समाहितदृष्टिभिः यत्परः कृष्णं—अत्यन्तनीलं तत्साम । परः कृष्णमिति लिङ्गव्यत्ययश्छान्दसः, पर इति सान्तं वा ॥५॥

अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्सामाथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः ॥६॥

अथेत्यादि सामेत्यन्तं पूर्ववत्सामशब्दावयवयोर्दृष्टिविशेषविधायकम् । एवमधिदैवमुपासनान्यङ्गभूतान्यभिधाय प्रधानोपासनमाह—अथ य एष इति । य एषोऽन्तरादित्ये–आदित्यमण्डलमध्ये हिरण्मयः–कमनीय उज्ज्वलो वा पुरुषो दृश्यते योगिभिः । हिरण्य-

श्मश्रुः हिरण्यकेशः—श्मश्रवः केशाश्च रमणीया यस्य । आप्रणखात्सर्व एव सुवर्णः—आनखाग्रं सर्वतो देदीप्यमानः ॥६॥

तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥७॥

कप्यासं पुण्डरीकं यथा एवं तस्याक्षिणी, पुण्डरीकस्य शोभातिशयसम्पादकं कप्यासमिति विशेषणम् । कं जलं पिबतीति कपिः सूर्यः, तेन अस्यते—क्षिप्यते विकास्यते इति कप्यासं, तथा—कं जलं पिबतीति कपिः—नालं तत्रास्ते इति कप्यासं, सनालमिति यावत्, नालतो विभक्ते पुण्डरीके लेशतो म्लानेः प्रसक्तिरस्ति सा व्यावर्त्यतेऽनेन । अपि च—असधातुरपिपूर्वकः, 'वृष्टिवागुरिरल्लोपमवाप्योरुपसर्गयो'रिति वचनादकारलोपः । के—जलेऽप्यास्ते इति कप्यासं सलिले वर्तमानम् । सलिलादुद्धृते लेशतो म्लानिसम्भावनया सलिलस्थमिति विशेषणम् । तदिदं सर्वमभिप्रेत्य भगवद्रामानुजाचार्यैर्वेदार्थसङ्ग्रहे 'गम्भीराम्भःसमुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षण' इत्यभिहितम् । तस्योदिति नाम, कुतः? उच्यते—स एष सर्वेभ्यः पाप्मभ्यः उदितो हि—उद्गतो हि, पापैरस्पृष्ट इति यावत् । यः पुरुषमेनं एवं—उक्तेन प्रकारेण, रूपनामगुणविशेषेणेत्येतत्, वेद, उदेति ह वै सर्वेभ्यः पाप्मभ्यः—स वेत्ता पाप्मतो मुक्तो भवतीति यावत् ॥७॥

तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वे-

**वोद्गातैतस्य हि गाता स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥८॥**

तस्य–उक्तरूपनामगुणविशेषविशिष्टस्य पुरुषविशेषस्य ऋक् च साम च गेष्णौ–पृथिव्यादितया द्रष्टव्यत्वेनोक्ता ऋक् अग्न्यादितया द्रष्टव्यत्वेनोक्तं साम च गेष्णौ–गायकौ, एतद्गुणगानाय प्रवृत्ते इति यावत् । यस्मादुन्नामकस्यास्य गानरूपं साम, अत एव उद्गीथ इति सामभक्त्यवयवे प्रयोगः । तस्मात्त्वेव उद्गाताऽप्यस्यैवान्नामकस्य गाता उद्गातेति व्यवह्रियते । स एष उन्नामा ये चामुष्मात्–आदित्यात् पराञ्चो लोकाः–ऊर्ध्ववर्तिनो लोकास्तेषां चेष्टे–ईशिता भवति । न केवलं तेषामीष्टे अपि तु देवकामानां च–देवानां ये कामा भोग्यभोगोपकरणादयस्तेषां सर्वेषामपीत्यर्थः । इत्यधिदैवतम्–देवतास्वपासनमुक्तम् ॥८॥

इति प्रथमाध्याये षष्ठः खण्डः ।

---

**अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदेतस्यामृच्यध्यूढꣳ साम गीयते वागेव सा प्राणोऽमस्तत्साम ॥१॥**

अथाध्यात्मं–शरीरे, उपासनमुच्यते इति शेषः । वागेव ऋक् प्राणः साम–ऋचि वाग्दृष्टिः साम्नि प्राणदृष्टिः कार्या, साध्यसाधनभावान्निमित्तात्; उपरि स्थितेरेव वा सामान्यात्, वाच उपरि प्राणस्य नासिकायां वृत्तिविशेषदर्शनात् । अन्यत्पूर्ववत् ॥१॥

चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते। चक्षुरेव साऽऽत्माऽमस्तत्साम॥२॥ श्रोत्रमेवर्क् मनः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते। श्रोत्रमेव सा मनोऽमस्तत्साम॥३॥ अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते। अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्साम॥४॥

आत्मा—छायात्मा, अन्यत् स्पष्टम्॥२–४॥

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम॥५॥

एवमध्यात्मं ऋक्साम्नोर्वाक्प्राणदृष्टिं विधायाध्यात्मं तयोः प्रधानदृष्टिर्विधीयते—अथेति। य एषोऽन्तरक्षिणि पुरुषो योगिभिर्दृश्यते सैव ऋक्, सामानाधिकरण्यमिह कार्यकारणभावनिबन्धनम्। विधेय-

प्राधान्यात्सैवेति स्त्रीलिङ्गनिर्देशः । नात्रातस्मिंस्तद्दृष्टिर्विधीयते, किन्तु तन्निःश्वसितमृगादिकमिति तद्विभूतिज्ञापने तात्पर्यम् । ऋक्—पादबद्धाक्षरात्मिका प्रसिद्धा, तत्साम तदुक्थम्—उक्थशब्दसाहचर्यात्सामशब्दः शस्त्रपरः, प्रगीतमन्त्रसाध्यं स्तोत्रं शस्त्रं अप्रगीतमन्त्रसाध्यं स्तोत्रं उक्थमिति भिदा । तद्यजुः—स्वाहास्वधावषडादि सर्वं वाङ्मयम् । किं बहुना—तत् ब्रह्म—समग्रो वेदः स एव । अथ रूपादिकमतिदिश्यते—तस्यैतस्येत्यादिना । स्थानभेदात्पुरुषभेदाशङ्का प्रसजेत्, तद्व्यावृत्तयेऽयमतिदेशः । एतेन स्थानभेदादुपासनभेदशङ्का परास्ता । एकस्यैव परमात्मनो रूपतो नामतश्चैकस्य स्थानद्वयसम्बन्धवत्तयोपासनस्य विवक्षितत्वात् ॥५॥

**स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः ॥६॥**

स एषः—अक्ष्याश्रयः पुरुषः परमात्मा, एतस्मात्—स्वावासस्थानात् येऽर्वाञ्चो लोकाः—पृथिव्यादयो लोकाः ये च मनुष्यकामास्तेषामीष्टे । तत्—तस्मात् ईश्वरत्वात् य इमे लोके वीणायां गायन्ति सर्व एव ते एतमेव गायन्ति । अयमाशयः—येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि तं परमात्मानं यजन्त्यविधिपूर्वकम् ॥ एवमेवेह यं कश्चिद्गायन्तो वीणया जनाः । गीयते त्वयमेवैकः सर्वेषामीश्वरो ह्यसौ ॥ तस्माच्चे धनसनयः—यस्मादीश्वरो गीतस्तस्मादेव ते धनस्य

सनिर्लोभो येषां तथाविधा भवन्ति । ईश्वरादन्यः कः प्रसन्नः समृद्धं धनं प्रापयितुं समर्थः । ईश्वरत्वमन्यत्र ह्येतदुपजीव्यम् ॥६॥

अथ य एतदेवं विद्वान्साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्ताꣳश्चाप्नोति देवकामांश्च ॥७॥ अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताꣳश्चाप्नोति मनुष्यकामाꣳश्च तस्मादुहैवंविदुद्गाता ब्रूयात् ॥८॥ कं ते काममागायानीत्येष ह्येव कामगानस्येष्टे य एवं विद्वान्साम गायति साम गायति ॥९॥

य एवं विद्वान्–अधिदैवमध्यात्मं चोक्तेन प्रकारेण जानन् एतत्सामोद्गीथरूपं गायति, स आदित्यचाक्षुषौ पुरुषावुभावपि गायति । यदयं वेत्ति उन्नामश्चक्षुरादित्यान्तःस्थस्य परमात्मनो गानरूपत्वादेव ह्यस्योद्गीथत्वमिति, अतएवायं गानकर्मीभूतेनामुना–आदित्यान्तर्वर्तिनैव परमात्मना ये चामुष्मादादित्यात् पराञ्चः–ऊर्ध्वा लोकास्तानाप्नोति देवानां कामांश्च । अथानेनैव–चक्षुरन्तर्वर्तिना परमात्मना एतस्माच्चक्षुषोऽर्वाञ्चः–अधस्तना लोका मानुषाः तानाप्नोति मनुष्यकामांश्च । तस्मात् ईदृशशक्तियुक्तत्वादेवंविदुद्गाता यजमानं प्रति ब्रूयात् । किमिति ब्रूयात् ? उच्यते, कं ते गानमागायानीति—हे यजमान ! ते कं काममभिलषितमधिकृत्याद्याहमागायानीति । कुतोऽ-

स्यैतत्सामर्थ्यं ? उच्यते, य एवमुक्तेन प्रकारेण विद्वानेतत्साम गायति स हि यजमानकामस्य सम्पादने ईष्टे—समर्थो भवति । साम गायति साम गायतीति द्विरुक्तिरुपासनसमाप्तौ ॥७-९॥

इति प्रथमाध्याये सप्तमः खण्डः ।

---

त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति ॥१॥

प्रकारान्तरेणोद्गीथोपासनं वक्तुमुपक्रमते । आख्यायिका सुखप्रतिपत्तये । पुरा जातु उद्गीथे कुशलास्त्रयो बभूवुः । एकत्र सङ्गता बभूवुरिति शेषपूरणेन वाऽन्वयः । के ते त्रयः ? शालावत्यः शिलकः—शालावत्सुतो नाम्ना शिलकः, चैकितायनो दाल्भ्यः—दल्भ्यस्य गोत्रापत्यं चिकितायनस्यापत्यम्, प्रवाहणो जैवलिः—जिवलस्यापत्यं नाम्ना प्रवाहणः, इति त्रय इति सम्बन्धः । ते ह सङ्गता ऊचुः । किमिति ?, उद्गीथे हि वयं कुशलाः स्मः, उद्गीथे कथां वदाम इति—अवगतार्थद्रढिम्ने पक्षप्रतिपक्षोपन्यासरूपेण विचारमुद्गीथे कुर्म इति । हन्तेत्युत्साहे । वैशब्दो ह्यर्थः ॥१॥

तथेति ह समुपविविशुः स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचꣳ श्रोष्यामीति ॥२॥

---

१ किं त्रय एव कुशलाः पुरेति शङ्काव्यावृत्तये जात्विति, तत्रातृप्तेः शेषपूरणेन व्याख्यानम् ।

तथेति मिथ उररीकृत्य ते समुपविविशुः । तेषु स ह प्रवाहणो जैवलिरुवाचेतरौ । किमिति ? भगवन्तौ—पूजार्हौ भवन्तौ अग्रे वदताम्, ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामीति । अयं च प्रवाहणः क्षत्रिय इति गम्यते, भगवन्ताविति निर्देशात् ॥२॥

स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच ॥३॥

तयोर्ब्राह्मणयोरेकः स हि शिलकः शालावत्यश्चैकितायनं दाल्भ्यमपरमुवाच—त्वा पृच्छानीति । पृच्छामीत्यनुक्त्वा पृच्छानीत्युक्तेरनुज्ञाप्रतीक्षा व्यज्यते । अपर उवाच—पृच्छेति ॥३॥

का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाच ॥४॥

एवमनुमतः पप्रच्छ शिलकः—का साम्नो गतिरिति । सामशब्दः प्रकृते उद्गीथे वर्तते, सामान्यविशेषन्यायात् । तस्य गतिराश्रयः कः, इतिशब्दः प्रश्नप्रतिवचनविभागज्ञापकः । पृष्टो दाल्भ्यः स्वर इति होवाच । स्वरप्रधानत्वादुद्गीथस्य स्वर आश्रय इति भावः । स्वरस्य का गतिरिति पृष्टः प्राण इति होवाच । प्राणबलनिर्वर्त्यो हि स्वरः । प्राणस्य का गतिरिति पृष्टः अन्नमिति होवाच । अन्ने हि प्राणः प्रतिष्ठितः । शुष्यति वै प्राण ऋते अन्नात् । अन्नस्य का गतिरिति पृष्ट आप इति होवाच । अप्प्रभवं ह्यन्नम् ॥४॥

**अपां का गतिरित्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकꣳ सामाभिसंस्थापयामः स्वर्गसꣳस्तावꣳ हि सामेति ॥५॥**

अपां का गतिरिति पृष्टोऽसौ लोक इति होवाच। असौ लोकः द्युलोकः। वृष्टिर्ह्यमुष्माल्लोकात्। अमुष्य लोकस्य का गतिरिति पृष्टो न स्वर्गं लोकमतिनयेदिति होवाच। साम्नो गतिपरम्परां पर्यालोचयन् कोऽपि साम स्वर्गं लोकमतिक्रम्य तत उपरितनमाश्रयान्तरं न नयेत्। न कोऽपि साम्नः स्वर्गात्परमाश्रयान्तरं मन्यत इति भावः। साम स्वस्य गतिपरम्पराविचारकं पुरुषं स्वर्गमतीत्य न नयेत्। तत्रैव गतिरिति विचारविश्रान्तिर्भवेदिति भावः। अतो वयं सामाभि स्वर्गं लोकमेव मुख्याश्रयतया स्थापयामः। हि—यस्मात् साम स्वर्गसंस्तावं स्वर्ग इति संस्तावः स्तुतिर्यस्य तत्। 'स्वर्गो वै लोकः सामे'ति श्रुतेः ॥५॥

**तꣳह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य! साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥६॥**

साम तेऽप्रतिष्ठितं किल—तव पक्षे साम प्रतिष्ठारहितं किल भवति, यदस्थिरं स्वर्गं प्रतिष्ठां मन्यसे। न ह्यस्थिरं गत्यन्तरसापेक्ष्यं कस्यचित्प्रतिष्ठा भवेत्। तदेवमन्यथावादमपराधं तावकमसहमानो यद्यभिज्ञो यः कश्चित् एतर्हि—एतस्मिन्समये मूर्धा ते विपतिष्यतीति

ब्रूयात्, मूर्धा ते विपतेत्, मया तु स्नेहान्न तथोच्यत इति भावः । इति उवाचेति पूर्वेण सम्बन्धः ॥६॥

हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकꣳसामाभिसꣳस्थापयामः प्रतिष्ठासꣳस्तावꣳ हि सामेति ॥७॥

एवमभिहितो दाल्भ्य आत्मन उद्गीथेऽनभिज्ञतां विनिश्चित्याभिसन्धाय च शिलकस्य तदभिज्ञतां विनीत उवाच । किमिति ?, हन्ताहमेतद्भगवत्तो वेदानीति । यत्प्रतिष्ठं साम स्यात्तदेतद्भगवत्तो वेदानीति । विज्ञापितः शिलक उवाच—विद्धि मत्त इति । अनुमतो दाल्भ्यः पप्रच्छ—अमुष्य लोकस्य का गतिरिति । पृष्ट उवाच—अयं लोक इति । यागदानहोमादिभिरयं हि भूलोकः पुष्णाति द्युलोकम् । अस्य लोकस्य का गतिरिति पृष्टो दाल्भ्येन शिलक उवाच—न प्रतिष्ठां लोकमतिनयेदिति । प्रतिष्ठां लोकं—सर्वभूतानां प्रतिष्ठात्वेन प्रत्यक्षतोऽवगतमिमं भूलोकमतिक्रम्य न कश्चिदभिज्ञः सामविश्रान्तिस्थानं नयेत् । विवृतप्रायमितरत् । प्रतिष्ठासंस्तावं हि सामेति । प्रतिष्ठेति—अयं लोक इति संस्तावः स्तुतिर्यस्य तत् प्रतिष्ठासंस्तावम् । 'इयं वै रथन्तर'मिति श्रुतेः । इयं—पृथिवीत्यर्थः ॥७॥

तꣳ ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाच ॥८॥

अथ तमेवमुक्तवन्तं शिलकं तृतीयः प्रवाहणो जैवलिरुवाच । अन्तवद्वै किल ते शालावत्य साम, यत्प्रतिष्ठेति निगदितोऽयं लोकोऽन्तवान्प्रतिष्ठान्तरमपेक्षत एव । अन्यद्व्यक्तम् । भगवत्तो वेदानीति निर्देशात् क्षत्रियोऽपि ब्राह्मणेन विद्यां ततो जिघृक्षता पूज्य इति व्यज्यते ॥८॥

इति प्रथमाध्यायेऽष्टमः खण्डः ।

---

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् ॥१॥

अनुज्ञातः शिलकः पप्रच्छ—अस्य लोकस्य का गतिरिति । पृष्टः प्रवाहण उवाच—आकाश इति । आ समन्तात्काशत इत्यवयवार्थाश्रयणेनाकाश इह परमात्मा, रूढ्यर्थे हि वक्ष्यमाणं सर्वभूतोत्पादकत्वादि बाधकम् । आकाशस्यास्य साम्नो गतिविश्रान्तिभूमित्वे लिङ्गमाह—सर्वाणि ह वा इमानि भूतान्याकाशादेव समु-

त्पद्यन्ते आकाशं प्रत्यस्तं यन्तीति। भूतानि चराचराणि। ह वेति निर्देशात्प्रसिद्धिर्द्योत्यते। सा च 'सदेव सौम्येदमग्र आसी'-दित्यादिवाक्यतः परमात्मनि गम्यमाना। आकाशो ह्येवैभ्यो भूतेभ्यः सर्वेभ्यो ज्यायान्—महान्। यस्मादयमेव सर्वभूतानां प्रभवाप्ययस्थानं व्यापकश्च तस्मादयमेव सर्वस्य परायणम्—परा गतिः, यद्यस्मादन्य-त्कारणं व्यापकं वा स्यात्तदा परायणत्वमस्मिन्न घटेत, तत्तु नेत्यस्य परायणत्वं युक्तमिति भावः ॥१॥

**स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयसो ह लोकाञ्जयति य एत-देवं विद्वान्परोवरीयाꣳसमुद्गीथमुपास्ते ॥२॥**

स एष—उद्गीथः परोवरीयान्—योऽसावाकाशः सर्वभूतानामुद्भ-वाप्ययस्थानभूतः सर्वतो महान् स एष उद्गीथः, तत्त्वेनोद्गीथो विभा-व्यते, अतएवाऽयं परोवरीयान्। परश्चासौ, वरीयांश्च, वरीयसामपि वरः, पराश्चासौ वरीयांश्चेति वा। आकाशस्यायं गुणस्तत्त्वेन भाव्यमाने उद्गीथे सम्पाद्यते। स एषोऽनन्तश्च—तस्यानन्त्यात्तत्त्वेन दृश्यमाने एतस्मिन्नानन्त्यमारोप्यते। यद्वा—परेण कृते साम्नो गतिनिरूपणे स्थिरगत्यलाभाद्यदन्तवत्त्वं दोष उद्भावितः—अन्तवत्किल ते सामेति, सोऽयं दोषोऽस्मिन्पक्षे नेत्याह—स एषोऽनन्त इति। य एतत्साम एवमुक्तप्रकारेण विद्वान्—जानन् परोवरीयांसं परोवरीयस्त्वगुणवि-

---

१ परः वरीयानिति पदच्छेदेन व्याचष्टे—परश्चासाविति। २ सकारान्तपरःश-ब्दस्य समासमभिप्रेत्य।

शिष्टमुद्गीथमुपास्ते, अस्य इह लोके परोवरीयः—वरीयसां वरीयः जीवनं भवति, स परत्र परोवरीयसो लोकानपि जयति ॥२॥

तꣳ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति ॥३॥

तथाऽमुष्मिँल्लोके लोक इति स य एतदेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति ॥४॥

शुनकसुतो नाम्नाऽतिधन्वा तमेतमुद्गीथमुदरशाण्डिल्याय शिष्यायोपदिश्येदमप्युवाच। ते प्रजायां सन्ततौ एनमुद्गीथं यावत् वेदिष्यन्ते—ज्ञास्यन्ति, एभ्यः सर्वेभ्यः अस्मिँल्लोके परोवरीयः—अत्युत्तमं जीवनं भविष्यति, तथाऽमुष्मिन्नपि लोके। इत्युवाचेति पूर्वेण सम्बन्धः। एवं फले संवादप्रमाणमुपन्यस्य स्वयं फलनिरूपणेन निगमयति—स य एतमेवं विद्वानुपास्ते इति। स्फुटोऽर्थः। प्रक्रान्तोपासनप्रकारपरिसमाप्तिद्योतनाय वीप्सा ॥४॥

इति प्रथमाध्याये नवमः खण्डः।

---

मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे कुद्राणक उवास ॥१॥

प्रसङ्गात्प्रस्तावाद्युपासनं वक्तुमुपक्रमते । आख्यायिका सुखप्रतिपत्तये । मटची—अश्मवृष्टिः, तया हतेषु—विनष्टसस्येष्वित्ति यावत् । कुरुषु—कुरुसंज्ञकेषु देशेषु, आटक्या जायया सह—आटकी—अनुपजातपयोधरादिस्त्रीव्यञ्जना, उषस्तिर्नामतः, चाक्रायणः चक्रस्यापत्यम्, इभ्याः—हास्तिपकाः तेषां ग्रामे, कुद्राणकः—कुत्सितां दशामापन्न उवास ॥१॥

स हेभ्यं कुल्माषान्खादन्तं बिभिक्षे तꣳ होवाच नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इति॥२॥

सोऽनशनपीडितोऽन्नार्थमटन्निभ्यमेकं कुल्माषान्—कुत्सितान्माषान् खादन्तं बिभिक्षे । तमुषस्तिमिभ्य उवाच । इतो मया भक्ष्यमाणादन्ये न विद्यन्ते, यत्—यस्मात् ये मे स्युः, ते च येऽस्मिन् राशौ उपनिहिता इमे एव, उच्छिष्टमेतत्, हन्त किं कुर्यामिति भावः ॥२॥

एतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतꣳ स्यादिति होवाच ॥३॥

एतेषामिति निर्धारणे षष्ठी । किञ्चिदिति शेषः । यानि सन्त्येतेषामेव मध्ये किञ्चिन्मे—मह्यं देहि । कर्मणः सम्बन्धसामान्येन विवक्षा वा । एतानेव देहीत्यर्थः । इति होवाच प्राणसंशयमापन्नः । एवमुक्त इभ्यस्तानेव कुल्माषानस्मै प्रददौ । प्रदाय कुल्माषान्सानुतापमाह—हन्तानुपानमिति । हन्तेत्यनुकम्पायाम् । अस्त्विति शेषः । एवमुक्त उषस्तिरुवाच—यदीदं पास्यामि मयोच्छिष्टमेव पीतं स्यादिति ॥३॥

न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमा-
नखादन्निति होवाच कामो म उदपानमिति ॥४॥

अजानानो धर्ममर्यादामिभ्य आह । एतेऽपि न किमुच्छिष्टाः, ये त्वया कुल्माषा गृहीता इति । एवं पृष्ट उषस्तिरुवाच—इमानखादन्नैवाजीविष्यम् । प्राणसंशयमापन्नेन प्राणधारणायेदं गृहीतम् । उदपानं तु कामो मे स्यात् । केवलं कामायैवोदकपानं न तु प्राणरक्षणाय । यदनेन पीतेनोच्छिष्टदोषः प्रसजेदित्यर्थः । एतेन विदुषः सर्वान्नानुमतिः प्राणात्ययप्रसङ्ग इति ज्ञाप्यते ॥४॥

स ह खादित्वाऽतिशेषाञ्जायाया आजहार सा-
ऽग्र एव सुभिक्षा बभूव तान्प्रतिगृह्य निदधौ ॥५॥

स तान्कुल्माषान्किञ्चिज्जग्ध्वाऽवशिष्टान्जायायै आजहार, क्षुत्क्षामेति कारुण्यात् । सा तु कुल्माषानयनतः प्रागेव सुभिक्षा बभूव । प्राणधारणोचितमन्नं भिक्षया लब्धवतीत्येतत् । अथापि तानादरेण प्रतिगृह्यान्तर्निदधौ । न हि प्राक्षिपत् । पत्यौ भक्त्याऽनशनक्लेशेन वा ॥५॥

स ह प्रातः संजिहान उवाच यद्बतान्नस्य
लभेमहि लभेमहि धनमात्राꣳ राजाऽसौ
यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥६॥

स प्रातः संजिहानः—शयनतलं परित्यजन् ; शयनादुत्तिष्ठन्नेवेदं—वक्ष्यमाणमुवाच—अन्नस्य लभेमहि, मात्रामित्यध्याहारः । धनमात्रामित्यतो विभज्य वा सम्बन्धः । अन्नस्य मात्रां—लेशम् । यत्—यदि,

लभेमहि, लभेमहि धनमात्रां—धनस्य लेशम् । केनोपायेन ?, राजाऽसौ नातिदूरे यक्ष्यते, स मां सन्निहितं सर्वैरार्त्विज्यैः—ऋत्विक्कर्मभिः । वृणीत । वरणे हेतुरार्त्विज्यम् । यजमानस्य ह्येतत्प्रयोजनम् । हन्तेति खेदे ॥६॥

तं जायोवाच हन्त पत इम एव कुल्माषा इति तान्खादित्वाऽमुं यज्ञं विततमेयाय ॥७॥

तमेवमुक्तवन्तं जायोवाच—हन्त पते इम एव कुल्माषाः संन्निहिता एव कुल्माषा भवदाहृता इति । हन्तेति हर्षे । हर्षश्च धनलाभप्रसङ्गनिबन्धनः । स तान्खादित्वा विततं विस्तीर्णं यज्ञमेयाय ॥७॥

तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश स ह प्रस्तोतारमुवाच ॥८॥

तत्र—यज्ञे आस्तावे स्तोष्यमाणान्—यत्र स्थित्वा स्तोत्रमुद्गातृप्रभृतिभिः क्रियते तत्स्थानमास्तावः, तस्मिन्स्थित्वा स्तोतुं प्रवृत्तान्, उद्गातॄन्—उद्गाने कर्तृभूतान् उद्गातृप्रतिहर्तृप्रस्तोतॄन्, उप—समीपे, उपविवेश—उपविष्टवान् । उपविश्य स प्रस्तोतारमिदमुवाच ॥८॥

प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति ॥९॥

एवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वा-

---

१ प्रयोजनस्य हेतुत्वविवक्षया तृतीयेति ज्ञापयति—वरणे इति । २ इम इत्यस्याशयः सन्निहिता इति ।

यत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति ॥१०॥ एवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासाञ्चक्रिरे ॥११॥

स्वस्वकर्मसु व्यापृतानभिमुखीकर्तुं प्रस्तोतरित्यादि सम्बोधनम् । हे प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता—प्रस्तावभक्तिमभिसम्बद्धा, तां देवतामजानंश्चेज्ज्ञानतो मम प्रस्तोष्यसि मूर्धा ते विपतिष्यति । एतेन—अविदुषः सत्यप्यार्त्विज्येऽधिकारे विदुषः सन्निधौ तदनुज्ञां विना नाधिकार इति व्यज्यते । ते त्रयोऽपि स्वस्वकर्मभ्यः समारता—उपरतास्तूष्णीमासाञ्चक्रिरे—निर्व्यापारा अभूवन् । निर्व्यापारता च शुश्रूषोर्लक्षणम् । एतेन देवताविशेषं ततो ज्ञातुकामा अभूवन्निति व्यज्यते ॥९–११॥

इति प्रथमाध्याये दशमः खण्डः ।

---

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच ॥१॥

अथ निर्व्यापारेषु तेषु यजमान उपसृत्य भगवन्तमहं विविदिषाणि—वेत्तुमिच्छामीत्युवाच । उषस्तिरस्मि चाक्रायण इति नाम्ना अभिजन्मना च निरूपणात्स्वप्रसिद्धिर्व्यज्यते ॥१॥

स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं भगवतो वा अहमवित्त्वाऽन्यानवृषि ॥२॥

स होवाच—पूज्यतमं भवन्तमेभिः सर्वैरार्त्विज्यैर्निमित्तभूतैः, आर्त्विज्यार्थमिति यावत्, पर्यैषिषम्—अन्विष्टवान्। भगवतोऽवित्त्वा—भगवन्तमलब्ध्वा अन्यानिमानवृषि—वृतवानहम् ॥२॥

भगवांस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥३॥

तत् भगवानेव सर्वैरार्त्विज्यैः सर्वार्त्विज्यार्थं मेऽस्तु, इत्युवाचेति पूर्वेण सम्बन्धः। तथेत्युवाच राजा। अथैते एव मया समतिसृष्टाः—समनुज्ञाताः स्तुवताम्, यावत्त्वेभ्यो धनं दद्यास्तावन्ममैकस्य देहीति क्षुत्क्षामो विद्यासम्पन्न उषस्तिरुवाच। तथेति यजमान उवाच ॥३॥

अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥४॥

उषस्तियजमानयोः संवादानन्तरमुषस्तिं प्रस्तोता जिज्ञासुरुपससाद—विनयेनोपस्थितवान्। उपगम्य च इदमपृच्छत्। भगवान् मां प्रति 'प्रस्तोतर्या देवते'त्यादि यद्वचनमवोचत्, सा तत्प्रश्नवचनाभिप्रेता देवता का? इति। प्रस्तोतरित्यादि विपतिष्यतीत्यन्तमुषस्तिवचनानुवादः ॥४॥

प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति॥५॥

एवं पृष्ट उषस्तिः प्रत्युवाच—प्राण इति । प्राणश्चायं सर्वप्राणनगुणयोगात्परः सर्वस्यान्तरात्मा, अस्मिन्नेव च मुख्यस्तद्योगः, श्रूयते ह्यन्यत्र 'स उ प्राणस्य प्राण' इति । श्रूयते च—'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' इति । न केवलं प्राणनहेतुः सर्वाणीमानि लीयमानानि प्राणमभिसंविशन्ति, तथा प्राणमिममभ्युज्जिहते—प्राणादाविर्भवन्तीत्येतत् । एतेन—ब्रह्मलक्षणतः प्रस्तावदेवता निरूपिता भवति । लक्ष्यते हि सृष्टिस्थितिलयैर्ब्रह्म 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती'ति । सैषा देवता प्रस्तावमन्वायत्ता—अनुसम्बद्धा, तस्मिंस्तद्देवतोपासनं कार्यमिति यावत् । एवं देवतामुपदिश्य प्रस्तोतारमभिनन्दति, त्वमसि विनीतः—विनयेन चात्मा रक्षितः, तामिमां देवतां चेदविद्वान्—अवगणय्य मां प्रास्तोष्यः—प्रस्तावमकरिष्यः, प्राक् मया तथोक्तस्य ते मूर्धा व्यपतिष्यत्, मूर्धपतनमनिष्टमात्रोपसम्पातलक्षणम् ॥५॥

अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥६॥

अथ हैनमुषस्तिमुद्गीथदेवताजिज्ञासयोद्गातोपससाद—विनयेनोपतस्थे, उपगत्येदमपृच्छत्—भवान् मां प्रति उद्गातर्या देवतेत्यादि यद्वचनमवोचत् सा देवता का ? इति । उद्गातरित्यादि विपतिष्यतीत्यन्तमुषस्तिवचनानुवादः ॥६॥

आदित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥७॥

एवं पृष्ट उषस्तिः प्रत्युवाच—आदित्य इति । आदित्यश्चायं प्रसिद्धः । सर्वाणीमानि भूतानि मानुषलोके उच्चैः सन्तं—उपरिवर्तमानमेनमादित्यं गायन्ति—स्तुवन्त्यालोकतो लब्धनयनाः । योऽयमुच्चैः स्थितो गीयमान आदित्यः सैषा देवता उद्गीथमन्वायत्ता—उद्गीथमनुसम्बद्धा, तस्मिंस्तद्देवतादृष्टिः कार्येति यावत् । उद्गीयते उद्गीथः, आदित्यश्च उच्चैःस्थितो गीयते, तदेवं सामान्यात्तस्मिंस्तद्दृष्टिरिति भावः । एवं देवतामुपदिश्य उद्गातारमभिनन्दति—तां चेदित्यादिना । व्यक्तमन्यत् ॥७॥

अथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥८॥

व्यक्तम् ॥८॥

अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ॥९॥

एवं पृष्ट उषस्तिः प्रत्युवाच—अन्नमिति। तत्र निमित्तमाह–सर्वाणि ह वा इमानि भूतानि–प्राणिमात्राणि अन्नमेव प्रतिहरमाणानि–प्रत्याहरन्ति एतदाहरणेन जीवन्ति। तदेवं बुभुक्षितैः सर्वैः प्राणिभिः प्रतिह्रियत इति प्रतिहारोऽयम्। सैषा देवता–अन्नरूपा प्रतिहारमन्वायत्ता–अनुसम्बद्धा। तस्मिन्नन्नदेवतादृष्टिः कार्येति यावत्। निमित्तं च ज्ञापितम्। ननु कथमन्नं देवता?, अभिमानिव्यपदेशात्। अन्यत्स्पष्टम्। अवयवार्थतः पर्यवसानवृत्त्या वा प्राणशब्दस्येवादित्यान्नशब्दयोरपि परमात्मपरता किं न स्यात्, स्यात् प्रसिद्धार्थत्यागे यदि निमित्तम्, प्राणशब्दस्य तु प्रसिद्धेऽर्थे वाक्यशेषो बाधकः, तेन हि ब्रह्मणो लिङ्गमाख्यायते, निरूपितं तु प्राक् ॥९॥

इति प्रथमाध्याये एकादशः खण्डः।

---

अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज ॥१॥

उद्गीथोपासनप्रकरणेऽस्मिन्प्रस्तावप्रतिहारोपासनयोः प्रसङ्गात्प्राप्तिः, प्रकरणं तूद्गीथस्यैवेत्युद्गीथस्योपासनान्तरं प्रस्तूयते। तत्र ब्रह्म-

विदामप्यनशनक्लेशः प्रागाख्यायिकामुखेन सूचितः, स येन निरस्यते, तथाविधमुपासनं प्रस्तूयते—अथेति । अतः—वक्ष्यमाणवचनसन्दर्भेण, शौव उद्गीथः, प्रस्तूयत इति शेषः, शौवः—शुना दृष्टः, कथं शुना दृष्टः ?, श्रावयिष्यति श्रुतिः । सुखप्रतिपत्तये आख्यायिका प्रस्तूयते—तद्धेति । बको ग्लावश्च नामतः, वाशब्दश्चार्थे, नामद्वययोगात् द्व्यामुष्यायणः । दल्भ्यस्यापत्यं मित्रायाश्चापत्यं स दाल्भ्यो मैत्रेयः । स्वाध्यायं कर्तुं विविक्तदेशमभिलषन् उद्वव्राज—ग्रामान्निर्जगाम बहिः, उद्वव्राजेत्येकवचनाद्दाल्भ्यो बकोऽन्यो मैत्रेयो ग्लावस्त्वन्य इति भ्रमो व्युदस्यते ॥१॥

**तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायत्वशनायाम वा इति ॥२॥**

तस्मै—स्वाध्यायप्रवणाय । प्रादुर्बभूव—तमनुग्रहीतुं प्रादुर्बभूवेत्यर्थः । क्रियार्थोपपदस्य च कर्मणि स्थानिन इति चतुर्थी । कः प्रादुर्बभूव ? श्वा श्वेतः । तस्य स्वाध्यायेन सन्तुष्टा देवता तमनुग्रहीतुं शुनो रूपेण प्रादुर्बभूवेति यावत् । तमन्ये श्वान उपसमेत्य—उपसङ्गत्य, ऊचुः । किमिति ? भगवान् नः—अस्मभ्यं अन्नमागायतु—आगानेनान्नं सम्पादयतु, वयमशनायाम वै—बुभुक्षिताः स्मः । इमा अपि देवता एव ॥२॥

**तान्होवाचेहैव मा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ॥३॥**

तान्—बुभुक्षितानन्नमाकाङ्क्षमाणान् श्वेतः श्वा उवाच । इहैव मां

प्रातः उपसमीयात–उपसङ्गच्छत । छान्दसप्रयोगः । प्रातरुपसमीयातेति प्रातःकालप्रतीक्षाविधानं यस्यागानेनान्नं सम्पाद्यं तस्य सवितुर्देवस्याभिमुख्यसमुचितं कालमपेक्ष्य, प्रातःकाले ह्यादित्यस्य सुखोपसेव्यता । उदयसमकालं स्तुतिर्हि प्रीणनाय । तमिमं शुनां संवादमुपश्रुत्य बकः, तत्–प्रातः पुनस्तत्र तेषां सङ्गमनम्, प्रतिपालयाञ्चकार–प्रतीक्षितवान् । अनेन प्रतीक्षणेनास्यापि बुभुक्षोपशमनोपायाधिगमे त्वरा सूच्यते । अध्ययनपरायणता चानेनैव निमित्तेनेति विज्ञायते, यदीदमनाकाङ्क्षितम्, अध्ययनप्रीताभिर्देवताभिः श्ववेषमाश्रिताभिरन्नलाभोपायः किमर्थं प्रस्तूयेत ॥३॥

**ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः सꣳरब्धाः सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिंचक्रुः ॥४॥**

ते हि श्वानः परेद्युस्तत्रैव समेत्य बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणाः–स्तोत्रं करिष्यन्त उद्गातारः संरब्धाः–मिथः संलग्नाः, सर्पन्ति–गच्छन्ति, इतीदं यथा, एवमन्योन्यं संरब्धाः–अन्यस्य पुच्छमन्यो मुखेन गृहीत्वा, आससृपुः–उपससृपुः, भ्रमणमकुर्वन्निति यावत् । अथ ते समुपविश्य हिंचक्रुः–हिङ्कारमकुर्वन् ॥४॥

**ओ३ मदा३ मों३ पिबा३ मो३ देवो वरुणः प्रजापतिः सविता ३ ऽन्नमिहा २ हरदन्नपते २ ऽन्नमिहाहरा २ हरो ३ मिति ॥५॥**

ओंकारावृत्तिर्गानाय, अदाम–भक्षयेमातृप्ति, पिबाम चाप्रशान्ति,

देवः—द्योतनस्वभावः, वरुणः—वर्षणात्, सविता हि वृष्टौ निदानम्; व्रियमाणत्वाद्वा वरुणः, प्रजानां पतिः—पालयति हि प्रजा रश्मिभिः सविता, एवंभूतः सविता स हि सर्वस्यान्नस्य प्रसविता, काङ्क्षितस्य वा सर्वस्य, तदिह सवितृशब्दः गुणयोगात्प्रवर्तते, अन्नमिह अस्मभ्यमाहरत्—आहरतु। हे अन्नपते!—अन्नस्यास्य सर्वस्य स्वामिन्!। अन्नमस्मभ्यमिह—स्थितस्थाने आहर—उपहर, आदराद्द्विरुक्तिः। इहेति निर्देशादन्नार्जननिमित्तदेशाटनक्लेशो माभूदिति व्यज्यते। इतिशब्दः प्रक्रान्तोपासनसमाप्तिद्योतकः। कथमस्योद्गीथोपासने सम्बन्धः, सविता हि प्रार्थ्यते, स्यात्सवितुरुपासनमेतत्, उद्गीथकरणकत्वात्प्रार्थनाया इदमुद्गीथोपासनमिष्यते, ओमित्यादिर्हिङ्कारो हि प्रार्थनायां करणमिहोच्यते। अन्नपते इत्यादिमन्त्रकरणकप्रार्थनाकर्मीभूतादित्याध्यासविशिष्ट उद्गीथ उपदिश्यत इति वा तथात्वम् ॥५॥

इति प्रथमाध्याये द्वादशः खण्डः।

---

अयं वाव लोको हाउकारो वायुर्हाइकारश्चन्द्रमा अथकार आत्मेहकारोऽग्निरीकारः ॥१॥

अनन्तरखण्डे स्तोभाक्षरविषयाण्युपासनान्युपदिश्यन्ते। अर्थविधुराणि गीतिसिद्धिमात्रफलकानि कानिचिदक्षराणि साम्नि विनियुज्यमानानि स्तोभाक्षराणि परिभाष्यन्ते। एषां च सामावयवत्वाविशेषादेतदुपासनस्य सामावयवोपासनप्रकरणेऽस्मिन्नस्ति प्रसङ्गः। हाउकारः—रथन्तरे साम्नि हाउ इत्युच्चार्यमाणः स्तोभाक्षरविशेषः, सोऽयं

अयं वाव लोकः—पृथिव्येव, पृथिवीदृष्टिस्तस्मिन्कार्येति यावत् । हाइ-कारः—वामदेव्ये सामनि प्रसिद्धः हाईति स्तोभाक्षरविशेषः वायुरेव, वायुदृष्टिस्तस्मिन्कार्येति यावत् । अथकारः—अथेति प्रसिद्धः स्तोभः चन्द्रमाः । इहेति प्रसिद्धस्तोभः आत्मा । ई इति प्रसिद्धस्तोभोऽग्निः ॥ १ ॥

**आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोइकारः प्रजापतिर्हिंकारः प्राणः स्वरोऽन्नं या वाग्विराट् ॥ २ ॥**

ऊकारस्तोभ आदित्यः । एकारस्तोभो निवहः । औहोइकारस्तोभो विश्वेदेवाः । हिङ्कारस्तोभः प्रजापतिः । स्वर इति स्तोभः प्राणः । या इति स्तोभः अन्नं, प्रसिद्धमन्नं देवताविशेषो वा । वागिति स्तोभो विराट् ॥२॥

**अनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुंकारः ॥३॥**

उक्ता द्वादशस्तोभाः, तेभ्योऽयं त्रयोदशस्तोभो हुंकारः, सोऽयमनिरुक्तः सञ्चरः । इदमित्थमिति निरुच्यत इति निरुक्तः कार्यवर्गः, ततोऽन्योऽनिरुक्तः कारणम् । कारणमेव तत्र तत्र कार्यात्मना सम्यक् स्फुटं चरतीति सञ्चर उच्यते । हुंकारे कार्यात्मना सञ्चरतः कारणस्य दृष्टिः कार्येति यावत् ॥३॥

**दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद इति ॥४॥**

स्तोभाक्षरोपासनस्य फलमुच्यते । साम्नां—सामावयवभूतानां स्तोभाक्षराणाम्, एतामुपनिषदं—उक्तमुपासनमेवंप्रकारेण यो वेद ।

असै—स्तोभाक्षरोपासकाय वाक् दोहं दुग्धे, यो वाचो दोहः स्यात् । वाग्मिनः फलमस्य भवेदिति यावत् । अन्नवानन्नादश्च भवति । उपनिषदं वेदेत्यभ्यासः प्रक्रान्तविद्यासमाप्त्यर्थः ॥४॥

इति प्रथमाध्याये त्रयोदशः खण्डः ।

इति श्रीभगवत्सहजानन्दचरणकमलपरिचर्यांपरायण–परमहं–
सवर्य–योगिराज–श्रीगोपालानन्दस्वामिविरचिते
छान्दोग्योपनिषद्भाष्ये प्रथमोऽध्यायः ।

---

## अथ द्वितीयोऽध्यायः ।

**ॐ समस्तस्य खलु साम्न उपासनꣳसाधु यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति ॥१॥**

निरूपितमनेन प्रथमेन प्रपाठकेन साम्नोऽवयवानामुपासनम् । ओमित्येतदक्षरमुद्गीथः साम्नो ह्यवयवः । तथा स्तोभाक्षराणि च । अथ समुदितस्य साम्न उपासनभेदाश्चिन्त्यन्ते द्वितीयेन । प्रसङ्गो वा सङ्गतिः, स्मार्यते ह्यवयवी अवयवेन, प्राप्तनिरूपणावसरश्च । समस्तस्य साम्नः सामेत्येतन्मात्रस्य साप्तभक्तिकस्य पाञ्चभक्तिकस्य साम्न उपासनं साधु । ननु निन्दाऽऽक्षिप्यते व्यस्तस्योपासनमसाध्विति । नैतत् । न ह्यत्र स्तूयते समस्तस्य साम्न उपासनं साध्विति, येनाक्षिप्येताऽपि निन्दा, किन्तु समस्तं साम साध्वित्युपासीतेति विधीयते । अत्रैव चास्य तात्पर्यम् । ननु किं तथोपासने निमित्तम्? इदम्, यत्खलु साधु भवति लोके तत्सामेत्याचक्षते जनाः, यदसाधु तद-

सामेति । तथा च शब्दैक्यात् तथोपासनं युक्तमिति यावत् ॥ १ ॥

तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥२॥

उक्तं निमित्तयोगमनेकधा द्रढयति । उतेति विकल्पे समुच्चये वा । तत्—तस्मिन्नर्थे साध्वसाधुविवेचन इति यावत् । एवमप्याहुः—साम्नोपायेनैनमसावुपागादित्यर्थे साधुनैनमुपागादित्यप्याहुः । साम्नोऽन्येन विपरीतेनोपायेनासावेनमुपागादित्यर्थेऽसाधुनैनमुपागादित्यप्याहुः २

अथोताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥३॥

किञ्चैवमप्याहुः, यत्—यदा साधु—शोभनं भवति, तत्—तदा बत नः साम सम्पन्नमित्याहुः । बत नः साधु सम्पन्नमित्यपि चाहुः पर्यायेण । यदाऽसाधु—अशोभनं भवति, तदा असाम नो बत सम्पन्नमित्याहुः । असाधु नो बतेति च । एवं साम्नि साधुशब्दान्वयात्साम्नः साधुत्वेनोपासनं कार्यमिति भावः ॥ ३ ॥

स य एतदेवंविद्वान्साधु सामेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥४॥

उपासनफलमुच्यते—स इति । स यः कश्चिदेवं विद्वान्साम साध्वि-

१ साधुकर्मणि साम्नि च सामेत्येकस्य शब्दस्य वृत्तेरिति यावत् ।

त्युपास्ते एनमुपासकं साधवो धर्माः आगच्छेयुः । अथ च उपनमेयुः । भोगोपधायकाश्च भवेयुरिति यावत् ॥४॥

इति द्वितीयाध्याये प्रथमः खण्डः ।

---

लोकेषु पञ्चविधꣳ सामोपासीत पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥१॥

पाञ्चभक्तिकस्य साप्तभक्तिकस्य च साममात्रस्य साधुदृष्ट्योपासनं विहितम् । अथ तत्र पाञ्चभक्तिकस्य साम्न उपासनं विधीयते—लोकेष्वित्यादिना । हिङ्कारः प्रस्ताव उद्गीथः प्रतिहारो निधनमिति पाञ्चविध्यमापन्नं सामोपासीत लोकेषु, लोकदृष्ट्योपासीतेत्यर्थः । दोषान्गुणेषु भावयतीत्यादाविवेह सप्तमी विषये । तत्र लोकविषयकोपासनायां हिङ्कारादीन्विषयीकुर्यात्, न ततोऽतिरिक्तत्वेन । तत्प्राप्तं लोकत्वेनोपासीतेति । कुत्र कस्य लोकस्य दृष्टिः ? उच्यते विशिष्य, हिङ्कारः पृथिवी, प्रस्तावोऽग्निः, उद्गीथोऽन्तरिक्षम्, प्रतिहार आदित्यः, निधनं द्यौः । तं तं तत्तल्लोकत्वेनोपासीतेति यावत् । इत्यूर्ध्वेषु—एवं क्रमेणोत्तरोत्तरमुपरितनलोकेषु बोध्यम् । पृथिव्या ऊर्ध्वमग्निस्ततोऽन्तरिक्षं तत आदित्यस्ततो द्यौरित्युत्तरोत्तरमूर्ध्वता ॥१॥

अथावृत्तेषु द्यौर्हिंकार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥२॥

अथावाङ्मुखक्रमेण तत्र तद्दृष्टिर्विधीयते—अथेति । अथ—ऊर्ध्व-क्रमेणोपासनविधानानन्तरम् । आवृत्तेषु—प्रत्यावृत्तिक्रमविशिष्टेषु तेष्वेव तद्दृष्टिः कार्या, कथं ?, विविच्योच्यते—हिंकारो द्यौः, प्रस्ताव आदित्यः, उद्गीथोऽन्तरिक्षम्, प्रतिहारोऽग्निः, निधनं पृथिवीति ॥२॥

**कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेवंविद्वाँल्लोकेषु पञ्चविधꣳसामोपास्ते ॥३॥**

इदं लोकदृष्ट्या समस्तस्य साम्न उपासनं फलेनोपसंह्रियते—कल्पन्त इति । यो विद्वानेतत्पञ्चविधं सामैवंप्रकारेण—आरोहावरोहक्रमेण लोकेषूपास्ते, अस्मै—उपासकाय इमे लोका ऊर्ध्वाश्चावृत्ताश्च—आरोहावरोहक्रमविशिष्टाः, कल्पन्ते—फलाय प्रभवन्तीति यावत् ॥३॥

इति द्वितीयाध्याये द्वितीयः खण्डः ।

---

**वृष्टौ पञ्चविधꣳ सामोपासीत पुरो वातो हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः उद्गृह्णाति तन्निधनम् ॥१॥**

लोकदृष्टिविधानानन्तरं वृष्टिदृष्टिर्विधीयते—वृष्टाविति । वृष्टौ पञ्चविधं सामोपासीत, अत्र वृष्टिशब्देन वर्षः सपरिकरो गृह्यते, वृष्ट्यारम्भत आसमाप्ति वर्षानुबद्धमखिलं वृष्टिरिति व्यपदिश्यत इति यावत् । हिंकारः पुरोवातः, स हि वृष्टेरारम्भदशायां प्रवर्तते । यो मेघो जायते—तदानीमाविर्भवति, प्रस्तावः सः । यद्वर्षति उद्गीथः

सः । यद्विद्योतते यच्च स्तनयति—गर्जति प्रतिहारः सः । यदुद्गृह्णाति जलस्योद्ग्रहणं करोतीति यत्, वृष्टेर्विरतिरिति यावत्, तन्निधनम् । क्रमात्तत्र तत्र तत्तद्दृष्टिः कार्येति भावः ॥१॥

वर्षति हास्मै वर्षयति ह य एतदेवं वि-
द्वान्वृष्टौ पञ्चविधꣳ सामोपास्ते ॥२॥

यो विद्वानेतत्पञ्चविधं सामैवंक्रमेण वृष्टावुपास्ते, अस्मै वर्षति पर्जन्यः, अयं च सत्यवग्रहे वृष्टिं कारयति लोकाय ॥२॥

इति द्वितीयाध्याये तृतीयः खण्डः ।

---

सर्वास्वप्सु पञ्चविधꣳ सामोपासीत मेघो
यत्संप्लवते स हिङ्कारो यद्वर्षति स प्रस्तावो
याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रती-
च्यः स प्रतिहारः समुद्रो निधनम् ॥१॥

अथाप्सु उपासनं विधीयते । सर्वास्वप्सु पञ्चविधं सामोपासीत पूर्ववत् । मेघो यत्संप्लवते—वियति संप्लवत इति यत्—सङ्गत्य मिथः प्लवत इति यत् स हिङ्कारः, हिङ्कारे मेघदृष्टिः कार्येति यावत् । घनीभूतानामपां समुदायो मेघ इति अप्दृष्टिरनुपहतैव । यद्वर्षति स प्रस्तावः, परितः प्रसृते वर्षे प्रस्तावदृष्टिरिति यावत्, या नादेया आपः प्राच्यः स्यन्दन्ते स उद्गीथः, यास्तु प्रतीच्यः स प्रतिहारः, सर्वासामपां निधिः समुद्रो निधनम् ॥१॥

न हाप्सु प्रैत्यप्सुमान्भवति य एतदेवं
विद्वान्सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते ॥२॥

यो विद्वानेतत्पञ्चविधं सामैवंक्रमेण सर्वास्वप्सूपास्ते, स उपासकः अप्सु न प्रैति—कदाऽपि न म्रियते। अप्सुमान्भवति—अद्भिः समृद्धश्च भवति, अपामलाभतः क्लेशो नास्त्येवेति भावः ॥२॥

इति द्वितीयाध्याये चतुर्थः खण्डः।

---

ऋतुषु पञ्चविधꣳ सामोपासीत वसन्तो
हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः
शरत्प्रतिहारो हेमन्तो निधनम् ॥१॥

अथ ऋतुषूपासनमुच्यते। हिंकारादिषु वसन्तादिदृष्टिः क्रमात्कार्येति यावत् ॥१॥

कल्पन्ते हास्मा ऋतव ऋतुमान्भवति स एत-
देवं विद्वानृतुषु पञ्चविधꣳ सामोपास्ते ॥२॥

यो विद्वानेतत्पञ्चविधं सामैवमुक्तप्रकारेण ऋतुषूपास्ते तस्मै उपासकाय ऋतवः कल्पन्ते—प्रभवन्ति, उपासकं प्रीणयितुं फलेन प्रभवन्ति। ऋतुमांश्च भवति। सर्वदा सर्वर्तुभोगसम्पन्नश्च भवति ॥२॥

इति द्वितीयाध्याये पञ्चमः खण्डः।

---

पशुषु पञ्चविधꣳ सामोपासीताजा हि-

ङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽ-
श्वाः प्रतिहारः पुरुषो निधनम् ॥१॥

अथ पशुषूपासनमुच्यते । पञ्चविधं साम पशुषूपासीत, यथा—हिङ्कारोऽजा इति, प्रस्तावोऽव्रय इति, उद्गीथो गाव इति, प्रतिहारोऽश्वा इति, निधनं पुरुष इति । ननु पशोरन्यः पुरुषः, कथं पशुषूपासनेऽस्य गणनम् । सत्यम्—पशोरन्यः, अथाप्यजादय इमे पशवः पुरुषाश्रया इति तदनुबन्धितया तदुपासने संवेशः पुरुषस्य । वृष्टाविव पुरोवातस्य पशुपरायणस्यास्य पशुत्वं तैः सह समानमिति वा ॥१॥

भवन्ति हास्य पशवः पशुमान्भवति य एत-
देवं विद्वान्पशुषु पञ्चविधꣳ सामोपास्ते ॥२॥

अस्य पशवो भवन्ति यथेष्टम् । पशुमांश्चायं भवति—पशूनां फलेन च सर्वदा सम्पन्नो भवति ॥२॥

इति द्वितीयाध्याये षष्ठः खण्डः ।

---

प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो
हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रति-
हारो मनो निधनं परोवरीयाꣳसि वैतानि ॥१॥

प्राणेषु पञ्चविधं सामोपासीत, अत्र प्राणशब्द इन्द्रियपरः, प्राणाधीनवृत्तिकत्वात् । प्राणनाम्नेन्द्रियाणां व्यपदेशो भाक्तः । हिंकारा-

दिपञ्चविधं साम वक्ष्यमाणक्रमेण प्राणात्मनोपासीतेत्यर्थः। न केवलं तथा, परोवरीय इति परोवरीयस्त्वगुणवत्तया च, सा च न स्वातन्त्र्येण, किन्तु–अध्यस्यमानप्राणद्वारा। परोवरीयांसि वा एतानि इति प्राणेषु परोवरीयस्त्वमुपपादयति। परोवरीयस्त्वं च परः परो वरीयानिति। निर्दिष्टक्रमेण घ्राणाद्वाक्, वाचश्चक्षुः, चक्षुषः श्रोत्रम्, श्रोत्रान्मनः, परं परं वरीयः, तदेषु सूपपत्तिकं परोवरीयस्त्वम्। तथाच परोवरीयस्त्वगुणविशिष्टप्राणात्मना सामोपासीतेति भावः। प्राणो हिङ्कारः–प्राणोऽत्र घ्राणः, वागिन्द्रियैः सह पाठात्। वक्ष्यमाणपरोवरीयस्त्वानुगुण्याच्च। न हि मुख्यप्राणतो वागादीनां वरीयस्त्वप्रसङ्गः। अपरे तु–परस्त्वं वरीयस्त्वं चेति गुणद्वयं परोवरीयःशब्देनाददानाः प्राणो हिंकार इत्यत्र प्राणशब्दस्य मुख्यार्थमेव मन्यन्ते। परोवरीयांसि वैतानि—एतानि–घ्राणादीनि वरीयांसि नाम, अर्थप्रकाशकत्वात्, उत्तरोत्तरं वरीयांसि च। घ्राणो हि वर्तमानमेव स्वार्थं प्रकाशयति, वाक्तु–अतीतमनागतमप्यर्थम्। चक्षुस्तु स्वार्थं ततो विशदमवभासयति। संमुखस्थमेवार्थं चक्षुः प्रकाशयति, श्रोत्रं तु परितः सम्बद्धं स्वार्थमिति परोवरीयस्ता ॥१॥

**परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य ॥२॥**

यो विद्वानेतत्पञ्चविधं सामैवं प्राणे परोवरीय उपास्ते, अस्य

१ वागपेक्षया.

परोवरीयः–उत्तरोत्तरमुत्कृष्टं जीवनं भवति। परोवरीयसो ह लोकान्–उत्तरोत्तरमुत्कृष्टान् लोकान् जयति । इति तु पञ्चविधस्य–एवंप्रकारेण पञ्चविधस्योपासनमुक्तम् ॥२॥

इति द्वितीयाध्याये सप्तमः खण्डः ।

---

अथ सप्तविधस्य वाचि सप्तविधꣳ सामोपासीत यत्किञ्च वाचो हुं ३ इति स हिङ्कारो यत्प्रेति स प्रस्तावो यदेति स आदिः ॥१॥

अथ–पञ्चविधस्य साम्न उपासनविधानानन्तरम् । सप्तविधस्य साम्न उपासनं विधीयत इति शेषः । तत्र प्रथमं वाचि विधीयते । वाचि सप्तविधं सामोपासीत, अत्र वाक्शब्दो वागिन्द्रियसाध्ये शब्दसामान्ये वर्तते । सप्तम्यर्थः पूर्ववत् । सप्तविधं साम वाक्त्वेनोपासीतेति यावत् । किं तत्सप्तविधं साम, सप्तसु कुत्र कस्या वाचो दृष्टिः ?, उच्यते । यो वाचो हुमिति स हिङ्कारः, हिङ्कारे साम्नि हुमिति शब्दसामान्यदृष्टिः कार्येति भावः । यत्प्रेति स प्रस्तावः, प्रशब्दसामान्यदृष्टिः प्रस्तावे कार्येति यावत् । एतीति नैकं पदम् । यत् आ इति स आदिः । इहादिशब्दः प्रणवे वर्तते, स ह्यादिः सर्वस्य वाङ्मयस्य । प्रणवे आकारसामान्यदृष्टिः कार्येति यावत् ॥१॥

यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनम् ॥२॥

यदुदिति शब्दस्य स्वरूपं स उद्गीथः, तद्दृष्टिस्तस्मिन्विधेयेति भावः ।

यत्प्रतीति स प्रतिहारः, प्रतिहारे प्रतिशब्ददृष्टिः। यदुपेति स उपद्रवः, उपद्रवे उपशब्ददृष्टिः। यन्नीति तन्निधनं, निधने नीत्यक्षरदृष्टिः कार्येति भावः ॥२॥

**दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान्वाचि सप्तविधꣳ सामोपास्ते ॥३॥**

यो विद्वानेतत्सप्तविधं साम वाच्येवमुपास्ते अस्मै वाक् दोहं दुग्धे, कोऽसौ दोहः?, यो वाचः स्वस्या दोहः स्यात्—फलं स्यात्। अन्नवान्—अन्नेन सम्पन्नः, अन्नादश्च—अन्नमत्तुं शक्तश्च—अरोगश्च भवति ॥ ३ ॥

इति द्वितीयाध्याये अष्टमः खण्डः।

---

**अथ खल्वमुमादित्यꣳ सप्तविधꣳ सामोपासीत सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥१॥**

अथ विधीयते आदित्ये साम्न उपासनम्। अमुमादित्यं सप्तविधं सामोपासीत। अस्ति चेदं निमित्तं साम्न आदित्यत्वेनोपासने, यदसावादित्यः सर्वदा समो न कदाचिद्वर्धते क्षीयते वा। समेऽस्मिन्सामत्वं न्याय्यम्। समशब्दार्थादनतिरिक्तार्थे हि सामशब्दार्थः प्रवर्तेत। इतश्च सामासौ; अन्यान्यदेशीयेन पुरुषेण सर्वेण ह्यसौ समः, कथं?, व्यवहरन्ति हि सर्वेऽविशेषेण मां प्रति असावादित्यः समः—अभिमुखः मां प्रत्यासावादित्यः समोऽभिमुख इति। तेन चासौ साम ॥१॥

**तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात्तस्य यत्पुरोदयात्स हिङ्कारस्तदस्य पशवोऽन्वायत्तास्तस्मात्ते हिंकुर्वन्ति हिङ्कारभाजिनो ह्येतस्य साम्नः ॥२॥**

यः सर्वेषां समस्तस्मिन्नादित्ये सर्वाणि भूतानि पश्वादीनि अन्वायत्तानि—अनुबद्धानि, इति विद्यात्—एवं भावयेत्, आदित्यं भूतोपजीव्यतया भावयेदिति यावत् । अवयवविभागशः सप्तविधे साम्न्यादित्योपासनं भूतोपजीव्यतां च विविच्याह—तस्येत्यादिना । तस्य—आदित्यस्य उदयात्पुरा यद्रूपं तद्रूपं हिङ्कारः, तदिदमस्यादित्यस्य रूपं पशवोऽन्वायत्ताः । उदेष्यदादित्यरूपं हिङ्कारेऽध्यस्य पशूपजीव्यत्वेन भावयेदिति यावत् । कथं तस्य पशूपजीव्यता ? यतो हिङ्कारात्मकादित्योपजीविनः, अत एव ते उषसि हिंकुर्वन्ति पशवः । कथमन्यथा हिङ्कारभाजिनो भवेयुः । साम्न एतस्य—सामात्मकस्यैतस्योदेष्यत आदित्यस्य हिङ्कारभाजिनो हि ॥२॥

**अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात्ते प्रस्तुतिकामाः प्रशंसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः ॥३॥**

प्रथमोदिते तस्य यद्रूपं स प्रस्तावः । उदयसमकालावच्छिन्नमादित्यस्य रूपं प्रस्तावेऽध्यस्य भावयेदिति यावत् । अस्य तद्रूपं मनुष्या

---

१ एकस्यादित्यस्य उदयाद्यवच्छेदभेदेनावयवबोधो बोध्यः ।

अन्वायत्ताः, तस्मादेव ते प्रस्तुतिकामा भवन्ति—प्रस्तुतिं परैः क्रियमाणां कामयन्ते, प्रस्तोतुं कामयन्ते वा। प्रशंसाकामाः—श्लाघां च परैः क्रियमाणां कामयन्ते च। पूज्यभावसापेक्षत्वतदभावाभ्यां स्तुतिश्लाघयोर्भेदः। साम्न एतस्य—सामात्मन एतस्य प्रथमोदितस्य प्रस्तावभाजिनो हि ते। प्रस्तावात्मकादित्योपजीव्यतया प्रस्तुतिकामाः प्रशंसाकामाश्च भवन्तीति भावः। प्रस्तावः प्रस्तुतिः ॥३॥

अथ यत्सङ्गववेलायाꣳ स आदिस्तदस्य वयाꣳस्यन्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्भणान्यादायात्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः ॥४॥

प्रातःकालादूर्ध्वं प्राक् मध्याह्नान्मुहूर्तत्रयपरिमितः कालः सङ्गव उच्यते, सङ्गववेलायां यदादित्यस्य रूपं स आदिः, ओँकारः। अस्य सवितुस्तद्रूपं सङ्गवकालिकम्, वयांसि—पक्षिणः। अन्वायत्तानि—अनुसम्बद्धानि। तानि हि वयांसि अन्तरिक्षे अनाश्रयाण्येव स्वयमात्मानमादाय परितः पतन्ति—सञ्चरन्ति। एतस्य साम्न—एतस्य सामात्मकस्य सङ्गवकालिकस्य आदिभाजीनि—आदिशब्दितप्रणवात्मकस्वरूपभाजीनि। यद्यपि न प्रणवेन वयसां कश्चन सम्बन्धः, तथापि प्रणववाचके आदिशब्दे आकारसम्बन्धः, तथा आदायात्मानं पततामेषामादानक्रियावाचके शब्दे आकारसम्बन्धोऽस्तीत्याकारसाम्यात्तथोपचारः ॥४॥

अथ यत्संप्रति मध्यन्दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजाप-

त्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ॥५॥

अथ यन्मध्यन्दिने रूपमादित्यस्य सोऽयमुद्गीथः। उद्गीथे माध्यन्दिनमादित्यं रूपमध्यस्य भावयेदिति भावः। तदस्य माध्यन्दिनं रूपं देवा अन्वायत्ताः। तद्धि रूपं विशेषतो द्योतते, देवाश्च द्योतनस्वभावाः, तद्युक्तं नाम देवानां माध्यन्दिनादित्यरूपोपजीव्यत्वम्। यत एते एतस्य साम्नः—सामात्मकस्यैतस्यादित्यस्योद्गीथात्मकमाध्यन्दिनरूपभाजिनः, तस्मात्ते प्राजापत्यानां काश्यपानां मध्ये सत्तमा भवन्ति। द्योतनातिशयान्माध्यन्दिनमादित्यरूपं हि प्रकृष्टम्। प्रकृष्टोपजीव्यत्वादेषां सत्तमत्वं युक्तमिति भावः। उत्तमो गीथो ह्युद्गीथः, सत्तम इत्युत्तमादनन्यार्थं, तद्युक्तमुद्गीथभाजिनां सत्तमत्वमिति वा ॥५॥

अथ यदूर्ध्वं मध्यन्दिनात्प्रागपराह्णात्स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ॥६॥

अथ मध्यन्दिनादूर्ध्वं अपराह्णात्परिसमाप्यमानात्प्राग्यद्रूपमादित्यस्य स प्रतिहारः। प्रतिहारे तद्दृष्टिः कार्येति यावत्। अस्यादित्यस्य तदापराह्णं रूपं प्रतिहारात्मकं गर्भा अन्वायत्ताः—उपजीवन्ति, यदेतस्य—सामात्मकस्यादित्यस्य प्रतिहारात्मकरूपभाजिन एते गर्भाः। तस्मादेव ते उदरे प्रतिहृताः सत्यपि पतनद्वारे नावपद्यन्ते—नाधश्च्यवन्ति ॥६॥

अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवस्तद-

स्यारण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्षꣳ श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ॥७॥

अपराह्णादूर्ध्वमस्तमयात्प्राक् सायाह्ने यदादित्यस्य रूपं स उपद्रवः। उपद्रवे तद्रूपदृष्टिः कार्येति यावत्। अस्य तद्रूपं आरण्याः—पशव उपजीवन्ति। यस्मादेतस्य साम्न आदित्यस्य उपद्रवाख्यसायाह्नरूपोपजीविन आरण्याः पशवस्तस्मात्ते पुरुषं दृष्ट्वा भीत्या कक्षं गर्तं वा उपद्रवन्ति—अभिधावन्ति। उपद्रवोपजीविनामुपद्रवान्वयो युक्त इति भावः ॥७॥

अथ यत्प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यꣳ सप्तविधꣳ सामोपास्ते ॥८॥

अथ प्रथमास्तमिते यद्रूपं—अस्तं गच्छति यद्रूपं सवितुस्तन्निधनम्। निधने तद्रूपमध्यस्य चिन्तयेदिति यावत्। अस्य तद्रूपं पितरोऽन्वायत्ताः—उपजीवन्ति। यस्मादेतस्य—साम्न आदित्यस्य निधनाख्यरूपोपजीविनस्ते, तस्मात्तान्पितॄन्निदधति दर्भेषु। साम सप्तविधमेवंप्रकारेणावयवशो विभक्तमादित्यमुपास्ते—उपासीतेति यावत् ॥८॥

इति द्वितीयाध्याये नवमः खण्डः।

---

अथ खल्वात्मसम्मितमतिमृत्यु सप्त-

विधꣳ सामोपासीत हिङ्कार इति त्र्य-
रक्षं प्रस्ताव इति त्र्यक्षरं तत्समम् ॥१॥

उक्तं साम्नः सप्तविधोपासनमादित्यात्मना । येनादित्यस्याप्यतिक्रमणं स्यात्तथाविधमुपासनमिदानीमुपदिश्यते—अथेत्यादिना । सप्तविधं सामोपासीत, यद्यपीह हिङ्कारः, प्रस्तावः, प्रतिहारः, आदिः, उद्गीथः, उपद्रवः, निधनमिति यानि नामानि साम्नो भक्तीनां तेषामुपासनमुपदिश्यते । अथापि तेषां वक्ष्यमाणक्रमेण सामत्वपरिकल्पनया सामोपासीतेति विधेरन्वयः । उपासनप्रकारं ज्ञापयन्साम विशेषयति—आत्मसम्मितमतिमृत्यु इति । आत्मसम्मितं—आत्मनः—मिथः सम्मितं तुल्यतां गतम् । हिङ्कारादीनां भक्तिनाम्नां सप्तानां एकैकस्मिन्नक्षरत्रयात्मकावयवयोगनिरूपणेनात्मसम्मिततां स्फुटीकरिष्यत्यनुपदम् । अतिमृत्यु—मृत्युरादित्यः स ह्यहोरात्रादिकालचक्रपरिवर्तनाधानेन सर्वस्यायुरपहरति, तं मृत्युमतितारयतीदं सामेत्यतिमृत्यु । एवंप्रकारं सप्तविधं हिंकारादिभक्तिनामलक्षणं सामोपासीत । कथमस्य सामत्वं कथं चात्मसम्मितत्वं कथं चातिमृत्युता तदुच्यते—हिंकार इतीत्यादिना । हिंकार इति यन्नाम तदिदं त्र्यक्षरं, यच्च प्रस्ताव इति तदपि त्र्यक्षरं तदिदं द्वयमन्यूनाधिकाक्षरतया मिथः सममेव तदनयोरात्मसम्मितत्वं समत्वादेव सामत्वं च ॥१॥

आदिरिति द्व्यक्षरं प्रतिहार इति चतु-
रक्षरं तत इहैकं तत्समम् ॥२॥

यद्यप्यादिरिति द्व्यक्षरम्, प्रतिहार इति चतुरक्षरम् । अथापि

ततः प्रतिहारपदादिहादिशब्दे एकमक्षरं बुद्ध्या समानेयम् । तथाच्च तत्समं मिथो भवति ॥२॥

उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समम् ॥३॥

यद्यप्युद्गीथ इति त्र्यक्षरम्, उपद्रव इति चतुरक्षरम् । अथाप्युपद्रवपदे एकमक्षरं दूरीकृत्य गण्यमानं त्रिभिस्त्रिभिः सममेव मिथो भवति, अतिशिष्यते नामैकमक्षरम्, तदेवं त्र्यक्षरं तत्सममभूत् ॥३॥

निधनमिति त्र्यक्षरं तत्सममेव भवति तानि ह वा एतानि द्वाविंशतिरक्षराणि ॥४॥ एकविंशत्याऽऽदित्यमाप्नोत्येकविंशो वा इतोऽसावादित्यो द्वाविंशेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥५॥

निधनमिति त्र्यक्षरं तत्सममेव भवत्यन्यैर्हिङ्कारादिभिः । तान्येतानि हिङ्कारादीनामवयवभूतान्यक्षराणि द्वाविंशतिः । हवेति प्रसिद्धौ । तदेवमेकाक्षराधिकमेकविंशत्यक्षरसमुदायं त्रिभिस्त्रिभिरक्षरैरात्मसम्मिततां प्राप्तैः समतया सामतामुपगतैः सप्तभिर्विधाभेदैरुपेतमनेन प्रकारेण य उपास्ते स उपास्यमाने तस्मिन्नन्तर्गतया एकविंशत्या आदित्यमाप्नोति । कुतः ? । आदित्यो ह्यसावेकविंश इतो लोकात्,

कथम्? 'द्वादशमासाः पञ्चर्तवः त्रय इमे लोकाः असावादित्य एकविंश' इति श्रुतेः। यदक्षरमधिकमवशिष्टं तेन द्वाविंशेन य आदित्यात्परो लोकस्तं जयति—प्राप्नोतीति यावत्। किं तत्स्थानम्?। तन्नाकं तद्विशोकम्। कं सुखं, अकं—असुखम्, यत्र न तत् तन्नाकं, दुःखासम्भिन्नं स्थानमिति यावत्। अत एव तद्विशोकं—तद्गतानां न शोकप्रसङ्ग इति भावः। अतिमृत्युत्वमनेन प्रकारेण ज्ञापितं भवति ॥४–५॥

आप्नोतीहादित्यस्य जयं परो हास्यादित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसम्मितमतिमृत्यु सप्तविधꣳ सामोपास्ते सामोपास्ते ॥६॥

एवमात्मसम्मितत्वमतिमृत्युत्वं चोपपाद्य फलेनोपसंहरति। य एवमुक्तप्रकारेण विद्वान् सप्तविधं साम भक्तिनामाक्षरसमुदायात्मकमात्मसम्मितत्वेनातिमृत्युत्वेन चोपास्ते स आदित्यलक्षणस्य मृत्योर्जयमतिक्रमणं प्राप्नोति। आदित्यजयाच्चास्मात्परो जयः—आदित्यादर्वाचीनानां जयादुत्कृष्टो जयोऽस्य भवति। विमृत्युर्विशोको भवतीत्ययमुत्कर्ष इतरेभ्यः। द्विरुक्तिः प्रक्रान्तपरिसमाप्तौ ॥६॥

इति द्वितीयाध्याये दशमः खण्डः।

---

मनो हिङ्कारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम् ॥१॥

सामान्यतः साम्नो भक्तिभूतानां हिङ्कारादीनामुपासनमुक्तम्। अथ गायत्रादिसामविशेषस्य भक्तिभेदानां तेषामुपासनमुच्यते। तत्र

गायत्रस्य प्रथममुपासनप्रकारो निरूप्यते—मन इति। गायत्रं प्राणेषु प्रोतं–सम्बद्धम्। गायत्रं साम प्राणदृष्ट्या भावयेदिति यावत्। कथम्?। गायत्रस्य साम्नो यो हिङ्कारस्तन्मनः, यः प्रस्तावः सा वाक्, य उद्गीथस्तच्चक्षुः, यः प्रतिहारस्तच्छ्रोत्रम्, यन्निधनं स मुख्यः प्राणः, मनःप्रभृतीन्यथाक्रमं हिङ्कारादिष्वध्यस्य भावयेदिति यावत्। तदेवं गायत्रभक्तिभेदभूतहिङ्कारादीनां प्राणभेदमनःप्रभृत्यात्मकत्वेन चिन्तनीयतया गायत्रस्य प्राणेषु प्रोतता ॥१॥

**स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या महामनाः स्यात्तद्व्रतम् ॥२॥**

य एवमुक्तेन प्रकारेण गायत्रं साम प्राणेषु प्रोतं–सम्बद्धं वेद–प्राणात्मनोपासीत। स प्राणी–अनुपहतमनःप्रभृतिप्राणशक्तिको भवति। यावदायुर्मनुष्यस्य तावत्सर्वमायुःशतमाप्नोति। ज्योक्–उज्ज्वलो जीवति, लोकेऽस्मिन्दीप्तिमान्भवति। प्रजया पशुभिः महान्भवति। भवति च महान्कीर्त्या। अस्योपासकस्येदं तद्व्रतम्। यन्महामनाः स्यादिति, महामनस्त्वमस्योपासनस्याङ्गभूतमिति यावत् ॥२॥

इति द्वितीयाध्याये एकादशः खण्डः।

---

**अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनꣳ सꣳशाम्य-**

ति तन्निधनमेतद्रथन्तरमग्नौ प्रोतम् ॥१॥

अथ रथन्तरस्योपासनमाह । अभिमन्थति स हिङ्कारः–योऽयमभिमन्थनाख्यो व्यापारः स हिङ्कारः, अग्नेः प्रथममभिमन्थनम्, भक्तिषु च प्रथमो हिङ्कारः, अतस्तस्मिंस्तद्दृष्टिरभिप्रेता । अभिमन्थनमनु यो धूमो जायते स प्रस्तावः । यत् ज्वलति स उद्गीथः । ये अङ्गारा भवन्ति स प्रतिहारः । यदुपशाम्यति–किञ्चिच्छाम्यति तदुपशमनं निधनम् । यच्च सम्यक् शाम्यति तत्संशमनं, तच्च निधनम् । एतद्रथन्तरमग्नौ प्रोतं–उक्तप्रकारेणाग्नौ सम्बद्धम् । हिङ्कारादिषु यथाक्रममभिमन्थनादिदृष्ट्या रथन्तरं सामाग्नित्वेनोपासीतेति भावः ॥१॥

स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम् ॥२॥

य एवमुक्तप्रकारेण रथन्तरं सामाग्नौ प्रोतं वेद, ब्रह्मणा वेदेन यद्वर्चः–तेजः, वृत्ताध्ययनादिजन्यं तेज इति यावत् । तेनासौ युक्तो भवति । अन्नादश्च भवति–जाठराग्निबलसम्पन्नो भवति । ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या सर्वमायुरेति पूर्ववत् । अग्निं प्रत्यक्–अग्निमभि नाचामेत् । न निष्ठीवेत् । तदिदमस्योपासकस्य व्रतम् । एतदुपासनाङ्गमिति यावत् ॥२॥

इति द्वितीयाध्याये द्वादशः खण्डः ।

---

उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रतिस्त्रि सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम्॥१॥

उपमन्त्रयते—सङ्केतं करोतीति यावत्। तत् हिङ्कारः। ज्ञपयते—अनुवर्तनेन तोषयतीति यावत्। स प्रस्तावः। अन्यत्स्पष्टम्। ननु साम्नां भक्तौ ग्राम्यधर्मदृष्टिविधानं कथम्? उत्कृष्टदृष्टिर्हि न्याय्या। सत्यम्—पश्वादीनामिव कामकण्डूतिचेष्टितरूपतां विना स्त्रीपुरुषयोरुत्तराधरारणित्वेन भावनया धर्मरूपा या प्रवृत्तिरकामकलङ्किता सेह विवक्षितेति नात्र कलङ्कावसरः॥१॥

स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनान्मिथुनात्प्रजायते सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न काञ्चन परिहरेत्तद्व्रतम्॥२॥

मिथुनीभवति—विधुरो न भवति। मिथुनान्मिथुनात्प्रजायते—अमोघरेता भवति। न काञ्चन परिहरेदिति तस्य व्रतम्। श्रुत्या धर्मस्य गतिरित्यभिज्ञाः॥२॥

इति द्वितीयाध्याये त्रयोदशः खण्डः।

**उद्यन्हिङ्कार उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद्बृहदादित्ये प्रोतम् ॥१॥**

अथ बृहत्साम्न उपासनमुच्यते । य उद्यन्नादित्यः स हिङ्कारः । य उदितः स प्रस्तावः । यो माध्यन्दिनः स उद्गीथः । य आपराह्णः स प्रतिहारः । योऽस्तं यन् अस्तं गच्छन्नादित्यः स निधनम् । एवं तत्र तत्र आदित्यस्वरूपदृष्ट्या एतद्बृहत्साम आदित्ये प्रोतम् । आदित्यात्मनोपासीतेति यावत् ॥१॥

**स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या तपन्तं न निन्देत्तद्व्रतम् ॥२॥**

स य एवमित्यादि पूर्ववत् । रश्मिभिरुग्रैस्तपन्तमादित्यं न निन्देदित्येतदस्य बृहत्सामोपासकस्य व्रतम् ॥२॥

इति द्वितीयाध्याये चतुर्दशः खण्डः ।

---

**अभ्राणि संप्लवन्ते स हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूपं पर्जन्ये प्रोतम् ॥१॥**

अथ वैरूपस्य साम्न उपासनमुच्यते । यान्यभ्राणि—अद्भिरापूर्णानि वियति संप्लवन्ति—सञ्चरन्ति, वृष्टेः प्राग्रूपाणि तानि हिङ्कारः । यो मेघो जायते स प्रस्तावः । सेचनान्मेघः । यो वर्षति स उद्गीथः,

वृष्टेः पूर इति सेकाद्विशेषः । विद्योतते स्तनयतीति यत्स प्रतिहारः । उद्गृह्णाति वृष्टिधारा इति यत्–वृष्टेः समाप्तिरिति यावत्, स निधनम्, य उद्गृह्णाति स वा निधनम् । एवं तत्र तत्र तद्दृष्ट्या एतद्वैरूपं साम पर्जन्ये प्रोतम् । पर्जन्यात्मनोपासीतेति यावत् ॥१॥

स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपाꣳश्च सुरूपाꣳश्च पशूनवरुन्धे सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या वर्षन्तं न निन्देत्तद्व्रतम् ॥२॥

सुरूपान्–शोभनरूपान्, विरूपान्–विभिन्नरूपान्, नानाजातीयानिति यावत् । पशूनवरुन्धे । विरूपांश्च सुरूपांश्चावरुन्धे पशूनिति वा । अवरुन्धे–स्वस्वगृहाङ्गणे रुणद्धि, पशुमान्भवतीति यावत् । महान्प्रजया पशुभिः–प्रजापशुसन्ततिभिर्महान्भवति । वर्षन्तं जलमुचं न निन्देदित्येतदस्य व्रतम् ॥२॥

इति द्वितीयाध्याये पञ्चदशः खण्डः ।

---

वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतम् ॥१॥ स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भ-

वति महान्कीर्त्यर्तुं न निन्देत्तद्व्रतम् ॥२॥

अथ वैराजस्य साम्न उपासनमुच्यते। वर्षा—वर्षर्तुः। वैराजं—वैराजाख्यं साम। उक्तेन प्रकारेण हिङ्कारादिषु वसन्तादिदृष्ट्या ऋतुत्वेन वैराजं सामोपासीतेति यावत् ॥१–२॥

इति द्वितीयाध्याये षोडशः खण्डः।

---

पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः ॥१॥ स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकीभवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या लोकान्न निन्देत्तद्व्रतम् ॥२॥

अथ शक्वर्याख्यस्य साम्न उपासनमुच्यते। एताः शक्वर्यः सामविशेषाः, शक्वर्य इति नित्यं बहुवचनम्। लोकेषु प्रोताः—लोकत्वेनोपासीतेति यावत् ॥१–२॥

इति द्वितीयाध्याये सप्तदशः खण्डः।

---

अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः ॥१॥

स य एवमेता रेवत्यः पशुषु प्रोता वेद पशुमान्भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या पशून्न निन्देत्तद्व्रतम् ॥२॥

अथ रेवत्याख्यस्य साम्न उपासनमुच्यते । रेवत्य इति नित्यं बहुवचनम् ॥१-२॥

इति द्वितीयाध्याये अष्टादशः खण्डः ।

---

लोम हिङ्कारस्त्वक्प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥१॥ स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाङ्गी भवति नाङ्गेन विहूर्च्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात्तद्व्रतं मज्ज्ञो नाश्नीयादिति वा ॥२॥

अथ यज्ञायज्ञीयस्य साम्न उपासनमाह । अङ्गीभवति—अङ्गशोभासम्पन्नो भवति । नाङ्गेन विहूर्च्छति—कुटिलो भवति । मज्ज्ञो नाश्नीयात्—मज्जाख्यमांसविशेषान् । इदमुपलक्षणं मांससामान्यस्य ॥१-२॥

इति द्वितीयाध्याये एकोनविंशः खण्डः ।

---

अग्निर्हिङ्कारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं

देवतासु प्रोतम् ॥१॥ स य एवमेतद्राजनं देवतासु प्रोतं वेदैतासामेव देवतानाꣳ सलोकताꣳ सार्ष्टिताꣳ सायुज्यं गच्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या ब्राह्मणान्न निन्देत्तद्व्रतम् ॥२॥

अथ राजनाख्यस्य साम्न उपासनमुच्यते—अग्निरिति। उपासनफलमुच्यते—स इति। सर्वमायुरेत्युज्ज्वलो जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या । परतश्च एतासामेवाग्न्यादिदेवतानां सलोकतां सार्ष्टितां सायुज्यं गच्छति । सलोकता समानलोकता, सार्ष्टिता समानर्द्धिता, सायुज्यं समानभोग्यभोगः । ब्राह्मणान्न निन्देत्तद्व्रतम् । देवात्मनोपासनेऽस्मिन् देवनिन्दापरिहारस्यैवाङ्गत्वमुचितम्। अथापि देवानामपरं रूपं ब्राह्मणा इति तथोक्तम् । श्रूयते च—'एते वै देवाः प्रत्यक्षं यद्ब्राह्मणा' इति ॥१॥२॥

इति द्वितीयाध्याये विंशः खण्डः ।

---

त्रयी विद्या हिंकारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाꣳसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत्साम सर्वस्मिन्प्रोतम् ॥१॥

अथाविशेषेण साम्न उपासनमुच्यते। त्रयी विद्या—ऋग्यजुःसा-

मलक्षणा। मरीचयः—रश्मयः। एतत्साम सर्वस्मिन्प्रोतम्। अत्र सर्वशब्देन त्रय्यादयो गृह्यन्ते। त्रयो वेदास्त्रयो लोका अग्न्यादयस्त्रयो नक्षत्रादीनीति बहूनां ग्रहणात्। प्रायः सर्वात्मतया भावनं प्राप्तमिति सर्वस्मिन्प्रोतं सामेत्युक्तम् ॥१॥

**स य एवमेतत्साम सर्वस्मिन्प्रोतं वेद सर्वꣳह भवति ॥२॥**

सर्वं भवति—सर्वमस्य सिद्ध्यतीत्यर्थः, यद्यदिह कामयते तदखिलं सिद्ध्यतीति भावः ॥२॥

**तदेष श्लोकः। यानि पञ्चधा त्रीणि त्रीणि**
**तेभ्यो न ज्यायः परमन्यदस्ति ॥३॥**

यदिदानीं निरूपितं साम सामाख्यस्योपासनं तदधिकृत्य एष वक्ष्यमाणः स्तुतिरूपः श्लोकः प्रवर्तते। यानि त्रीणि त्रीणि त्रयो वेदाः त्रय इमे लोका इत्यादीनि हिंकारादिषु भक्तिभेदेषु यथाक्रममध्यस्योपास्यतया प्रोक्तानि पञ्चधा, तेभ्योऽन्यत्परमुत्कृष्टं ज्यायः—श्रेयो नास्ति। ज्यायःशब्देन श्रेयो लक्ष्यते। परमित्यस्यैवान्यदिति विवरणं वा ॥३॥

**यस्तद्वेद स वेद सर्वꣳ सर्वा दिशो बलिमस्मै**
**हरन्ति सर्वमस्मीत्युपासीत तद्व्रतं तद्व्रतम् ॥४॥**

यस्तत्सामोक्तप्रकारेण वेद स सर्वं वेद—सर्वज्ञो भवति, अतीतानागतादिसाक्षात्कारसमर्थो भवतीति यावत्। सर्वा दिशः—दिशि वर्तमाना लक्ष्यन्ते, अस्मै उपासकाय बलिं भोग्यजातं हरन्ति—उपह-

रन्ति । अस्योपासनस्येदमङ्गं—सर्वमहमस्मीति भावनम् । द्विरुक्ति-र्विद्यासमाप्तौ ॥४॥

इति द्वितीयाध्याये एकविंशः खण्डः ।

---

**विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान्सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेत् ॥१॥**

प्रसङ्गात्साम्नो गानविशेषान् सदेवताकानुपादिशति । अस्ति हि देवताविज्ञानेन फलविशेषः । साम्नः सम्बन्धि यत् विनर्दि तदहं वृणे, विनर्दः—स्वरविशेषः ऋषभकूजितसमः सोऽस्यास्तीति विनर्दि गानविशेषः । पशुभ्यो हितं चैतद्विनर्दि—इति वृणे इति पूर्वेण सम्बन्धः । इतिश्चायं प्रकारवाची । अग्नेरुद्गीथः—अग्निदेवताकं चैतदुद्गानम् । वृणे इत्युत्तम उद्गातुरभिसन्ध्या । छान्दसः पुरुषव्यत्ययो वा, वृणुते वृणुयादिति यावत् । अनिरुक्तः प्रजापतेः—अयमनेन तुल्य एवंविध इति स्पष्टं यो न ज्ञातुं शक्यते सोऽयं गानविशेषः अनिरुक्तः प्रजापतिदेवताकः । निरुक्तः सोमस्य—सोमदेवताको गानविशेषो निरुक्तः । मृदु श्लक्ष्णं च यद्गानं तद्वायोः—वायुदेवताकम् । यद्बलवत् श्लक्ष्णं तदिन्द्रस्य—इन्द्रदेवताकम् । यत्क्रौञ्चं क्रौञ्चपक्षिनादतुल्यं तद्बृहस्पतेः—बृहस्पतिदेवताकम् । यदपध्वान्तं—भिन्नकांस्यध्वनिसमं तद्वरुणस्य । उद्गाता तानेतान्सर्वानेवोपसेवेत । वारुणं तु वर्जयेत् ॥१॥

अमृतत्वं देवेभ्य आगायानीत्यागायेत् स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ॥२॥

एवं स्वरविशेषान्देवतापूर्वकं ज्ञात्वोद्गायन्नुद्गाता–एवं ध्यायीतेत्युच्यते । येभ्यो यत्प्रियं तेभ्यस्तदहं गानेन साधयानीति मनसा ध्यायन्स्तुवीत । येभ्यो यत्प्रियं तद्विशिष्योच्यते । अमृतत्वं देवेभ्य आगायानीत्यागायेत् । स्वधां पितृभ्यः, आशां–अविशेषेण गृहारामादि यद्यदभिवाञ्छितं तन्मनुष्येभ्यः, तृणोदकं पशुभ्यः, स्वर्गं लोकं यजमानाय, अन्नमात्मने इत्येतानि । अप्रमत्तः स्वरादिषु स्तुवीत ॥२॥

सर्वे स्वरा इन्द्रस्यात्मानः सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानः तं यदि स्वरेषूपालभेतेन्द्रꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ॥३॥

अथ यद्येनमूष्मसूपालभेत प्रजापतिꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयादथ यद्येनꣳ स्पर्शेषूपालभेत मृत्युꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रतिधक्ष्यतीत्येनं ब्रूयात् ॥४॥

अथ देवताः स्वरादीनामुपदिश्यन्ते । तद्विज्ञानेनोद्गातुरुद्गानकाले केनाप्यप्रधृष्यता च । सर्वे स्वराः—अकारादयोऽचः इन्द्रस्यात्मानः इन्द्रस्यैवापरास्तनवः, इन्द्रदेवताका इति यावत् । सर्वे ऊष्माणः शषसहाः प्रजापतेरात्मानः, प्रजापतिरत्र चतुर्मुखः । सर्वे स्पर्शाः कादयो मावसाना मृत्योर्यमस्यात्मानः । तमेवं देवताविज्ञानवन्तमुद्गातारं उद्गानवेलायां यदि कश्चित्स्वरेषु उपालभेत—आक्षिपेत्, तमेनमुद्गाता प्रतिब्रूयात्स्वराणां देवताभूतमिन्द्रं शरणं प्रपन्नोऽभूवम् । स त्वा प्रतिवक्ष्यति यदत्र प्रतिवक्तव्यमिति । देवताविज्ञानबलेन हानिराक्षेप्तुरेव भवेदिति भावः । अथ यद्येनमूष्मसूपालभेत—आक्षिपेत्, प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वामज्ञातासद्विज्ञानबलमाक्षिपन्तं प्रतिपेक्ष्यति—चूर्णयिष्यति इत्येनं प्रतिब्रूयात् । अथ यद्येनं स्पर्शेषूपालभेतेत्यादि स्पष्टम् ॥३–४॥

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्वे ऊष्माणोऽग्रस्ता अनिरस्ता विवृत्ता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥५॥

ज्ञापितमेतेन देवताज्ञानबलसम्पन्नमुद्गातारं नाक्षिपेदिति । अथ देवताज्ञानबलवता उद्गात्रा स्वबलेऽप्रमत्तेन भाव्यमित्याशयेनोच्यते—सर्व इति । उद्गात्रा प्रयोगवेलायां सर्वे स्वरा घोषवन्तस्तथा बलव-

न्तश्च वक्तव्याः, यदिह स्वरे आधीयमानं बलं स्वराणां देवताभूते इन्द्रे बलमाहितमिव, तदिन्द्रे बलं दधानीति मनसा विभाव्य तथा वक्तव्याः, अन्यथा देवताधिष्ठानबलं न सिद्ध्येदिति भावः। सर्वे ऊष्माणः अग्रस्ताः—अलुप्तवर्णपदा इति यावत्। अनिरस्ताः—बहिर्क्षिप्ताः—अत्वरितोदिता इति यावत्। विवृत्ताः—विवृतप्रयत्नोपेताश्च वक्तव्याः। एवं प्रयुज्यमानेन प्रजापतेरात्मानं परिददानीति विभाव्य वक्तव्या इति पूर्वेणान्वयः। प्रजापतेरिति चतुर्थ्यर्थे षष्ठी। आत्मा—बलम्। सर्वे स्पर्शा लेशेन—शनैः अनभिनिहिताः—असङ्कीर्णा अद्रुतोच्चारिता वक्तव्याः। एवं स्पर्शानां प्रयोगेण मृत्योः सकाशादात्मानं परिहराणीति विभाव्य तथा वक्तव्याः। अन्यथा प्रयोगे तद्देवताया मृत्योः प्रकोपः स्यादसङ्गतप्रयोगादपराधात्, मृत्योः प्रकोपे चात्मनाशः स्यात्। तत्तेषां साधुना प्रयोगेण मृत्योर्मरणादात्मा रक्ष्यत इति भावः। यद्वा—अधिष्ठेयेषु स्पर्शेषूच्चारणकृतो यो दोषस्तस्मान्मृत्योरात्मानं परिहराणि सुष्ठु प्रयोगेणेति विभाव्य तथा प्रयोक्तव्या इति भावः ॥५॥

इति द्वितीयाध्याये द्वाविंशः खण्डः।

---

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यलोका भवन्ति ब्रह्मसꣳस्थोऽमृतत्वमेति ॥१॥

अथ प्रणवं स्तुवन् प्रस्तौति—त्रयो धर्मस्कन्धा इति । ननु साम्नाद्युपासननिरूपणप्रकरणे कः प्रसङ्गः प्रणवस्तवनस्य ? । अयं प्रसङ्गः । इहोद्गीथावयवस्योमित्यक्षरस्योपासनं बहुधाऽभिधाय फलानि निरूपितानि नाम, तेन च परिमितफलकतैव प्रणवोपासनस्येत्यवधारणं कस्यचित्स्यात् । तत्तु व्यावर्तयितव्यम् । यदलभ्यमन्यैरुद्गीथाद्युपासनैरेतैस्तदमृतत्वं केवलेन प्रणवोपासनेन परब्रह्मोपासनविशेषभूतेन लभ्यत इति । त्रयो धर्मस्य स्कन्धाः प्रविभागाः । तत्र यज्ञः—अग्निहोत्रादिः । अध्ययनं—त्रय्या अभ्यासः । दानं—यथाशक्त्यर्थिभ्यो द्रव्यस्य, इत्ययं प्रथमः । गृहस्थाश्रम एक इति यावत् । तप एव द्वितीयः—तपश्चर्याप्रधानं वानप्रस्थं पारिव्राज्यं च लक्ष्यते तपःशब्देन, अयं द्वितीयः प्रविभागः, यमनियमादियोगादस्ति तपश्चर्या परिव्राजोऽपि । आचार्यकुलवासी—आचार्यस्य कुल एव वस्तुं शीलमस्य, आत्मानं—देहमाचार्यकुल एवावसादयन्—तत्परिचर्यादिभिः क्षपयन् यो ब्रह्मचारी भवति स तृतीयः, यस्मिन्नाश्रमे एवं भवति स तृतीयो धर्मस्य स्कन्ध इति वा । एते—उक्तधर्मविभागत्रयनिष्ठास्त्रयोऽपि पुण्यलोका भवन्ति । यदेकश्चिनोत्यन्वहं यज्ञादिधर्मम्, अपरश्च तपः, इतरश्चागृहीतदार आचार्यकुले तत्परिचर्यादिनाऽऽत्मनो घर्षणलक्षणं धर्मं पाटीर इवात्मनो घर्षणं परस्मै । इमां साधनसम्पत्तिं व्यञ्जयितुमेव यज्ञादिभिर्विभाजकैस्त्रयाणां विभजनश्रुतिः, अन्यथा आश्रमनाम्ना प्रविभागस्य सम्पत्तेः । यस्तु तत्तदाश्रमे वर्तमानोऽपि तान्यज्ञादीन्धर्मानुपसर्जनीकृत्य—अङ्गतया स्वीकृत्य, ब्रह्मसंस्थः—ब्रह्मणि परे निष्ठावान् ब्रह्मप्रणिधानपरो भवति, सोऽमृतत्वं जरामरणलक्षणसंसारसागरनिस्तरणं

प्राप्नोति। इह परे—परोऽयमेभ्यस्त्रिभ्यो यो ब्रह्मसंस्थः, स च परिव्राडेव, अस्मिन्नेव प्रवृत्तिनिमित्तयोगात्, ब्रह्मनिष्ठा ह्यस्य पदस्य प्रवृत्तौ निमित्तम्, सा च तेषु धर्मस्कन्धेषु न घटेत, अद्वितीयात्मप्रत्ययो हि ब्रह्मनिष्ठा। इदमेव चौपनिषदं विज्ञानम् 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'नेह नानाऽस्ति किञ्चन' 'नान्योऽतोऽस्ति द्रष्टा' 'आत्मैवेदं सर्वम्' 'सर्वं खल्विदं ब्रह्म' इति श्रूयते। इयं च विद्या नानुपमृद्य भेदमखिलमुद्भवितुमर्हति। यज्ञोऽध्ययनमित्यादयस्तु धर्मा भेदोपजीव्याः। तदेषु धर्मस्कन्धेषु ममेदं कर्तव्यमित्यभिसन्धिसंवलितेषु विधिनिषेधलक्षणेषु भेदावलम्बेषु कथं नाम घटेत सा ब्रह्मनिष्ठा, कथं वा धर्माणामुपसर्जनीभूय वाऽस्यां सहकारिता, उपमर्द्येनोपमर्दकस्य सहकार इति बाधितं वचः। यस्त्वनेकजन्मभिरनुवर्तितैरेभिर्धर्मस्कन्धैः प्रमृष्टकषायया निर्मलया बुद्ध्याऽवधार्य भेदानामाभासतां व्यावहारिकाद्विधिनिषेधसम्बन्धादुत्तीर्णः सोऽयं परिव्राट् ब्रह्मसंस्थामधिकरोति, तदेवमर्थस्वभावपरिशीलने ब्रह्मसंस्थो गृहस्थात् तपस्विनो वानप्रस्थात् नैष्ठिकाद्गुरुकुलवासिनश्चातिरिक्त एव ब्रह्मसंस्थशब्देन निर्दिश्यत इति विज्ञायत इत्याहुः। एतावदिह विचार्यम्—यादृगभिमतं परैरद्वितीयात्मविज्ञानमखिलभेदोपमर्दकं तत्तथैवावेदयन्त्युपनिषदो न वेति, येनार्थस्वभावो लिङ्गं सदसदिति विनिश्चितं स्यात्। अद्वितीयमात्मानमवगमयन्ति नामोपनिषदः; द्वितीयमखिलमात्मन्यधिष्ठाने कल्पितमविद्याविलास इत्यद्वितीयमात्मतत्त्वमिति तु न। तथा विशेषस्याश्रवणात्। श्रूयन्ते तु वियदादीनां सर्वेषां भेदानामात्मनो जनिप्रभृतयो धातुविशेषैः।

'आत्मन आकाशः सम्भूतः' 'यतो वा इमानि भूतानि जायन्ते' 'तत्तेजोऽसृजत' 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्' 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्' 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' 'इदं सर्वमसृजत' 'ततो वै सदजायत' 'स ईक्षत लोकान्नु सृजा' इति। 'स इमाँल्लोकानसृजत' 'स यथोर्णनाभिस्तन्तुनोच्चरेत्' 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवा' इति। न ह्यध्यासे स्वरसा गतिर्जन्यादेः। नहि शुक्तौ रजतमध्यास इति ज्ञापयन्कोऽपि प्रयुङ्क्ते शुक्तौ रजतं जायते सम्भवति व्युच्चरति सृज्यत इति वा। प्रातिभासिकस्योत्पत्तिरिति तु परिभाषा केवलम्। प्रतिभास एव क्वचित्कस्यचित्। न श्रूयते चाभासशब्दस्तत्र। श्रुतेश्चेदस्याऽऽभासताऽभिमता, सा तर्हि किमिति न श्रावयति 'आत्मनि आकाश अध्यासः' 'यस्मिन्भूतानि अध्यस्यन्ते' इत्यादि। येन हार्दं प्रकाशेत। स्वतन्त्रा श्रुतिरिति चेत्, स्वातन्त्र्यं हि पर्यायेषु घटेत। तदर्थान्तरे शब्दं नयन्व्याख्यातैव स्वतन्त्रो गण्येत। ननु श्रूयन्तां नाम जनिस्थितिलयास्तत्र तत्र धातुविशेषैरेव, तावता भेदानां न सत्यत्वसिद्धिः, प्रत्युत मिथ्यात्वस्यैव। उपादानस्य ब्रह्मणः सत्यत्वं तदुपादेयस्यास्य सर्वस्य मिथ्यात्वं

चाभिप्रेत्य श्रावयति हि दृष्टान्ततया मृद्घटशरावादीन्—'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मित्यादि। अनेन पामराणां विकारे यः पारमार्थ्यभ्रमः स व्युदस्यते। घटः शराव इति वागेव केवलं न परमार्थतो वस्त्वस्ति विकार इति, मृत्तिकैवोपादानं सत्यमिति। एवं तत्र तत्रोपादानोपादेयभावस्थले उपादेयस्य मिथ्यात्वमुपादानस्य सत्यत्वं च बहुभिर्दृष्टान्तैरुपपाद्य जगतश्च ब्रह्मोपादानतानिरूपणद्वारा सर्वस्य मिथ्यात्वं ब्रह्मण एव सत्यत्वं च 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मे'ति श्रुत्यैव विशदीकृतम्। नैतत्। न ह्यनेन विकाराणां मिथ्यात्वं प्रत्याय्यते—अनुपपत्तेः, न किं घटादिना जलाहरणादि, न किं पटेन आच्छादनादि, किं वा शुक्तिरूप्येण राजतं स्थाल्यादि, किं वा मृगतृष्णिकया पिपासोपशमः। तदेवमनुपपन्नमर्थं प्रदर्शयद्वचनमप्रमाणकोटौ स्यात्। ननु नेदं वचनं कस्यचित्, स्वतःप्रमाणं श्रुतिरिति चेत् किं तावता। 'आयुर्वै घृतम्' 'आदित्यो यूप' इति श्रौतं वच इति किमिष्यते घृतस्यैवायुष्ट्वं यूपस्यैवादित्यत्वम्, दृष्टोपहत्या तत्र लक्षणया प्रामाण्यमिति चेत् किं घटशरावादीनां मिथ्यात्वे न सोपहतिः। यथा यूपादित्ययोस्तादात्म्यं प्रत्यक्षोपहतम्। तथैव घटशरावादीनां मिथ्यात्वमपि प्रत्यक्षोपहतम्। ननु न मूढग्राहेण विकारस्य मिथ्यात्वमवगमयति श्रुतिः, अपि तु प्रात्यक्षिकेनैव पथोपपादयति नाम विकारस्य मिथ्यात्वम्। घटः शरावो मणिकेति विविधं व्यवह्रियमाणमपि न लक्ष्यते मृद्द्रव्यादुपादानादन्यदर्थतत्त्वम्, तत् वागालम्बनं शब्दमात्रम्, असत्यर्थे चेत् शब्दः प्रवर्तेत

तत्सिद्धं विकारस्य मिथ्यात्वमिति। मैवं। न ह्यर्थो नास्ति अस्त्येव मृद्द्रव्यम्, आह च भवान्—न ततोऽन्यदिति। तेनानन्यत्वं कार्यदशायां वस्तुन उक्तं स्यात्। कथमेवं सति कार्यस्यासत्यत्वम्। न हि सत्यमिथ्यात्वयोरेकता। नहि शुक्तेरनन्यद्रजतम्। असत्यर्थभेदे शब्दभेदो मिथ्यावलम्बीति चेत्, किमसत्यप्यर्थभेदे घटः कलश इति शब्दभेदः प्रवर्तमानो मिथ्यावलम्बी। किं वैकस्मिन्नेव पिण्डविशेषे पिता भ्राता पुत्र इत्यादयः शब्दाः प्रवर्तमाना मिथ्यावलम्बनाः। ननु मिथ्यावलम्बना एवैतेऽपि। इदमनुभवतो विरुद्धं, उपपत्त्या मिथ्यात्वं घटयितुमुपक्रान्तं ह्यधुना। धर्मिणो देवदत्तस्यैक्येऽपि प्रवृत्तिनिमित्तभेदाः पितृत्वभ्रातृत्वादयो मिथो भिन्नाः सन्तीत्यर्थभेदस्तत्रेति चेत्—इहापि मृद्द्रव्यैक्येऽपि घटशरावत्वाद्यवस्था मिथो भिन्नाः सन्तीत्यर्थभेदोऽव्याहत एव। इदमपरं पृच्छ्यते—अपि घटशरावाद्यर्थभेदेऽसत्यपि घटः शराव इसि नामैव केवलं प्रवर्तत इति मन्यते भवान्?, येन मिथ्यावलम्बनं तत्तन्नामसु मन्यते। मन्यत एवेति चेत्। हन्त सर्वथाऽर्थविधुरम्। अथ च नामेति किम्। घोषो हि तथा स्यात्। नाम त्वर्थेन नियतम्। भ्रान्तेन शुक्तौ प्रयुज्यमानो रजतमिति शब्दोऽपि न सर्वथाऽर्थविधुरः। अस्ति हि लोके रजतम्। शुक्तावसतः स्वार्थतादात्म्यस्य ग्राहकतया तु मिथ्यावलम्बनत्वं तस्य। तत्—घटशरावादयो नार्थभेदाः, नामैव केवलं घटः शराव इति, तन्मिथ्या विकारः, इति श्रुतिरुपपत्तितो घटयतीत्यसङ्गतम्। यदि मन्यते—आदिशति श्रुतिरपूर्वमर्थं नामैव केवलम्, घटादयो विकारा मिथ्या, मृदेव सत्यमिति। इम-

मसम्बद्धमर्थमादिशति श्रुतिरिति वदता श्रुतेरप्रमाणकोटावेव निवेशः कृतः स्यात् । अनुभवविरुद्धेऽप्यस्मिन्नपूर्वेऽर्थे प्रामाण्यमिति चेत्, 'आदित्यो यूप' इति वाक्यमप्यपूर्वमादित्ययूपतादात्म्यमनुभवविरुद्धमवगमयदेव प्रमाणकोटौ किं न स्यात् । अपि च–किमर्थोऽयमादेशः ? यन्निदर्शितं 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या'दिति, तत्रासम्भवमाशङ्कमानं समाधातुम् । किमादेशेनाशङ्का निवार्येत, उपपादनं तु कर्तव्यम् । उपपत्तिस्तु न । अपूर्वश्चार्थः । निदर्शनशेषभूतेन वचनेनोपपन्नार्थकेन प्रसिद्धार्थकेन च भाव्यम् । तद्वा निदर्शनं कस्मै ? प्रतिज्ञातस्यैकविज्ञानेन सर्वविज्ञानस्य सङ्गमनाय, शुक्तिरूप्यादिनिदर्शनेनापि तत्सङ्गमनं सुकरम् । विकाराणां मिथ्यात्वोपपादनसापेक्षेण कारणनिदर्शनेन को विशेषः, ब्रह्मव्यतिरिक्तस्य मिथ्यात्वेनैव ह्येकविज्ञानेन सर्वविज्ञानसङ्गमनं विवक्षितम् । ननु–यद्यपि शुक्तिरूप्यनिदर्शने सति सुकरं नामैकविज्ञानम्, परं जगत्कार्यकारणभावापन्नं कथं शुक्तिरूप्यवत्स्यादित्याशङ्काऽपरिहृतैव स्यात्, सा परिहर्तव्येति विकारो न वस्तुतत्त्वं नामैव केवलं मृत्तिकेत्येव सत्यम् । तत् यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् तथैकस्मिन्नखिलोपादानेऽस्मिन् विज्ञाते सर्वं विज्ञातं स्यादिति निदर्शितमिति चेत् । किमनेन वाङ्मात्रेण साऽऽशङ्का निवार्येत, घटशरावादिविकाराणां जलाहरणादिकार्यक्षमाणां मिथ्यात्वं कथं स्यादित्यनुपपत्तिस्तु जागर्त्येव । तदनुपपन्नमर्थं श्रुतिरुपपादयतीत्यसङ्गतम् ।

१ आज्ञया । २ विकारमिथ्यात्वरूपोऽर्थोऽप्रसिद्धः । ३ उपपत्तिमुखेन बोधने चेत् श्रुतेर्हार्दं इदमनुपपन्नमर्थं श्रुतिर्न ब्रूयादिति भावः ।

तदुपपन्नेनैवार्थेन भाव्यम् । उपपन्नश्चायमर्थः—यथा सौम्यैकेन मृत्पिण्डेन विज्ञातेन मृण्मयं घटशरावादि निखिलं विज्ञातं स्यात्, कथमेतत् ?, घटशरावादयो ह्यर्थान्तरं व्यवहारविभेदात् । मैवम्—नार्थान्तरमुपादानात्, मृत्तिकैव मृण्मयमखिलमित्येतत्सत्यम् । अदुष्टनयनैरपि तदेव हि द्रव्यं गृह्यते न वा तद्द्रव्यबाधः । वाचारम्भणं विकारः अन्यान्यवाचामालम्बनं तु विकारः—विकारभेदः, घटेन जलमाहर, शरावे भर्जय मुद्गानित्यादयो भिन्ना भिन्ना व्यवहाराः घटत्वशरावत्वाद्यवस्थाभेदनिबन्धनाः, न द्रव्यान्तरत्वनिबन्धना इति यावत् । अत एव नामधेयभेदः, तद्द्रव्यैक्यादुपादाने विज्ञाते उपादेयं विज्ञातं स्यादिति । यद्वा—यद्वाचारम्भणं आरम्भणमारम्भः वाचाऽऽरम्भः, व्यवहार इति यावत्, घटेन जलमाहरेत्यादिर्यो व्यवहारविशेषः, यश्च घटत्वशरावत्वादिर्विकारोऽवस्थाविशेषः, यच्च घट इति नामधेयं तदिदमखिलं मृत्तिकैव—मृद्द्रव्यसम्बद्धमेव, न द्रव्यान्तरसम्बद्धम् । तदेकसम्बद्धत्वात्तदिति निर्देशः, इति तु सत्यम्—मृद्द्रव्यसम्बद्धमित्येव प्रामाणिकम् । अस्ति व्यवहारविशेषः, अस्ति नाम विकारविशेषः, अस्ति नाम नामधेयभेदः, नैतावता द्रव्यभेदास्तदानीमपि मृत्तिकेत्येव सत्यम्, प्रमाणत उपलभ्यमिति वा योजना । यद्वा—यो घटशरावादिर्विकारभेदः स केवलं वाचारम्भणं वागालम्बनं नामधेयम्—नामधेयभेद एव केवलम् । नामधेयभेदनियतः केवलं न तु

---

१ वाचाशब्दस्य व्यवहारे लक्षणेति भावः । २ मृत्तिकैकसम्बन्धत्वात् मृत्तिकैवेति निर्देश इति । ३ लाक्षणिकोऽयमर्थः ।

द्रव्यभेदनियतः, अन्यान्योपादानका घटपटादिविकारभेदा यथा नामभेदेन द्रव्यभेदेन च नियताः, न तथैकोपादानका मृण्मया घटशरावादयः । किन्तु केवलेन नामभेदेन नियताः । यन्मृत्तिकेत्येव सत्यम्, मृण्मयमखिलं घटशरावादि मृत्तिकेत्येव विकारदशायामपि प्रमाणतो गृहीतमबाधितं भवतीति । नैतावता विकाराणां मिथ्यात्वावगमः । यदपि 'आत्मैवेदं सर्वम्' 'सर्वं खल्विदं ब्रह्मे'ति वचनम् । तदपि सर्वस्यास्य मिथ्यात्वेऽनैकान्तिकं लिङ्गम् । तद्धि जगति आत्मनो ब्रह्मणस्तादात्म्यमवगमयद्विश्राम्यति । न च तादात्म्यं जगतो मिथ्यात्वं विना नानुपपन्नम्, येन मिथ्यात्वे तत्कल्पकं स्यात् । 'नेह नानास्ती'ति वाक्यं तु धर्म्यन्तरसद्भावं न सहते नतु धर्मबाहुल्यमपि । तदिदं तत्तद्वचनविवरणावसरे व्यक्तमुपपादयिष्यामः । ननु उपादेये उपादानानतिरिक्ततोपपादनमुखेनाप्यन्ततः प्रपञ्चे आत्मानतिरिक्तताया एव निरूपणेनात्माद्वैतज्ञानमुपमर्दकं भवेदेव यज्ञो दानमित्यादीनां धर्मस्कन्धानां क्रियाकारकविभेदनियतानाम् । मैवम् । मृदनतिरिक्ततां घटशरावविकारे जानतः किमुपरुध्यते जलाहरणादिव्यवहारः, किंवा जलाहरणादिना मृदात्मकताज्ञानमुपरुध्यते, एवमेव सर्वात्मनः परस्य ब्रह्मणः सर्वोपादानस्योपादेयभूतमिदं ततोऽनतिरिक्तं जानतोऽपि यथांशं व्यवस्थितेन स्वभावभेदेन धर्मान्वयो यथायोग्यमप्रतिहत एव । इयांस्तु विशेषः । यः पुनरजानन्कृत्स्नस्य ब्रह्मोपादानकतया ब्रह्मात्मतामहमस्मि स्वतन्त्रः कर्ता भोक्तेत्यात्मानं मन्वानः कर्म केवलं यथावर्णं यथाश्रमं करोति स तु भ्रान्त एवेति केवलस्य धर्मस्यानुष्ठानात्पुण्यलोको भवति ।

यः पुनः ब्रह्मसंस्थः ब्रह्मात्मकतया जानन्करोति स तु तथाविधेन कर्मणा अभ्यस्यमानस्य ब्रह्मविज्ञानस्य सहायसम्पत्तिमप्रमादकरणग्रामसम्पत्त्या समधिगतः प्राप्नोति परं ब्रह्म । अतएव च स्मर्यते—'ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना' इति । ननु—चिदचिद्विभागं ब्रह्मणोऽत्यन्तविलक्षणं पारमार्थिकमभ्युपगच्छतां ब्रह्मानन्यत्वं जगति कथम्?, घटशरावादिविभाग इव मृत्पिण्डस्य ब्रह्मण एव चेदयं विभागो वास्तवो विलक्षणस्वभावता कथम्?, कथं? वाऽविकारित्वं ब्रह्मणः, इदमुपरिष्टादुपपादयिष्यामः । तदुक्तेन प्रकारेण धर्मस्कन्धविभागे तत्र तत्र ब्रह्मनिष्ठायां विरोधाभावात् 'ब्रह्मनिष्ठोऽमृतत्वमेती'ति वाक्यं नातिक्रान्तधर्मस्कन्धमेव गृह्णातीति । अत एव याज्ञवल्क्यादयो ब्रह्मविदग्रेसराः स्मर्यन्ते । इदमिहावधार्यम्, यो निर्विण्णः कर्मचितेभ्यो लोकेभ्यः, नित्यमेकमनवधिकानन्दं वाञ्छन्, श्रोत्रियं ब्रह्मनिष्ठमुपगम्य गुरुम्, ततो विज्ञाय ब्रह्मस्वरूपं स्वयं मननेन निश्चित्य च तथा, ततश्च तद्ब्रह्मापरोक्षाय प्रवृत्तः ब्रह्मात्मकं स्वात्मानमनुसन्धाय, ब्रह्मात्मकतयाऽनुसंहितैर्यथाश्रमं प्राप्तैः परिग्रहैः ब्रह्मण एवाराधनरूपतया कर्म कुर्वन्, अनेन च कर्मानुष्ठानेनाक्लेशेन ब्रह्मभावनायामेवानुकूल्यमुपगतैरखिलैरिन्द्रियैरन्तःकरणमप्यन्वहमुन्मुखयन्ब्रह्मप्रणिधाने, तेनान्तःकरणेन काले काले योगपथेन ब्रह्मणः स्मरणाभ्यासलक्षणं प्रणिधानमनुतिष्ठति । सोऽयं ब्रह्मनिष्ठो गृहे वा वने वा स्यात्, नात्राश्रमविशेषनियमः । स एवमन्वहमनुष्ठीयमानेन ब्रह्म-

प्रणिधानलक्षणस्मरणाभ्यासपाटवेन यदा ब्रह्मणोऽपरोक्षमधिगच्छति, निमग्नो नाम तदा भवत्यनिर्वचनीये क्वापि महानन्दे परितः प्रवृत्तेऽपारे, तदा च्यवति नाम सर्व एव वर्णाश्रमादिपरिग्रहः प्रसुप्तहस्तादिव व्यजनम्। अतएव स्मर्यते—'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते' इति ॥१॥

**प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवःस्वरिति ॥२॥**

केवलधर्मनिष्ठात् ब्रह्मनिष्ठः फलममृतत्वमुत्तममाप्नोतीति प्रस्तुतं 'ब्रह्मसंस्थोऽमृतत्वमेती'ति। ब्रह्मणि या सम्यक्स्थितिर्निध्यानलक्षणा सा च प्रणवेनालम्बनेन भवतीत्यभिप्रेत्य तस्य तथात्वे आनुगुण्यं ज्ञापयंस्तस्य महिमानमाह—प्रजापतिरिति। यो ब्रह्मसंस्थः प्रणवसंस्थः सोऽमृतत्वमेतीति साक्षात्प्रणव एव वा प्रस्तुतः। प्रणवे स्थितिः परमात्मालम्बनतयेत्यमृतत्वे हेतुः। प्रजापतिः पुरा सारमुद्दिधीर्षुः लोकानिमानभ्यतपत् विवेचनाग्नौ, किं सारमिति पर्यालोचयदिति यावत्। पर्यालोचनलक्षणेनाग्निनाऽभितप्तेभ्यस्तेभ्यो लोकेभ्यस्त्रयी विद्या संप्रास्रवत् द्रवीभूय निरगच्छत्। त्रयी सारत्वेन प्रजापतेः प्रतिभागोचराऽभूदिति यावत्। सारतरसञ्जिघृक्षया पुनस्तां त्रयीमभ्यतपत्। तस्या अभितप्तायाः त्रय्या भूर्भुवःस्वरितीमान्यक्षराणि संप्रास्रवन्। पूर्ववदाशयः ॥२॥

तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओङ्कारः संप्रास्रवत्तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोङ्कारेण सर्वा वाक् संतृण्णोङ्कार एवेदꣳ सर्वमोङ्कार एवेदꣳ सर्वम् ॥३॥

सारतमसञ्जिघृक्षया पुनस्तान्यक्षराण्यभ्यतपत्तेभ्य ओङ्कारः संप्रास्रवत् । पूर्ववदाशयः । सर्वस्यास्य नामरूपविभेदस्य मूलं त्रयीति सारता तस्याः, त्रय्या व्याहृतिर्मूलमिति व्याहृतेः सारतरता, व्याहृतिमूलत्वादोङ्कारस्य सारतमता । एवं सारतमत्वमहिमानमभिधाय ब्रह्मणा साम्ययोगमुपस्थापयति—तद्यथेति । यथैकेन शङ्कुना नालेन सर्वाणि—बहूनि पर्णानि संतृण्णानि—संदब्धानि—व्याप्तानि तथा ओङ्कारेणानेन वाक्सर्वा—वाचकराशिरखिलः संतृण्णा, प्रणवः सर्वस्य वाङ्मयस्य मूलं सर्वस्यार्थस्य परं ब्रह्मेवेति यावत् । तथाच व्याप्त्या साम्यं ब्रह्मणाऽस्य ज्ञापितं भवति । सर्वमिदमोङ्कार एव, कथमेतत् ?, ॐकारो ह्यमूर्तं ब्रह्मणः किमप्यालम्बनम्[1], ब्रह्मैव चेदं सर्वं ब्रह्मणः कार्यमिति । वाच्यवाचकयोरभेदाध्यवसायेन तत्तदर्थानां तत्तद्वाग्भेदे सर्वासां वाचामोङ्कारमूलकतया ॐकारेणाभेदे ॐकार एवेदं सर्वमर्थजातमिति वा ॥३॥

इति द्वितीयाध्याये त्रयोविंशः खण्डः ।

---

१ यदालम्बनकं यत् तयोरभेदाध्यवसायादिति यावत् ।

**ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनꣳ रुद्राणां माध्यन्दिनꣳ सवनमादित्यानां च विश्वेषां च देवानां तृतीयसवनम् ॥१॥ क्व तर्हि यजमानस्य लोक इति स यस्तन्न विद्यात्कथं कुर्यादथ विद्वान्कुर्यात् ॥२॥**

'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यारभ्याध्यायद्वयेन कर्माङ्गभूतप्रणवाद्युपासनमुक्तम् । अन्ते प्रणवस्य यो महिमा स्वातंत्र्येण साक्षाद्ब्रह्मोपासनान्वयेन स तु निरूपितः । कर्मप्रसङ्गात्कर्मणि यज्ञे अङ्गभूतानि सामहोममन्त्रोत्थानान्युपदिशन्नाह—ब्रह्मेति । सामादीनां रूपं त्वनुपदं 'पुरा प्रातरनुवाकस्ये'त्यादिना व्यक्तीकरिष्यति । तत्रादाविदमाह—इयमिह हानिः, अनेन इयमित्थं समाधेयेति जानन्कुर्यात्सामाद्यङ्गमिति, यद्यपि जानन्नजानन्वा कुर्यात् । श्रुतं हि—'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदे'ति । अथापि तेषामङ्गदार्ढ्यायेदमाह । ब्रह्मवादिनो—वेदविदो ह्येवं वदन्ति, प्रातःसवनं प्रसिद्धं कर्मनामधेयम्, लक्ष्यते तत्सम्बन्धी पार्थिवो लोकः, तद्वसूनां—वसवस्तस्येशा इति यावत् । माध्यन्दिनं रुद्राणां—माध्यन्दिनसम्बद्धस्यान्तरिक्षस्य रुद्रा ईशाः । तृतीयं सवनमादित्यानां विश्वेषां च देवानाम्—तृतीयसवनसम्बद्धस्य द्युलोकस्यादित्या विश्वेदेवाश्च यजमानाः । क्व तर्हि यजमानस्य लोकः—एवं त्रयो लोकास्तेषां तेषां वशेऽभूवन्, यजमानस्य कर्मणा प्राप्यो लोकः क्व[1] । न कश्चिदवशिष्यते । अथ कृतेन कर्मणा किम्, हानिरेव कर्मणः । यस्तन्न विद्यात्कथं कुर्यात्—

1 कर्मणि गुणीभावं विनेति यावत् ।

ईदृशी कर्मणि हानिः परिहारश्चायमित्थमित्येतद्यो न विद्यात् स कथं कुर्यात् । कथमर्थवत्कर्म भवेदित्याक्षेपे । इयमिह हानिः अनेनेयं परिहार्यते इत्यजानताऽप्यनुष्ठेयतां केवलं जानताऽप्यनुष्ठीयमानैर्वक्ष्यमाणैरङ्गैः सा परिह्रियेत नाम । अथाप्यङ्गानुष्ठानदार्ढ्यायाक्षिप्यते—कथं कुर्यादिति । अथेमां हानिं वक्ष्यमाणस्य तत्परिहारे हेतुतां च जानन्वक्ष्यमाणप्रकारेण कुर्यादिति वदन्तीति पूर्वेण सम्बन्धः ॥१–२॥

पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवꣳ सामाभिगायति ॥३॥ लो ३ कद्वारमपावा ३ र्णू ३ ३ पश्येम त्वा वयꣳ रा ३ ३ ३ ३ ३ हुं ३ आ ३ ३ जा ३ यो ३ आ ३ २ १ १ १ इति ॥४॥

किं कुर्यात् तद्विविच्याह—पुरेत्यादिना । प्रातरनुवाकस्योपाकरणात्पुरा—प्राक् प्रातरनुवाकारम्भात् गार्हपत्यस्य जघनेन—गार्हपत्याग्नेः पश्चाद्भागे उपविश्य स विद्वान्, वसवो देवा यस्मिंस्तद्वासवं सामाभिगायति—अभिगायेत् । अपूर्वत्वादर्थस्य विधिरुन्नेयः । किं तत्साम ?, लोकद्वारमपावृणु पश्येम त्वा वयं राज्यायेति—हे अग्ने योऽयं पृथिव्याख्यस्तस्य द्वारमपावृणु—उद्घाटय, तेन द्वारेण वयं त्वां राज्याय पार्थिवोपभोगायेति यावत्, पश्येम ॥३–४॥

अथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष यजमा-

नस्य लोक एतास्मि ॥५॥ अत्र यजमानः पर-
स्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्ति-
ष्ठति तस्मै वसवः प्रातःसवनꣳ संप्रयच्छन्ति ॥६॥

अथ—सामाभिगानानन्तरं जुहुयादनेन मन्त्रेण । नमोऽग्नये पृथिवीक्षिते इत्यादि मन्त्रस्वरूपम्, पृथिवीक्षिते—पृथिव्यां निवसते, लोकक्षिते—लोकेषु निवसते, पृथिव्याख्यलोकनिवासायेति समुदिताग्नयो वा, एवंभूतायाग्नये तुभ्यं नमः। यजमानाय मे मह्यम्, लोकं—पृथिव्याख्यम्, विन्द—लभस्व, एष वै यजमानस्य मम फलभूतो लोकः, आयुषः परस्ताद्यजमानोऽहमेतास्मि, अत्र मदर्थं त्वं प्रथममिमं लोकं लभस्व परस्तान्मदागमने उपरोधो माभूदिति भावः । स्वाहेत्यनेन मन्त्रेण जुहोति। अथापजहि परिघमित्युक्त्वोत्तिष्ठति—परिघमर्गलं अस्य लोकस्य अपजहि—अपसारय, एवं साममन्त्रोत्थानलक्षणैः कर्मशेषैर्वशीकृतलोकाय तस्मै वसवः प्रातःसवनसम्बद्धपृथिवीलोकं प्रयच्छन्ति ॥५-६॥

पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेना-
ग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रꣳ सामा-
भिगायति ॥७॥ लो ३ कद्वारमपावा ३ र्णू ३ ३
पश्येम त्वा वयं वै रा ३ ३ ३ ३ ३ हुं ३ आ
३ ३ जा ३ यो ३ आ ३ २ १ १ १ इति ॥८॥
अथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोक-

क्षिते लोकं मे यजमानाय विन्दैष वै यजमान-
स्य लोक एतास्मि॥९॥अत्र यजमानः परस्तादा-
युषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै
रुद्रा माध्यन्दिनꣳ सवनꣳ संप्रयच्छन्ति ॥१०॥

आग्नीध्रीयस्य—दक्षिणाग्नेः । वैराज्याय—अन्तरिक्षलोकफलाय, माध्यन्दिनसवनं—तत्सम्बद्धमन्तरिक्षलोकम् ॥७—१०॥

पुरा तृतीयसवनस्योपाकरणाज्जघनेनाहवनीय-
स्योदङ्मुख उपविश्य स आदित्यꣳ स वैश्व-
देवꣳ सामाभिगायति ॥११॥ लो ३ कद्वारम-
पावा ३ र्णू ३ ३ पश्येम त्वा वयꣳ स्वारा ३
३ ३ ३ ३ हुं ३ आ ३ ३ ज्या ३ यो ३ आ ३
२ १ १ १ इत्यादित्यम् ॥१२॥ अथ वैश्वदेवं
लो ३ कद्वारमपावा ३ र्णू ३ ३ पश्येम त्वा
वयꣳ साम्रा ३ ३ ३ ३ ३ हुं ३ आ ३ ३ ३
यो ३ आ ३ २ १ १ १ इति ॥१३॥ अथ जु-
होति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो
दिविक्षिद्भ्यो लोकं मे यजमानाय विन्दत

॥१४॥ एष वै यजमानस्य लोक एतास्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपहत परिघमित्युक्त्वोत्तिष्ठति ॥१५॥ तस्मा आदित्याश्च विश्वे च देवास्तृतीयं सवनꣳ संप्रयच्छन्त्येष ह वै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद ॥१६॥

स्वाराज्याय–स्वर्गे यद्राज्यं तस्मै । तृतीयं सवनं तत्सम्बन्धि द्युलोकं य एवं लोकतत्साधनभावादिकं उक्तेन प्रकारेण वेद एष वै यज्ञस्य मात्रां–याथात्म्यं वेद । समास्यर्थोऽभ्यासः ॥११-१६॥

इति द्वितीयाध्याये चतुर्विंशः खण्डः ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण–परमहंसवर्य–परमयोगिराज–श्रीगोपालानन्दस्वामिविरचिते छान्दोग्योपनिषद्भाष्ये द्वितीयोऽध्यायः ॥२॥

---

## अथ तृतीयोऽध्यायः ।

ॐ असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवꣳशोऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥१॥ तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एव मधुकृतः ऋग्वेद एव पुष्पं ता अमृता आपः ता वा एता ऋचः॥२॥ एतमृग्वेदमभ्य-

तपसस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥३॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितꣳ रूपम् ॥४॥

अध्यायद्वयेन कर्माङ्गावलम्बनान्युपासनान्युपदिष्टानि, तेनोपासनवर्त्मनि कर्मपराणामपि रुचिरुदपादि । अथोपासनविशेषा निःश्रेयसैकान्ता उपदिश्यन्ते । तत्र योऽयमादित्यो ज्योतिष्मान्सर्वेषामध्यक्षः, तद्द्वारा परस्य ब्रह्मण उपासनमिहोपदिश्यते । यद्यप्यसौ वा आदित्य इत्यविशेषेणोपक्रम्य मधुत्वमादित्ये निरूप्यमाणं मधुविद्याया ब्रह्मविद्यात्वाभावमापाततोऽवगमयति, अथाप्यन्ते 'य एतामेव ब्रह्मोपनिषदं वेदे'त्युपसंहारात् 'नैव तत्र स निम्लोच नोदियाय कदाचन' इति ब्रह्मलिङ्गश्रवणाच्च सेयं मधुविद्या आदित्यद्वारा ब्रह्मणि वर्तत इत्येव निश्चीयते । तथा चेहादित्यशब्द आदित्यद्वारा परमात्मानमवगमयतीति बोध्यम् । असौ वा—यः प्रत्यक्षमीक्ष्यते सर्वैरस्माभिः यः पुण्यकर्मिणां परलोकेऽयनम्, अयमादित्यो देवमधु—देवानां मधु, देवा ह्यस्य रूपविशेषमनुभूय मोदन्ते तद्देवमधु । अथास्मिन्प्रसिद्धमधुदृष्टये रूपयति मधुसम्पत्तिम्—तस्येत्यादिना । तस्य आदित्यलक्षणस्य मधुनो द्यौरेव तिरश्चीनवंशः—मधुनिष्पादनावलम्बदण्डस्थानापन्नो द्युलोकः, स च तिर्यक्प्रसृत इव लक्ष्यत इति तिरश्चीनवंश इति रूप्यते । तस्यान्तरिक्षमपूपः सूर्यमण्डलावच्छेदक आकाशप्रदेशो

---

१ आदित्यशरीरकपरमात्मोपासनमुपदिश्यत इति भावः ।

मध्वपूपस्थानीयः । द्युवंशे लग्नो मध्वपूप इवान्तरिक्षं लक्ष्यते । मरीचयः पुत्राः—मरीचयो रश्मयः, रश्मिस्थाः आपो लक्ष्यन्ते, आदित्येन रश्मिभिराकृष्यन्ते भौम्य आपः । ता एव पुत्रा भ्रमरस्य, भ्रमरबीजभूताः कीटा इति यावत् । मध्वपूपे हि सूक्ष्मच्छिद्रेषु कीटाः सन्निहिता भवन्ति । तस्य—आदित्यस्य ये प्राञ्चो रश्मयः प्राचीदिगवच्छिन्ना रश्मयः ता एवास्य प्राच्यो मधुनाड्यः—मध्वाश्रयभूता नाड्यः, छिद्राणीति यावत् । ऋच एव ऋङ्मन्त्रा एव मधुकृतः—मधुकराः । ऋग्वेद एव पुष्पं, ऋग्वेदविहितं कर्मेह ऋग्वेदशब्देन लक्ष्यते, न हि केवलशब्दराशौ कश्चन रसः, येन पुष्पता घटेत । येन रसेन पुष्पता कर्मणः, यो रसो नीतो मधुकरैर्मधुतां प्राप्नोति स रसः क इत्यत्राह—ता अमृता आपः, याः कर्मसु सोमाज्यपयोरूपा अग्नौ प्रक्षिप्यमाणाः प्रसिद्धास्ता एवेहामृता आपः स्वादुतमा रसांशाः । अस्योपासनस्यामृतत्वोपयोगितया अमृता वा । ता वा एता ऋचो मधुकरा एतमृग्वेदं पुष्पमभ्यतपन्—आचूषणमिहाभिताप उच्यते । आचूष्यमाणं हि पुष्पं मुखोष्मणा संसृज्यते एवं ऋङ्मन्त्रैः शस्त्राद्यङ्गभावमुपगतैरतिशयं गमितात्कर्मणो मधुनिर्वर्तको रस इव सोऽयं प्रास्रवदिति यावत् । कोऽसौ रसः ? यशः, तेजः शारीरम्, इन्द्रियं—अविकलेन्द्रियता, वीर्यं बलं, अन्नाद्यं च । तद्व्यक्षरत्—तन्मधु विशेषेणाक्षरत् । तदेवादित्यमण्डलमभितोऽश्रयत्, यदेतदादित्यस्य रोहितं रूपं दृश्यते तदेवैतन्मधु । तथाच दिवि तिरश्चीनवंशदृष्टिः, अन्तरिक्षे मध्वपूपदृष्टिः, मरीचिसम्बद्धास्वप्सु कीटदृष्टिः, कर्मणि पुष्पदृष्टिः, आज्यादिषु पुष्परसदृष्टिः, यशःप्रभृतिषु फलेषु आपन्नम-

धुभावपुष्परसदृष्टिः, आदित्यस्य लोहिते रूपे तन्मधुदृष्टिरित्येवं क्रमेण आदित्ये देवमधुत्वसम्पत्तिरिति भावः ॥१-४॥

इति तृतीयाध्याये प्रथमः खण्डः ।

---

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ॥१॥ तानि वा एतानि यजूꣳष्येतं यजुर्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ॥२॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लꣳ रूपम् ॥३॥

अथास्य रूपान्तरे मध्वन्तरदृष्टिरुच्यते । अयं हि चित्रभानुः । यजूंषि—कर्मण्युपयुज्यमानानि—तान्येव मधुकरः, यजुर्वेदः पुष्पं—यजुर्वेदविहितं कर्म पुष्पम्, स्पष्टमपरम् ॥१-३॥

इति तृतीयाध्याये द्वितीयः खण्डः ।

---

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥१॥ तानि वा ए-

तानि सामान्येतꣳ सामवेदमभ्यतपꣳस्तस्याभि-
तप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽ-
जायत ॥२॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा
एतद्यदेतदादित्यस्य परं कृष्णꣳ रूपम् ॥३॥

पूर्ववत् ॥१-३॥

इति तृतीयाध्याये तृतीयः खण्डः ।

---

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधु-
नाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं
पुष्पं ता अमृता आपः ॥१॥ ते वा एतेऽ-
थर्वाङ्गिरस एतदितिहासपुराणमभ्यतपꣳस्तस्या-
भितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसो-
ऽजायत ॥२॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा
एतद्यदेतदादित्यस्य परं कृष्णꣳ रूपम् ॥३॥

अथर्वाङ्गिरसो मधुकृतः—अथर्वणा अङ्गिरसा च दृष्टा मन्त्रविशेषा मधुकृतः । इतिहासपुराणं पुष्पं—इतिहासपुराणोक्तं कर्म पुष्पम् । इहेतिहासपुराणशब्देन आथर्वणानामाङ्गिरसां च प्रसिद्धं यद्ब्राह्मणं तदुदितं कर्म गृह्यते । प्रसिद्धेतिहासपुराणोदितं कर्म वा । मनु-

वैवस्वतो राजेत्येवंप्रकारकेतिहासपुराणविनियोगो यस्मिन् पारिप्लवाख्ये कर्मणि तद्वा गृह्यते । व्याख्यातप्रायमितरत् ॥१-३॥

इति तृतीयाध्याये चतुर्थः खण्डः ।

---

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ॥१॥ ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥२॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥३॥ ते वा एते रसानां रसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥४॥

ऊर्ध्वा रश्मयः—ऊर्ध्वं प्रसृता रश्मयः, गुह्या एवादेशा मधुकृतः गुह्याः गोप्याः ये आदेशाः विधयः उपासनविधयः कर्माङ्गावलम्बना इति यावत् । यशःप्रभृतिकमेवेहापि रसतया रूप्यते, तच्च

---

१ अश्वमेधे अजामितापरिहाराय आख्यानानि शंसन्तीति प्राप्तमाख्यानकथनरूपं कर्म पारिप्लव उच्यते । २ परब्रह्मोपासनविधय एव किं न गृह्येरन्नित्यत आह यश इत्यादिना ।

कर्मणः फलादनन्यतया गृह्यते । ब्रह्मैव पुष्पं, ब्रह्मेह प्रणवः, इदमुपलक्षकमुद्गीथादन्यस्यापि कर्माङ्गस्य । ता अमृता आप इति चाविशेषेण पुष्परसः श्रूयते । 'ते वा एते गुह्या' इत्यादि व्याख्यातप्रायम् । ते वा एते आदित्यं मण्डलमभिसम्बद्धा रोहितादयो मधुनिष्यन्दा रसानां रसाः—अतिशयिता रसाः, कुतः ?, वेदा हि लोकेषु रसाः तेषामेते रसाः वेदविहितकर्मनिष्पाद्यफलपरिणतिरूपत्वात् । अमृतानाममृतानि—स्वादुतमानामपि स्वादुतमानि, उत्तमफलावाप्तिसाधनत्वात् ॥१–४॥

इति तृतीयाध्याये पञ्चमः खण्डः ।

---

तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥१॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥२॥ स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥३॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥४॥

एवं पञ्चामृतसम्पन्नमादित्याख्यं देवमधूक्तम्। तत्र इमे देवा इदममृतमुपजीवन्तीत्युपदिश्यते, तद्देवभोग्यत्वेन तत्तदमृतचिन्तनार्थं तद्यदित्यादिना। एतेषु पञ्चसु यत्तत्प्रथमममृतं रोहितलक्षणं तद्वसवो देवा उपजीवन्त्यग्निना मुखेन, अग्निप्रधाना भुञ्जतीति यावत्। यथा लोकोऽयमन्नमश्नाति न तथा देवा अश्नन्ति न पिबन्ति किन्तु दृष्ट्वा एतदेवामृतं तृप्यन्ति। ग्रासेन या तृप्तिर्मानुषाणां सेयं तृप्तिर्दर्शनेन देवानामेषां भवतीति यावत्। दर्शनमिह स्वकरणैरनुभवमात्रम्॥

ते वसवः एतदेवामृतमाद्यं रूपमादित्यरोहितलक्षणमभिलक्ष्य संविशन्ति भोगावसरावसाने। पुनर्भोगावसरे प्राप्ते एतस्माद्रूपात् निमित्तात् उद्यन्ति—एतद्रूपं भोक्तुमुद्युक्ता भवन्तीति यावत्। यद्वा—दृष्ट्वा तृप्यन्तीत्युक्तं, सा दृष्टिर्विशिष्यते, न केवलमिदं रूपमितरसामान्यं चक्षुषा पश्यन्ति किन्तु—अभिसंविशन्ति—आभिमुख्येन सम्यक् विशन्ति सर्वैः करणैरितरप्रत्ययानवरुद्धैरस्पन्देन चेतसा अनुभवन्ति अथ प्रणिधानोपरमसमये एतस्माद्रूपादुद्यन्ति उद्गच्छन्ति, तैस्तैः करणैरेतस्माद्रूपादन्यदखिलं यथायथमनुभवन्तीति यावत्। इदं च रूपं प्रथमामृतमादित्यद्वारा आदित्यान्तर्यामिण एवेति प्रणिधानं समुचितं[1] नाम॥

य एतदमृतमेवं वेद—एतदादित्यं रूपं वसूपजीव्यामृतत्वेन वेद—उपास्ते स वसूनामेवैको भूत्वा अग्निना मुखेन एतदमृतमादित्य-

१ सम्यगुचितं उचिततममिति यावत्।

रूपं दृष्ट्वा तृप्यति स चायमेतदेव रूपमभिसंविशति एतस्माद्रूपादुदेति, वसूनां भोगमखिलमयं प्राप्नोतीति यावत् ॥

यावत्कालमादित्यः पुरस्तादुदेता पश्चादस्तमेता तावत्कालं पर्येता पर्येष्यति—प्राप्स्यति यद्वसूनामाधिपत्यं यच्च स्वाराज्यं स्वातन्त्र्यमव्याहतसङ्कल्पत्वम् ॥१—२—३—४॥

इति तृतीयाध्याये षष्ठः खण्डः ।

---

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥१॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥२॥ स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥३॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥४॥

अथ यद्द्वितीयमित्यादि पूर्ववत् । प्रथमामृतोपासकानां यावान् भोगकालस्ततो द्विगुणो द्वितीयामृतोपासकानामित्याह—स इति । यावत्कालमादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावत्—ततो

द्विगुणं कालं दक्षिणत उदेता उत्तरतोऽस्तमेता तावान् रुद्राणां भोगकालः, तावत्कालं स रुद्रोपजीव्यद्वितीयामृतोपासको रुद्राणां यदाधिपत्यं यच्च स्वाराज्यं तत्पर्येता। ननु—दक्षिणत उदेता उत्तरतोऽस्तमेतेति कथम्?, अत्र केचित्—कल्पनया भोगकालद्वैगुण्यं लक्षयति श्रुतिः। भोगकालद्वैगुण्यमात्रे तात्पर्यान्न शङ्कावकाश इति। परे तु मेरोः शिखरे मेरोर्मूर्धनि संलग्नरथचक्राक्षस्य प्रदक्षिणं परिभ्रमतः प्राच्यादिदिक्क्रमेण माहेन्द्रादिपुराणि क्रमशः करैः स्पृशतः सवितुस्तत्तद्दिक्सम्बन्धकालसाम्येऽप्युदयास्तमययोर्दर्शनादर्शनरूपतया दर्शनादर्शनयोश्च द्रष्टृपुरुषसद्भावासद्भावनिबन्धनतया अमरावत्यादीनां पुराणां यथाक्रमं द्विगुणेन कालेन उद्वासात्[1], माहेन्द्रान्नगरात् सांयमिन्यामुदयास्तमयौ द्विगुणौ भवतः। एवमेव वारुणादिषु। दक्षिणत उदेता उत्तरतोऽस्तमेतेति दिग्विशेषनिर्देशस्तु अस्मद्बुद्ध्यपेक्षया, न हि सांयमने पुरे निवसतामुदयास्तमयव्यवहारो दक्षिणत उत्तरत इति भवति। येषां या दिगुदयोपाधिः सैव प्राच्याद्युपाधिरपीति। अपरे तु—साध्यमरुदादित्यरुद्रवसूनां भोग्यः कालो यथाक्रमं द्विगुणः, तच्च द्वैगुण्यं अनुदिनमहोऽर्धरात्रतदर्धतदर्धतदर्धभेदैर्यथाक्रमं वस्वाद्युपजीव्यैर्भवति, श्रुतेश्चायमर्थः, स आदित्यः यावत् —यावता कालेन अहर्लक्षणेन पुरस्तादुदयाद्रावुदेत्य पश्चादस्ताद्रावस्तमेता तावत् अहर्लक्षणात्मकं कालं वसूनामाधिपत्यं स्वाराज्यं पर्येता,

---

1 उद्वासः शून्यता—प्रथममरावती शून्या भवति, ततो द्विगुणेन कालेन सांयमिनी, ततो द्विगुणेन अन्या, यदा या शून्या भवति तदा न तदपेक्षया उदयास्तमयौ, अन्यत्र तु उदयास्तमयसंभवात्, द्विस्तावदुदेतीति सुसङ्गतमिति भावः।

स यावता कालेन पूर्वार्धरात्ररूपेण दक्षिणत उदेता उत्तरतोऽस्तमेता तावत् तावतः कालात् द्विः—द्विगुणकालेन अहर्लक्षणेन पुरस्तादुदेता पश्चादस्तमेता, तावत्कालमर्धरात्रलक्षणं रुद्राणामाधिपत्यं स्वाराज्यं पर्येता। एवमुत्तरत्रापि। भाषितं च तथा—

'उदेत्यास्तमयं यावद्याति भानुस्तु पर्वते।
उदयास्ताद्रिमध्यस्थ वसवः पतयः स्मृताः॥
ततश्चास्तमयाद्यावदर्धरात्रं दिवाकरः।
दक्षिणादुत्तरं याति किञ्चित्पूर्वसमन्वितम्॥
तद्देशकालयोरीशा रुद्रा वायुपुरःसराः।
वसुभोग्यादर्धकालमर्धदेशस्तथैव च॥
रुद्रभाज्योऽर्धरात्रात्तु याम आदित्यदैवतः।
पश्चिमात्पूर्वमार्गस्तु रौद्रादर्धः प्रकीर्तितः॥
ततः परोऽर्धयामस्तु सौम्याद्दक्षिणमार्गकः।
मारुतः काल उद्दिष्ट आदित्यार्धश्च देशतः॥
पश्चात्पश्चादुदेत्येव पूर्वतोऽस्तमुपैति च।
ततस्तदर्धकालेन चोत्तरादुदितस्तदा॥
अस्तं दक्षिणतो याति स कालो मारुतः स्मृतः।
उदेत्यैन्द्रपुरे चोर्ध्वमर्वागुदयपर्वते॥
अस्तमेति तदर्धेन ब्रह्मा तस्य पतिः स्मृतः।
एकत्रिंशत्तु घटिकाः साधिका वसुदेवताः॥
तदर्धा रुद्रदैवत्यास्तत आदित्यदैवताः।
तदर्धा मारुता ब्राह्मास्तदर्धा देशतस्तथेति चे'ति॥

तत्र यः पक्षः—भोगकालद्वैगुण्यमात्रे तात्पर्यं, उदयास्तमयविशेष-

निरूपणं तु द्वैगुण्यमुपलक्षयितुं कल्पनैवेति, तत्र कल्पनाक्लेशो दोषः। यावद्वसूनामाधिपत्यं द्विस्तावद्रुद्राणामित्यक्लेशेन द्वैगुण्यं हि सूपपादम् । यश्च परेषामाशयः स तूद्वासकालद्वैगुण्ये प्रमाणाभावादिनाऽपरैर्दूषितः, अपरेषां पक्षे अस्तं गच्छतीति लाक्षणिकं दूरगत्वसाम्यादस्तं गच्छतीत्युक्तिरिति हि तैरेवोक्तम् । किञ्च–वसूनामेवैको भूत्वा किमेकाहर्मात्रमाधिपत्यं भुङ्क्ते उत द्वित्राणि उत यावद्वसूनामधिकारकालम्, अवधारयितव्योऽयं विशेषस्तु नावधारितः । एकाहःपरिमितभोगप्रदर्शनेनैव तद्वाक्यं लब्धावकाशमिति नाधिको भोगकालः स्यात् । तदिह श्रौतममानुषं दर्शनमित्येव समाधानं रमणीयम् । अत एव आनन्दगिरिटीकायां श्रुतिविरोधे स्मृतिरप्रमाणं तथापि यथाकथञ्चिद्विरोधपरिहारं द्रविडाचार्योक्तमुपपादयतीत्युक्तम् ॥१–२–३–४॥

इति तृतीयाध्याये सप्तमः खण्डः ।

---

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥१॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥२॥ स य एतदेवममृतं वेदादित्यानामेवैको भूत्वा वरु-

---

१ द्विस्तावदित्यादिवाक्ये अस्तपदं लाक्षणिकं दूरगत्वसाम्यादित्यपरैर्व्याख्यातम् ।

णेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥३॥ स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥४॥

इति तृतीयाध्याये अष्टमः खण्डः।

---

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥१॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥२॥ स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥३॥ स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥४॥

इति तृतीयाध्याये नवमः खण्डः।

---

अथ यत्पञ्चमममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥१॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥२॥ स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥३॥ स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वमुदेतार्वागस्तमेता साध्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥४॥

अथ यत्तृतीयमित्यादि समानं पूर्वेण ।

इति तृतीयाध्याये दशमः खण्डः ।

---

अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः ॥१॥

एवमुदयास्तमयविभागविशिष्टवस्वादिभोग्यामृतलक्षणरूपविशेषसम्पन्नादित्यशरीरकपरमात्मोपासनमुक्त्वा तद्रहितकारणावस्थपरमात्मोपासनमाह—अथेति । अथेत्यर्थान्तरोपक्रमे । परे त्वानन्तर्यार्थकतायामस्य स्वारस्यं मन्यन्ते, अस्मिन् पक्षेऽर्थतो वैरूप्यमालक्ष्यते ।

अथ यद्द्वितीयं अथ यत्तृतीयं अथ यच्चतुर्थं अथ यत्पञ्चममिति हि प्रतिवाक्यं श्रूयते अथशब्दः । तथा अथ येऽस्य दक्षिणा रश्मयः अथ येऽस्य प्रत्यञ्चो रश्मय इत्यादिषु । न ह्यत्रानन्तर्यार्थकतासम्भवः । तत ऊर्ध्वं उदेत्य—ततः ये दिग्विभागा उदयास्तमयाद्युपाधितया निरूपिताः प्रागादयः अर्वागन्ताः तेभ्योऽप्यूर्ध्वे अतिक्रान्ततद्विभागे इति यावत् । स च देशो ब्रह्मैव कारणावस्थम् । तत्रोदेत्य—सङ्गत्य, सङ्गतिश्चेह कार्यावस्थाप्रहाणपूर्वककारणावस्थया तत्प्रकारतापत्तिरेव । नैवोदेता नास्तमेता तदानीमुदयास्तमयकार्याभावात् । कुतस्तदभावः एकल एव मध्ये स्थाता, एकलः विभागरहितः, प्रतिसर्गे ब्रह्मणा सह एकीभावात् । यावदिह नामरूपभेदस्तावदुदयास्तमयविभागः । अवसिते च तस्मिन् अविभागं च ब्रह्मणा प्राप्ते तदाऽयमेकलः कथमुदयास्तमयविभागः । मध्ये स्थाता—मध्ये तिष्ठति ह्यादित्ये नोदयास्तमयव्यपदेशः, ऊर्ध्वादप्यूर्ध्वे मध्ये तिष्ठति कथमयं व्यपदेशः स्यात्, ब्रह्म ऊर्ध्वादूर्ध्वं मध्यं सर्वस्य, मध्यं हि निराबाधं प्रशस्तमाश्रयस्थानं, ब्रह्मैव तु तथा, तदुच्यते मध्ये स्थातेति । तदेष श्लोकः—यत्रोदेत्य नैवोदेता नास्तमेता तदुत्क्रान्तप्राच्यादिदिग्विभागमपेतनाम[१]रूपविभागं कारणदशापन्नं परं ब्रह्माधिकृत्य केनचिन्महर्षिणा समुदाहृतः एष वक्ष्यमाणश्लोकः ॥१॥

न वै तत्र स निम्लोच नोदियाय कदाचन ।
देवास्तेनाहꣳ सत्येन मा विराधिषि ब्रह्मणेति ॥२॥

१ नामरूपसम्बन्धतदपगमौ विशेषणीभूतचेतनाचेतनद्वारा बोध्यौ ।

योऽयमिदानीं प्राच्यादिषूदयास्तमयावेति स तत्र अपेतदिग्विभागे ऊर्ध्वादप्यूर्ध्वभूते नामरूपविभागविधुरे परे ब्रह्मणि कदाचन न वै निम्लोच नोदियाय च—नैवास्तं जगाम नोदयं प्राप । न वै तत्र न निम्लोचेति पाठे न वै तत्र—नैव तत्र इदानीन्तनो नामरूपभेदः । अत एव न निम्लोच नोदियाय कदाचनेत्यर्थः । हे देवाः—हे मुमुक्षवः । अहं तेन उदयास्तमयादिकार्यविभागविधुरेण, सत्येन सत्यमित्यविकृतं लक्ष्यते, अविकृतेन—नामरूपविभागरहितेन ब्रह्मणा सर्वकारणभूतेन, मा विराधिषि—विरोधं—असम्बन्धलक्षणं नैव विन्देयम्; सर्वकारणपरब्रह्मप्रणिधानविच्छेदो मम न स्यादिति भावः । मुमुक्षून्प्रतीदमुपदेशपर्यवसायि ब्रह्मनिष्ठस्य वचनम् ॥२॥

## न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ॥३॥

एवं मधुविद्यां कार्यावस्थादित्यशरीरकपरमात्मोपासनेनोपक्रम्य कारणावस्थपरमात्मोपासनेनोपसंहृत्य तस्या ब्रह्मप्राप्तिलक्षणं फलमाह—न ह वेति । य एतां ब्रह्मविद्यां एवमुक्तेन प्रकारेण वेद, असौ ब्रह्मविदे आदित्यो नैवोदेति न निम्लोचति—ब्रह्मैकदर्शिनोऽस्य प्राकृतज्योतिर्दर्शनादर्शनलक्षणोदयास्तमयप्रयोजनाभावात् । कुत एतत्? सकृद्दिवा ह्यसै भवति—सततं दिवैव भवति ब्रह्मज्योतिःसम्पत्त्या कदाप्यप्रकाशवस्त्वन्तराभावात् तदपृथक्सिद्ध्या सर्वस्य सर्वदा प्रकाशात् । अतीतसंसारो ब्रह्मसम्पन्नो भवतीति यावत् ।

अस्या मधुविद्याया ब्रह्मविद्यात्वं द्रढयितुमेतद्विषयकमधिकरणमिह किञ्चिद्व्याख्यायते— भावं तु बादरायणोऽस्ति हि—वस्वादीनामपि मधुविद्यायामधिकारस्य सद्भावं बादरायणो मन्यते, तेषां वस्वादिभावरूपफलानन्वयेऽप्यस्ति हि परमं फलं ब्रह्मविद्यायाः, मधुत्वेनेह निरूप्यमाणोऽयमुपास्यो न केवलमादित्यः, किन्तु तच्छरीरकः परमात्मा। अतश्चादित्यरूपभेदसम्पत्तिश्च। श्रूयमाणं तु अप्राप्ततत्पदान्मनुष्यानवलम्ब्य भवति लब्धावकाशम्। मनुष्यास्तु वस्वादिभोग्यत्वेनोपासत इति वस्वादिभावप्राप्तिर्नान्तरीयकं फलमेतेषाम्। वस्वादयस्तु मधुमात्रमिति न तन्नान्तरीयकं तेषाम्। न चैतावता मधुविद्यानिष्ठत्वानुपपत्तिस्तेषाम्। न हि सा वस्वादिभोग्यत्वेन रूपेण नियम्यते। येन विना तद्रूपं मधुमात्रचिन्तनान्मधुविद्यानिष्ठता नोपपद्येत। श्रुतिस्तु नान्तरीयकफलसम्पत्तियोग्यानां नान्तरीयकफलसम्पत्त्युपायं ज्ञापयन्ती प्रवर्तते 'स य एतदमृतं वेद वसूनामेवैको भूत्वा' इति। मधुत्वसम्पत्तिश्च वस्वादिभोग्यत्वनिरपेक्षा। खण्डपञ्चकेन हि तत्सम्पत्तिर्निरूपितैव। वस्तुतस्तु न केवलं मधुत्वमुपक्रान्तम्, किन्तु देवमधुत्वम्, तत्र मधुत्वसम्पत्तिः खण्डपञ्चकेन कृता, देवमधुत्वं च ततः क्रियते; तद्देवमधुत्वेन दृष्टिरेवेह मधुविद्या विवक्षिता, तदस्यां ब्रह्मविद्यायां वस्वादीनां वस्वादिदेवमधुचिन्तनानुपपत्त्या नान्तरीयकवस्वादिभावरूपफलासम्भवाच्च नाधिकारः; अथापि ब्रह्मविद्यामात्रेऽनधिकार इति तु न, अस्ति हि ब्रह्मविद्यान्तरेष्वेषामपि फलसाधनानन्वयः, तत् अधिकारसद्भावं ब्रह्मविद्यायामेषां बादरायणो मन्यते। इदं निर्गलितम्। क्वचित् ब्रह्मविद्यायामनधिकारं वस्वादीनामालक्ष्य

ब्रह्मविद्यामात्रेऽनधिकारं जैमिनिमतेनाशङ्क्य क्वचिदसम्भवोऽन्यत्रासम्भवे न लिङ्गमिति निराचकाराचार्य इति । यत्तु केवलादित्यस्यैवेह देवमधुत्वेनोपास्यताविधानादियं विद्या नाम, न तु तदंशेऽपीयं ब्रह्मविद्या । अथाप्यस्यामनधिकारं वस्वादीनामालक्ष्य विद्यात्वाविशेषाद्ब्रह्मविद्यायामनधिकारमाशङ्क्य निराचकाराचार्य इति । तन्नातीव रमणीयम् । अर्वाचीनविद्यायां क्वचिच्चरितार्थतयानधिकारदर्शनमात्रेण ब्रह्मविद्यायामनधिकारसम्भावना हि न स्थाने । विद्यात्वाविशेषादाशङ्का तु नितरां भ्रान्तिमावहत्याशङ्कितुः । ब्रह्मविद्यात्वाविशेषादाशङ्कायां तु नायं दोषः । विद्यात्वात् ब्रह्मविद्यात्वं हि व्यावृत्तं ब्रह्मविद्यामात्रस्यानुगतं रूपम् । तेन रूपेणैकजातीयेष्वेकत्रानधिकारदर्शनेनान्यत्राप्यनधिकाराशङ्का तु सन्निहितगतिका । यद्वा—तदुपर्यपि बादरायणः सम्भवादित्यनेन देवानां ब्रह्मविद्यास्वधिकारे समर्थितेऽविशेषेण सर्वत्र ब्रह्मविद्यायां देवानामधिकारं समर्थितं मत्वा परेण क्रियमाणा मध्वादिष्वसम्भवादनधिकारशङ्कां स्वाशयप्रकाशनेन निराकरोति, भावं त्विति—भावं तु बादरायणः—बादरायणो यत्प्राह तदुपर्यपीति, भावं तु प्राह—ब्रह्मविद्यायां क्वचिद्देवानामधिकारसद्भावमात्रं प्राह, न तु ब्रह्मविद्यास्वधिकारव्याप्तिम् । अबाधितं चैतत्, अस्ति हि अन्यत्र ब्रह्मविद्यास्वधिकारः । वस्तुतस्तु भगवद्रामानुजाचार्यैर्यदभाषि श्रीभाष्ये तदेव रमणीयम् ॥३॥

तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकाया-

रुणये ज्येष्ठाय पुत्राय ब्रह्म प्रोवाच ॥४॥

अथ स्तुवन्निमां विद्यामुपदेष्टृपरम्परामाह—तद्धैतदिति । तद्धै-तत्-मधुविद्यास्वरूपम्, ब्रह्मा-विधाता, प्रजापतये-दक्षाय, स च मनवे, स च प्रजाभ्यः, इत्ययं विशिष्टो गुरुक्रमः । तद्धैतद्ब्रह्म-तदेवं विशिष्टगुरुपरम्परागतं ब्रह्मविज्ञानम् । पिता ज्येष्ठाय पुत्रायारुणये नाम्नोद्दालकाय प्रोवाच ॥४॥

इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म

प्रब्रूयात् प्रणाय्याय वाऽन्तेवासिने ॥५॥

तदिदम्-विशिष्टगुरुक्रमत्वेन विशिष्टमिदं ब्रह्मविज्ञानं मधुवि-ज्ञानलक्षणम्, पिता ज्येष्ठाय पुत्राय प्रब्रूयात्, स विशिष्टं ब्रह्मवि-द्यायाः पात्रमिति, तथा प्रणाय्यश्चान्तेवासी, तत् योग्याय शिष्याय च प्रब्रूयात् ॥५॥

नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः

परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो

भूय इत्येतदेव ततो भूय इति ॥६॥

आभ्यामन्यो यदि पृथिवीमिमामद्भिः सागरैः परिगृहीतां-व्याप्तां धनस्य पूर्णां-धनेन पूर्णां दद्यात्, न तस्मै प्रब्रूयात्, एतदेव विज्ञानं ततो भूयः-अधिकम् । अस्य विज्ञानस्य सागरान्ताऽपि पृथिवी न पर्याप्तो निष्क्रय इति भावः । आदरादभ्यासः ॥६॥

इति तृतीयाध्याये एकादशः खण्डः ।

---

**गायत्री वा इदꣳ सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च ॥१॥**

अथ प्रकारान्तरेण ब्रह्मण उपासनमुपदिश्यते। नेह गायत्री केवला प्रस्तूयते। अपि तु गायत्रीसाम्यात् गायत्री ब्रह्मैव, तथा चेतोर्पणमिहोपदिश्यते। कथं गायत्रीसाम्यम्? अनुपदं श्रोष्यते सैषा चतुष्पदा षड्विधा गायत्रीति। उपपादयामश्च तद्विवरणावसरे। गायत्री वा इदꣳ सर्वं भूतं यदिदं किञ्च—देवमनुष्यपशुपक्षिभावमापन्नमिदमखिलं जीवजातं गायत्र्येव, सादृश्याद्गायत्रीत्वेन विभाव्यमानं ब्रह्मैव, अस्ति च गायत्रीपदस्य ब्रह्मणि प्रवृत्तौ निमित्तम्, किं तत्? वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च। वाचैव गीयते इदमित्थमिति भूतजातम्, रक्ष्यते चार्थानर्थविवेचनमुखेन, तत् वागुच्यते गायत्रीति। ननु वाचि तद्योगे किमायातं प्रक्रान्तस्य, उच्यते—वाग्वै गायत्री—या प्रक्रान्ता गायत्री सा हि वाक्। गायत्रीशब्देन विवक्षितं ब्रह्म वाग्रूपं हि, तद्धि सर्वप्रकारम्, 'शब्दः खे' इति स्मर्यते। तथाच ब्रह्मणैव वाग्रूपेण सर्वं गीयते, रक्ष्यते च तत् वाग्द्वारा। गानकर्तृत्वत्राणकर्तृत्वगुणयोगात् ब्रह्मणि गायत्रीपदप्रवृत्तिनिमित्तयोगोऽप्यस्तीति भावः। स्यात् गायत्रीपदप्रवृत्तिनिमित्तयोगात् गायत्रीसादृश्याद्वा गायत्री ब्रह्म, अथापि गायत्री वेदं सर्वं भूतमिति सामानाधिकरण्येन निर्देशः कथम्? इत्थम्, अंशो ह्यखिलमिदं गायत्र्याः ब्रह्मणः। विशेषणं ह्यंशो विशिष्टस्य, ब्रह्म च

१ ब्रह्मणः।

विशिष्टं स्वेतरेण समस्तवस्तुना, तदपृथक्सिद्धप्रकारभूतमिदं भूतजातमेकः पादो ब्रह्मण इत्यभिप्रेत्यायं निर्देशः। इममभिप्रायमनुपदं श्रावयिष्यति च श्रुतिः। एतेन गानकर्मत्वत्राणकर्मत्वलक्षणप्रकारद्वयोपेतः प्रथमः पादो भूतलक्षणो ज्ञापितः।

**या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्याꣳ हीदꣳ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ॥२॥**

अथ द्वितीयपादयोग उच्यते। या वै सा गायत्री—यस्या गायत्र्याः सर्वाणि भूतान्यंशः सा गायत्री इयमेव। केयम्? येयं पृथिवी सेयम्। येयं पशुपक्ष्यादिभूतभावमुपगतस्य भोक्तृवर्गस्य जीवराशेर्भोगस्थानभूता पृथिवी सापि गायत्र्याख्यं ब्रह्मैव, सापि भूतवत् तस्य पाद एवेति यावत्। इह पृथिवीत्येतदुपलक्षकं प्राणिनामाश्रयमात्रस्य। तां पृथिवीं विशिनष्टि—अस्यामिति। अस्यां पृथिव्यामिदं भूतजातं यथाकर्मभोगाय प्रतिष्ठितम्। एतामेव पृथिवीं नातिशीयतेऽतिलङ्घितुमक्षमं च। हि प्रसिद्धौ। वाङ्मुखेन गानत्राणसम्बन्ध इव पृथिवीमुखेन भूतप्रतिष्ठात्वभूतानतिलङ्घ्यत्वसम्बन्धो गायत्र्याख्ये ब्रह्मणि गम्यते ॥२॥

**या वै सा पृथिवीयं वाव सा यदिदमस्मिन्पुरुषे शरीरमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥३॥**

---

१ लोकान्तराणामपि सङ्ग्रहमभिप्रेत्यैवमुक्तम्।

अथ तृतीयपादयोग उच्यते । या वै गायत्रीत्युक्ता सा पृथिवी । पृथिवीत्वेन लक्षिता गायत्रीत्येतत् । इयं वाव सा—यदिदमस्मिन् दृश्यमाने पुरुषे प्राणिनि शरीरम् । यदस्य प्राणिनो भोगायतनतया समुपलक्ष्यते शरीरं तदपि गायत्र्याख्यं ब्रह्मैव, ब्रह्मणः पाद एवेति भावः । शरीरं विशिनष्टि—अस्मिन्निति । ये नाम भूतभावमुपयद्भिर्जीवैः प्रधानोपकरणतया स्वीकृताः प्राणाः तेऽप्यस्मिन्हि प्रतिष्ठिताः, नातिशीयन्ते चैतत् । शरीरतः प्राणप्रतिष्ठात्वप्राणानतिलङ्घ्यत्वयोगो ब्रह्मणि गम्यते ॥३॥

यद्वैतत्पुरुषे शरीरमिदं वाव तद्यदिदम-
स्मिन्नन्तःपुरुषे हृदयमस्मिन्हीमे प्राणाः
प्रतिष्ठिता एतदेव नातिशीयन्ते ॥४॥

अथ चतुर्थः पादयोग उच्यते, यद्वैतत्पुरुषे शरीरं—शरीरत्वेन लक्षितं गायत्र्याख्यं ब्रह्म । इदं वाव तद्यदिदमन्तःपुरुषे हृदयम् । भोगाश्रयदेशवत् भोगायतनवत् भोगौपयिकज्ञानप्रभाप्रसरणमूलस्थानभूतं हृदयमपि गायत्र्याख्यं ब्रह्मैव, ब्रह्मणः पाद एवेति भावः । हृदयं विशिनष्टि—अस्मिन्हीमे प्राणा इति । अविशिष्टमेतत् ॥४॥

सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तम् ॥५॥

भूतपृथिवीशरीरहृदयलक्षणैश्चतुर्भिः पादैरुपेतेति चतुष्पदा । एकैकस्मिन्पादे उक्तप्रकारद्वयसम्पत्त्या तृतीयचतुर्थयोः प्रकारद्वयानतिरेकात् षड्विधा च । अतएव सैषा गायत्रीसाम्यात् गायत्री । श्रूयते च गायत्री—'इन्द्रः शचीपतिः—बलेन पीडितः—दुश्च्यवनो वृषा—समित्सु-

सासहि' रिति। इयंच चतुष्पदा प्रतिपदमक्षरषङ्क्योगात् षड्विधा च। तदेतत् गायत्र्याख्यं ब्रह्म, ऋचाभ्यनूक्तम्—प्रकटीकृतम्, संशयविपर्ययनिराकरणपूर्वकं प्रकाशितम् ॥५॥

**तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः ।**
**पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति ॥६॥**

तामृचमनुवदति। तावानस्य महिमा—यो भूतादिहृदयान्तः परिदृश्यमानः प्रपञ्चः समुदाहृतः सर्वोऽप्यस्य गायत्र्याख्यस्य ब्रह्मणो महिमा, न तु ब्रह्मैवैतदखिलम्। ततो ज्यायांश्च पूरुषः—गायत्र्याख्यपरब्रह्मभूतः पुरुषस्तु ततो ज्यायान्—अत्यन्तविलक्षणोऽतिशयसम्पन्नः। ननु निर्दिष्टं नाम 'गायत्री वा इदं सर्वं भूतं, इयं वा सा, इदं वाव तत्' इति। सत्यं निर्दिष्टम्। परं तु न स्वरूपैक्यविवक्षया, किन्तु अंशांशिभावेन। विश्वा भूतान्यस्य पादः—सर्वमिदं भूतमस्यांशः, त्रिपात्—यदस्य भूतस्योपभोगार्थतयोपलभ्यमानं पृथिव्यादिहृदयान्तं तदप्यस्यैव गायत्र्याख्यस्य ब्रह्मणः पादत्रयम्। अंशांशिभावश्चोपपादितेन वर्त्मना। एतेन योऽपि भ्रमः—अश्रुतवेदान्तानां पृथिव्यादिहृदयान्तमिदमखिलं भोक्तुर्भूतराशेः शेषभूतं भोक्ता च जीवराशिरेतच्छेषी स्वतन्त्रतत्त्वमिति, सोऽपि निरस्तः। यत्पुनरेतैर्भूतादिभिः पादैरंशिमत्, तदेव त्वमृतं—तच्च दिवि—अप्राकृते द्योतनैकस्वभावे अनध्यक्षे पदे। पादास्तु नामृताः, यस्येमे पादास्तत्त्वमृतम्; अध्यक्षपदे चैते, यस्येमे तत्तु नाध्यक्षे इति विशेषो व्यज्यते ॥६॥

---

१ भोक्तृवर्गं प्राधान्याद्विश्वा भूतानीति पृथक्प्रथमं निर्दिश्य तदुपभोगार्थान् पृथिव्यादीन्समाहृत्य निर्दिशतीत्यभिप्रायेणाऽऽह—यदस्येति

यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः ॥७॥ अयं वाव स योऽयमन्तःपुरुष आकाशो यो वै सोऽन्तःपुरुष आकाशः ॥८॥ अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीꣳ श्रियं लभते य एवं वेद ॥९॥

यत् ब्रह्म गायत्रीशब्दलक्षितमुपास्यमुक्तम्, हृदयाकाशे तद्ध्येयमिति वक्तुं क्रमेण हृदयाकाशमवतारयतीत्येके । अथ चतुर्थपादत्वेनोक्तस्योपास्यतया वक्ष्यमाणस्य हृदयस्य स्तुत्यर्थं हृदयाकाशस्य बाह्याकाशाभेदेन महत्त्वं वक्तुं बाह्याकाशस्य ब्रह्मतुल्यत्वं सामानाधिकरण्येनाहेत्यपरे । वयं तु ब्रूमः । यानीमानि भूतानि पशुपक्ष्यादीनि भोक्तृभावमापन्नानि जीवजातानि तानि पृथिवीशरीरहृदयैरेवोपकरणैर्जीवन्ति, [1]तत्रोत्तरोत्तरमन्तरङ्गमुपकरणम्; तथा विशेषश्च[2] पूर्वस्य । एवमेव बाह्याकाशं यदिदं पृथिव्याम्, यच्च शारीरमान्तरम्, यच्च ततोऽप्यान्तरं हार्दम् । अयं हि भूतग्रामो जाग्रद्दशायां बाह्याकाशे चैतन्यरश्मिभिः प्रसृत्य भुङ्क्ते शब्दादीन्विषयान्, स्वप्नदशायामसत्यपि तद्योगे शारीर एवाऽऽकाशे प्रसृत्य भुङ्क्ते स्वाप्नानर्थान्, असति तु तद्योगे हार्दाकाशमात्रे प्रसृत्य कमप्यानन्दं भुङ्क्ते, तदुत्तरोत्तरमन्तर-

१ पृथिवी आश्रयान्नादिरूपेण भूत्वोपकरोति, सत्यपि तद्योगे शारीरसम्पत्त्यां क्षीयमाणायां न जीवेदिति शरीरं ततोऽन्तरङ्गमुपकारकम्, तथैव ततो हृदयमिति भावः ।

२ अन्नस्यैव पार्थिवस्य विशेषः शरीरम् । तस्यैव विशेषांशो हृदयमिति भावः ।

ङ्गता। अदुष्टेनैव बाह्याकाशेन जीवति नामाऽयम्, अदुष्टेऽपि तस्मिन् शारीरे तु दुष्टे न जीवेत्, अदुष्टेऽपि तस्मिन् हार्दे च दुष्टे क्षणमपि न जीवेत्, अतश्चास्य भूतवर्गं प्रत्युत्तरोत्तरमन्तरङ्गोपकरणता। तच्च पूर्वत्रिकस्योपकरणता सर्वतः प्रसिद्धा, अपरस्य तु त्रिकस्य तथात्वं तु न तथा। अतः प्रथमं प्रसिद्धेनोपकरणत्रयेण सहोपकारिणं भूतवर्गं गायत्रीशब्दलक्षितस्य ब्रह्मणः पादतयोपादिश्यते तथा तस्य निध्यानाय। तच्छेषतया ऋगपि श्राविता। अथ द्वितीयमुपकरणत्रिकं तस्य पादत्वेनेदानीमुपदिशति—यद्वै तदित्यादिना। ऋचो मध्यमणिन्यायेन वृत्तवर्तिष्यमाणोपदेशद्वयपरताऽपि घटते, उपकरणिनो भूतवर्गस्योभयत्र साधारण्यात्षाड्विध्यं च, तैरेव रूपैरिहाप्युपपद्यते। पूर्वमुपकरणत्रयं पार्थिवमपरं त्वाकाशरूपमिति वैजात्ययोगात्; विभज्यैव चतुष्पदत्वेनैव प्रकृतस्य ब्रह्मण उपासनं विवक्षितमिति।

यद्वै तद्ब्रह्मेति—ब्रह्मेति यदिदमभ्यधायि गायत्रीशब्दलक्षितमभ्यनूक्तमृचा च इदमेव तत् योऽयं पुरुषात् शिरःपाण्यादिलक्षणात् बहिर्धा—बहिर्वर्तमान आकाशः। पूर्ववदंशांशिभावनिबन्धनमिदं सामानाधिकरण्यम्। यो वै स बहिर्धा पुरुषादाकाशः—स ब्रह्मणः पादतया ब्रह्मैव निर्दिष्टः योऽयं बाह्याकाशः स इति तच्छब्देन ब्रह्मणः पादत्वमनूद्य अयमेव स इति निर्देशादस्य शारीराकाशस्यापि ब्रह्मांशत्वसिद्धिः। एवमुत्तरत्रापि। यो वै सोऽन्तःपुरुष आकाशः। अयमेव सः, योऽन्तर्हृदय आकाशः। यद्यपि न स्वरूपभेदः, अथाप्युपाधिभेदमवलम्ब्य त्रेधोपपादनम्। तदेतत्पूर्णमप्रवर्ति—यदेतत् निर्दिष्टक्रमेण चतुष्पात् षड्विधं गायत्रीलक्षितं ब्रह्म तदेतत् पूर्णं—अपरिच्छिन्नम्, यच्चतुष्पात्त्वषा-

ड्विध्ये निदर्शिते तन्निध्यानाय नहि तावन्मात्रप्रकारः सः । अप्रवर्ति च—अचलं च, स्थिरमिति यावत् । य एवं वेद—चतुष्पदत्वेन षड्विधत्वेन गायत्रीशब्दलक्षितं ब्रह्म पूर्णमप्रवर्ति च वेद—उपास्ते स पूर्णामप्रवर्तिनीं श्रियं लभते, तथाविधा च श्रीर्मुक्तिसम्पदेव ॥७–८–९॥

इति तृतीयाध्याये द्वादशः खण्डः ।

---

तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ्सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ॥१॥

अथोपक्रान्तोपासनविशेषशेषभूतमिदमपरं गुणविधानं तस्य हेत्यादिनाऽऽरभ्यते । यत् गायत्र्याख्यस्य ब्रह्मणः सर्वभूतपादस्य विशिष्टः पादः यदाकाशश्च तथा, तस्य हृदयस्य पञ्च देवसुषयः—देवैरधिष्ठिताः सुषयश्छिद्राणि सन्ति । योऽस्य प्राङ्सुषिः पूर्वदिगवच्छिन्नं छिद्रं स प्राणः, तेन हि प्राणः सञ्चरति, तत् तस्येदमिति स इति निर्दिश्यते । तच्चक्षुः—तेन छिद्रेण निःसृतः प्राणश्चक्षुरधिष्ठाय रूपप्रकाशनाय भवतीति तच्चक्षुरिति व्यपदिश्यते । स आदित्यः—प्रतिष्ठितो ह्यादित्यश्चक्षुषि अधिष्ठानात्, अतो व्यपदिश्यते स आदित्य

---

१ तस्य—सञ्चरतः प्राणस्यार्थे इदं छिद्रमिति तत् छिद्रं स इति—प्राण इति निर्दिश्यते इत्यर्थः ।

इति । तदेवमादित्यस्य पूर्वसुषिसम्बन्धेन पूर्वद्वारपालता तस्मिन् विभाव्येति भावः । स चायमाभ्यां गुणाभ्यामुपास्य इत्याह—तदेतत्ते-जोऽन्नाद्यमित्युपासीत । तदेतत्—लिङ्गव्यत्ययश्छान्दसः । अन्नाद्य-मिति विधेयप्राधान्याद्वा । पूर्वद्वारपालभूतमादित्यं तेजस्वि, अन्नाद्यम्—अन्नप्रभृतीति चोपासीत । आदित्यादेव वृष्टिस्ततोऽन्नमित्यन्नाद्यत्वमे-तस्मिन् । अथ फलमानुषङ्गिकमाह—तेजस्व्यन्नादो भवति य एवं वेदेति । कथमवगम्यते फलमानुषङ्गिकमिति ? यदनुपदं श्रावयि-ष्यति मुख्यं फलं 'प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान्वेद' इति ॥१॥

अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रो-त्रꣳ स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान्यशस्वी भवति य एवं वेद ॥२॥

स व्यानः व्यानस्यार्थे इति स व्यान इत्युपचर्यते । तेन व्यानेना-प्यायितस्यैव श्रोत्रस्य शब्दग्राहकतया तच्छ्रोत्रमिति । चन्द्रमसाऽधि-ष्ठितं श्रोत्रमिति स चन्द्रमा इति । तदेवं चन्द्रमसः दक्षिणसुषिस-म्बन्धेन दक्षिणद्वारपालता विभाव्येति भावः । श्रीश्च यशश्चेत्यु-पासीत । श्रीयते हि सर्वैः सुधाकरश्चन्द्रमास्ततः श्रीरेवायम् । यश इव शीतलोऽयमानन्दयति सर्वानिति यशश्च, तत् श्रीत्वेन यशस्त्वेन च दक्षिणद्वारपालमुपासीतेति भावः ॥२॥

---

१ आदित्याधिष्ठितचक्षुराप्यायनैकलक्षणप्राणवृत्तिद्वारतया पूर्वसुषेः पूर्वद्वारपालता आदित्यस्येत्याशयः ॥

अथ योऽस्य प्रत्यङ्सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्व्यन्नादो भवति य एवं वेद ॥३॥

योऽस्य प्रत्यङ्सुषिरित्यादि व्याख्यातप्रायम् । सोऽग्निः—अग्निना ह्यधिष्ठिता वाक्, पश्चिमसुषिसम्बन्धादग्नेस्तस्मिन् पश्चिमद्वारपालता विभाव्येति यावत् । तदेतत् ब्रह्मवर्चसमन्नाद्यमित्युपासीत—अग्निना ह्यन्वहं यथाविधि परिचर्यमाणेन भवति ब्रह्मवर्चसम् । ब्रह्मणा वेदेन यद्वर्चः तेजः, तत् ब्रह्मवर्चसम् । अद्यते यत्किञ्चिदग्निनैव बलेन, न हि मन्दाग्निरत्तुं प्रभवति तदन्नाद्यता चाग्नेः ॥३॥

अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान्व्युष्टिमान्भवति य एवं वेद ॥४॥

तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत—यस्य हि वृष्टिः परेभ्य एव स कीर्तिमान् भवति, पर्जन्यस्तु तथा, तदयं कीर्तिरेवेति निर्दिश्यते । पर्जन्य एव वृष्ट्या अन्नं प्रभूतमुत्पादयन्ननामयेन प्राणिनो रक्षतीत्यस्यैवावलम्बेन प्राणिनां व्युष्टिः—देहकान्तिरतिशयिता भवतीत्ययमेव व्युष्टिरिति निर्दिश्यते । कीर्तित्वेन व्युष्टित्वेन चायं पर्जन्यो विभावनीय इति भावः ॥४॥

अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः

स आकाशस्तदेतदोजश्च महश्चेत्युपासी-
तौजस्वी महस्वान्भवति य एवं वेद ॥५॥

ओजो-बलं, महः-तेजः, वायोरोजस्तु सर्वतः समधिकम् । तेजश्च निखिलं वायुनैवाधीयते, तत् ओजश्च महश्चेत्युपासीत । ननु स्यात्तथा दृष्टिर्वायौ, आकाशे कथम्? आकाशस्तस्याप्याश्रयो मूलमिति तदभेदाध्यवसायगोचरीकृते तस्मिंस्तत्सम्भवात् ॥५॥

ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य
द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान्स्व-
र्गस्य लोकस्य द्वारपान्वेदास्य कुले वीरो जा-
यते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च
ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेद ॥६॥

एवमेषामुपासनस्य प्रत्येकमानुषङ्गिकफलविशेषयुक्तस्य समुदायतः फलविशेषमपरमानुषङ्गिकं ज्ञापयन् परमफलमाह-अथेत्यादिना । ते वा आदित्यादय एते, पञ्च ब्रह्मपुरुषाः-उपास्यमाना हार्दं ब्रह्म गमयन्तीति ब्रह्मपुरुषा उच्यन्ते, गमयितृता च यद्यपि न साक्षादेषाम्, अथापि विरोधिनिबर्हणेन ब्रह्मविद्यानिष्पादनद्वारा तदुपपत्तिः । स्वर्गस्य लोकस्य द्वारपाः-यदेते प्रागादिहृदयद्वारपाः, निदर्शितात्सम्बन्धात्, अतएव स्वर्गस्य लोकस्य द्वारपाः, हार्दाकाशो हि स्वर्गलोकः, स हि दुःखासम्भिन्नसुखस्याश्रयः, ब्रह्मैव तु तथाविधसुखस्वरूपम् ।

१ साक्षात्-ब्रह्मोपासनमनपेक्ष्येत्यर्थः ।

योऽयमप्राकृतः स्थानविशेषः, स एवेह स्वर्गलोकः, तस्येमे द्वारपाः । यद्यपि न तद्द्वारमधिष्ठाय रक्षन्त्येते । अथापि इतो मुच्यमानान् भगवल्लोकमतिवहन्त्येत इत्यातिवाहिकतया द्वारपा इत्युक्तिरित्यपि व्याचक्षत एके । प्रस्तुतादप्रस्तुतस्यावलम्बनं ह्यनुचितम् । प्रस्तुतश्च हृदयद्वारसम्बन्धः 'पञ्च देवसुषय' इति, उपपादितश्च प्रत्येकम्, अव्यवहितमेवानूद्यते च 'ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपा' इति । य एतान् पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् एवं–उक्तेन प्रकारेण वेद–उपास्ते, अस्य कुले वीरः पुत्रो जायते, इदमानुषङ्गिकं फलम् । मुख्यं तु यस्येमे द्वारपालास्तस्य लाभः, तदेव श्रावयति–प्रतिपद्यते स्वर्गं लोकमिति । यद्यपि प्रत्येकं फलमुपन्यस्तं प्राक्, तावता यथाकाममेषामन्यतमोपासनमभ्यनुज्ञातमिति नोत्प्रेक्ष्यम् । आनुषङ्गिकफलवैविध्यमात्रे तात्पर्यात् । य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान्वेद प्रतिपद्यते स्वर्गं लोकम्–यस्येमे द्वारपाः तं हार्दाकाशम्, हार्दाकाशोपलक्षितं परं ब्रह्म प्राप्नोतीति भावः । पूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेदेति यत्फलमश्रूयत प्राग्गायत्रब्रह्मोपासनस्य ततोऽनतिरिक्तमेतदित्यङ्गाङ्गिभावो गायत्रद्वारपालोपासनयोरवगम्यते ॥६॥

**अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनूत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः ॥७॥**

यत्प्रस्तुतं प्राग्गायत्रं ब्रह्म द्युसंबन्धि, तस्यास्योपासनान्तरमुपन्य-

स्यते—अथेति । अथ यदतः परो दिवो ज्योतिर्दीप्यते—अतो दिवः—अमृतं दिवीति ऋचा या द्यौरमृतस्याश्रयतया श्रुता, अतो द्युलोकात्परो दीप्यते—उपरिष्टाद्दीप्यते यज्ज्योतिः, यद्यप्यमृतं ब्रह्मामृतस्याश्रये द्युलोक एव स्यान्न ततोऽन्यत्रोपरि, अथापि तस्यैवोपरितनो भाग आपेक्षिकावधिविभागमभिप्रेत्य ततः पर इति निर्देशमर्हति, यथा वृक्षाग्रात्परतः श्येनो वृक्षाग्रे श्येन इति, तच्च ज्योतिः परं ब्रह्म, इदमेव च मुख्यं ज्योतिः 'यस्य भासा सर्वमिदं विभाति' 'तमेव भान्तमनु भाति सर्वम्' । तत्रापि विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु लोकेषु दीप्यते । नैको लोकोऽस्याप्राकृते देशे किन्तु बहवः स्वेच्छाविहरणस्यास्य; सर्व एवैते विश्वतः—जगदण्डान्तर्वर्तिनो व्यष्टितत्त्वाद्बहिर्भूताः । अत्र पृष्ठशब्दो बहिर्भूते वर्तते । तथा सर्वतः—अण्डानन्तर्गतसमष्टितत्त्वादपि बहिर्भूताश्च । अतएवोत्तमाः; नचोत्तमा इतोऽन्ये । एवंभूतेषु लोकेषु दीप्यते यत्—इदं वाव तत्, किं तत् ? यदिदमन्तःपुरुषे ज्योतिः—अन्तःपुरुषे—शरीरस्यान्तः ॥७॥

तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे सꣳस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपश्रृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥८॥

ननु किं तदन्तःपुरुषे ज्योतिः ? यदुपलभ्यते दृष्टेन श्रुतेन च

लिङ्गेन, किं तथाविधं लिङ्गम्? उच्यते—योऽयं ज्योतिर्विशेषो वैश्वानरसंज्ञः कौक्षेयस्तस्यैषा दृष्टिः—तत्सम्बन्धिनी दृष्टिः—उपलम्भः, तज्ज्ञापकदृष्टिविशेष इति यावत्। यत्रास्मिन्शरीरे संस्पर्शनोष्णिमानं यदेतद्विजानाति योऽयमुष्णस्पर्श उपलभ्यते स तस्मिन् दृष्टं लिङ्गमिति भावः। तस्यैषा श्रुतिः—तत्सम्बन्धिनी इयं श्रुतिः—तज्ज्ञापकं श्रवणमिति यावत्। कर्णावङ्गुलिभ्यामपिधाय शृणोति कमपि शब्दं रथघोषमिव ऋषभकूजितमिवाग्नेर्ज्वलत इव ध्वनिमिति यदेतत्, तस्यैषा श्रुतिरिति पूर्वेण सम्बन्धः। शब्दविशेषोऽयं श्रुतं लिङ्गमिति भावः। यद्यपीदं ज्योतिर्न परं ज्योतिः, अथाप्यभेदेन दृष्टिमात्रमिह विवक्षितम्। फलविशेषार्थं चैतत्। अर्चैवास्य परस्य ज्योतिषो वैश्वानरज्योतिरिदं विशेषत आविर्भावस्थानमित्यनुगुणेहाभेददृष्टिः। स्मर्यते च 'अहं वैश्वानरो भूत्वे' ति।

एवंभूतमिदं परं ज्योतिरेवमुपासीत। कथम्? यत इदं कौक्षेयं ज्योतिरुपलभ्यमानेनौष्ण्येन गृह्यते गृह्यते च श्रूयमाणेन शब्देन तत एवाभ्यां दृष्टत्वश्रुतत्वगुणाभ्यामुपासीत परं ज्योतिः—यत इदं वै तत्। य एवं गुणयोगेनोपास्ते स चक्षुष्यः—रूपसम्पन्नो भवति, श्रुतश्च—प्रख्यातश्च भवति। इदमिहोन्नीयते—द्वादशः खण्डो ब्रह्मविद्याविशेषमवगमयन्प्रवृत्तः क्रमशोऽवगमय्य सप्रकारं पूर्णयाऽप्रवर्तिन्या श्रिया मुक्तिलक्षणेन फलेनोपसमाहरदन्ते। त्रयोदशोऽयं खण्डस्तस्यैवाङ्गमुपासनविशेषमवगमयन्प्रवृत्तः, अन्ते फल्गुफले उपासनविशेषेऽवातरत्। किमिह श्रुतिः स्वातन्त्र्यमवलम्बते, उत सङ्गतिनियतिम्?। स्वातन्त्र्यमिति तु न शोभते प्रतिवचनम्। तत्तु युज्येत खण्डविभागे वा सति।

खण्डशेषेण तु कथमपि पूर्वसङ्गतार्थेन भाव्यम्। नन्वस्ति द्युसम्बन्धेन सङ्गतिः, यत्प्रागृचाऽभ्युक्तं 'अमृतं दिवी'ति प्रत्यभिज्ञायते च तदेवोपास्यमिह 'अथ यदतः परो दिव' इति। सत्यम्। अथापीदं सामान्यं[1] सपदि विषमविन्यासे न पर्याप्तं निमित्तम्। अनल्पानन्तफलनिरूपणैकफले खण्डे तत्परे प्रचलति अन्तेऽत्यल्पफलपरमेकं वचनं यदि श्रूयेत सपदि विषमो हि विन्यासः। नन्वल्पं फलं तेजस्व्यन्नादो भवतीत्यादि प्रागपि श्रूयत एव। सत्यम्। तदानुषङ्गिकं हि। अत्र ब्रूमः, आनुषङ्गिकेण वा वर्त्मना खण्डोऽयं फल्गुफले प्रागेवावतीर्ण इति तेन प्रसङ्गेनान्ते तत्फलकोपासनोपन्यासः सपदि विषमविन्यासपदं नार्हति। अथवा इहाप्यानुषङ्गिकमेवेदं फलम्। ननु किं मुख्यं फलम्, येनेदमानुषङ्गिकं स्यात्। यदेव तेजस्व्यन्नादो भवतीत्यत्र। कथमेतत्? न ह्यङ्गाङ्गिभावोऽत्र, येन तत्रैवात्राप्युत्प्रेक्ष्येत तन्मुख्यमिति। नच कथञ्चित्प्रस्तुतगायत्र्युपासनशेषभूतमेतत्, वैरूप्यात्। गायत्र्युपासनं हि भूतादिभिश्चतुष्पदत्वादिगुणकमप्रतीकालम्बनम्, इदं तु कौक्षेयज्योतिरवलम्बनं प्रतीकालम्बनम्, तदिदमुपासनं गायत्र्युपासनादन्यदेव। तत्कथमुत्प्रेक्ष्येत तन्मुख्यं फलम्। ब्रूमः। नेह कौक्षेयज्योतिषि परस्य ज्योतिषो दृष्टिर्विधीयते। किन्तु प्रत्यगात्मज्योतिषः परज्योतिरात्मकत्वेन चिन्तनं विधीयते। इदं च परब्रह्मात्मकप्रत्यगात्मानुसन्धानरूपं साक्षाद्[2]ब्रह्मविद्याविशेष एव। यथाक्रतुन्यायेन प्रकृतिविविक्तब्रह्मात्मकस्वात्मप्राप्त्या मुक्तिरेवास्य मुख्यं फलम्। अनुदाहृतमप्येतदर्थस्वाभाव्यात् स्फुटमुत्प्रेक्षाम-

१ द्युसम्बन्धित्वम्। २ साक्षात् अप्रतीकालम्बनः।

इति, दृष्टत्वश्रुतत्वाभ्यां गुणाभ्यामुपासनादुदाहृतमानुषङ्गिकं फलम् । सत्येव शरीरे प्रत्यगात्मन्यौष्ण्योपलम्भात् शब्दविशेषोपलम्भाच्च शब्दः स्पर्शश्च तस्मिँल्लिङ्गमिति तस्यैषा दृष्टिरित्यादि सङ्गच्छते । यद्यपि स्पर्शः शब्दश्च न तस्य धर्मः । तथापि तन्नियतधर्मतया भवति लिङ्गम् । 'इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योति'रिति सामानाधिकरण्यनिर्देशस्तु शरीरशरीरिभावनिबन्धनः । ज्योतिःशब्दः स्वयंप्रकाशत्वेन प्रवृत्तिनिमित्तेन प्रत्यगात्मनः प्रकृतेर्व्यावृत्तिमवगमयति ॥८॥

इति तृतीयाध्याये त्रयोदशः खण्डः ।

---

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥१॥

परस्य ब्रह्मणः प्रकारान्तरेणोपासनं प्रस्तूयते । चेतोर्पणाय प्रतीकसाधर्म्यमुखेन ब्रह्मण उपासनं प्रागुपदिष्टम्, इह तु साक्षादुपासनमुपदिश्यत इति विशेषतः सङ्गतिः । परब्रह्मात्मकस्वात्मोपासनमुपदिष्टं प्राक्, इह तु स्वात्मतया परस्य ब्रह्मण उपासनं विधीयत इति वा तथा । रागद्वेषकलुषितचेतसो ह्यशान्ता निःश्रेयससाधनादुपासनपथात् बहिरेव परिभ्रमन्ति, यो हि विजानाति सकलमिदमेकं तस्य भेदग्रहविलोपेन न रागद्वेषाद्यङ्कुरावसरः, तच्चेद्विचार्येत

---

१ तन्नियतस्य वैश्वानराग्नेर्धर्म इत्यर्थः । २ साक्षात्–विना साधर्म्यादिदम् । ३ एष म आत्मेत्यादिवाक्यमभिप्रेत्य स्वात्मतयेत्यभिहितम् ।

सर्वं खल्विदं परिदृश्यमानं ब्रह्मैव, कुतः? यत इदं तज्जलान्—यतस्त-स्मात् ब्रह्मणो जायते, ब्रह्मणि लीयते, ब्रह्मणि अनति—चेष्टते तदेवं ब्रह्मोपादानमिदमखिलं ब्रह्मणो नातिरिच्यते। उपादानादुपादेयं हि नातिरिक्तम्, यस्योत्पत्तिस्थितिलयाः यतस्तस्य हि तदुपादानम्, तदेवमैकात्म्यमवधार्य शान्तो भवेत्—रागद्वेषादिरहितो भवेत्। सति स्वपरभेदप्रत्यये रागद्वेषमूलम्। अपगते च तस्मिन् शान्तः सन्नुपा-सीत। कथमुपासीत? तत्तु अनुपदमुपदिश्यते, इह तु उपासनोपयुक्त-शान्त्यावुपायनिरूपणपूर्वकमुपासीतेत्येतावदेवोच्यते। इतिर्हेतौ। सम्बध्यते चाव्यवहितेन शान्तशब्देन। सत्यपि चिदचिदीश्वरविभागे ब्रह्मोपादानकतया जगतो ब्रह्मात्मकता कथमिति शङ्कां षष्ठे विशेषतो निराकुर्मः। इह सङ्क्षेपोपपादयामः। किं विभागपारमार्थ्यमेको-पादानताविरोधि? न किं घटशरावादयो विभागा एकस्मान्मृत्पि-ण्डात्। विभागकल्पनास्पदतामात्रेण निर्विशेषस्योपादानतां वदन् कथमुपादानतां समर्थयति नाम। अन्यदेतत्, घटशरावादिविभाग इव मृत्पिण्डादेकस्माद्ब्रह्मणोऽयं विभाग इति कथं घटेत तव, यन्मन्यसे स्वरूपतो ब्रह्मणो विलक्षणं चिदचिद्विभागमिमम्। सत्यम्। तथाऽपि न क्षतिः, यत् ब्रह्मस्वरूपान्तर्गतमेव तु भेदमिमं ब्रूमः। यतो विशिष्टं ब्रह्मस्वरूपम्, शब्दादिभिरिव वियदादि, वियदादिभिस्तथाविधैरि-दम्। अद्रव्यमिव द्रव्यमपि क्वचिदपृथक्सिद्धविशेषणं स्यादेव। शरीरतया चेतनाचेतनजातमखिलं परस्य ब्रह्मणो ह्यपृथक्सिद्ध-विशेषणम्। श्रुत्यन्तराच्चेदमवधारितम्। नियतधर्मधर्मिभावापन्नः कश्चन सञ्जातविशेषो ब्रह्मेति स्थितम्, तत्र विशेषणतया व्यवस्थित-

योरपि चेतनाचेतनयोर्विशेष्याद्ब्रह्मस्वरूपादस्त्येव महद्वैषम्यम् । यथा शब्दादाविवाकाशादेः, प्रतिक्षणमुत्पादविनाशशालिनः शब्दादयः श्रवणादिगोचराश्च, आकाशादि तु न तथा । यच्चेदं जगत् तदपि तथाविधः[1] सङ्घातविशेष एव, भोक्ता भोग्यं प्रेरिता चेति त्रयाणामेष समुदायः, एकैकमपि परिदृश्यमानं तथैव । नामरूपव्याकरणश्रुत्या चैतन्निश्चीयते, तिस्रो देवता इति भोग्यजातं निर्दिश्य अनेन जीवेनेति भोक्तुर्द्वारता अहमनुप्रविश्येति प्रेरयितुरनुप्रवेशो नामरूपे व्याकरणवाणीति तन्मूलकं च नामरूपव्याकरणं हि प्रतिपाद्यते । तत्सङ्घातविशेष एव सौक्ष्म्यस्थौल्यभेदादुपादानादुपादेयभावमाप्नोतीति सर्वं खल्विदं ब्रह्मेति श्रवणमुपपन्नतरं नाम । यदिदंशब्दोऽपि ब्रह्मणि स्वरसतः प्रवर्तते । गवादिशब्दा हि प्रकारभूतगोत्वेन मुखेन व्यक्तौ । सम्भवति च स्वशरीरभूतचेतनाचेतनद्वारा स्थौल्ययोगोऽपि, इदंशब्दस्य प्रवृत्तौ निमित्तं तु स्थौल्यं यदुपलम्भाधायकम् । इदंशब्देन चेतनाचेतनमात्रपरिग्रहेऽपि न क्षतिः, विशिष्टे ब्रह्मस्वरूपे तयोरन्तर्गतत्वात् ब्रह्मैवेदमिति निर्देशोपपत्तेः । विशिष्टं प्रत्युपादानत्वे विशेषणांशं प्रत्युपादानत्वमनपायमिति तज्जलानित्यपि नानन्वितम् । इति ।

ननु कोऽयमुपासने विशेषः ? येनोपासनपथे यतितव्यम् । तत्राह—अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति—अथेत्यवान्तरवाक्यभेदे । खल्विति प्रसिद्धौ ।

---

१ तथाविधः—नियतधर्मधर्मिभावापन्नः ।

क्रतुमयः—क्रतुरुपासनम्, मयट् प्राचुर्ये, प्राचुर्यं चेह प्राधान्येन, उपासनप्रधान इति यावत्। पुरुषो ह्युपासनप्रधानः। कुतः? इतो नियमात्। नियमश्चायम्। यथाक्रतुरस्मिन् लोके पुरुषो भवति इतः प्रेत्य तथा भवति—इह लोके जीवन् पुरुषो यथोपास्ते प्रेत्येतो लोकान्तरं तथैव भवति। तादृक्फलो भवति। तदस्मादुपासनस्योपास्यसाधर्म्यापादकत्वनियमयोगात्फलविशेषमधिगच्छन्नाश्रयेदुपासनविशेषमिति भावः। उपासने शान्तेरन्तरङ्गसाधनता तस्यां च तत्त्वनिरूपणस्याभ्युपायता महिमा चोपासनस्येत्येतदुपदिष्टम्। अथ कथमुपासीतेत्येतद्विधास्यन्ननुवदति—स क्रतुं कुर्वीतेति। सः—उक्तेन तत्त्वनिरूपणवर्त्मना शान्तः, क्रतुं कुर्वीत—उपासीत ॥१॥

**मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥**

अथ गुणविधानश्रुतिः। नायं शब्दादिरिव श्रवणादिभिर्गृह्यते, केवलं मनसैव तेन च योगसंस्कृतेन, तत् प्राधान्येन मनोयोगप्राचुर्यान्मनोमय इत्युक्तिः। विशुद्धमनोग्राह्य इति यावत्। यद्वा—इह मनःशब्देन भावो लक्ष्यते, तथा च भावमय इत्यर्थः। 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह'मिति च स्मर्यते। प्राणशरीरः—मुख्यः प्राणो जीवो वा यस्य शरीरं स प्राणशरीरः। एतेन ताभ्यां[1]मस्य वैलक्षण्यं गम्यते। उपकरण[2]मुपकरणी वा यस्यास्य शरीरं सोऽयं तन्नि-

१ ताभ्यां मुख्यप्राणजीवाभ्याम्। २ उपकरणं—प्राणः, उपकरणी—जीवः।

यमलक्षणैश्वर्यसम्पन्नस्ततो हि विशिष्यते । यद्यप्यसौ प्राणादिभिः शरीरी, तथापि न क्षेत्रज्ञ इव सुखदुःखसमाकुलः, स ह्यावृतस्तमसाऽज्ञानेन, अयं तु भारूपः—भाः दीप्तिरेव रूपमसाधारणस्वभावो यस्य, दीप्तिश्चेह ज्ञानप्रकाशः, ज्ञानप्रकाशैकस्वभावेऽस्मिन्नज्ञानतमसोऽन्वयगन्धस्यापि न सम्भावनेति भावः । यद्वा—यद्यप्यसौ प्राणशरीरः, अथापरमस्यासाधारणं प्रकृतितत्संसृष्टविलक्षणं दीप्तिमयं रूपं—तदसावुच्यते भारूप इति । स्वयंप्रकाशैकरसदिव्यतनुरिति भावः । सत्यसङ्कल्पश्च, अवितथो ह्यस्य सङ्कल्पः, परवशो हि वितथसङ्कल्पः स्यात्, क्षेत्रज्ञास्तु कर्मणः परवशाः, अयं त्वकर्मवश्यः स्वतन्त्रश्च, अस्यैव सङ्कल्पविशेषलक्षणे पुण्यापुण्यनामनि कर्मणि नियन्त्रिता नाम क्षेत्रज्ञाः, इतश्चायं विशिष्यते तेभ्यः । आकाशात्मा—आकाशवत्प्रतिरोधानर्हव्यापनशील आत्मा स्वरूपं यस्य स तथोक्तः, सूक्ष्मतम इति यावत् । यद्यप्याकाशादतिसूक्ष्मोऽयम्, अथापि निदर्शनमिदं दृष्टेषूपात्तम् । यद्वा—आ—समन्तात् काशते—प्रकाशते इत्याकाशः परितः प्रकाशमानः आत्मा स्वरूपं यस्य सः । पूर्वं प्रकाशमयता शरीरस्योक्ता, इह तु स्वरूपस्येति भेदः । स्वभावस्वरूपभिदया वा तथा । सर्वकर्मा—क्रियत इति कर्म, सर्वमिदं जगत् यस्य कर्म—येन कृतमिति यावत् । सर्वकामः—काम्यन्त इति कामाः—कल्याणगुणाः—यस्य कल्याणगुणाः सर्व एव, यः कल्याणगुणो न, तस्मिन्नैकोऽपि स गुणपदगोचर इति भावः । सर्वगन्धः सर्वरसः—सर्वः—निरवशेषो दिव्यो गन्धो यस्य, तथा निरवशेषो दिव्यो रसो यस्य, स तथाविधः । 'तथाऽरसं नित्यमगन्धवच्च य'दिति निषेधस्तु प्राकृता-

नवलम्बते । अयं तु दिव्यानित्यविरोधः । यद्वा—यस्यैव विभूतिः सर्वं यज्ञादि सत्कर्म, यस्यैव विभूतिः सर्वो धर्माविरुद्धः कामः, यस्यैव विभूतिर्गन्धः, यस्यैव रसो विभूतिः, सोऽयं सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस उच्यते । तथाच स्मर्यते 'अहं क्रतुरहं यज्ञः' 'तपश्चास्मि तपस्विषु' 'धर्माविरुद्धो भूतेषु कामोऽस्मि' 'पुण्यो गन्धः पृथिव्यां च' 'रसोऽहमप्सु कौन्तेय' इति । यद्वा—लोके हि पामराः परमानन्दमजानन्तः सुखलवकणिकास्वादलुब्धा इतस्ततो धावन्ति तांस्तानर्थाननु कर्मेन्द्रियैर्ज्ञानेन्द्रियैर्वा द्वारैः समुद्घाटितैः, केषुचिच्च कामेषु द्वारमलभमानाः केवलेन मनसा सन्निहिताः सीदन्ति च, यदेषां वागादिकर्मेन्द्रियेणोपस्पृष्टमानन्दाय भवति कर्म, यच्च घ्राणादिभिर्ज्ञानेन्द्रियैरुपस्पृष्टं गन्धादि सुखाय भवति, ये चातिमानुषाः कामा इन्द्रियस्पर्शानवसरेण चेतस्येव विपरिवर्तमानाः, तदिदमखिलमस्मिन्परमात्मनि परमानन्दमये सर्वेश्वरे सन्ति हि नाम । ननु कर्मादयस्ते तेऽर्थाः कथमस्मिन् ? समुद्रे गोष्पदमितिवत् । अपरिमितानन्दे तदर्थसाध्यानन्दाः सन्त्येव, तदिदमभिप्रेत्योच्यते सर्वकर्मा, सर्वगन्धः, सर्वरसः, सर्वकाम इति । गन्धरसौ शब्दादीनामुपलक्षकौ । श्रूयते चान्यत्र—'येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यते' इति 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहित'मिति च । सर्वमिदं जगत् अभ्यात्तः—अभितो व्याप्तवान्, आत्त इति कर्तरि निष्ठा । यद्वा—सर्वमिदमप्राकृतगन्धादिदिव्यगुणानसाधारणतया स्वीकृत-

१ साध्ये साधनोपचार इति यावत् ।

वान् । यद्वा—ये पुनरिन्द्रियसम्प्रयोगाधीनसिद्धिका अतएवार्थकोटौ भासमाना रसादयः सर्वं अभ्यात्तः—युगपदभितो व्याप्तवान्, नैकमप्येषु जात्वनेनाव्याप्तमिति भावः । एतेन तैरयं न विचाल्यत इति व्यजते । अर्थैर्हि विचाल्यते पुरुषः, न चेमे तस्यार्थाः, यो ह्यर्थ्यते स ह्यर्थः, अर्थ्यते चालब्धः, यश्च येन सर्वदाऽभिसम्बन्धः स कथं तस्यार्थो भवेत्, अभिसम्बन्धश्चास्याऽऽकाशस्येवे'त्याकाशात्मा' इत्यनेन प्राक्प्रकाशितं नाम । अतएवायमवाकी परिपूर्णत्वात् । प्रयोजनाभावादनादरश्च ॥ २ ॥

एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः ॥३॥

य एष मनोमयत्वादिगुणकः सोऽयमात्मा मे—ममायमन्तरात्मा । मे इति व्यतिरेकनिर्देशात्प्रत्यगात्मनः स्वस्याप्यन्तरात्मतया व्यवस्थितोऽयं स्वस्मादन्य इति व्यज्यते । अन्तर्हृदये—नातिदूरे, इहैव ममान्तर्हृदये सन्निहितः । कथमणुप्रदेशेऽस्यावस्थितिः ? अणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा—ये लोके अणवः प्रथिता व्रीह्यादयस्ततोऽयमणुः, सूक्ष्मतम इति भावः । हन्त परिमितो, नेत्याह—एष मेऽन्तर्हृदये सन्निहितोऽपि न परिच्छिन्नस्वरूपः । किन्तु

---

१ रसादय इति सर्वरस इत्यव्यवहितनिर्दिष्टस्य ग्रहणम् । कर्मज्ञानेन्द्रियार्थानामुक्तानां ग्रहणमभिप्रेतम् ।

ज्यायान्पृथिव्या ज्यायानान्तरिक्षात् ज्यायानेभ्यो लोकेभ्यः—यदिह पृथिव्यादि लोकान्तं महदुपलभ्यते ततः सर्वतो महान्, स्वतोऽपरिच्छिन्नोऽप्येष सूक्ष्मतमतया सर्वत्र सन्निहितः, उपासके प्रेम्णा वा हृदये तदनुगुणदिव्याकृतिः सन्निहित इति भावः । अणोरणीयस्त्वेन महतो महीयस्त्वेनाप्रतर्क्यमहिमैष इति च व्यजते, मनोमयत्वादिवदिदमप्युपास्यकोटावन्तर्भवति ॥ ३ ॥

सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ॥४॥

विहितानुवादपूर्वकं चिन्तनीयमपरं प्रकारं विधत्ते—सर्वेति । सर्वकर्मेत्येतन्मनोमयत्वादेरुपलक्षकम्, एतद्ब्रह्मेत्यन्तं विहितोपास्याकारानुवादः, अथ चिन्तनीयमपरं प्रकारं विधत्ते—एतमितः प्रेत्याभिसम्भवितास्मि—इतः शरीरात्प्रारब्धात्प्रेत्य—अत्यन्ततो विनिर्गत्य, अनुपदमेतमभिसम्भवितास्मि—प्राप्तास्मि, प्रारब्धशरीरावसानानन्तरं प्राप्यत्वेनाप्युपासीतेत्युपास्यप्रकारान्तरसमर्पकमेतत् । इति क्रतुं कुर्वीतेति पूर्वेण सम्बन्धः । यद्वा—एतद्ब्रह्मेत्यन्तमुपायभूतमुपासनविशेषं मनोमयत्वादिगुणकं प्रस्तुतमनुवादेनोपसंहृत्य तदङ्गतया चिन्तनान्तरं विधीयते—एतमितः प्रेत्याभिसम्भविताऽ-

स्मीति। भाविफलचिन्तनमप्यनेन प्रकारेण कर्तव्यमिति भावः। एतमितः प्रेत्याऽभिसम्भविताऽस्मीत्यपि क्रतुं कुर्वीतेति वाक्यान्तरविधयाऽन्वयः। यद्वा—अथ फलमुच्यते—एतमित इत्यादिना। यस्यास्योपासकस्य एतमुपास्यमानगुणविशिष्टमितः शरीराद्वियुज्य प्राप्ताऽस्मीति स्यान्निश्चयः, तस्य तत्प्राप्तौ न विचिकित्सा, नियतस्तल्लाभ इति भावः। एतेनोपासकसामान्यस्य फलेऽसंशयोऽवश्यमपेक्ष्यत इति व्यज्यते। इति ह स्म शाण्डिल्य आह। अनेनास्या विद्यायाः प्रवर्तकविशेषगौरवकृतं सम्प्रदायगौरवं व्यज्यते॥ ४॥

इति तृतीयाध्याये चतुर्दशः खण्डः।

---

अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति
दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलꣳ स एष
कोशो वसुधानस्तस्मिन्विश्वमिदꣳ श्रितम्॥१॥

अथ कोशविज्ञानमैहिकफलाधायकमुपदिश्यते। त्रैलोक्यस्य कोशतया परिकल्प्य वक्ष्यमाणप्रकारेण चिन्तनं कोशविज्ञानम्। फलं चैहिकं पुत्रस्य चिरायुष्ट्वम्। पृथिव्यादिद्युलोकान्तमेकः कोशः, स चायमन्तरिक्षोदरः—आकाशं हि मध्यवर्तितयाऽस्योदरमिव, मध्यवर्तिसुषिरस्थानीयमिति यावत्। भूमिबुध्नः—भूमिरेवास्य अधस्तया बुध्नः—मूलस्थानीयः। कोशश्चायं न जीर्यति, चिरकालस्थायितया दृढ इति भावः। दिशो ह्यस्य कोशस्य स्रक्तयः—कोणाः। द्युलोकस्तस्योत्तरमुपरितनं बिलं—मुखच्छिद्रम्। स एष पृथिव्यादितत्तदवयव-

विभागसम्पन्नः कोशः, वसुधानः—वसवः प्राणिनां कर्मफललक्षणान्यस्मिन् धीयन्ते तदयं वसुधानः, तस्मिन्नस्मिन्कोशे कर्तृकर्मफललक्षणं विश्वमिदं श्रितम्—अभिसम्बद्धम् ॥१॥

तस्य प्राची दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदꣳ रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदꣳ रुदम् ॥२॥

तस्य—कोशस्य याः स्रक्तयो रूपितास्तासु दिक्षु या प्राची दिक् सा जुहूर्नाम—यतो हूयते प्राङ्मुखीभूयैव सर्वैः, तदुच्यते जुहूरिति । सहमाना नाम दक्षिणा—दक्षिणस्यां दिशि यमपुर्यां सह्यते निरयवेदना सर्वैर्नारकिभिः, तदुच्यते सहमानेति । राज्ञी नाम प्रतीची—सन्ध्यारागरञ्जिततया राज्ञीत्युच्यते, रञ्जयति सर्वान्प्राणिन इति वा राज्ञी, रज्यते हि प्राणिवर्गः सर्वोऽप्याप्रभातं यथायथं व्याप्रियमाणः सायं लब्धविश्रान्तिः स्वस्वानुगुणे स्नेहनिलये । सुभूता नामोदीची—भूतिमता कुबेरेणाधिष्ठितेति सुभूतोच्यते, भूतेश्वरेणाधिष्ठितेति वा सुभूता। स्रक्तितया विभाव्यमानेषु दिग्विभागेषु जुह्वादिनामकतया विभावनं कार्यमिति यावत् । तासां वायुर्वत्सः—दिग्भ्यो हि वायुरुद्भवतिः दिशां स्त्रीलिङ्गतया स्त्रीत्वाध्यासेन, वायोश्च पुल्लिङ्गतया पुंस्त्वाध्यासेन, दिगुद्भवतया च दिशां वायुर्वत्स इति विभावनमुपदिश्यते ।

स य एतमेवं वायुं दिशां वत्सं वेद-य उपासकः, एतं वायुम्, एवं दिशां वत्सं वेद-त्रैलोक्यात्मककोशस्रक्तिभूतदिग्वत्सत्वेन वायुं चिन्तयति, सः न पुत्ररोदं रोदिति-पुत्रविपत्तिनिमित्तकं रोदनं न करोति, न तस्य कदापि पुत्रविपत्तिः स्यादिति भावः । फलेऽस्मिन्नात्मनः संवादमुपदेष्टा आह-सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदं रुदम्-यदहमेतं वायुमेवमुक्तेन प्रकारेण दिशां वत्सं विचिन्तितवान्, अतएव पुत्ररोदनं नारुदम्, पुत्रविपत्तिर्मम नाभूदिति यावत् ॥२॥

अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥३॥

एवं कोशविशेषोपासनमुक्तम् । अथ तदङ्गभूतं जपं विधास्यन् मन्त्रानाह—अरिष्टमित्यादिना । अरिष्टम्-न रिष्टं येन, येन साधनेन रिष्टं विनाशो न स्यात्, तदरिष्टम्, प्रकरणात्पुत्ररिष्टभयनिवर्तकमित्यर्थः । यद्वा-न रिष्टं विनाशो यस्य तदरिष्टम्, त्रिलोको ह्ययं कोशश्चिरकालस्थायी । एवंभूतं कोशं त्रैलोक्यात्मकमुक्तलक्षणं प्रपद्ये-शरणमुपयामि । कस्मै प्रयोजनाय ? अमुना-अमुकनामकेनानेन पुत्रेणेति यावत्, अस्य चिरजीवनप्रयोजनेन निमित्तेनेति भावः ।

१ रोदनार्थकस्य रोदमित्यस्य समभिव्याहारात् रोदितीत्यत्र धात्वर्थो न विवक्षित इति भावः ।

प्रयोजनस्य हेतुत्वविवक्षया तृतीया। त्रिर्ग्रहणं रिष्टभीत्याऽरिष्टदार्ढ्यार्थम्। मन्त्रस्वाभाव्येन वा ॥३॥

स यदवोचं प्राणं प्रपद्य इति प्राणो वा इदꣳ सर्वं भूतं यदिदं किञ्च तमेव तत्प्रापत्सि ॥४॥
अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥५॥
अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥६॥ अथ
यदवोचꣳ स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम् ॥७॥

प्राणादिपदैर्विवक्षितं श्रुतिः स्वयमेव व्याचष्टे—स यदवोचमित्यादिना। सोऽहं यदवोचं प्राणं प्रपद्ये इति तेन विवक्षितमेतत्, किम्?, प्राणो वा इदं सर्वं भूतं यदिदं किञ्च तमेव प्रापत्सीति, सर्वमिदं पशुपक्ष्यादिभूतजातं प्राणो हि, तत्तमेव प्राणात्मकमखिलं भूतजातं प्रपन्नोऽसीति। एवमुत्तरत्र प्रपद्ये इत्यन्तोऽनुवादो व्याख्यानार्थः, पश्चात्तनं व्याख्यानम्। द्विरुक्तिर्विद्यासमाप्तौ ॥४-७॥

इति तृतीयाध्याये पञ्चदशः खण्डः।

---

पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशति वर्षाणि

तत्प्रातःसवनं चतुर्विꣳशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदꣳ सर्वं वासयन्ति ॥१॥

उपदिष्टमुपासनं पुत्रदीर्घायुःफलकम्, अथोपदिश्यते आत्मनो दीर्घायुःफलकमुपासनम्; जीवन् हि भद्राणि पश्येत् । पुरुषो वाव यज्ञः—योऽसौ जीवनधर्मा प्रसिद्धः पुरुषः सोऽयं यज्ञः, जीवन्तमात्मानं यज्ञत्वेन चिन्तयेदिति भावः । अव्यवहिते खण्डे पुरुषे यज्ञसम्पत्तिप्रकारं वक्ष्यति—स यदशिशिषतीत्यादिना । इदानीं पुरुषस्यायुस्त्रेधा विभज्य तत्र प्रातःसवनादिदृष्टीर्विदधाति । तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनम्—पुरुषस्य यान्याजन्मतश्चतुर्विंशतिवर्षाणि प्राथमिकविभागावरुद्धानि तान्येव प्रातःसवनम्, तत्र प्रातःसवनदृष्टिः कार्येति भावः । तत्र तदध्यासे निमित्तसाम्यमाह—गायत्रीच्छन्दस्कं प्रातःसवनम्, गायत्री च चतुर्विंशत्यक्षरा, आयुषः प्राथमिकोऽयं विभागस्तु चतुर्विंशतिवर्षकः, तत्सङ्ख्यासामान्यात्तत्र तदध्यासो युक्त इति भावः । स चेदयमायुर्विभागः प्रातःसवनं वसवस्तदनुबन्धिनः सम्पाद्याः, प्रातःसवनस्य हीशाना वसवः श्रूयन्ते, तत्राह—तदस्य वसवोऽन्वायत्ताः प्राणा वा वसवः—प्रसिद्धयज्ञसम्बन्धिनः प्रातःसवनस्य वसवोऽन्वायत्ताः—अनुसम्बद्धाः, अस्य प्रातःसवनस्यान्वायत्ता वसवस्तु प्राणाः, प्राणेषु वसुदृष्टिः कार्येति भावः । तत्र तदध्यासे निमित्तमाह—एते हीदं सर्वं वासयन्ति—एते प्राणा हि इदं सर्वं शरीरेन्द्रियादि पुरुषस्य वासयन्ति—स्थापयन्ति, अवि-

शीर्णतया द्रढयन्तीति यावत्। तस्माद्वासयितृत्वगुणयोगाद्वसुपद-प्रवृत्त्या वसुदृष्टिः प्राणेषूपपन्नेति भावः ॥१॥

तं चेदस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा वसव इदं मे प्रातःसवनं माध्यन्दिनꣳ सवन-मनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥२॥

तं चेदस्मिन्वयसि किञ्चिदुपतपेत्—एवमात्मनि पुरुषे यज्ञभावनां कुर्वन्तमुपासकं प्रथमे वयसि रोगादिकं पीडयेत्, तदा स पुरुष-मात्मानं यज्ञं भावयन् एवं ब्रूयात्, किमिति? हे प्राणा वसवः—प्रातःसवनेशानाः प्राणलक्षणा वसव इदं मे प्रातःसवनं माध्यन्दिनं सवनमनुसन्तनुत—अद्य प्रवर्तमानं चतुर्विंशतिवर्षात्मकप्रातःसवनं वर्तिष्यमाणेन चतुश्चत्वारिंशद्वर्षात्मकमाध्यन्दिनसवनमनुसन्तनुत सम्बद्धं कुरुत, तेन सहाविच्छिन्नं कुरुतेति यावत्। माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेति—यज्ञरूपोऽहं प्रातःसवनेशानां प्राणलक्षणानां वसूनां मध्ये युष्मदाधिपत्यसमय एवेति यावत्। मा विलोपं प्राप्नुयाम्, मृत्युर्माभूदिति यावत्। इतीत्यस्य ब्रूयादित्यनेन सम्बन्धः। एवमनुध्यानपूर्वकमिदं पठन् उद्धैव तत एत्यगदो ह भवति—तत आपद उदेत्येव—उद्गच्छत्येव, अगदो भवति—अरोगो भवति। हेति प्रसिद्धौ। इदं च फलदार्ढ्याय ॥२॥

अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दि-

न॰ सवनं चतुश्चत्वारि॰शदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिन॰ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीद॰ सर्व॰ रोदयन्ति॥३॥

यः पुरुषस्य चतुर्विंशतिवर्षत उपरितनश्चतुश्चत्वारिंशद्वर्षसमुदायात्मक आयुषो मध्यमो विभागस्तदेव माध्यन्दिनं सवनम्, तस्मिंस्तद्दृष्टिः कार्येति यावत् । तत्र निमित्तमुच्यते—चतुश्चत्वारिंशदक्षरेति । माध्यन्दिनं सवनं त्रिष्टुप्छन्दस्कम्, त्रिष्टुप्छन्दस्तु चतुश्चत्वारिंशदक्षरपरिमितम् । तदेवं सङ्ख्यासामान्यात्तस्मिंस्तद्दृष्टिरिति भावः । माध्यन्दिनस्य प्रसिद्धस्य रुद्रा ईशानाः अस्य चेशाना रुद्राः प्राणा एव । कथं तेषां रुद्रत्वम्? एते हीदं सर्वं रोदयन्ति, तत् प्राणानां रुद्रत्वं समुचितमिति भावः ॥३॥

तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा रुद्रा इदं मे माध्यन्दिन॰ सवनं तृतीयसवनमनुसन्तनुतेति माऽहं प्राणाना॰ रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥४॥ अथ यान्यष्टाचत्वारि॰शद्वर्षाणि तृतीयसवनमष्टाचत्वारि॰शदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वावादित्या एते हीद॰ सर्वमाददते ॥५॥ तं चेद-

स्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात् प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माऽहं प्राणानामादित्यादीनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥६॥

तं चेत्यादि स्फुटम् । एते हीदं सर्वमाददते—एते प्राणाश्चक्षुरादिभिरिन्द्रियैरिदं रूपादि सर्वमाददते ॥४—६॥

एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत्प्र ह षोडशं वर्षशतं जीवति य एवं वेद ॥७॥

अथास्याः पुरुषविद्यायाः फलं संवादेन द्रढयन्नाह—एतद्धेति । तद्विद्वान्—तदिदं पुरुषलक्षणयज्ञस्वरूपं विद्वान्, पुरुषविद्यानिष्ठः नाम्ना महिदासः, ऐतरेयः—इतराया अपत्यम्, एतदाह स्म वै । किमाह ? इदमाह रोगं सम्बोध्य, त्वं किं वृथा मे—पुरुषविद्यानिष्ठं मां एतदुपतपनमुपतपसि, अनेन उपतपनेन न प्रेषयाम्यहम्, तव प्रयासो विफल इति यावत् । स हि महिदासः षोडशं वर्षशतमजीवत् । इदानीमपि य एवं वेद—उपास्ते, स षोडशं वर्षशतं प्रकर्षेण जीवति हि—जीवेदेवेत्यर्थः ॥७॥

इति तृतीयाध्याये षोडशः खण्डः ।

---

**स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः ॥१॥ अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति ॥२॥ अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥३॥ अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः ॥४॥ तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवास्यावभृथः ॥५॥**

पुरुषो यदशिशिषति—अत्तुमिच्छतीति यत्, यच्च पिपासति—पातुमिच्छति, यन्न रमते—रतिं न करोति, ता एवेमा अशिशिषादयः अस्य—यज्ञलक्षणपुरुषस्य दीक्षाः, दीक्षाया दुःखरूपत्वादशिशिषादीनां च तथात्वात्तासु दीक्षात्वसम्पत्तिरिति भावः। यदश्नाति यत्पिबति यद्रमते, तदशनादि, उपसदैः प्रसिद्धयज्ञानुबन्धिभिः कर्मविशेषैरेति साम्यम्, अशनादिकमेवास्य पुरुषयज्ञस्योपसत्क्रियेति भावः। तत्—तेन अशनादिना, विभक्तिलोपश्छान्दसः। असौ पुरुषयज्ञः उपसदैरेति सम्बन्धमिति वार्थः, आशयस्तु स एव। उपसत्क्रियायाः पयोव्रतसान्निध्याद्यजमानस्य भवति मनस्तुष्ट्यवकाशः। अशनादिषु च तद्योगादुपसद्भावः समुचित इति बोध्यम्। अथ यद्धसतीत्यादि—हासादीनि शब्दवत्त्वसाम्यात् स्तुतशस्त्रस्थानीयानि भवेयुरिति भावः। अथ यत्तप इत्यादि—तपोदानादि अस्य पुरुषलक्षणयज्ञस्य दक्षिणाः धर्मपोषकत्वसामान्यात्। यस्मात्पुरुषो यज्ञः,

तस्मात् सोष्यति सुतमियम्, असोष्ट सुतमियमिति लोके प्रयुज्यते। प्रसिद्धे यज्ञे ह्यसौ सोमं सोष्यति असौ सोमसोष्टेति प्रयुज्यते। तदेवं सोष्यतीत्यादिप्रयोगसामान्यात् पुरुषो यज्ञ इति भावः। प्रसिद्ध इव यज्ञे इह सोष्यत्यसोष्टेत्यस्य विषयः क इत्यत्राह—पुनरुत्पादनमेव तदिति। यत्सोष्यतीत्यादिना व्यवह्रियते तत् पुरुषस्योत्पादनमेव उत्पत्तिरेव। जन्मनि सवनदृष्टिः कार्येति भावः। मरणमेवावभृथः—समाप्तिसाम्यात् ॥१–५॥

तद्धैतद् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचाऽपिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसंशितमसीति तत्रैते द्वे ऋचौ भवतः ॥६॥

तदेतत्—उक्तदीक्षाद्युपलक्षितपुरुषलक्षणयज्ञचिन्तनम्, गोत्रेणाङ्गिरसो नाम्ना घोरः, नाम्ना कृष्णाय देवक्याः पुत्राय कस्मैचित् शिष्यायोक्त्वा उवाचेदम्, य एवमुपास्ते सः अपिपास एव भवेदिति पुरुषविद्या स्तूयते। वैधेऽर्थे लिट्। यद्वा—भाविन्यपि फले स्थैर्याविलम्बावभिप्रेत्य तथा प्रयोगः। यथा भिषगौषधं पाययित्वा आर्तं प्रति ब्रूयात् गता ते व्याधिरिति, तथेहोच्यते, अपगता तस्य पिपासेति। पिपासेत्यनेन क्षुदुपलक्ष्यते, यदस्याः पुरुषविद्यायाः फलं प्राह षोडशवर्षशतं जीवतीति, तज्जीवनं क्षुत्पिपासोपहतं न दुःखिजीवनं किन्तु सुखिजीवनमिति उक्तमेव फलं विशिष्यते।

१ इदं वक्ष्यमाणम्। २ प्रोवाच तां तत्त्वतो ब्रह्मविद्यामित्यत्रेवेति भावः।

वचेरर्थान्तरे वृत्तिमध्याहारमितेरपि ।
वदतां वचने श्रद्धा रक्ष्यतां फलगौरवात् ॥ १ ॥
वचेर्वृत्तिरनुष्ठाने नेया क्लेशेन केवलम् ।
पिपासादुःखशून्ये तु नापिपासपदं तथा ॥ २ ॥
अविलम्बेन लब्धार्थो नेच्छया दुःखमश्नुते ।
इच्छा हि न स्वतो हेतुर्दुःखे किन्तु विनाऽर्थतः ॥ ३ ॥
अपिपासपदेनैके विद्यान्तरवितृष्णताम् ।
लक्षयन्त्यभिमन्यन्ते व्यवधानेन चान्वयम् ॥ ४ ॥

सः—पुरुषविद्यानिष्ठः[1], अन्तवेलायाम्—आयुषोऽन्तवेलायाम्, एतत्—वक्ष्यमाणम्, त्रयम्—मन्त्रत्रयम्, प्रतिपद्येत जप्यतया, जपेदिति यावत्, किं तत्? अक्षितमसि अच्युतमसि प्राणसंशितमसीति । अक्षितम्—अक्षीणम्, न जातु ते क्षयः स्वरूप इति यावत् । अच्युतम्—स्वभावात्, न जातु ते स्वभावेऽन्यथाभाव इति यावत् । प्राणसंशितमसि—प्राणस्य यत्संशितं सूक्ष्मं तत्त्वं तदसि । प्राणस्याधिदैविकं रूपमादित्यं तेज एवं स्तूयते । कथमवगम्यते । चिरायुष्ट्वफलकपुरुषयज्ञदृष्टेः प्राणस्याधिदैविकरूपस्तुतिर्हि समुचिता । नन्वायुषोऽन्ते किमनेन जपेन? अङ्गतयैव तत्प्राप्तेः । ननु कोऽयमतिशयोऽनेन पुरुषविद्यायाः? येन तदपेक्षयाऽङ्गता स्यात् । फलं तु सम्पन्नं चिरायुष्ट्वम्, अनिष्पन्ने साधनस्वरूपेऽतिशयशून्ये वा फलनिष्पत्तिस्तु न घटते, तत् नानेन साधनस्य स्वरूपमतिशयो वा आधीयते । सत्यम्, अथापि फलभाक् नियम्यते । विधिविलङ्घने च

1 पुरुषविद्यानिष्ठः ।

स्यात् प्रत्यवायस्पर्शः । सः—पुरुषविद्यानिष्ठः, अन्तवेलायाम्—अन्वहं विधीयमानस्य पुरुषे यज्ञचिन्तनस्य समाप्तिसमये, उपासनतो व्युत्थानसमये इति यावत् । एतत्त्रयं प्रतिपद्येतेत्यर्थः । नाद्य शङ्कावकाश इति[1] कश्चित् । अपरस्तु अभिप्रैति—अपिपास एव स बभूव—सोऽयं पुरुषविद्यानिष्ठः, अपिपास एव स भवति, लकारव्यत्ययश्छान्दसः, अवश्यभावितामभिप्रेत्य पूर्ववत् लक्षणया वा तन्निर्वाहः, पिपासेति तृष्णोच्यते—असङ्कोचन्यायात्, सर्वतो विषयात् वितृष्ण एव भवतीत्यर्थः । चिरायुःसम्पत्तिमुख्यफलकमिदं पुरुषे यज्ञदर्शनम्, न तेनैव फलेन विश्राम्यति; योजयति चैनं विषयवैतृष्ण्यापादनद्वारा ब्रह्मविद्यायामिति यावत्, तस्मात्सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येतेति । परे तु—चिरायुष्ट्वानुगृहीतब्रह्मविद्यानिष्ठः आयुषोऽन्तवेलायामेतत्त्रयं प्रतिपद्येतेति तु व्याचक्षते । अक्षितमसीत्यादिभिस्त्रिभिर्मन्त्रैर्यत्स्तुतं तद्विशेषतः स्तुवन्नाह—तत्रैते इति । तत्र—मन्त्रत्रयेन स्तुते तेजोविशेषे एते ऋचौ भवतः ॥६॥

आदित्प्रत्नस्य रेतसः ॥७॥ उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरꣳ स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥८॥

ऋचावाह । तत्र प्रथमामृचं 'आदित्प्रत्नस्य रेतस' इति प्रतीक-

---

१ अस्त्या कश्चिदिति निर्देशः । २ अयमपि निर्देशस्तथा ।

ग्रहणमात्रेण श्रावयति। इयं च ऋक् समग्राः 'आदित्प्रत्नस्य रेतसः ज्योतिः पश्यन्ति वासरं परो यदिध्यते दिवी'ति। प्रत्नस्य—प्राचीनस्य, रेतसः कारणस्य, आदित्—आदिम्, तान्तश्छान्दसः प्रयोगः। यदस्य जगतः समग्रस्य प्रथमं बीजभूतं जलम्, तस्यापि तेज आदिभूतमिति सावित्रं तेजस्तेजस्तत्त्वाभेदेन स्तूयते। यद्वा—आत् इत् इत्यनर्थकौ निपातौ। प्रत्नरेत इति सूर्य एव वा स्तूयते, तस्य ज्योतिरिरिति सम्बन्धः। तदिदं सावित्रं तेजः पश्यन्ति केचन प्रणिधानदृष्ट्या, इदमेव तेजो वासरम्—वासरविभागापादकम्। उदितमात्रे सूर्ये भूतमात्रेण दृश्यते नामालोकात्मकमिदं तेजः, न तद्धोच्यते, किन्तु सूक्ष्मं परो यदिध्यते दिवि—यत् परमस्मात् भुवि परिदृश्यमानात् किमपि सवितुर्देवस्य सूक्ष्मं तेज इध्यते। ऋगन्तरमुद्वयमित्यादि। यत्तमसः पर्युचरम्—अन्धकारप्रतिभटम्, तत्तेजः पश्यन्तः प्रणिधानेन, उत्तमम्—श्रेष्ठमस्मात् भौमात्, स्वः—द्युसम्बन्धि उक्तं तेजः पश्यन्तः प्रणिधानेन, उदगन्म—उत्क्रम्य मानुषाल्लोकात्प्राप्ताः स्मः। कम्?—देवत्रा देवं—देवेषु द्योतमानम्, उत्तमं ज्योतिः—उत्कृष्टज्योतिर्लक्षणं सूर्यम्। यद्वा—आदित्यस्यैव तेजः य एषोऽन्तरादित्ये तस्यापि निर्वाहकः परः पुरुषः, तस्य तेजसा अभेदेनाभ्यस्य स्तूयते। यत्प्रत्नं रेतो जगतोऽस्य प्रधानलक्षणं तस्याप्यादिं द्युलोके दीप्यमानं वासरविभागनिर्वाहकं पश्यन्ति केचन प्रणिधानपराः; तमसोऽज्ञानलक्षणात्प्रकृतेर्वा परमिति, अन्यत् समानम्। अभ्यासो विद्यापरिसमाप्त्यर्थः ॥७–८॥

इति तृतीयाध्याये सप्तदशः खण्डः।

---

मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥१॥

अथ मनस्याकाशे चोभयस्मिन् ब्रह्मदृष्ट्योपासनमुपदिश्यते । मनो ब्रह्मेत्युपासीत, इत्यध्यात्मम्—अयमुपासनप्रकारः शरीरे, शरीरान्तर्गते तत्त्वे ब्रह्मदृष्टिरेवमिति यावत् । अथाधिदैवतम्—देवतामध्ये ब्रह्मदृष्टिरनन्तरमेवोपदिश्यते । सा चेत्थम्, आकाशो ब्रह्मेति, उभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च—एवं युगपद्दृष्टिद्वयमध्यात्ममधिदैवतं चोपदिष्टं भवति, समस्तमेकमुपासनमिति यावत्, उभयमादिष्टं भवतीत्युपसंहारादेवमवगम्यते । शरीरे मनसः भूतेष्वाकाशस्य सूक्ष्मतया तयोर्ब्रह्मदृष्टिविधानम् ॥१॥

तदेतच्चतुष्पाद्ब्रह्म वाक् पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवत्यध्यात्मं चैवाधिदैवतं च ॥२॥

उपदिष्टां दृष्टिं दृष्ट्यन्तरेण विशिनष्टि—तदेतदिति । तदेतद्ब्रह्म—मनस्याकाशे चाध्यस्यमानं ब्रह्म, चतुष्पाद्—पादचतुष्टयविशिष्टम्, के ते पादाः ? वाक् पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पादः । प्राणोऽत्र घ्राणः, उभयत इन्द्रियाम्नानात्, मनोऽपेक्षया मुख्यप्राणस्य पादत्वानुपपत्तेश्च, नहि मनसो वशे मुख्यः प्राणः, अस्य तु

वशे मनः श्रूयते चैतदन्यत्र प्राणेन्द्रियसंवादे, या चास्य प्राणाख्यपादस्य वाय्वाख्यपादोपकार्यता 'प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति चे'त्यनुपदं श्रूयमाणा सापि नोपपद्येत, यश्च निर्वाहः वायुप्राणयोरेकतत्त्वत्वादिति, स च न हृदयङ्गमः, न ह्येकतत्त्वतोपपादनेनानयोरुपकार्योपकारकभावः सिध्यति, स हि श्रूयते वायुना ज्योतिषा भातीति, पादान्तरे चैवमेव 'वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा—चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा—श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा' इति, निर्वाते प्राणनोच्छित्त्याऽस्ति प्राणने कर्मणि वायूपकार्यता मुख्यस्य प्राणस्येति चेत्, अथापि पादत्वानुपपत्तिः पूर्वापराननुगुणता च प्रदर्शिता तथैवास्ति । ननु दृष्टिमात्रमिहाभिप्रेतम्; न वस्तुतः पादत्वम्, तत्किमुपपत्तिविचारेण, नैवं दृष्टिरपि निमित्तसापेक्षा, अन्यथा सर्वत्र सर्वदृष्टिविधानप्रसङ्गात्, कथमपि सम्बद्ध एव दृष्टिविधयोऽपि लोके वेदे च, 'वागादीनां चतुर्णां मनोनियाम्यत्वान्मनःपादत्वाध्यवसायो युक्त इति भाव' इत्यनेन निमित्तमुपपादयता निमित्तसापेक्षता स्वीकृतैव, ननु—यन्निमित्तं स्वीकृतमस्माभिस्तदनूद्यते त्वयैव, सत्यम्, अनूद्यते नाम नतु स्वीक्रियते, असङ्गतेः । उपपादितं चासाङ्गत्यम् । यदि वागादीनां चतुर्णामिति ग्रन्थे घ्राणो विवक्षितः, वायुप्राणयोरेकतत्त्वत्वादित्युत्तरग्रन्थो विरुध्येत, उत्तरग्रन्थाविरोधेन पूर्वग्रन्थे चतुर्णामित्यनेन मुख्यप्राणस्य चेद्ग्रहणं तस्य मनोनियम्यता न कथञ्चिदपि, कथञ्चिदुपपाद्येत चेदाग्रह एव केवलम्, प्रकरणास्वारस्यं तु तदवस्थम् ।

न च प्राणशब्दस्य घ्राणपरताश्रयणं दूषणम्, सत्यौचित्ये सामान्यशब्दस्य विशेष्ये पर्यवसानं हि स्वारसिकम् । न केवलमिह तथा, अन्यत्रापि हि श्रूयते–'अथ ह प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायत् यत् कल्याणं जिघ्रति तदात्मने । ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा' 'यदेवमप्रतिरूपं जिघ्रति स एव पाप्मा' इति । कथं घ्राणस्य वा वायूपकार्यतेति चेत्, श्रूयते हि 'स वायुना गन्धाय भाती'ति, यथा गवादिश्चतुष्पात्स्ववशे वर्तमानैः पादैस्तत्र तत्र क्रामति तथेदं मनः स्ववशे वर्तमानैर्वागादिभिस्तत्र तत्रार्थे क्रामतीति युक्तं वागादीनां मनोपेक्षया पादत्वम् । इत्यध्यात्मम्–इत्ययं पादविभागः शरीरे, यन्मनोब्रह्म शरीरे तस्यैवं पाददृष्टिर्विधेयेति भावः । अथाधिदैवतमित्यादि–यद्भूतेष्वाकाशं ब्रह्म तस्याग्न्यादयः पादाः, उदरविलग्नत्वसाम्यात्, आकाशस्योदरे ह्यग्न्यादयो विलग्नाः ॥२॥

वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥

प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥४॥

---

१ तथा–घ्राणपरतया प्राणशब्दप्रयोगः ।

चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥५॥

श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥६॥

अध्यात्मं ये पादाः अधिदैवतं च ये पादा उक्तास्तेषां मिथः सम्बन्धविशेषं तत्तद्विज्ञानस्य फलविशेषं चाह—वागेवेत्यादि । वागेव ब्रह्मणश्चतुर्थः पादः—अध्यात्ममुपास्यतया विहितस्य मनोब्रह्मणो वाग्रूपोऽयं चतुर्थः पादः, चतुर्ष्वेक इति यावत्, एकैकस्यापि चतुष्ट्वसङ्ख्यापूरकत्वमितरापेक्षयाऽस्त्येवेति चतुर्थ इति निर्देशः, सोऽग्निना ज्योतिषा अधिदैवतमुपास्यतया विहितस्याकाशब्रह्मणो द्वितीयेन पादेन, भाति स्वयं प्रकाशते, तपति च स्वगोचरम्, कार्याधायकं भवतीति यावत् । भातीति स्वरूपयोग्यताऽभिप्रेता, तपतीति फलाधायकता । युक्तं चाग्निना ज्योतिषा वाग्भातीति, अग्निर्वाचोऽधिष्ठानम्, 'अग्निर्वाग्भूत्वा मुखं प्राविश'दिति च श्रूयते । य एवं वेद स कीर्त्या गुणवृत्तादिनिमित्तकया यशसा वितरणनिमित्तकेन ब्रह्मवर्चसेन ब्रह्मणोऽधीतस्य वेदस्य वर्चसा अध्ययननिमित्तकेन च तेजसा भाति च तपति च । एवमुत्तरत्रापि बोध्यम् ॥३-६॥

इति तृतीयाध्यायेऽष्टादशः खण्डः ।

---

**आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यान-
मसदेवेदमग्र आसीत् तत्सदासीत्सम-
भवत्तदाण्डं निरवर्तत तत्संवत्सरस्य
मात्रामशयत तन्निरभिद्यत ते आण्ड-
कपाले रजतं च सुवर्णं चाभवताम् ॥१॥**

अथादित्ये ब्रह्मदृष्टिरुपदिश्यते । आदित्यो ब्रह्मेत्यादेशः, आदेशः—उपदेशः, प्रवर्तत इति शेषः । आदित्यं ब्रह्मदृष्ट्या भावयेदिति यावत् । तस्य—आदेशस्य आदेशगोचरस्यादित्यस्य वा, उपव्याख्यानम्—सन्निहितं विशेषाख्यानं क्रियते । प्रक्रान्तोपदेशोपयोगिविशेषोपदेशः कश्चिदयं विधीयते इति यावत् । असदेवेदमग्र आसीत्—यानीमानि भूतानि ये चैषामिमे कामाः सर्वमिदमग्रे सृष्टेरसदेवासीत् । नेहात्यन्ततः सत्ताभावोऽसदेवेत्यनेनावधार्यते,आसीदित्यस्यानन्वयात्, तत्सदासीदित्यस्य चानन्वयात्, अपि तु नामरूपभेदसम्पत्त्यभाव एव, अतएव 'कथमसज्जायेते'त्यन्यत्र क्रियमाणोऽसदुत्पत्तिप्रतिक्षेपोऽपि सङ्गच्छते । असत्यादित्ये तम इव तम एव केवलमासीदिति भावः । तत्सदासीत्—तमसि निलीनमुषसि किञ्चिदिदमस्तीत्यवगम्यमानमीषद्विभक्तं तमसः सूक्ष्मं महदादिसद्रूपमासीत् । तत्समभवत्—तदेव तदनु सम्यगभवत्, भवतिः सत्तायाम्, विशेषतः सत्तामगमदिति यावत्,

---

१ अथ—आदित्ये पाददृष्टिविधानानन्तरम्; आदित्यो ब्रह्मणः पाद इत्युक्तम्, अथ ब्रह्मैवेत्युपदिश्यत इति भावः ।

अभिव्यक्त्यर्हशब्दादिविशेषमाकाशादिरूपस्थूलमासीदिति भावः । तदाण्डं निरवर्तत—तदेव मिथः संसृष्टं कालेनाण्डरूपमभवत् । तत्संवत्सरस्य मात्रामशयत—तदण्डमिदानीं प्रसिद्धस्य संवत्सरस्य मात्रां परिमितिम्, तावन्तं समयमिति यावत् । अत्यन्तसंयोगे द्वितीया, अशयत—अस्पन्दमासीत् । तत्प्रासे समये निरभिद्यत स्वयम् । निर्भिन्ने तस्मिन् ये अण्डकपाले अभवतां ते अण्डकपाले रजतं च सुवर्णं चैकैकमभवताम् ॥१॥

तद्यद्रजतꣳ सेयं पृथिवी यत्सुवर्णꣳ सा द्यौर्यज्जरायु ते पर्वता यदुल्बꣳ स मेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदकꣳ स समुद्रः ॥२॥

तद्यदधस्तनं रजतं सा पृथिवी, यदुपरिष्टात्सुवर्णं सा द्यौः द्युलोकः। यज्जरायु—स्थूलं गर्भपरिवेष्टनं ते पर्वताः—तान्येवाधो निपतितानि पर्वता अभूवन् । यदुल्बं सूक्ष्मं गर्भपरिवेष्टनं स मेघो नीहारश्च बभूव । समेघ इति समस्तं वा । या धमनयो वेष्टनशिरास्ता नद्यः । यद्वास्तेयमुदकम्—गर्भे वस्तुनि भवदुदकम्, गर्भस्थमुदकमिति यावत्, स समुद्रः ॥२॥

अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्सर्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रतिघोषा उलूलवो-

ऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे चैव कामाः ॥३॥

अथ यत्तदजायत तस्मिन्नण्डे सोऽसावादित्यः । तं जायमानमनु सर्वाण्येतान्युदतिष्ठन् । कानि इमानि[1], घोषा उलूलवः सर्वाणि च भूतानि सर्वे च कामाः—उलूलुरित्यनुकरणं घोषस्य, उत्सवसमये ईदृशो घोषः क्वचिद्देशे प्रवर्तते, इह चोलूलवो व्यवहारा एव, यानीमानि भूतानि ये चेमे कामा यश्चायं तदुभयमूलको व्यवहारघोषः सर्वमिदमादित्योदयमनु समुत्पन्नमिति यावत् । यस्मादेवं तस्माद्द्यापि तस्योदयं प्रति अस्तं प्रति च उलूलवो घोषाः सर्वाणि भूतानि सर्वे च कामा उत्तिष्ठन्ति, उत्थानमिह प्रवृत्तिः । यद्यपि तस्मादस्तं प्रति समुत्तिष्ठन्तीति न युक्तम्[2], अथाप्यस्तङ्गतस्यापरत उदयात् युक्तं तत् । प्रत्यायनम्—प्रत्यागमनं वा । एतेनादित्यस्य सर्वभूतादित्वमहिमा निरूपितः । तेन च तस्मिन् ब्रह्मदृष्टौ भूतादित्वं निमित्तमुक्तं भवति ॥३॥

स य एतमेव विद्वानादित्यं ब्रह्मेत्युपास्तेऽ-
भ्याशो ह यदेनꣳ साधवो घोषा आ च
गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ॥४॥

य एतमादित्यमेवं घोषाद्युत्थानानुबन्धित्वमहिमपूर्वकं जानन् ब्रह्मेत्युपास्ते, एवं ये[3] साधवः शोभना घोषाः ते अभ्याशः अचिरेण

---

१ अस्तमनु घोषाद्युत्थाने आदित्यजन्मानुघोषाद्युत्थानमुपवर्णितं कथं निमित्तं भवेदिति भावः । २ अपरतो घोषाद्युत्थानं घटते इति भावः । ३ यत्—ये इत्यर्थः, लिङ्गवचनव्यत्ययश्छान्दस इत्यर्थः ।

आगच्छेयुः—स्वयमापतेयुरयत्नाहृताः उप च निम्रेडेरन्—सङ्गत्य च सुखयेयुः। द्विरुक्तिरध्यायपरिसमाप्तौ ॥४॥

इति तृतीयाध्याये एकोनविंशः खण्डः।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण-परमहंसवर्य-योगिराज-श्रीगोपालानन्दस्वामिविरचिते छान्दोग्योपनिषद्भाष्ये तृतीयोऽध्यायः ॥३॥

---

## अथ चतुर्थोऽध्यायः।

ॐ जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान्मापयाञ्चक्रे सर्वत एव मेऽत्स्यन्तीति ॥१॥

आख्यायिकेयं सुखप्रतिपत्तये। व्यज्यते चानया विद्याप्रदाने यथासम्भवमधिकारिपरीक्षा कर्तव्येति। श्रद्धादेयः—गोभूहिरण्यादि सर्वं श्रद्धयैव देयं यस्यासीत्स तथोक्तः, बहुदायी—बहुदानशीलश्च, बहुपाक्यः—बहु पक्वमन्नं अतिथ्यभ्यागतार्थं यस्य स तथोक्तः, पुत्रायणस्यापत्यं नाम्ना जानश्रुतिरास—बभूव। स जानश्रुतिः सर्वतो दिक्षु आवसथान्—आवासान् पथिकजनवासार्हान्, मापयाञ्चक्रे—शिल्पिभिरकारयत्। सर्वत एव मे अत्स्यन्तीति—सर्वतो देशात्तत्र तत्रावसथे समेत्य सर्वे मेऽन्नमत्स्यन्तीत्यभिप्रायेणावसथान्मापयाञ्चक्रे ॥१॥

अथ ह हंसा निशायामतिपेतुस्तद्धैवं हंसो हंसमभ्युवाद भो भो हि भल्लाक्ष भल्लाक्ष

**जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीदिति ॥२॥**

अथ धर्मो विविदिषायां द्वारं भवतीत्येतद्व्यञ्जयन्नाह—अथेति । अथास्य वितरणविशेषसन्तुष्टा महर्षयो देवा वा हंसा भूत्वा निशायां हर्म्यतलमधिशयानेऽस्मिन् अतिपेतुः—उत्पतितवन्तः । तत्—तस्मिन्समये, तेष्वेको हंसो हंसमुपरि पुरतः पतन्तमभ्युवाद, भो भो इत्युच्चैः सम्बोधनं पुरतः पततोऽभिमुखीकरणाय, अवधानायेत्येतत् । भल्लाक्ष भल्लाक्ष—अवधानातिशयावश्यकताव्यञ्जनाय द्विरुक्तिः, भल्लशब्देन वैपुल्यं लक्ष्यते, परमक्षिणी ते विशाले अनर्थमात्मनः सन्निहितं तु न पश्यसीति निन्दागर्भमिदम् । अनर्थमेव सन्निहितमाह—जानश्रुतेः पौत्रायणस्य ज्योतिः दिवा समं—सहस्रकिरणभास्वरेण दिवसेन तुल्यमद्यापि रात्रौ आततं—परितो व्याप्तम्, दिवा समं—द्युलोकेन तुल्यमिति वा—यथा द्युलोको दीप्यते तथेति । तदिदं ज्योतिस्त्वं मा प्रसाङ्क्षीः, तत्प्रसङ्गस्ते मास्त्विति यावत् । सति प्रसङ्गे किमनिष्टम् ?, तन्मा प्रधाक्षीत्—तत्तेजस्त्वां मा दहतु ॥२॥

**तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳ सयुग्वानमिव रैक्कमात्थेति यो नु कथꣳ सयुग्वा रैक्क इति ॥३॥**

तमेवमुक्तवन्तं परो हंसः प्रत्युवाच । अरे एनं कमु सन्तं सयुग्वानं रैक्कमिवैतदात्थ—एनं केवलं कर्मरतं कं सन्तं मत्वा केन माहात्म्येन युक्तं मत्वा रैक्कमिव महात्मानं योऽसौ सयुग्वा—सशकटः, एतत् स-

बहुमानं वचनमात्थ । सयुग्वानमिति विशेषकथनं विविदिषायां जानश्रुतेस्तदभिज्ञानाय । इतर आह—यो नु कथं सयुग्वा रैक्व इति—यः सयुग्वा रैक्वस्त्वयोक्तः स कथन्नु स कीदृशमहिमशाली ॥३॥

यथा कृतायविजितायाधरेऽयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥४॥

अपरः प्रत्याह । द्यूतोपकरणमक्षः क्रमादेकद्वित्रिचतुरङ्कैरङ्कितैरयसंज्ञैश्चतुर्भिः पार्श्वैरुपेतः प्रसिद्धः, तत्रैकाद्यङ्का अयाः क्रमशः कलिद्वापरत्रेताकृतसंज्ञकाः, सर्वतो विजयस्तु कृतायपतनात्, यस्य द्यूतकरस्य कृतायेन विजितं तस्य कृतायविजितस्यान्येऽधरे ततो न्यूना अयास्त्र्यङ्कादयः संयन्ति—सङ्गता भवन्ति । चतुर्षु त्र्यादीनामन्तर्भावात्, त्र्यङ्कादिभिर्योऽर्थः स सर्वोऽप्यस्यार्थान्नाधिक इति भावः । यथैतत् तथा, यत्किञ्च प्रजाः साधु कुर्वन्ति तत्सर्वं साधुकर्म, एवं रैक्वमभिसमेति—अभिसङ्गच्छति, सर्वाणि साधुकर्मणः फलानि एतदनुष्ठानफलतो न बहिर्भूतानि, नाधिकानीति भावः । ब्रह्मविदो ह्याचरणमखिलं विद्यासंस्कृतम् । किञ्च यस्तद्वेद यत्स वेद—इह यो यद्वेद तदखिलं स रैक्वो वेद, नाविदितं किञ्चिदिति यावत्, सर्वमप्यन्यद्विज्ञानफलमेतद्विज्ञानफलान्न बहिर्भूतम्, नाधिकमिति भावः । यद्यप्ययमन्वयो व्यवधानेन वर्तते, अथापि पाठक्रमादर्थक्रमस्य गरीयस्तया न क्षतिः । यत्पुनरत्र प्राचां भाषितम्—यत्स रैक्वो वेद, इह लोके यः—यः कश्चिदपि पुरुषस्तद्वेद—तदेव वेद, तज्ज्ञातमेवान्ये जानन्ति,

तज्ज्ञाने सर्वं ज्ञानमन्तर्गतमिति भाव इति । तत्राप्यस्त्यवधारणाध्याहारक्लेशः, असत्यवधारणे यद्रैक्को वेद तदपरो यः कश्चिद्वेदेति विप्रतीपार्थावगतिर्हि भवेत्, स्वरसतस्तच्छब्दप्रतिसम्बन्धिनो यच्छब्दस्य यः कश्चिदित्यर्थाश्रयणक्लेशश्च । यद्वा—स रैक्को यद्वेद तद्यो वेद तमेनं सर्वमभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्तीत्यन्वयः । रैक्कोपज्ञं विज्ञानमित्यतिशयोऽप्यस्यां योजनायां व्यज्यते । एतेन रैक्कस्यैव नान्यस्य विज्ञानं यद्यस्य विज्ञानसम्पत्तिर्भवेत् तदा घटेत तथा यथात्थेति व्यज्यते । एवं चास्य विज्ञाने त्वरोत्पादिता भवति । स रैक्को मया एतत्—इदानीमुक्तेन प्रकारेणोक्तः । इत्युवाचापरः ॥४॥

यदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह
सञ्जिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वान-
मिव रैक्कमात्थेति यो नु कथꣳ सयुग्वा रैक्क इति
॥५॥ यथा कृतायविजितायाधरेऽयाः संयन्त्येव
मेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु
कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति॥६॥

तयोः तत्संवादवाक्यमुपशुश्राव जानश्रुतिः पौत्रायणः । तदेवानुस्मरन् सञ्जिहान एव—त्यजन्नेव शयनतलमुवाच क्षत्तारं—अन्तःपुरपार्श्ववर्तिनं परिचरम् । अङ्गारे ह—वत्स भोः, सम्बुद्ध्यैवं जातनिर्वेदो हंसयोः संवादवचनं सयुग्वानमिवेत्यारभ्य स मयैतदुक्त इत्यन्तेनानूदितवान् ॥५-६॥

**स ह क्षत्ताऽन्विष्य नाविदितमिति प्रत्येयाय तं होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति ॥७॥**

स च क्षत्ता राज्ञो निर्वेदं त्वरां च रैक्कदर्शनेऽवगत्य निर्गतस्तत्र तत्रान्विष्य नाविदितमिति प्रत्येयाय । तं राजोवाच, अरे यत्र ब्राह्मणस्य—ब्रह्मविदोऽन्वेषणा घटेत तत्र विजने देशे सरित्सरोवरतरुलतादिप्राये तदेनमर्च्छ—तत्रैनमन्वेषणेन गच्छेति ॥७॥

**सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्क इत्यहꣳ ह्यरा३ इति ह प्रतिजज्ञे स ह क्षत्ताऽविदमिति प्रत्येयाय ॥८॥**

एवमाज्ञप्तः क्षत्ता यथानिर्दिष्टे स्थानेऽन्विष्यन्नेनं क्वचिच्छकटस्याधस्तात्पामानं कषमाणम्—कण्डूयमानं दृष्ट्वा उपोपविवेश—समीपे उपनतो विवेश । अवसरे तमभ्युवाद च, त्वं नु भगवन् सयुग्वा रैक्क इति, प्रश्नमनु स रैक्कः प्रतिजज्ञे—प्रत्यवदत्, अहमरे स इति । ततो निर्गत्य क्षत्ता अविदमिति वदन् राज्ञः पार्श्वं प्रत्येयाय—प्रत्यागतवान् ॥८॥

इति चतुर्थाध्याये प्रथमः खण्डः ।

---

**तदुह जानश्रुतिः पौत्रायणः षट्शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तꣳ हाभ्युवाद ॥१॥**

तदानीमेव जानश्रुतिर्गवादिबहुतरोपायनहस्तः प्राप्य रैक्कमुवाच १

रैक्केमानि षट्शतानि गवामयं निष्कोऽय-
मश्वतरीरथोऽनु म एतां भगवो देवताꣳ
शाधि यां देवतामुपास्स इति ॥२॥

इमान्युपायनानि गवादीनि स्वीकृत्य भगवन् रैक्व ! भवान् यां देवतामुपास्ते तामेतां देवतां मे शिष्याय अनुशाधि—उपदिशेति ॥२॥

तमु ह परः प्रत्युवाचाह हारे त्वा शूद्र तवैव
सह गोभिरस्त्विति तदु ह पुनरेव जान-
श्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्व-
तरीरथं दुहितरं तदादाय प्रतिचक्रमे॥३॥

तं—राजानं परो रैक्वः प्रत्युवाच श्रद्धां परीक्षमाणः । अहेत्यनौचित्ये, धनेन विद्यां लिप्समानेन त्वयेदमानीतं धनमननुगुणं विद्यायाः । धनेन मत्तो विद्यां लिप्समानेन त्वया ममेदानीमनुपयुक्तमेव धनमानीतम् । हे शूद्र हारेत्वा—हारेण सहित इत्वा गमनसाधनं रथोऽयं तवैवास्तु गावश्चेमास्तवैव सन्तु, किं मे स्यादेभिः प्रयोजनम्, यत्राश्रमे स्थितस्य स्यादेभिः प्रयोजनं स तु गृहाश्रमो न मे इति । यद्यपि नासौ शूद्रः, यदयं सपदि शयनतलादुत्तिष्ठन्नेव क्षत्तारमाह, सम्बोधयति च रे इति, तदयं क्षत्ता शयनतलोपान्तपरिचर इति गम्यते, इदं च क्षत्रियेष्वेव घटते न शूद्रे । बहुदायिता च तथा, 'दानमीश्वरभावश्च क्षात्रं कर्म स्वभावज'मि ति च स्मर्यते । ग्रामवितरणमपि तथा । ग्रामो हि न क्षेत्रमात्रम्, प्रजाभिरधिष्ठितः पुरादल्पीयान् भुवः प्रदे-

शभेदः । पठ्यते हि संवसथपर्यायः, संवसन्त्यस्मिन् प्रजा इति हि संवसथ उच्यते, दानकर्मता तु स्वीय एव, यथेष्टविनियोगयोग्यमेव च स्वम्, किमिह प्रजासु तथात्वमुत तदुपभोगोपकरणे गृहक्षेत्रादौ, प्रजास्तु न कस्यापि यथेष्टविनियोगयोग्याः, न हि पशवस्ते, गृहादि तु प्रजास्वामिकं कथमस्य तथा स्यात्, तदत्र निवर्त्यमानं स्वत्वमापाद्यमानं च परस्वत्वं षष्ठांश एवेति परिशेषात् सिद्ध्यति, स चांशः क्षत्रियस्यैवासाधारणः । भगवान्बादरायणश्चास्य क्षत्रियत्वे लिङ्गं भूर्याह, तदयं क्षत्रिय एव । अथापि शूद्रेत्यामन्त्रणमस्य शोकवेगं ज्ञानवैधुर्यकृतमाद्रवणं चात्मनः समीपं प्रत्यभिप्रेत्य स्वस्य विप्रकृष्टार्थदर्शितां च ज्ञापयतो गुरोर्वचनमिति न क्षतिः । आह च भगवानाचार्यः 'शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते ही'ति । तदवधृत्य रैक्वस्य वचनं दुहितरं चादाय पुनरागतवान् ॥३॥

तꣳ हाभ्युवाद रैक्वेदꣳ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥४॥

आगत्येदमुवाच । एते गवादयः, इयं ते जाया, अयं ते ग्रामो यस्मिन्नास्से निवससि इदमुपायनं स्वीकृत्य मामनुशाधि इति ॥४॥

तस्या ह मुखमुपोद्गृह्णन्नुवाचाजहारेमाः शूद्रानेनैव मुखेनालपयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै होवाच ॥५॥

अहेत्यनर्थको निपातः, तस्य—राज्ञः सम्बन्धि, मुखम्—विद्याद्वारम्, उपोद्गृह्णन्—स्वीकुर्वन्, उवाच। आजहारेमाः शूद्र—हन्त ते श्रद्धा, आजहारैव भवानिमा याभिर्जायादिभिराश्रमकर्म निर्व्यूढं स्यात्। अनेनैव मुखेन—चिरकालब्रह्मचर्यपरिपालनपरिचर्यादिनिरपेक्षं पुष्कल-धनवितरणद्वारेणैव, मामालापयिष्यथाः—आलापयसीति यावत्। इत्युवाचेति पूर्वेण सम्बन्धः। ते हैते रैक्वपर्णा नाम ग्रामा महावृषेषु देशेष्वद्यापि सन्ति; यत्रासौ रैक्व उवास, ये चास्मै रैक्वाय राज्ञा दत्ताः। अथ तस्मै जानश्रुतये रैक्व उवाच—वक्ष्यमाणप्रकारेण विद्या-मुपदिदेश ॥५॥

इति चतुर्थाध्याये द्वितीयः खण्डः।

---

वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायु-मेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्ये-ति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥१॥

संवर्गमुपास्यमुपदिशति। तत्राधिदैवतमध्यात्मं च संवर्गमुपा-स्यमुपदिशन् प्रथममधिदैवतं संवर्गमुपदिशति। वायुर्वाव संवर्गः—ननु ब्रह्मविदसौ रैक्वः, उपश्रुत्यास्य तद्विज्ञानं यस्तद्वेद यत्स वेदेति हंसा-नुवर्णितं विविदिषातिशयेनैनमुपातिष्ठतायम्, कथमसौ वायुमुपास्य-मुपदिशेत्, कथं वाऽस्य विविदिषितमनेन विज्ञातं स्यात्। सत्यम्। नात्र रैक्वस्य हार्दं वायुमात्रे, अखिलात्मकं परमात्मानमुपास्यमुपदि-

शन्, अधिदैवतं वायुना अध्यात्मं प्राणेन चोपलक्षयति, उपास्यगुणश्च संवर्गत्वलक्षणस्तस्मिन्नेव मुख्यः। उपदेशश्च गुप्त एव शोभते रहस्यतमस्य, सुमतिना शिष्येण गुरोराशयोऽवधार्येत । अन्येन चान्यथा । निगूढमिममस्याशयं श्रुतिरनुपदं विशदयिष्यति चाख्यायिकामुखेन । संवर्गतामुपपादयति—यदेत्यादिना। यदाऽग्निरुद्वासयति—उपशाम्यति, तदा वायुमेवाप्येति—वायौ विलीयते, यदा सूर्योऽस्तमेति तदा वायुमेवाप्येति । नन्वनुपपन्नमेतत्, अन्वहमस्तमुपगच्छतोरप्यविनाशात्, सत्यम्, अथाऽपि अन्वहमिन्द्रियाणां सतामेव स्वापसमये यथा प्राणेऽप्ययः श्रूयते तथा । नन्वनुपपन्नार्थे किं निदर्शनेन ? नैवम्, निदर्शनेनायं लाभः, अर्थविशेषाश्रयणमुचितमिति, अर्थविशेषश्चायम् । यथा प्राणैकनिर्वर्त्यप्रकाशनकार्याणां चक्षुरादीनां स्वापे निर्वाहकेन प्राणेनैकीभावः—तत्कार्यातिरिक्तकार्याकरणं तथा वायुनिर्वर्त्यप्रकाशकस्यादित्यस्य समयविशेषे देशविशेषे वायुकार्यातिरिक्तकार्याकरणमप्ययः । प्राणेन प्रणीतो वागादिर्यथा स्वार्थमनुप्रकाशते तथा आदित्योऽपि वायुना प्रणीतो देशविशेषमनुप्रकाशते वायुनोन्नीतश्च न तमनुप्रकाशते, इतीममुत्पादाप्ययविभागमभिप्रेत्य 'वायुमेवाप्येति' इत्युक्तमिति भावः । यद्वा—अस्तमेति—स्वरूपतो नाशमेति ( प्रलये ) तदा वायुमेवाप्येति—आदित्यमण्डलस्य तेजोरूपस्य विलये कारणे वायुस्वरूपे विलयो युक्तो नाम । एवं चन्द्रमसः जलस्य चैवं बोध्यम् । वायुर्ह्येवैतान् सर्वान् संवृङ्क्ते—अपीयमानानेतानग्न्यादीन् वायुर्हि सङ्कलय्य एकीकृत्य पृथक्प्रतिपत्त्यनर्हतामापाद्य स्वयं धत्ते, तेनाऽयं संव-

१ वायुप्राणशरीरकस्य ब्रह्मण उपासनं विवक्षितमिति भावः ।

र्गत्वगुणविशिष्ट उपास्यः, इदं चैकीकृत्य धारणं मुख्यं तच्छरीरकपरमात्मन्येव, धारकता ह्यात्मन एव मुख्या, परमात्मैव च सर्वेषामेवात्मा । अन्यतोऽस्य विस्तरोऽवगन्तव्यः ॥१॥

यदाप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्सर्वान्संवृङ्क्त इत्यधिदैवतम् ॥२॥ अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान्संवृङ्क्त इति ॥३॥

व्याख्यातप्रायमेतत् ॥२-३॥

तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥४॥

देवेषु—अग्न्यादिषु, प्राणेषु—वागादिषु, प्राणत्वं मुख्यप्राणेन्द्रियसाधारणमिह बोध्यम् ॥४॥

अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ॥५॥

योऽयमुपास्यः संवर्गत्वगुणको वायुप्राणशब्दाभ्यामुपदिष्टस्तमाख्यायिकामुखेन व्यक्तमवधारयति श्रुतिः रैक्वो वा । आख्यायिका चाजामितापनयनेन सुखप्रतिपत्तये । अथेत्याख्यायिकोपक्रमे । कपेर्गोत्रापत्यं शुनकस्य सुतम्, अपरं च नाम्नाऽभिप्रतारिणं कक्षसेनसुतं

परिविष्यमाणौ सूपकारौ ब्रह्मचारी कश्चित् विभिक्षे बुभुक्षया । तस्मै भिक्षितवते न ददतुर्भिक्षां तौ, परीक्षितुमस्य विज्ञानं वचनेन ॥ ५ ॥

स होवाच महात्मनश्चतुरो देव एकः कः सः जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन्बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६ ॥

स चालब्धभिक्षः क्षुधितः क्रोधात् विद्यागर्वनिर्भरमिदमुवाच—महात्मनश्चतुरो देव एको जगार—ग्रसितवान्, भुवनस्य गोपाः—गोप्ता च भुवनस्य, स कः? दुर्विज्ञेयोऽयम्, यदसौ जगार नान्नं साधारणं किन्तु देवान्, नैकं देवं किन्तु चतुरोऽपि, ते च न ये केचन, किन्तु महात्मानः, स्वयमेक एव सन् जगार—भुवनस्य गोप्ता च सन् जगारेति भावः । हे कापेय! हे अभिप्रतारिन्! । बहुधा वसन्तं तं नाभिपश्यन्ति मर्त्याः—स ह्येकोऽप्यनेकप्रकारस्तत्र[1] तत्र वसति तं सूक्ष्मं द्रष्टुमेषां क्व प्रसङ्गः, यत इमेऽविवेकिनो जननमरणमात्रभाज इति भावः । एवं संवर्गश्चोपास्योऽयमसर्वसामान्य इति विदुषः स्वस्यानादरणेन जातापराधौ युवामित्यभिप्रायेणाह—यस्मै वेति, यस्मै वा एतदन्नं तस्मै न दत्तं—परमार्थत एतदन्नं कस्मा इति न जानन्ति पामराः, संवर्गाय ह्येतत्, देवा अग्न्यादयो यस्यान्नं किं वक्तव्यं तत्कार्यं तदन्नं तस्मा इत्यत्र, यत्कि-[2]

१ अध्यात्मं प्राणादिवृत्तिभेदात्, अधिदैवतं आवहादिभेदात्, आपीयमानाग्न्यादिरूपभेदाद्वाऽनेकप्रकारतया तत्र स्थितिर्बोध्या । अधिदैवतं बाह्यवायुरूपेण अध्यात्मं च प्राणरूपेणैकस्यैव स्थितेर्वा तथा ।　२ इदं च श्रुत्यनुकरणम् ।

श्विदिदमाश्वभ्य आशकुनिभ्यः सर्वमन्नं प्राणाय च, तस्मै संवर्गायैतदद्य न दत्तं भिक्षणेनापि। उपासकंमन्योऽयं स्वस्मै दत्ते संवर्गाय दत्तं स्यान्न दत्तमतः संवर्गस्यैवानादरणं कृतमित्याशयेनाह—न दत्तमिति ॥६॥

तदुह शौनकः कापेयः प्रतिमन्वानः प्रत्येया-
य आत्मा देवानां जनिता प्रजानाꣳ हिरण्य-
दꣳष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमा-
नमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्म-
चारिन्नेदमुपास्महे दत्तास्मै भिक्षामिति ॥७॥

तदुह—वचो ब्रह्मचारिणः शौनकः कापेयः प्रतिमन्वानः—मनसा विमृशन्नेव प्रत्येयाय—तत्समीपमाययौ। आगत्याहेदम्, हन्ताकृत्स्नविदोऽपि तेऽभिमतिः परमधिका, यत्त्वं संवर्गतयोपास्यं न यथावदवधारयसि, मन्यसे खल्वधिदैवतं वायुमध्यात्मं च प्राणं देवं संवर्गम्, यद्येवं नेदमुपास्महे वयम्, कस्तर्हि सः? स हि देवानामात्मा—वायुः प्राणो वा अद्यमानाभ्यादिवत्केवलं देवो नाम, न देवानामात्मा, आत्मतया चायं भुवनस्य गोप्ता, प्रजानां जनिता च—जनिमतामसौ जनकः, प्राणिनां प्राणसंयोगापादकश्चायमिति वा, हिरण्यदंष्ट्रः—इह हिरण्यशब्दः प्रकाशगुणयोगेन ज्ञानं लक्षयति, दंष्ट्राशब्दो भक्षणसाधनम्, सङ्कल्प एवास्य ग्रसनसाधनमिति यावत्, बभसः—भक्षणशीलः, सर्वसंहरणकारणमिति यावत्। इत्थं देवानामात्मा जनिता प्रजानां हिरण्यदंष्ट्रो बभस इति स्थित्युत्पत्तिलयहेतुत्वेन ब्रह्मासाधारणेन संव-

र्गत्वेनोपास्यं व्यावर्त्य व्यावर्तयति च सर्वज्ञत्वेन—अनसूरिरिति । सूरिः—विपश्चित्, नञ्द्वयेन सर्वज्ञता दृढीक्रियते, अस्य महिमानं महान्तं—अपरिच्छिन्नमाहुरभिज्ञाः, किञ्चापरो वायुप्राणतो विशेषः । यदयमनद्यमान एव अनन्नं—प्रसिद्धान्नादितरदग्न्यादिकमत्ति, अनन्नमत्तीत्येतावानेव वायुप्राणयोर्महिमा, अस्य तु अनद्यमान एव स्वयमनन्नमत्तीति । यद्वा—ब्रह्मचार्यपि संवर्गं यथावज्जानाति, तस्य प्रश्नाशयं मनसि सम्यग्विचारयन्नेव तस्य समीपमुपगत्यावोचदसन्देहास्पदेन वचनेन, हे ब्रह्मचारिन् इदं त्वदुपास्यसंवर्गस्वरूपं वयमपि आ—समन्तात् निरवशेषम्, यथावदिति यावत्, उपास्महे । स्वरूपमेव यथावद्विशदयति-आत्मेत्यादिना, एतेन वायुप्राणशरीरकः परमात्मैव संवर्गतया उपास्य इति स्फुटीकृतम् । एवमुक्त्वा दत्तास्मै भिक्षामिति सूपकारान् प्रत्यूचतुः ॥७॥

तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात्सर्वासु दिक्ष्वन्नमेव दशकृतꣳ सैषा विराडन्नादी तयेदꣳसर्वं दृष्टꣳ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥८॥

तस्मै—ब्रह्मचारिणे यथानियोगं ददुर्भिक्षाम् । एवमाख्यायिकया संवर्गस्वरूपं विशदमुपपाद्य स्तुवन्नधुना संवर्गविद्यां फलेनोपसंहरति—ते वा इत्यादिना । ते वा एते—अग्न्यादयः अपियन्तः, वायुश्चापीयमानः, अधिदैवतं पञ्च, अन्ये—आध्यात्मिकपञ्चकात्, ते वा एते वागादयः अपियन्तः अपीयमानः प्राणश्च अध्यात्मं पञ्च, अन्ये

अधिदैवपञ्चकात्, आहत्य संवर्गविद्यायां दश सन्तः तत्कृतम्—यस्मिन्कृते चतुरङ्कायें एकाङ्कायद्व्यङ्कायत्र्यङ्कायानां समावेशः। स्वतश्चतुरङ्कतया एकाङ्कायादीनां च समावेशेन दशसङ्ख्यासम्पत्त्या सङ्ख्यासामान्यात्, कृतायवदियं संवर्गविद्येति यावत्। कृतायस्य अयोन्तरतो यथा श्रैष्ठ्यं तथाऽस्या विद्याया विद्यान्तरतः श्रैष्ठ्यमिति विद्या स्तुता। कृतमित्यनेन कृतसाध्यं द्यूतं वा लक्ष्यते। तत्रैकाङ्कायद्व्यङ्कायत्र्यङ्कायचतुरङ्कायानां चतुर्णां सम्पत्त्या दशत्वसङ्ख्यासम्पत्तिः सुगमा। यथा द्यूतं छलयतामक्लेशेन प्रभूतार्थदं तथेयं विद्या प्रभूतार्थदेति स्तुता भवति। यस्मादियं विद्या दशकृतं—दशगणनायोगेन कृतस्थानीयाभूत् तस्मात्सर्वासु दिक्ष्वन्नमेव—सर्वदिक्सम्भूतमन्नमेव। अयं भावः—'विराडन्न'मिति श्रूयते, 'दशाक्षरा विराडि'ति च, तत् दशगणनायोगादियं विराट् भवति, अतश्चान्नमिति। अत एव सैषा विराडित्यनूद्यान्नादित्वं विधीयते 'सैषा विराडन्नादी'ति। न केवलमन्नं किन्तु सर्वासु दिक्ष्वन्नं—यत्र यत्र यद्यदन्नं तत्सर्वमियं विद्या, तत्तदन्नगतभोग्यतातिशयः सर्वोऽप्यस्यामेकस्यां विद्यायां वर्तत इति विद्या स्तुता भवति। यद्यप्युक्तरीत्याऽन्नत्वापादनेन कृतायत्वमुपयुज्यते, सङ्ख्याविशेषसंपत्त्यैव तदुपपत्तेः, तत् दशकृतमित्यनपेक्षितं वचनम्। अथापि यस्मात्सङ्ख्याविशेषयोगाद्दशकृतमभूत्तस्मादेव सङ्ख्याविशेषयोगादित्यन्वयविवक्षया नानौचित्यम्। एतेन दशकृतमिति पुनरुक्तम्, तस्मादित्यनेनैव तदर्थलाभात्, तच्छब्दो ह्यव्यवहित-

१ विराट्त्वद्वाराऽन्नत्वनिरूपणे तात्पर्यादेव। २ तत्कृतम्—तस्मात्सर्वास्विति हि श्रूयते—अत्र कृतमित्यतः समनन्तरं श्रूयमाणस्य तच्छब्दस्य कृतपरामर्शित्वे स्वारस्यादिति भावः।

पूर्वं स्वरसः, तत्कृतमिति च पूर्वं श्रूयते इति शङ्का परास्ता । यद्वा—दशकृतमित्यस्योत्तरेण सम्बन्धः, व्याख्यास्यते चानुपदम्, न केवलमन्नम्, सैषा विराडन्नादी च—विराट् छन्दस्तु अन्नम्—सैषा विराट्—संवर्गविद्यारूपेयं विराट्, अन्नत्वोपपादनेनैव विराट्त्वमपि प्राप्तम्, अन्नादी च—अन्नमिह दशकमग्न्यादीनाम्, तदुपचर्यते अन्नादीति । लिङ्गव्यत्ययश्छान्दसः । यद्वा—दशकृतं सैषा विराडन्नादीत्येकं वाक्यम्, दशकृतमिति हेतुगर्भं विशेषणम् । अन्तर्भवद्भिरेकाङ्कायद्व्यङ्कायत्र्यङ्कायैरात्मना चतुरङ्कायात्मना दशत्वमापादयत्कृतं यथैकाङ्कादीनत्ति—स्वस्मिन्नन्तर्भावयति, तथाऽपीयमानैरग्न्यादिभिरात्मना च संवर्गस्वरूपेण दशत्वमापादयन्नपीयमानमग्न्यादिलक्षणमन्नमत्ति संवर्गः, तथाविधसंवर्गावलम्बित्वाच्च सेयं संवर्गविद्या यतो दशकृतमत एवान्नमत्तीत्यभिप्रेत्योच्यते दशकृतं अन्नादीति। तया संवर्गविद्यया करणेन सर्वं दृष्टं भवति, संवर्गत्वगुणकवायुप्राणशरीरकपरमात्मनि दृष्टे सर्वमेव दृष्टं भवति, ततो वस्त्वन्तरस्य विभक्तस्याभावादिति भावः । अथ विदुषः फलमाह—सर्वमस्येदमित्यादिना । य एवं वेद—उपास्ते अस्योपासकस्य सर्वमिदं दृष्टं भवति—दृष्टिगोचरं भवति, अन्नादी च भवति—सर्वं भुक्तमनेन भवति, सर्वतो व्यापिनः परमात्मनोऽनुभवात्सर्वतः परिपूर्णतृप्तिलाभात्सर्वतोऽन्नादो भवतीति भावः । यद्यप्यन्नादो भवतीत्येव श्रूयते न तु सर्वत इति, अथापि सर्वमिदं दृष्टं भवतीत्यस्य सह पाठादसङ्कोचन्यायावतारेण तथा व्याख्यानम्, अनुगुणं च प्रकरणस्य । द्विरुक्तिर्विद्यासमाप्तौ ॥८॥

इति चतुर्थाध्याये तृतीयः खण्डः ।

---

**सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मीति ॥१॥**

कश्चित् बालो नाम्ना सत्यकामो जबालायाः पुत्रो मातरं जबालामामन्त्रयाञ्चक्रे—भवति ! ब्रह्मचर्यमध्ययनार्थं विवत्स्यामि गुरुकुलमुपगम्य, अज्ञातगोत्रं मां गुरवः कथमुपनयेरन्, तत् ब्रूहि किंगोत्रोऽस्म्यहमिति ॥१॥

**सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि सत्यकाम एव जाबालो ब्रुवीथा इति ॥२॥**

सा हैनमुवाच तात नाहमेतद्वेद—अध्ययने स्वत एव सञ्जातां त्वरां बालस्य विलोक्य प्रेमपेशलया गिरा सम्बोधयति—तातेति । यद्गोत्रस्त्वमसि, नाहमेतद्वेद, कुतः ? अहं बहु चरन्ती—गृहव्यापारं बह्वाचरन्ती, परिचारिणी—श्वश्रूश्वशुरादिगुरुजनपरिचरणैकशीला आसम्, तत् भर्तुर्गोत्रावधारणे न मम प्रवृत्तिरासीत्, यौवने त्वामलभे—अपगते यौवने न प्रसूतेरवसरः, अतोऽत्र यौवनशब्दोऽभिनवयौवनपरः, नवे यौवने लज्जाप्राचुर्यान्न भर्तृतोऽपि गोत्रावधारणावसरः, अथ च तदैवोपरतस्ते पिता, तत् यद्गोत्रस्त्वमस्येतन्न वेदाहम्, अहमेतावज्ज्ञाने जबाला नामाहमस्मि सत्यकामो नाम त्वमसि,

पृष्टो गुरुणा हि सत्यकाम एव जाबालोऽहमस्मीति ब्रुवीथा इति ॥२॥

स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ॥३॥

स जाबालो हरिद्रुमतः सुतं गौतममेत्योवाच—भगवति—पूज्ये भवति ब्रह्मचर्यमध्ययनार्थं वत्स्यामि, ततः भगवन्तं शिष्यतयाऽह-मुपगच्छेयमिति ॥३॥

तꣳ होवाच किंगोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरꣳ सा मा प्रत्यब्रवीद्बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबा-ला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽहꣳ सत्यकामो जाबालोऽस्मि भो इति ॥४॥

तमेवमुक्तवन्तं जाबालं गौतम उवाच किंगोत्रो नु सोम्यासीति । अयं च प्रश्नो जन्मनाऽस्योपनयनार्हतावधारणाय, तदर्हता हि द्विजत्वसापेक्षा । एवं गौतमेन पृष्टो जाबाल आह । नाहमेतदित्यादि स्फुटम् ॥४॥

तꣳहोवाच नैतदब्राह्मणो विवक्तुमर्हति समिधꣳ सोम्याहरोप त्वा नेष्ये न सत्यादगा इति तमु-

**पनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्तेयेति स ह वर्षगणं प्रोवास ता यदा सहस्रꣳ संपेदुः ॥५॥**

उपनयनार्हतौपयिकं जन्मास्य निश्चेतुं प्रवृत्तो गुरुरस्य सत्यवचनेन विनिश्चित्य जन्मनोपनयनार्हमेनमाह । तमेनं सत्ये निष्ठितमिदमुवाच । अब्राह्मणः—ब्राह्मणात् द्विजादन्यः शूद्रः, नैतद्विवक्तुमर्हति—सत्यमिदं वचो विशेषेण वक्तुं नार्हति, त्वं तु सत्यात् नागाः—न प्रस्खलितवानसि, तदनेन लिङ्गेन त्वमवगम्यसे ब्राह्मण इति, तदाहर समिधम्, त्वामुपनेष्ये इति । आनीतसमिधं तमुपनीय विशेषतो विद्ययाऽनुजिघृक्षुरेनमात्मीयात्कृशानामबलानां गवां मण्डलाच्चतुःशता गा निराकृत्य—पृथक्कृत्योवाच । चत्वारि शतानि—सङ्ख्याविशेषो यास्विति बहुव्रीह्याश्रयणात् छान्दसतया वा चतुःशता इति । इमा गाः सोम्यानुसंव्रज—अनुयाहि, इमाः पालय परिचरन्निति यावत् । स च सत्यकामः श्रद्धातिशयसम्पन्नः गाश्चारणायाभिप्रस्थापयन्नुवाच नासहस्रेणावर्तेयेति—न यावत्सहस्रसङ्ख्ययाऽऽसां वृद्धिर्न तावत्प्रत्यावर्तेयेति । एवमवधार्य प्रविश्य तृणोदकपरिपूर्णं हिंस्रसत्त्वरहितं वनं वर्षगणं प्रोवास—बहुवर्षपरिमितं दीर्घं कालं प्रोषितवान् । ता गावो यदा सहस्रं संपेदुः—सहस्रसङ्ख्यया यदा सम्पन्ना बभूवुः ॥५॥

इति चतुर्थाध्याये चतुर्थः खण्डः ।

---

अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रꣳ स्मः प्रापय न आचार्यकुलम् ॥१॥ ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम॥२॥

अथास्य श्रद्धातपोविशेषसुप्रसन्नो देवो वायुर्दिक्सम्बन्धी स्वयमृषभो भूत्वा–बलीवर्दो भूत्वाऽभ्युवाचैनम्, सत्यकाम३ इति प्रथमं सम्बोधयति स्म, सम्बोधितश्च स जाबालः सपदि भगवः–हे भगवन् इति विनयोपेतेन वचसा प्रत्युत्तरयति स्म । यथासङ्कल्पं वयं सहस्रं–सहस्रसङ्ख्यां प्राप्ताः स्मः । प्रापय न आचार्यकुलम् । इदं चापरं शृणु ब्रह्मणः पादं ब्रवाणीति । अवहितोऽस्मि ब्रवीतु मे भगवानिति जाबाल आह । तस्मै होवाच ऋषभः–प्राची दिक् एका कला–पादस्य चतुर्थांशः, प्रतीची अपरा कला, एवं दक्षिणा, उदीची च, एवमेताभिश्चतसृभिः कलाभिरवयवैरुपेतो ब्रह्मणः पादोऽयमेकश्चतुष्कलः । प्रकाशवान्नामायम्, यतो दिशः प्रकाशन्ते ॥१–२॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳ-

श्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते॥३॥

ब्रह्मणश्चतुष्कलं पादं एवं प्रकाशवानित्युपास्ते । स लोकेऽस्मिन् प्रकाशवान् भवति, नैतावत्, अमुत्र च फलमन्वेति । किं तत्? प्रकाशवतो ह लोकान् जयति, य एतमेवं विद्वांश्चतुष्कलं ब्रह्मणः पादं प्रकाशवानित्युपास्ते ॥३॥

इति चतुर्थाध्याये पञ्चमः खण्डः ।

---

अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश॥१॥

एवमुपदिश्य पादमेकमपरं तु पादमग्निस्ते वक्ष्यतीत्युपरराम । स जाबालिः श्वोभूते गा आचार्यकुलमभिप्रस्थापयाञ्चक्रे । अथ सायं यत्र गा अभितो बभूवुः, तत्राग्निमुपसमाधाय–यथाविधि समिधमाधाय गाश्चैकत्रोपरुध्य अग्नेः पृष्ठतः समीपे प्राङ्मुख उपविवेश ॥१॥

तमग्निरभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ॥२॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥३॥

अयं द्वितीयः पादो ब्रह्मणश्चतुष्कलोऽनन्तवान्नाम, पृथिव्यादीनां वैपुल्यातिशयेनोच्यते—अनन्तवान्नामेति ॥२–३॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥४॥

लोकेऽस्मिन्ननन्तवान्भवति विपुलसम्पत्तिमान्भवति, नैतावन्मात्रम्, अमुत्र चानन्तवतो लोकान् (अतिविस्तीर्णान्) जयति ॥४॥

इति चतुर्थाध्याये षष्ठः खण्डः ।

---

हꣳसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥१॥

एवमुपदिश्य तृतीयं पादं हंसो वक्ष्यतीत्युक्त्वोपररामाग्निः । स हेत्यादि स्पष्टम् ॥१॥

तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ॥२॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवा-

चाग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥३॥ स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वाꣳ-श्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥४॥

सूर्यादीनां ज्योतिष्मत्त्वादेष तृतीयः पादो ज्योतिष्मान् नाम॥२–४॥

इति चतुर्थाध्याये सप्तमः खण्डः ।

---

मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्था-पयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमु-पसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥१॥ तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम ३ इति भगव इति तं प्रतिशुश्राव ॥२॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भग-वानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतु-ष्कलः पादो ब्रह्मण आयतनवान्नाम ॥३॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते आयतनवानस्मिँल्लोके भवत्यायतनवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥४॥

मद्गुः पक्षिविशेषो जलचरः । भोगानामायतनानि नाम प्राणादीनि तत्संश्लेषादेव भोगः, तदुच्यते आयतनवान्नामेति ॥१–४॥

इति चतुर्थाध्यायेऽष्टमः खण्डः ।

---

प्राप हाचार्यकुलं तमाचार्योऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥१॥

एवमधिगम्य देवताभ्यो ब्रह्मविद्यामाचार्यकुलं प्राप । प्राप्तवन्तं तं प्रेमविह्वलो गुरुर्दूरादेव सम्बोधयन्नाह–सत्यकाम३ इति । स भगवन्निति प्रतिशुश्राव ॥१॥

ब्रह्मविदिव वै सोम्य भासि को नु त्वाऽनुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवाꣳस्त्वेव मे कामे ब्रूयात् ॥२॥

आहाचार्यः, हे सोम्य–प्रियदर्शन ब्रह्मविदिव भासि, यत्त्वं सम्प्रसन्नो मुखेन लक्ष्यसे, कस्त्वामुपदिदेशेति । अन्ये मनुष्येभ्य इति ह प्रतिजज्ञे–एवं पृष्टः सत्यकामः आचार्यातिलङ्घनापराधशङ्कामपजिहीर्षुः प्रतिजज्ञे, सत्यमेव न मनुष्यो मामुपदिदेश, अन्ये देवा एव

प्रसन्ना उपदिदिक्षुरिति प्रतिजज्ञे । सति मे कामे इच्छायां, सत्यां विविदिषायामिति यावत्, त्वमेव मे ब्रूयात् तत् भवन्तमाचार्यमतिलङ्घ्यान्यं न गणयामीति चाह ॥२॥

श्रुतꣳ ह्येव मे भगवद्दृशेभ्य आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापदिति तस्मै हैतदेवोवाचात्र ह न किञ्चन वीयायेति वीयायेति ॥३॥

अपरं चाह, भगवन् भवादृशेभ्यः श्रुतमिदं यदाचार्यादेव विदिता विद्या साधिष्ठं प्रापत्—साधुतमत्वं प्राप्नोति नान्यथेति, तत् भवानेवोपदिशत्विति । एवं प्रार्थितो गुरुरेतदेव—देवताभिरुक्तां षोडशकलब्रह्मविद्यामेवोवाच तस्मै । अत्र ह न किञ्चन वीयाय—आचार्योपदिष्टायामस्यां विद्यायां देवतोपदिष्टविद्यातो न किञ्चिदपि विगतमभूत् न्यूनमभूत् । अन्यूनातिरिक्तमेवोपदिष्टमाचार्येणेति यावत् । समाप्तावभ्यासः ॥३॥

इति चतुर्थाध्याये नवमः खण्डः ।

---

उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य ह द्वादश वर्षाण्यग्नीन्परिचचार स ह स्मान्यानन्तेवासिनः समावर्तयꣳस्तꣳ ह स्मैव न समावर्तयति ॥१॥

आचार्यपरिचर्यया भूयिष्ठया श्रद्धया च विद्यासिद्धिमवधारयन्

पुनराख्यायिकामुखेन विद्यान्तरं वक्तुमारभते—उपेति । नाम्ना उपकोसलः सुतः कमलस्य जाबाले सत्यकामे विद्यार्थं ब्रह्मचर्यमुवास, परिचचार च नियमेन श्रद्धया द्वादशवर्षाण्यग्नींस्तस्य—गुरोः, स गुरुरन्यानन्तेवासिनः स्वाध्यायमध्याप्य समावर्तयन् गृहान्, तं ह न समावर्तयति स्मैव—अग्निपरिचर्यापरायणमपि तमुपरुरोध केवलम्, नोपदिदेशोपदेष्टव्यमिति यावत्। ह स्मेत्यनर्थकौ निपातौ ॥१॥

तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्पर्यचारीन्मा त्वाग्नयः परिप्रवोचन् प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे ॥२॥

तदानीं तं जायोवाच, तप्तो ब्रह्मचारी—तपःसम्पन्नोऽयं ब्रह्मचारी, तवाग्नीन् कुशलम्—सम्यक्पर्यचारीत्—शुश्रूषितवान्, तपःश्रद्धापुरस्कृतया परिचर्यया परितुष्टा भूत्वा इमे अग्नयः त्वां मा परिप्रवोचन्—मापवदेयुः, अस्मिँस्तुष्टा देवा इमेऽग्नयस्तव गर्हां कदाचित् कुर्युः, तत् गर्हायाः पात्रं माभूः, प्रब्रूह्यस्मै—उपदेष्टव्यमुपदिशेति । एवं प्रतिबोधितोऽपि भार्यया तस्मै अप्रोच्यैव—अनुपदिश्यैव प्रवासाञ्चक्रे—प्रवासमकरोत् । जानन्नप्यस्याग्निपरिचरणातिशयं परीक्षितुमस्य श्रद्धातिशयम्, अनुपदिश्यैव प्रवासितवानाचार्यः । उपदेष्टव्यं हि सर्वतो विलक्षणमेव किञ्चित् यस्मिन्नुपदिष्टे नान्यदुपदेष्टव्यं स्यात्, अस्य च विविदिषा तस्यैव नेतरस्येव स्वाध्यायमात्रजिघृक्षा, तदस्याशयं जानन्नेव परीक्षतेऽस्य श्रद्धाम् ॥२॥

---

१ स ह स्मेत्यत्रेति शेषः ।

स ह व्याधिनाऽनशितुं दध्रे तमाचार्यजायोवाच ब्रह्मचारिन्नशान किन्नु नाश्नासीति स होवाच बहव इमेऽस्मिन्पुरुषे कामा नानात्यया व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति ॥३॥

अनुपदिश्यैव प्रवसितवत्याचार्ये तापत्रयतीव्रवेदनयाऽयमनशितुं दध्रे निश्चयम्, अनशनसङ्कल्पमकरोत् । तमेनमात्मानमनशनेन शोषयन्तमाचार्यजाया वात्सल्यादुवाच–ब्रह्मचारिन्नशान किन्नु नाश्नासीति । स च प्रत्युवाचाचार्याणीम्, न मे अशिशिषा यदहं व्याधिभिः प्रतिपूर्णोऽस्मि, व्याधयश्चेमे कामाः, कामैर्हि तापत्रयमूलैः पीड्यते विशेषतः पुरुषः, तदिमे कामलक्षणाः व्याधयः पुरुषे बहवो वर्तन्ते, नानात्ययाश्च ते, अत्ययः–विनाशः तेनानर्थ इह लक्ष्यते नानानर्थावहा इति यावत् । कामव्याधिरेकोप्यनेकानर्थावहः बहुभिस्तैः प्रतिपूर्णोऽस्मि नाशिष्यामीति । यद्वा–अत्ययः–अतिक्रम्य गमनम्, उद्वेलमुत्सर्पणम्, तच्च नानाप्रकारं कामव्याधीनाम्, कामो ह्यर्थसिद्धिमुपगतो नोपरमते वर्धते च पुनः पुनरुत्कटश्च भवति, अलब्धार्थश्च क्रोधात्परिणमन् परोपमर्दाय च भवति, तदेवमुद्वेलमस्योत्सर्पणमिति नानात्यया इमे कामाः ॥३॥

अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्यचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥४॥

अथैनमनशनेन क्षीयमाणमात्मनो भक्तमग्नयः सम्भूय कृपया जीवितवियोगभयाद्रक्षन्तः समूदिरे—ऊचुर्मिथः । ब्रह्मचार्येष नः सम्यक् पर्यचारीत्—परिचरितवान्, हन्तेत्येतदनुकम्पायाम्, अस्मै प्रब्रवाम येनायं यावदाचार्यागमनमात्मानं धारयेत् । इति विचार्य तस्मै ऊचुरिदं प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥४॥

स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः ॥५॥

अथैतदग्नीनां वचनमुपश्रुत्य स होवाचोपकोसलः । विजानाम्यहं यत्प्राणो ब्रह्मेति, कं च तु खं च न विजानामि—अबाधितमिदं प्राणो ब्रह्मेति, प्राणनगुणयोगात्,सर्वस्य प्राणयित्रैव हि भाव्यं ब्रह्मणा, तदवधारयामि तावत् प्राणो ब्रह्मेति, इदं तु नावधारयामि यत्कं ब्रह्म खं ब्रह्मेति, न ह्यवयवार्थः प्राणशब्दस्येव कशब्दस्य खशब्दस्य च, येन प्रवृत्तिनिमित्तेन ब्रह्म कं खं च भवेत्, यत्तु भूतं विकारि यच्च सुखमन्वहमनुभूयमानं तत्कथं ब्रह्म भवेत्, तन्नावधारयामि कं ब्रह्म खं ब्रह्मेति । अथाग्नय ऊचुः यदेव कं तदेव खं यदेव खं तदेव कमिति । न केवलं कं ब्रह्म, न वा खं केवलं ब्रह्म, किन्तु यत्कमुक्तं तदेव खम्, खशब्देन विशेषितं नाम, ननु विशेषणेन किं सिद्धम्? निरतिशयसुखरूपं ब्रह्मेति, यद्यपि खशब्द आकाशे प्रसिद्धः, अथाप्यत्र विभौ लक्षणया वर्तमानो निरतिशयत्व-

मवगमयति, तेन च कशब्दवाच्यसुखस्य विशेषणादुक्तार्थलाभः । प्राणं च हास्मै तदाकाशं चोचुः–तत् कं सुखं प्राणं चाकाशं चोचुः, खशब्देनेव प्राणशब्देनापि विशेषितमूचुः । मध्ये निर्दिष्टं कं पूर्वोत्तराभ्यां प्राणखाभ्यां विशेषितं नाम, तथाच सर्वप्राणयितृनिरतिशयसुखरूपं ब्रह्मेत्युपास्यमिति यावत् ॥५॥

इति चतुर्थाध्याये दशमः खण्डः ।

---

एवमुपदिश्य ब्रह्मविद्यामथ तदङ्गभूतामग्निविद्यां प्रत्येकमुपदिशति।

**अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥१॥**

तत्र प्रथममेनं गार्हपत्योऽग्निरनुशशास । ममैवैता विभूतयः पृथिव्यग्निरन्नमादित्य इति, तेषु च य आदित्ये पुरुषोऽहमस्मि, स एवाहमस्मि–पृथिव्यादेरिव नान्तरमेतेन मम, अत्यन्तमभिन्न एवास्मि तेनेति भावः । तेजोभूयस्तया साम्यात्तथोक्तिः । इदमत्र बोध्यम् । यद्यपि पृथिव्यादयो न गार्हपत्यादेर्विभूतयः । अथाप्याध्यानशेषोऽयमुपदेशः ॥१॥

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिंश्च**

लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥२॥

य एतम्—गार्हपत्याग्निमेवं जानन् पृथिव्यादिविभूतिकतया आदित्यात्मना चोपास्ते स त्रिद्याविरोधिपापमपहते—हन्ति, पापेन विमुक्तो भवतीति यावत् । आनुषङ्गिकं फलमाह—लोकीभवतीत्यादिना । लोकीभवति—लोक्यते इति लोकः अभिलषितं पुत्रपश्वन्नादिलक्षणं फलं तदस्य भवति । सर्वमायुः—कृत्स्नं पुरुषस्यायुः, एति । नास्याग्निविद्यानिष्ठस्य कुले अवराः पुरुषाः पुत्रपौत्रादयः क्षीयन्ते, शिष्यप्रशिष्यादयो वा । य एतमेवं विद्वानुपास्ते—वयमेतमस्मिंश्च लोकेऽमुष्मिंश्च लोके उपभुञ्जामः—पालयामः, लोकद्वयेऽप्यस्य सुखं वयं साधयाम इति यावत् ॥२॥

इति चतुर्थाध्याये एकादशः खण्डः ।

---

अथ हैनमन्वाहार्यपचनोऽनुशशासापो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥१॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥२॥

अथ हैनमन्वाहार्यपचनः–दक्षिणाग्निरनुशशास, आपो दिश इत्यादि पूर्ववत् ॥१–२॥

इति चतुर्थाध्याये द्वादशः खण्डः ।

---

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥१॥ स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥२॥

व्याख्यातप्रायम् ॥१–२॥

इति चतुर्थाध्याये त्रयोदशः खण्डः ।

---

ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्या चात्मविद्या चाचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याचार्यस्तमाचार्योऽभ्युवादोपकोसल ३ इति ॥१॥

अथ मिलित्वा ते होचुः, हे! उपकोसल!! सोम्य!!! एषा उपदिष्टा अस्मद्विद्या आत्मविद्या च–आत्मनः सर्वान्तरात्मनः परस्य विद्या, उपदेष्टव्यमखिलमुपदिष्टम्, आचार्यस्तु ते गतिं मार्गम्, अवशिष्टमखिलमिति यावत्, वक्ता वक्ष्यति, आचार्याद्धैव विद्या

विदिता श्रेयसे, अस्माभिरभिभूयमानमनशनेन क्षीयमाणमाश्वासयितुमिदं किञ्चिदुपदिष्टमिति । अथैवमुपदिश्य तिरोभूतेष्वग्निषु आजगामाचार्यः । आगत्यैव तमुपकोसलमामन्त्रितवान् उपकोसल ! इति ॥१॥

भगव इति ह प्रतिशुश्राव ब्रह्मविद् इव सोम्य ते मुखं भाति को नु त्वाऽनुशशासेति को नु मानुशिष्याद्भो इतीहापेव निह्नुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निति ॥२॥

स च सपदि भगवन् ! इति प्रतिशुश्राव । अस्यालक्ष्याकारमाचार्य उवाच ब्रह्मविद इव सोम्य ते मुखं भाति, को नु त्वामनुशशासेति । एवं पृष्टः शिष्य आह—को नु मां भवतः शिष्यमनुशिष्यादृते भवन्तम् । इतीहापेव निह्नुते—इत्यनेन वचनेन लब्धमनुशासनमपह्नुत इव, नापलपति सर्वथा नापि व्यक्तं कथयति अत उच्यते अपनिह्नुत इवेति । अथ भीतः सपदि पुरो विद्यमानानग्नीन् निर्दिशन्नभ्यूदे—आह । इमे नूनमीदृशा अन्यादृशा इति—अद्य केवलं ज्वालारूपा दृश्यन्ते, तदानीं तु अन्यादृशा एव देवाकारा अभवन् । नाहमन्यस्य पार्श्वमभ्यगाम्, एत एवाग्नयः देवा भूत्वा उपादिशन्निति भावः । उपादिशन्निति कण्ठरवेण न निर्दिशति—परम-

न्यादृशा इत्येतावतैव निर्देशेन व्यञ्जयति नामोपदेशम् । तेनास्या-चार्यतो भीतिर्व्यज्यते । तस्य भयमपनुदन् सोम्येति सम्बोधयन्न-पृच्छत्–किन्नु किल तेऽवोचन्निति ॥२॥

**इदमिति ह प्रतिजज्ञे लोकान्वाव किल सोम्य तेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥३॥**

अथ शिष्यः प्रतिजज्ञे इदमेवोपदिष्टमेभिरिति । अथाचार्य आह—लोकान्वाव किल सोम्य तेऽवोचन् । पृथिव्यादीन्लोकानेव विशेषतस्तेऽकथयन्, ब्रह्मस्वरूपं तु न सम्यग्विवृतम्, लोका एवाग्निविद्यासम्बन्धिनो विवृताः । अहं तु ते तद्वक्ष्यामि–प्रवक्ष्यामि यद्विशेषतस्ते जिज्ञासितम् । एवंविदि–वक्ष्यमाणप्रकारेण यस्तद्वेत्ति तस्मिन्, यथा पुष्करपलाशे आपो न श्लिष्यन्ते तथा पापं कर्म न श्लिष्यते—पद्मपत्र इव पाथः प्रसक्तमपि पापं न श्लिष्यते, तेनासौ नानुलिप्यत इति यावत्, प्रसक्तमपि कर्म विद्याबलादकार्यकरं भवति विदुषीति भावः । अत्र पापमित्यनेन पुण्यस्यापि सङ्ग्रहः । उभयोर्बन्धकत्वाविशेषात् । तच्च प्रमादतो ब्रह्मविद्यपि स्यान्नाम । सोत्साहमाह शिष्यः ब्रवीतु भगवानिति । तस्मै स होवाच ॥३॥

इति चतुर्थाध्याये चतुर्दशः खण्डः ।

---

य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति ॥१॥

यदवोचन्नग्नयः 'प्राणो ब्रह्म खं ब्रह्म कं ब्रह्मे'ति, विशेषतस्तदवगमयामि त्वाम्, य एषोऽक्षिणि पुरुषो दृश्यते—निगृहीतबाह्यवृत्तिभिर्मुनिभिराभ्यन्तरया दृष्ट्या स्वचक्षुष्येव दृश्यते कश्चित्पुरुषविशेषः। आत्मा चैषः—सन्निहितो नाम चक्षुष्यपि असावात्मतया, 'यश्चक्षुषि तिष्ठन् चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयती'ति हि श्रूयते, तदयं सर्वस्यान्तरात्मा सर्वेश्वरः। एतदमृतम्—अविनाशि, अतएवाभयम्—निर्भयं स्थानम्, यदुपगतानामपुनरावृत्त्या न भयप्रसङ्गः। यद्वा—एतदेवामृतम्—निरतिशयभोग्यमपरिच्छिन्नसुखरूपत्वात्, एतदेव चाभयम्—अनपायप्राणरूपतया, भयं हि प्राणसंयोगवियोगलक्षणजन्ममरणतः, अनपायप्राणलाभे चाकुतोभयः सम्पद्यते। एतद्ब्रह्म—सर्वतो बृहत्। अथ स्तुवन्निमं पुरुषं स्थानं स्तौति—यद्यपीत्यादिना। सर्पिः घृतम्, उदकं वा सिञ्चति, तत् वर्त्मनी ह्येव गच्छति—चक्षुषो वर्त्मनी उत्तराधरौ पक्षावाभिगच्छति, पक्षावाभिलिप्येते न चक्षुरिति यावत्। तदेवमलेपस्थाने तिष्ठतस्तस्यालेपतायां किमु वक्तव्यम्, यश्चैनमुपास्ते तस्मिन्पापं कर्म न श्लिष्यत इत्यत्र किमु वक्तव्यमिति भावः ॥१॥

एतꣳ संयद्वाम इत्याचक्षत एतꣳ हि

सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं
वामान्यभिसंयन्ति य एवं वेद ॥२॥

अथैनमक्षिपुरुषं गुणविशेषयोगेनोपास्यं विदधन्नाह—एतं संयद्वाम इत्याचक्षते महर्षयः । कुतः ? एतं ह्यक्षिपुरुषं सर्वाणि वामानि स्पृहणीयानि शोभनानि अभिसंयन्ति, तदनेन कल्याणगुणयोगेन संयमद्वाम इत्याचक्षते । य एनमेवं संयद्वामत्वगुणकमुपास्ते तमेनं सर्वाणि वामान्यभिसमायान्ति ॥२॥

एष उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥३॥

एष एव वामनीः, कुतः ? एष ह्युपास्यमानः सर्वाणि वामानि नयति प्रापयत्युपासकान्, तदनेन वामप्रापकत्वगुणयोगेन वामनीश्चैष भवति । एनमेवं वामनीत्वगुणकमुपास्ते सोऽपि वामनीर्भवति । उपास्यसधर्मा भवति ॥३॥

एष उ एव भामनीरेष हि सर्वेषु लोकेषु
भाति सर्वेषु लोकेषु भाति य एवं वेद ॥४॥

एष एव भामनीः, कुतः ? एष हि सर्वेषु लोकेषु असाधारणया भासा भाति प्रकाशते, अप्रतिहतोऽस्य प्रकाश इति यावत् । तदनेन गुणयोगेन भामनीश्च भवति । य एनं भामनीत्वगुणयोगेनो-

पास्ते, स सर्वेषु लोकेषु भाति स्वासाधारणया भासा, अप्रतिहतोऽस्य प्रकाश इति यावत् ॥४॥

अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरन्ह आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाꣳस्तान्मासेभ्यः संवत्सरꣳसंवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः ॥५॥

स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ॥६॥

एवं विदुषोऽस्यार्चिरादिना ब्रह्मपथेन गमनमपुनरावृत्तिमाह—अथेत्यादिना । अस्मिन् ब्रह्मविदि प्रेते देहानुबन्धिनः शव्यं—शवसंस्कारं यदु कुर्वन्ति यदि च न, अर्चिषमेवाभिसम्भवन्त्येते । केवलकर्मिणामिवैषां न फले प्रतिबन्धः प्रेतसंस्कारेणाकृतेन । ब्रह्मविद्यैवं स्तूयते । नोपकोसलविद्यामात्रम् । अर्चिरादयो विद्युदन्ता लोकविशेषा ब्रह्मधामाभिगच्छतः पथि प्रसजन्तोऽर्चिराद्यभिमानिदेवविशेषाधिष्ठिताः, तेषु प्रथममर्चिर्लोकमितः प्रेतो ब्रह्मविदभिसम्भवति । ततोऽहः—अहरभिमानिदेवताधिष्ठितं लोकं तत आपूर्यमाणपक्षम्—आपूर्यते चन्द्रमाः कलाभिर्यस्मिन्पक्षे तम्, शुक्लपक्षाभि-

मानिदेवताधिष्ठितं लोकम्, ततो यान् षट् मासान् सूर्य उदङ्—उत्तरस्यां दिग्विभागे एति तान्मासान् उत्तरायणाभिमानिदेवताविशेषाधिष्ठितं लोकम्, ततः संवत्सरम्—संवत्सराभिमानिदेवताधिष्ठितं लोकम्, तत आदित्यम्, ततश्चन्द्रमसम्, ततो विद्युतं विद्युदभिमानिदेवाधिष्ठितं लोकमभिसमेति। तत्रैनममानवः पुरुषः—अप्राकृतलोकादभ्येति। स एनं ब्रह्म गमयति परब्रह्मधाम प्रापयति। एष एव देवपथः ब्रह्मपथश्च—देवैरर्चिरादिभिरातिवाहिकैरधिष्ठित इति देवपथः, प्राप्यस्य ब्रह्मणः प्रापकः पन्था इति ब्रह्मपथश्च। इहार्चिरादिमार्गे वायुप्रभृतयो न श्रूयन्ते। अथाप्यन्यत्र श्रूयमाणं सर्वशाखाप्रत्ययन्यायेनेहापि बोध्यम्। एतेन पथा प्रतिपद्यमाना धामविशेषम्, इमं मानवमावर्तं संसारावर्तं नावर्तन्ते—न विशन्ति ॥५–६॥

इति चतुर्थाध्याये पञ्चदशः खण्डः।

---

एष ह वै यज्ञो योऽयं पवत एष ह यन्निद९ं
सर्वं पुनाति यदेष यन्निद९ं सर्वं पुनाति तस्मा-
देष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी ॥१॥

यदि यज्ञे क्षतं स्यात् तत्परिहर्तव्यमित्थमित्यादेष्टुं प्रस्तूयते—एष इत्यादिना। यद्यप्युपासनप्रकरणमिदम्, अथाप्यस्ति प्रसङ्गोऽस्य, यदुपासनेष्वप्यस्ति कर्मणामङ्गभावः, अङ्गक्षतेः परिहारो ह्यङ्गिनि प्रवर्तमानेन ज्ञातव्यः, उपदिष्टा चाग्निविद्याऽव्यवधानेन, तदग्निसाध्यो यज्ञो यथाऽक्षतः स्यात्तथोपदेष्टव्यमिति भवति प्रसङ्गः।

एष ह वै यज्ञो योऽयं पवते—योऽयं पवते पवनः एष ह वै यज्ञः, कथमेतत्? एष हि यन्निदं सर्वं पुनाति—यस्मादेष पवनो यज्ञश्च यन् गच्छन्नेव प्रचलन्नेवेदं सर्वं पुनाति, न तु स्तब्धः, पवन इवायं क्रियैकलक्षणः स्वक्रियया शोधयत्यखिलमिदम्, यज्ञोऽपि क्रियैकलक्षणः क्रियाभिरेव ताभिस्ताभिः पुनाति यजमानम् । तदनेन साम्येन पवनो नामायम् । एवं वायोरिव यज्ञस्य गतिशीलतया पवित्रतामुक्त्वाऽथास्य गतिसाधनवैकल्ये यजमानस्यानर्थं वक्ष्यन् गतिसाधनमाह—तस्य मनश्च वाक् च वर्तनीति । तस्य यज्ञस्य गत्येकशीलस्य मनश्च वाक् चेति वर्तनी—मार्गः ॥१॥

तयोरन्यतरां मनसा सꣳस्करोति ब्रह्मा वाचा होताध्वर्युरुद्गाताऽन्यतराꣳ स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यववदति २

तयोर्वाङ्मनसोरन्यतरां मनोलक्षणां पदवीं ब्रह्मा मनसा निजेनाचहितेन देवतादिविज्ञानसम्पन्नेन संस्करोति । होताऽध्वर्युरुद्गाता चेत्येते त्रयो वाचा निजया ऋगाद्युच्चारणसमर्थया तयोरन्यतरां वाग्लक्षणां पदवीं संस्कुर्वन्ति । ब्रह्मणो मानसं विज्ञानलक्षणं व्यापारं होत्रादीनामृगाद्युच्चारणलक्षणव्यापारं चाश्रित्यायं यज्ञः प्रवर्तत इति भावः । यत्र—यज्ञे, प्रातरनुवाके—शस्त्रे उपाकृते प्रक्रान्ते, परिधानीयाया ऋचः पुरा, स ब्रह्मा व्यववदति यत्किञ्चित्, मौनं त्यजतीति यावत् ॥२॥

अन्यतरामेव वर्तनीꣳ सꣳस्करोति हीयतेऽन्यतरा स यथैकपाद्व्रजन्रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञꣳ रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान् भवति ३

अन्यतरामेव वर्तनीं वाग्लक्षणां संस्कुर्वन्ति होत्रादयः, अन्यतरा तु वर्तनी मनोलक्षणा ब्रह्मणो मौनत्यागलक्षणेन दोषेण हीयते—नश्यति, यथैकपात् पुरुषो व्रजन् रथो वैकचक्रेण वर्तमानो रिष्यति—नश्यति । एवमस्य यज्ञो नश्यति, यज्ञं नश्यन्तमनु यजमानोऽपि नश्यति, कोऽसौ नाशो यजमानस्य ? अर्थहानिरेव, न केवलमिष्टहानिः, स इष्ट्वा पापीयान् भवति—पापं चास्य भवति ॥३॥

अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे एव वर्तनी सꣳस्कुर्वन्ति न हीयतेऽन्यतरा ॥४॥

स यथोभयपाद्व्रजन्रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान्भवति ॥५॥

वर्तनी—वर्तन्यौ, छान्दसो वचनलोपः । प्रतितिष्ठति—न पतति, अवैकल्यात् । साधनभावान्न प्रच्यवतीति यावत् । यज्ञः

प्रतितिष्ठति न च्यवति फलतः । श्रेयांश्च भवति लोके ॥४-५॥

इति चतुर्थाध्याये षोडशः खण्डः ।

---

प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानाꣳ रसान्प्रा-
बृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः ॥१॥

अथ तयोर्वर्तन्योरेकस्याः क्षते यज्ञे समुत्पन्ने प्रायश्चित्तं व्याहृतितो विधास्यन् व्याहृतीनां ऋगादिसारत्वं ज्ञापयितुं प्रस्तौति । य इमे पृथिव्यन्तरिक्षद्युलोकाः तेषां सारमादित्सुः प्रजापतिर्लोकानभ्यतपत् विचारार्थौ । लोके सारः क इति विचारितवानिति यावत् । तेषां लोकानां तप्यमानानां रसान् प्राबृहत्-उद्धृतवान्, क्रमादग्निं पृथिव्या वायुमन्तरिक्षादादित्यं द्युलोकात् ॥१॥

स एतास्तिस्रो देवता अभ्यतपत्तासां
तप्यमानानाꣳ रसान्प्राबृहदग्नेर्ऋचो
वायोर्यजूꣳषि सामान्यादित्यात् ॥२॥

सारतरमादित्सुरेतास्तिस्रो देवता अग्न्यादिलक्षणा अभ्यतपत्, तासां तप्यमानानां रसान् प्राबृहत्, क्रमादग्ने ऋचः वायोर्यजूंषि, आदित्यात् सामान्युद्धृतवान् रसान् ॥२॥

स एतां त्रयीं विद्यामभ्यतपत्तस्यास्तप्य-
मानाया रसान् प्राबृहद्भूरित्यृग्भ्यो भुव-
रिति यजुर्भ्यः स्वरिति सामभ्यः ॥३॥

सारतरसञ्जिघृक्षया पुनः स एतां त्रयीं विद्यां ऋग्यजुःसामलक्षणामभ्यतपत् । तस्यास्तप्यमानाया रसान् प्राबृहत्, क्रमादृग्भ्यो भूरिति यजुर्भ्यो भुवरिति सामभ्यः सुवरित्येता व्याहृतीः ॥३॥

तद्यदृक्तो रिष्येद्भूः स्वाहेति गार्हपत्ये
जुहुयादृचामेव तद्रसेनर्चां वीर्येणर्चां
यज्ञस्य विरिष्टꣳ सन्दधाति ॥४॥

तत्–यस्माद् व्याहृतयो भूरादयो ऋगादीनां सारभूताः तस्मात्, यदि रिष्येद्यज्ञो ऋक्तः ऋचो निमित्तात् भूः स्वाहेति गार्हपत्ये जुहुयात् । किं तेन तद्यज्ञस्य विरिष्टम्–क्षतमृचां वीर्येण वीर्यभूतेन ऋचां सारेण व्याहृतिलक्षणेन सन्दधाति ॥४॥

अथ यदि यजुष्टो रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद्यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टꣳ सन्दधाति ॥५॥
अथ यदि सामतो रिष्येत्स्वः स्वाहेत्याहवनीये
जुहुयात्साम्नामेव तद्रसेन साम्नां वीर्येण
साम्नां यज्ञस्य विरिष्टꣳ सन्दधाति ॥६॥

स्फुटम् ॥५–६॥

तद्यथा लवणेन सुवर्णꣳ सन्दध्यात्सुवर्णेन

रजतꣳ रजतेन त्रपु त्रपुणा सीसꣳ सीसेन लोहं लोहेन दारु दारु चर्मणा ॥७॥

एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टꣳ सन्दधाति भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवति ॥८॥

कथमेतत्[1] ? इत्थम्—यथा लवणेनाल्पेन[2] टङ्कणादिना कठिनमपि सुवर्णं सन्दध्यात्, यथा च सुवर्णेन रजतम्, यथा च रजतेन त्रपु, यथा च त्रपुणा सीसम्, यथा च सीसेन लोहम्, यथा च लोहेन दारु सन्दध्यात्, एवमेषां पृथिव्यादिलोकानामासामग्न्यादिदेवतानामस्या विद्यायाश्च परम्परया साक्षाच्च वीर्येण व्याहृतिलक्षणेनानेन यज्ञस्य तद्विरिष्टं सन्दधाति । वीर्यातिशययोगान्महदपि क्षतं सुदृढं सन्धीयत इति भावः । ननु ब्रह्मा चेन्मौनं त्यजेत् किं प्रायश्चित्तम्? इदं तु होत्रादितः क्षत एव ब्रह्मणो हि मौनं विहितम् । क्व तस्यावकाशो ऋगादिनिमित्ते प्रस्खलने । सत्यम् । विज्ञानमेवास्य प्रायश्चित्तं प्रामादिके व्रतभङ्गे, यद् भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवति । क्षतप्रायश्चित्तविभागविद्विज्ञानवान् ब्रह्मा यत्र भवति स यज्ञः कृतभेषजो भवति । ब्रह्मणा विज्ञानसम्पन्नेन कुशलेन भिषजाऽऽर्त इव चिकित्सितो यज्ञोऽयमाहिततत्तत्क्षत-

१ महदिदं क्षतं व्याहृतिहोमेनाल्पेन कथं सन्धीयत इत्यर्थः । २ अल्पेनेत्येतत्सुवर्णेनेत्यादावप्यन्वेति ।

प्रायश्चित्तः सुस्थो भवति, तदेवंविधस्यास्य प्रामादिके मौनभङ्गे विज्ञानादन्यन्नापेक्ष्यते प्रायश्चित्तमिति भावः ॥७–८॥

एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद्ब्रह्मा भवत्येवंविद्ꣳ ह वा एषा ब्रह्माणमनु गाथा यतो यत आवर्तते तत्तद्गच्छति ॥९॥

मानवो ब्रह्मैवैक ऋत्विक्कुरूनश्वाभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानꣳ सर्वाꣳश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ॥१०॥

ब्रह्मणा च प्रायश्चितादिविज्ञानवतैव भाव्यमिति नियमयन्नाह—एष इत्यादि । एष ह वा यज्ञ उदक्प्रवणः—उदीच्यां स्वरसगतिः, अक्लेशेनोत्तरं गमयिता । स्तूयते चेत्थम् । अनुपहतफलसाधनभाव इति यावत् । कोऽसावेवंभूतः ? यत्रैवंविद्ब्रह्मा भवति । एवंविदं ब्रह्माणमनु गाथा चैषा—स्तुतिः । का सा ? यतो यत इत्यादिः, यतो यतः क्षतात् यज्ञ आवर्तते प्रत्यावर्तते—न प्रचलति पुरतः प्रतिहतो भवतीति यावत् । तत्तत्क्षतं प्रत्येष ब्रह्मा गच्छति प्रायश्चित्तेन, प्रायश्चित्तेन क्षतं सन्दधातीति यावत् । मानवः—मौनैकपरो ब्रह्मैक एवर्त्विक् कुरून्—कर्तॄनन्यान् होत्रादीन् रक्षति, अश्वो वाऽऽरूढान्युद्धे । एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वाꣳश्चर्त्विजोऽ-

भिरक्षति प्रामादिकात् क्षतात् । तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदम् । आदराद्विरुक्तिरध्यायसमाप्त्यर्थे वा ॥९–१०॥

इति चतुर्थाध्याये सप्तदशः खण्डः ।

---

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण–परमहंस-वर्य–योगिराज–श्रीगोपालानन्दस्वामिविरचिते छान्दोग्योपनिषद्भाष्ये चतुर्थोऽध्यायः ॥ ४ ॥

---

## अथ पञ्चमोऽध्यायः ।

ॐ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥१॥ यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग्वाव वसिष्ठः ॥२॥ यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च चक्षुर्वाव प्रतिष्ठा ॥३॥ यो ह वै सम्पदं वेद सꣳहास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च श्रोत्रं वाव सम्पत् ॥४॥ यो ह वा आयतनं वेदायतनꣳह स्वानां भवति मनो ह वा आयतनम् ॥५॥

उपदिष्टं प्रसङ्गतो यज्ञस्य क्षते प्रायश्चित्तम् । अथ कर्म यज्ञादि प्रकृतं वोपासनं प्राणसमृद्धिसापेक्षमिति प्राणविद्या प्रस्तूयते ।—यो

नाम ज्येष्ठत्वश्रेष्ठत्वगुणाभ्यामुपास्ते स ज्येष्ठः श्रेष्ठश्चेह भवति । फलमुखोऽयमारम्भो विद्यायां सपद्याभिमुख्यसम्पादनाय । कोऽयमुक्तगुणसम्पन्नः, यस्यैवमुपासनेन स्वयमप्येवं स्यात् ? प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च—प्राणं ज्येष्ठत्वश्रेष्ठत्वगुणाभ्यामुपासीतेत्येतत् । यद्यप्याहङ्कारिकतया प्राथम्यमिन्द्रियेषु । अथापि गर्भत एव शरीरे प्राणवृत्तेः प्राथम्यात् प्राणो ज्येष्ठ इतरेभ्य इन्द्रियेभ्यः । अथ श्रैष्ठ्यमुपपादयितुं वागादीनां विशेषं प्राणे सङ्गमयन्ती श्रुतिस्तासां विशेषं श्रावयति प्रथमम्—यो ह वै इत्यादिना । न तु वसिष्ठत्वादिना वागाद्युपासनाविधाने प्रवर्तते । स्वानाम्—ज्ञातीनां मध्ये, वसिष्ठः—अतिशयेन वसुमान् भवति, यो वसिष्ठमुपास्ते । को वसिष्ठः?, वाग्वै वसिष्ठः, वाचा हि प्रगल्भया वसुमान् भवति—तद्वसिष्ठत्वं नामातिशयो वाचः । अस्मिंश्चामुष्मिंश्च लोके प्रतितिष्ठति—स्थिरीभवति, न प्रस्खलति, इहामुत्र च न प्रच्यवति पथः; यः प्रतिष्ठामुपास्ते । का प्रतिष्ठा ? चक्षुर्वा व प्रतिष्ठा—असति चक्षुष्यप्रतिष्ठितः पथः प्रच्यवति । श्रूयते चान्यत्र 'चक्षुषा हि समे दुर्गे च प्रतितिष्ठती"ति । अस्मै कामा मानुषाश्च दैवाश्च सम्पद्यन्ते, यः सम्पदमुपास्ते । का सम्पत् ? श्रोत्रं वाव सम्पत्—सकलसम्पत्तिसाधनावबोधनवेदादिश्रवणसाधनतया सम्पत्ता श्रोत्रस्य । आयतनवान् भवति स्वानां मध्ये य आयतनमुपास्ते, किमायतनम् ? मनो ह वा आयतनम्—सर्वभोगायतनत्वात्, सत्यपीन्द्रियेष्वन्येषु मनसा हि शून्यो न सुखमश्नुते, तन्मन एव मुख्यमायतनं भोगस्येत्यायतनमुच्यते । वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वानि क्रमाद्वागादीनां विशेषाः ॥ १–५ ॥

अथ ह प्राणा अहꣳश्रेयसि व्यूदिरेऽहꣳ श्रेयानस्म्यहꣳ श्रेयानस्मीति । ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन्को नः श्रेष्ठ इति ॥६॥

सर्वोऽप्ययमिन्द्रियस्य महिमा प्राणस्यैवेति प्राणश्रैष्ठ्यमुपपादयन्नाख्यायिकां प्रस्तौति—अथेति । सुखप्रतिपत्तये चाख्यायिकाकल्पनम् । अथ ह पुरा जातु प्राणाः—वागादयः, अहंश्रेयसि—स्वस्वश्रेयसि, व्यूदिरे—व्यवदन्, विवादमकुर्वन् अहं श्रेयानस्म्यहं श्रेयानस्मीति । विवादस्यान्तं गन्तुं ते ह प्राणाः समेत्य प्रजापतिं पितरमस्य सर्वस्योचुः । भगवन्! को नः श्रेष्ठ इति ॥ ६ ॥

तान् होवाच यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥७॥

तान् होवाच प्रजापतिः—किं वचनेन परोक्षेण, अपरोक्षेणैव प्रमाणेनास्य विवादस्यान्तः सुगमो नाम, यस्मिन्नुत्क्रान्ते युष्मासु शरीरमिदं पापिष्ठतरमिव—अतिशयेन दुष्टमस्पृश्यमिव लक्ष्यते, स वः श्रेष्ठ इति ॥ ७ ॥

सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्यैत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश

ह वाक् ॥८॥ चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथान्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ॥९॥ श्रोत्रꣳ होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् ॥१०॥ मनो होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥११॥

सा ह वागुच्चक्रामात्मनः श्रैष्ठ्यमवधारयितुमस्मात् शरीरात् । सा संवत्सरं प्रोष्य पर्येत्योवाचान्यान् प्राणान् । कथं मदृते जीवितुमशकत—जीवितुं शक्ता यूयमिति । अथापरे प्रत्युचुः—यथा लोके कलाः—मूकाः अवदन्तो वाचा—वाग्व्यापारहीनाः, प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसा जीवन्ति तथैव वयमिति । श्रुत्वैतदपगतमदा प्रविवेश वाक् । अविशिष्टमितरत् ॥ ८-११ ॥

अथ ह प्राण उच्चिक्रमिष्यन्स यथा सुहयः पड्वीशशङ्कून्संखिदेदेवमितरान्प्राणान्समखिदत्तꣳ हाभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ॥१२॥

अथ प्राण उच्चिक्रमिष्यन्—उत्क्रान्तुमिच्छन्नेव, उत्क्रमणाय प्रवृत्तमात्र एव, इतरान् वागादिप्राणान् समखिदत्, तत्तत्स्थानाद्व्यचालयत्, यथा सुहयः उच्चिक्रमिष्यन् सपदि पड्वीशशङ्कून् पादबन्धनकीलकान् संखिदेत्—उत्पाटयेत् । तदा तमितरे प्राणा वागादयः समेत्योचुः, भगवन्नेधि नः स्वामी, त्वं नः श्रेष्ठोऽसि मोत्क्रमीरित इति ॥१२॥

अथ हैनं वागुवाच यदहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठोऽस्मि त्वं तत्प्रतिष्ठोऽसीति ॥१३॥ अथ हैनं श्रोत्रमुवाच यदहꣳ सम्पदस्मि त्वं तत्सम्पदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति ॥१४॥

अथापगताभिमानाः प्राणस्वामिकतामात्मन्यवधृत्येदमवोचन् । तत्र वागुवाच, यत्—यस्मात् निमित्तात् अहं वसिष्ठाऽस्मि, तत्—तस्मान्निमित्तात् त्वमसि वसिष्ठः । येन गुणयोगेन वसिष्ठता मयि स गुणयोगस्तवैव, तत् वसिष्ठताऽपि तवैवेति भावः । इतरदविशिष्टम् ॥१३–१४॥

न वै वाचो न चक्षूꣳषि न श्रोत्राणि मनांसीत्याचक्षते प्राणा इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवन्ति ॥१५॥

यतः प्राणो ह्येवैतानि वागादीनि भवन्ति—प्राणाहितशक्तितया प्राणो ह्येवैतानि वागादीनि भवन्ति, तत एवाभिज्ञाः प्राणा इत्येव शब्देनाचक्षते वागादीन्, न पृथक् वाचो वाच इति न चक्षूंषि चक्षूंषीति न श्रोत्राणि श्रोत्राणीति न मनांसि मनांसीति ॥१५॥

इति पञ्चमाध्याये प्रथमः खण्डः ।

---

सहोवाच किं मेऽन्नं भविष्यतीति यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्य इति होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किञ्चनानन्नं भवतीति ॥१॥

स च मुख्यः प्राणो लब्धपरिजनः प्राह किं मेऽन्नं भविष्यतीति । इतरे वागादय ऊचुः, यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्य इति यदिदमद्यते पशुपक्षिपर्यन्तैः सर्वैः प्राणिभिः सर्वमेव तदन्नं तवैवेति । अथ श्रुतिः स्वयमाह—तद्वेत्यादि । तदेतदन्नमखिलमनस्य, कोऽसावनः ? अनो ह वै नाम प्रत्यक्षम्—अन एवोपसर्गयोगेन प्राण इति व्यपदिश्यते, यस्मादयं सर्वान्नादनादिलक्षणचेष्टासामान्ययुक्तस्तस्मादस्यान इत्येव प्रत्यक्षं नाम—साक्षान्नाम, प्राणे सर्वान्नात्तृत्वदृष्टिं स्तौति, न ह

वा एवंविदि उपासके किञ्चनानन्नं भवति । सर्वमसावुपास्यद्वारा अत्तीव । अभक्ष्यभक्षणदोषो नास्तीति वा स्तूयते ॥१॥

स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति ॥२॥

स होवाच मुख्यः प्राणः किं मे वासो भविष्यतीति । वागादय ऊचुः आप इति । अथ श्रुतिः स्वयमाह—तस्मादिति । यस्मादाप एव वासः प्राणस्य तस्मादेव ब्राह्मणा अशिष्यन्तः पुरस्तात्—प्राक् भोजनतः, उपरिष्टाच्च पश्चाच्च, अद्भिः परिदधति प्राणम् । यदाचामन्ति पूर्वं पश्चाच्च तदापोभिर्वासोभिः प्राणस्य परिधानसम्पत्तये इति कल्प्यते । तदाभिरद्भिः प्राणो लम्भुको ह वासो भवति—वाससो लब्धा भवति, अत एवानग्नश्च । प्राणविद्यानिष्ठेन प्राणवासस्त्वदृष्टिरप्सु विधेयेत्युक्तं भवति ॥ २ ॥

तद्धैतत्सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्येनच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ॥३॥

तदेतत्प्राणचिन्तनं सत्यकामो जबालायाः पुत्रः व्याघ्रपदः पुत्राय गोश्रुतये उक्त्वा उवाचेदम् । यद्येनत् प्राणविज्ञानं कश्चित् प्राण-

दर्शी शुष्काय स्थाणवे ब्रूयात् सपदि। जायेरन्नेवास्मिन् शाखाः प्ररोहेयुश्च पलाशानीति। स्तुतिमात्रमेतत् ॥३॥

**अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥४॥**

अथ यदि प्राणोपासक[1]: महत्त्वविशेषं जिगमिषेत्—अमावास्यायां दीक्षित्वा भूशयनादिनियमविशेषं धृत्वाऽऽरभेत कर्म पौर्णमास्याम्, सर्वौषधस्य—ग्राम्यस्यारण्यस्य च, मन्थम्—पिष्टं प्रक्षिप्यौदुम्बरपात्रे दधिमधुनोरुपमथ्य—मथितं तं मन्थमग्रतः स्थापयित्वा, ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा—आज्यं हुत्वा मन्थे पुरः स्थापिते सम्पातम्—हुतावशिष्टं स्रुवसंलग्नमवनयेत्—प्रक्षिपेत् ॥४॥

**वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत्प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत्सम्पदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥५॥**

एवं वसिष्ठाय स्वाहेति प्रतिष्ठायै स्वाहेति सम्पदे स्वाहेति आयत-

---

१ गोदोहनवन्नियताधिकारतामभिप्रेत्य प्राणोपासक इति।

नाय स्वाहेति प्रत्येकं आज्यं हुत्वा तदा तदा प्रत्येकं सम्पातं मन्थेऽवनयेत् ॥५॥

अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपत्यमो नामास्यमा हि ते सर्वमिदꣳ स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स मा ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ राज्यमाधिपत्यं गमयत्वहमेवेदꣳ सर्वमसानीति ॥६॥

अथ—आहुतीर्हुत्वा प्रतिसृप्य—अपसृत्याग्नेरीषत् अभिगम्य वाग्निम्, अञ्जलौ मन्थमाधाय जपेदमो नामासीत्यादिना मन्त्रेण । अमो नामासि—अमा इति प्राणनाम्ना मन्थोऽत्र स्तूयते । कस्मात् ? अमा हि ते—यः प्राणः सोऽपि ते—त्वदधीनः । प्राणस्थितिर्ह्यन्नायत्ता । तत्त्वमेवामो नामासि । सर्वमिदं च ते—तिर्यक्स्थावरमानुष्यात्मकमिदमखिलं जगत्ते । अन्नेन विना न किञ्चित् । तन्मन्थः प्राण इति नान्तरं महत् । स हि प्राणनामा मन्थः, ज्येष्ठः श्रेष्ठः, राजा—रञ्जनगुणयोगात् । अधिपतिश्च । स मां ज्यैष्ठ्यं श्रैष्ठ्यं राज्यमाधिपत्यं गमयतु । अहमेवेदं सर्वमसानि—सर्वमिदं मदधीनं स्यादित्यर्थे इत्थमुपचर्यते ॥६॥

अथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचामति श्रेष्ठꣳ सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं पिबति ॥७॥

अथैतया वक्ष्यमाणया ऋचा पच्छः—पादश आचामति मन्थम्। ऋचः एकैकेन पादेन एकैकं ग्रासमश्नीयादिति यावत्। तत्सवितुर्वृणीमह इत्येकः पादः, अनेनैकमाचामति, वयं देवस्य भोजनमिति द्वितीयेन पुनराचामति, श्रेष्ठं सर्वधातममिति तृतीयेन पुनराचामति, तुरं भगस्य धीमहीत्यनेन निरवशेषं सर्वं पिबति। श्रेष्ठं सर्वधातमं देवस्य सवितुर्भोजनं तदिदं वयं वृणीमहे, तुरं भगस्य धीमहीत्यन्वयः। सर्वस्यास्य अन्नरूपतया धारयितृ श्रेष्ठमितरेभ्यः देवस्य सवितुः प्राणात्मनो भोजनभूतम्, प्राणादित्ययोरभेदोपचारः, तदिदं मन्थलक्षणमन्नं वयं वृणीमहे, अनेनान्नेन मन्थलक्षणेन वृतेन वयम्, तुरम्—तूर्णम्, भगस्य—ऐश्वर्यस्य हेतोः धीमहि प्राणात्मानमादित्यम्, प्राणं वा ॥७॥

निर्णिज्य कꣳसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत्समृद्धं कर्मेति विद्यात् ॥८॥

अथ निर्णिज्य—प्रक्षाल्य, कंसं चमसं वा पात्रमौदुम्बरं यन्मन्थाधारतया उपयुक्तम्, किञ्चिदपसृत्याग्नेः पश्चात् प्राक्शिराश्चर्मणि वा मृगस्य स्थण्डिले वा संविशति—शयीत, कथंभूतः? वाचंयमः, अप्रसाहश्च—अनभिभाव्यस्वाप्नभयेन स्थिरचित्त इति यावत्। स यदि स्त्रियं सुवेषां स्वप्ने पश्येत्, समृद्धं कर्मेति जानीयात् ॥८॥

तदेष श्लोकः। यदा कर्मसु काम्येषु स्त्रियꣳ

स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात्त-
स्मिन्स्वप्ननिदर्शने तस्मिन्स्वप्ननिदर्शने ॥९॥

तदिदमभिलक्ष्यैष श्लोकः प्रवर्तते। समृद्धिः—कर्मणामविलम्बेन फलनिष्पत्तिः। द्विरुक्तिः समाप्तौ प्रासङ्गिकस्य खण्डस्य वा ॥९॥

इति पञ्चमाऽध्याये द्वितीयः खण्डः।

---

श्वेतकेतुर्हारुणेयः पञ्चालानाꣳ समितिमेयाय
तꣳ ह प्रवाहणो जैवलिरुवाच कुमारानु
त्वाऽशिषत्पितेत्यनु हि भगव इति ॥१॥

अथापुनरावृत्तिलक्षणे फले प्रवर्तयितुं वैराग्याय कर्मिणां गतिं गतागतादिदुःखमयीं प्रपञ्चयन्ती विवेचयन्ती चात्मानमत्यन्तविविक्तमसाद्गुणमयादाख्यायिकामुखेन प्रवर्तते श्रुतिः। अनया चाख्यायिकया ब्रह्मविद्या ब्राह्मणादन्यतोऽपि ग्राह्येति व्यज्यते। नाम्ना श्वेतकेतुरारुणेः पुत्रः पञ्चालानां समितिं—सभामेयाय—आजगाम। राजा पञ्चालानां नाम्ना प्रवाहणो जिवलस्य पुत्रस्तमिदमुवाच। कुमार! त्वां पिता ते किमन्वशिषत्। अपि पित्रा त्वमुपदिष्टार्थोऽसीति यावत्। कुमारः प्राह—अनुशिष्टोऽस्मि भगव इति ॥१॥

वेत्थ यदितोऽधिप्रजाः प्रयन्तीति न भगव
इति वेत्थ यथा पुनरावर्तन्ता ३ इति न भ-

गव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति न भगव इति ॥२॥

अपि वेत्थ ? इतो लोकादूर्ध्वं यत्स्थानं गच्छन्ति प्रजा इत्यपृच्छत्प्रवाहणः । कुमार आह नेति । पुनरपृच्छत्—वेत्थ ? यथा पुनरिमं लोकमावर्तन्ते इति । इतर आह न भगव इति । पुनरपृच्छत्—वेत्थ ? देवयानस्य पितृयाणस्य च पथो व्यावर्तने—विशेषौ; यतो व्यावृत्तिस्तद्व्यावर्तनम् । इतर आह न भगव इति ॥२॥

वेत्थ यथासौ लोको न सम्पूर्यत३ इति न भगव इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगव इति ॥३॥

अपीदं वेत्थ ? यथाऽसौ लोको द्युलोको न सम्पूर्यते, केन निमित्तेन के द्युलोकं न प्रविशन्तीति यावत् । इतर आह नैव भगव इति । इदं वा वेत्थ ? यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । का पञ्चम्याहुतिः का आप इतीदं प्रतिवचने व्यक्तीभविष्यति । कुमार आह नैव भगव इति ॥३॥

अथ नु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात्कथꣳ सोऽनुशिष्टो ब्रुवीतेति स हायस्तः पितुरर्धमेयाय तꣳ होवाचाऽननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति ॥४॥

आह प्रवाहणः, अथैकमप्येषु न जानासि, किमनुशिष्टस्त्वं पित्रा, यदवोचथा अनुशिष्टोऽसीति, यो हीमानि न विद्यात् कथं स ब्रवीतानुशिष्टोऽसीति । स ह कुमारो राज्ञो वचनेनायस्तः—खिन्नः, पितुरर्धं स्थानमेयाय प्रत्यागतवान् । उवाच पितरम्, अननुशिष्य वाव किल—उपदेष्टव्यमनुपदिश्यैव किल मां भगवानब्रवीत्, त्वामन्वशिषमिति ॥४॥

पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत्तेषां नैकञ्चनाशकं विवक्तुमिति स होवाच यथा मा त्वं तदैतानवदो यथाहमेषां नैकञ्चन वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥५॥

स राजन्यबन्धुः—क्रोधादिदं वचनम्, पञ्च प्रश्नान्मामप्राक्षीत्, तेषां नैकमपि विवक्तुं—विवेचयितुम्, सम्यगुत्तरयितुम्, नाशकम् । इत्युक्तः पितोवाच, कुतस्ते खेदः ? त्वमसि कुमारः, त्वं तदा पृष्टो राज्ञा यथैतानवदः—अविदिता इमे इति, मामेवावदः—अविज्ञातवन्तं मामेवावदः, ममैवाज्ञानं तत्र निवेदितम्, तदपरिज्ञानं न तव दोषः, अपि तु ममैव तत्कुतस्ते क्षोभ इति भावः । यद्वा—तदा आगतमात्र एव यथावोचः, नैकंचनाशकं वक्तुमिति, मां प्रत्यपि तथैव जानीहि, त्वया पृष्टस्य ममापीयमेव गतिः, नैकंचन वक्तुं शक्नोमीति यथाऽहं नैकंचनैषां वेद । यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥ ५ ॥

स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्राप्तायार्हां चकार स ह प्रातः सभाग उदेयाय तꣳ होवाच मानुषस्य भगवन् गौतम वित्तस्य वरं वृणीथा इति सहोवाच तवैव राजन् मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति ॥६॥

स ह गौतमो राज्ञोऽर्धमेयाय—श्वेतकेतोः पिता आरुणिर्नाम्ना गौतमः राज्ञः स्थानमाजगाम। तस्मै प्राप्ताय राजा अर्हाम्—सपर्यां चकार। परेद्युः प्रातः स राजा सभागः—सभायां स्थितः, आगतं गौतममुदेयाय प्रत्युद्गतवान्। सभागे राज्ञि—स गौतमः उदेयाय समागत इति वा। तं गौतममुवाच हे भगवन्, यन्मानुषस्य वित्तम्—मानुषोपभोग्यं यच्च मनुष्येण दातुमर्हं तस्य सम्बन्धि किमपि वरं वृणीथा इति। एवमुक्तो गौतमः प्रत्युवाच। तवैव राजन्! मानुषं वित्तमस्तु—उपभोगाय यदर्हं तत्तवैवास्तु, यामेव कुमारस्यान्तिके वाचमभाषथाः, तामेव मे ब्रूहीति ॥६॥

स ह कृच्छ्रीबभूव तꣳह चिरं वसेत्याज्ञापयाञ्चकार तꣳ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान्ग-

च्छति तस्मादु सर्वेषु लोकेषु क्षत्रियस्यैव प्रशासनमभूदिति तस्मै होवाच ॥७॥

स तु राजा श्रुत्वेदं कृच्छ्रीबभूव—खिन्नो बभूव, कुतः? विद्या हि विनीतायान्तेवासिने प्रदेया, विप्रश्च नार्हत्यन्तेवासितया क्षत्रियेण विनेतुम्, ब्राह्मणश्चायमप्रत्याख्येय इति । अथ विचार्य यद्येवं चिरं वसेत्याज्ञापयाञ्चकार । अप्रत्याख्यानादाज्ञामात्मनो मानितामाकलय्य अग्र्यवर्णाय विविदिषवेऽवरवर्णेनोपदेष्ट्राऽनुपनीयैव विनयाधानमात्रेण कृतपरीक्षाय विद्या देयेति वर्णमर्यादां रक्षन् उपदिशन्विद्यामादावस्या विद्यायाः क्षत्रियादन्यत्रालभ्यतां ज्ञापयति तस्याद्रातिशयाय । गौतम! यथा त्वं मामवदः 'तवैव मानुषमस्तु वित्तं तामेव मे ब्रूहीति' तथैवेयमस्ति विद्या, यत इयं विद्या त्वत्तः प्राक् ब्राह्मणान्न गच्छति, मयोपदिष्टात् त्वत्त एवेतो ब्राह्मणान् गमिष्यति तस्मादेव सर्वेषु लोकेषु क्षत्रियस्यैवास्यां विद्यायां प्रशासनमुपदेशेऽभूत् । तद्युक्ता नाम चिरनिवासेनाप्येतदधिगमे प्रवृत्तिः । यद्वा—कृच्छ्रीबभूव, क्षत्रियादन्यत्रालब्धप्रसरेयं विद्या गुप्ता नाम पूर्वैरेतावत्, ब्राह्मणश्चायमप्रत्याख्येय इति । अर्थितो हि क्षत्रियः समर्थो नेति न ब्रूयात्, ब्राह्मणश्चार्थयिता, अथापि सपदि देयोऽयं नार्थः यत् विद्याविशेषोऽयम्, परीक्षा त्वपेक्ष्यते, तदाज्ञापयाञ्चकार चिरं वसेति ।[1] न ब्रह्मचर्यादिनियमम्, उत्तमो हि वर्णो नावरेण शिष्यभा-

१ 'भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथे'त्यन्यत्र श्रूयते नेह तु तथेत्याशयेन—नेत्याह ।

वेन विनेयः, चिरनिवासमात्रेण तु श्रद्धा परीक्षिता स्यात्। आह चेदम्, यथा त्वम्—सर्वस्य वेत्ता त्वमपि मां क्षत्रियमवदः तामेव मे ब्रूहीति तत एव विजानीहि न ब्राह्मणेषु विद्येयं क्षत्रियस्यैवात्र प्रशासनम्, तत्सोढव्यश्चिरनिवास इति। वस्तुतस्तु विद्यां विशिष्टां लिप्सोर्गरीयसोऽपि वर्णतोऽवरेऽप्युपदेष्टरि गुरुप्रतिपत्तिरुचितैव, अवरोऽपि वर्णतो विद्यया गरीयानुपदेष्टा विनेतुमर्हति नाम विद्यार्थिनम्। अत एवेह राजा प्रथममागतमात्रमेवमनवगत्यास्य विविदिषां भगवन् गौतमेति सम्बोधयन्नाह 'मानुषस्य भगवन्! वित्तस्य वरं वृणीथा' इति, यदा चायमाह 'तामेव ब्रूही'ति, निवृत्तो भगवच्छब्दः, प्रत्युताज्ञापयाश्चकार, कथं विप्रे गरीयस्याज्ञापनम्, तदवगम्यते विद्यार्थितामवगत्य विनीयते नाम चिरं वसेत्याज्ञावचनेनेति, आज्ञाप्रकारभेदा एव चिरं वसेति ब्रह्मचर्येण श्रद्धया संवत्सरं वत्स्यथेत्यादयः। यदुताश्वपतिः कैकेयो राजा प्राचीनशालादीननुपनीयैवोवाचेतीहैवैकादशे खण्डे श्रूयते तान् ह्यनुपनीयैतदुवाचेति, तत्तु राज्ञः प्रसादं तेषु ज्ञापयति न तल्लिङ्गं नान्तेवासी भवितुमर्हति विप्रः क्षत्रियस्येत्यत्र। यत्तत्रैवाव्यवधानेन श्रूयते 'ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे' इति, एतेनेदं व्यज्यते विप्रेणापि विद्यामिच्छता वर्णाभिमतिस्त्याज्या, क्षत्रियेणात्मनो विद्यां गृह्णन्नपि विप्रो मान्यो मर्यादां रक्षतेति। एवं चिरनिवासाज्ञया परीक्ष्य तस्मै होवाच यत्पृष्टम् ॥७॥

इति पञ्चमाध्याये तृतीयः खण्डः।

---

असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः ॥१॥

प्रथमं चरमप्रश्नस्य प्रतिवचनमाह, अनेन सुगमं प्रतिवचनमन्यस्येति । असौ वाव लोको गौतमाग्निः—हे गौतम ! द्युलोक एवाग्निः, तस्यादित्य एव समित्—येनाग्निः समिध्यते सा समित्, आदित्येन हि द्युलोको दीप्यते । ये तस्य रश्मयस्ते तस्य धूमः । अहरर्चिः प्रकाशसाम्यात् । चन्द्रमा अङ्गाराः—अहरर्चिषि प्रशान्ते यः शिष्यते स चन्द्रमाः स्थूलोऽङ्गारः, आदित्यस्यैव च तेजोरूपान्तरं चान्द्रम् । नक्षत्राणि विशीर्णा विस्फुलिङ्गाः । रूपणमेतद्दृष्ट्ये ॥१॥

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ॥२॥

तस्मिन्नेतस्मिन् द्युलोकाग्नौ देवाः—प्राणलक्षणाः, श्रद्धां जुह्वत्यायुषोऽवसाने यजमानस्य । कथमेतत् ? श्रद्धा हि न मूर्तं वस्तु ? श्रद्धेहापः । 'श्रद्धा वा आप' इति हि श्रूयते । आपश्च न केवलाः किन्तु भूतान्तरसंश्लिष्टाः, नहि केवलानामपां स्थूलदेहारम्भकता, तत्र तत्राग्नौ हुतानामपां क्रमशः सोमादिभावमुपगतानां पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । श्रद्धया द्युलोकायाग्निहोत्रादि कुर्वतां यजमानानां प्राणा आयुषोऽवसाने यजमानस्य श्रद्धामयं भूतसूक्ष्मलक्ष-

णमाहुतिद्रव्यं द्युलोकाग्नौ क्षिपन्तीति यावत् । तस्या आहुतेः परिणामः सोमो राजा भवति—स्वर्ग्यभोगार्हामृतमयदेहो भवति ॥२॥

इति पञ्चमाध्याये चतुर्थः खण्डः ।

---

पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनि-रङ्गारा ह्रादुनयो विस्फुलिङ्गाः ॥१॥

पर्जन्यो वाव गौतमाग्निः—पर्जन्यः प्रसिद्धो वृष्ट्युपकरणाभिमानी देवविशेषः, स एवाग्निरपरः, तस्य वायुरेव समित्—स हि वायुना हि दीप्यते, पुरोवातादिना हि पर्जन्यः समिन्धे । अभ्रं धूमः, उद्गच्छति हि पुरोवातं समिधमनु । विद्युदर्चिः, प्रकाशसाम्यात् । अशनिरङ्गाराः, अग्निमयमूर्तखण्डरूपत्वात् । ह्रादुनयः—मेघगर्जितानि विस्फुलिङ्गाः, विशीर्यमाणावयवशब्दसाम्यात्, अङ्गारावयवा हि विशीर्यमाणा विस्फुलिङ्गात्मना यदा पतन्ति भवति तदा शब्दः, एवमभ्राणि मिथः सङ्घट्टनया यदा विशीर्यमाणावयवानि भवन्ति तदा भवति शब्दः ॥१॥

तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुतेर्वर्षꣳ सम्भवति॥२॥

तस्मिन्नेतस्मिन् पर्जन्याग्नौ देवाः सोमं राजानम्—सोमराजभावमापन्नभूतसूक्ष्ममवसाने प्रारब्धस्य सुकृतस्य, जुह्वति । तस्या आहुते-

र्निमित्तात् वर्षं सम्भवति—अपगतसोमभावं द्रव्यान्तरारब्धे वर्षे विलीनमविभागतो वर्षात् भवति वर्षम् ॥२॥

इति पञ्चमाध्याये पञ्चमः खण्डः ।

---

पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः ॥१॥

पृथिवी वाव गौतमाग्निस्तस्य संवत्सर एव समित्—संवत्सरेण हि पृथिवी समिध्यते, प्रकाशते परिपक्वसर्वफला । आकाशो धूमः—उद्गत इवोर्ध्वमग्नेः पृथिव्या हि दृश्यते, रूपतश्च धूमेन सरूपः । रात्रिरर्चिः—कथमप्रकाशा रात्रिरर्चिः ? अग्नेरनुरूपमर्चिः पृथिवीयमप्रकाशाऽग्नित्वेन रूपिता, स्वभावतः कृष्णा च पृथिव्यग्निः, अर्चिश्च तस्याग्नेः स्वभावतः कृष्णा रात्रिः । दिशोऽङ्गाराः प्रशान्तेरकम्पनाच्च । अवान्तरदिशो विस्फुलिङ्गाः दिशामङ्गाराणामवान्तरावयवत्वात् ॥१॥

तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नँ सम्भवति ॥२॥

तस्या आहुतेर्निमित्ताद्विभज्य वर्षादन्ने विलीनमविभागेन भवत्यन्नं तत् ॥२॥

इति पञ्चमाध्याये षष्ठः खण्डः ।

---

पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्प्राणो धूमो जिह्वार्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः ॥१॥ तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति॥२॥

तस्य वागेव समित्—वाचा हि पुरुषः समिध्यते। प्राणो धूमः—उद्गमनसाम्यात्। जिह्वाऽर्चिः—लोहितत्वसाम्यात्। चक्षुरङ्गाराः—प्रकाशसाम्यात्। श्रोत्रं विस्फुलिङ्गाः—चक्षुषो न्यूनप्रकाशसाम्यात् अपरोक्षार्थप्रकाशकाच्चक्षुषः श्रोत्रं हि पारोक्षार्थप्रकाशकं न्यूनम्, चक्षुषोऽङ्गारस्य पार्श्वे निपतितमल्पप्रकाशं श्रोत्रं विस्फुलिङ्गो नाम। तस्या आहुतेरन्नं रेतः सम्भवति—देवैर्हूयमानं तदन्नमपगतान्नभावं रेतोरूपं भवति, यदविभक्तमन्ने भूतसूक्ष्मं तदन्नपरिणामे रेतस्यविभागं प्राप्य रेतो भवति ॥१-२॥

इति पञ्चमाध्याये सप्तमः खण्डः।

---

योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः ॥१॥ तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति ॥२॥

गर्भः सम्भवति—देवैर्योषाग्नौ हुतं रेतः व्यपेतरेतोभावं गर्भात्मना भवति, यद्भूतसूक्ष्ममविभागाद्रेतोभावं गतं तद्रेतसा सम्भूय स्थूलदेहारम्भकं भवतीति गर्भात्मता तस्य ॥१-२॥

इति पञ्चमाध्यायेऽष्टमः खण्डः ।

---

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाथ जायते ॥१॥ स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ॥२॥

इति तु क्रमेण पञ्चम्यां योषाग्नावाहुतावापो ( यद्भूतसूक्ष्मं ) पुरुषवचसो भवन्ति—पुरुष इति वचसो विषया भवन्ति । इतिशब्दः प्रतिवचनसमाप्तौ । एवं पञ्चमस्य प्रश्नस्य प्रतिवचनमभिधाय, जिहासामिहोत्पादयितुमस्य दुःखभूयिष्ठतां ज्ञापयन्नाह—स इत्यादिना । स पुरुषवचसो योग्यो गर्भ उल्बावृतः—जरायुणाऽऽवेष्टितः, भुग्नपृष्ठग्रीवो नियन्त्रितकरचरणः, दश नव वा मासान् यावदन्तर्मातुरुदरे मलमूत्रपरिप्लुते शयित्वा अथावसरे प्राप्ते प्रोद्धतेन प्रसूतिमारुतेन वेगेन प्रणुन्नः सपद्यधोमुखीभूय निपतति सङ्कटे योनिद्वारे, निरुद्धनिश्वासो निपीडितसर्वावयवः क्लेशेन महता निःसृत्य जायते नाम । अनुभूय

---

१ इह—पुरुषभावे ।

दुःखसहस्रं जातस्याप्यस्य नान्ततः सुखम् । यत् स जातो यावदायुषं कथञ्चन जीवति तं प्रेतं मृतं अन्त्येष्टौ[1] पुत्रेण दिष्टमतिसृष्टमात्मन्यग्नय इतो लोकान् हरन्ति, यदयं यतोऽग्नेर्द्युलोकादित आगतः, यतो द्युलोकाद्यग्नेराहुतिक्रमेण सोमादिना सम्भूतो भवति, तदन्तें यथाऽऽगतं यथासम्भवमग्नौ गमनमस्य युक्तमिति हरन्ति नामान्ततोऽग्नय एव । यद्वा—तं प्रेतमितः—इतो लोकात् स्थूलाद्वा देहादस्मात्प्रेतं विनिर्गतम्, तं पुरुषम्—पुरुषशब्दास्पदीभूतं भूतसूक्ष्मम्, दिष्टमतिसृष्टं कर्मणा फलोपभोगाय, अग्नय एव कर्मभिरुपासनेन वा तर्पिता हरन्ति—नयन्ति, क्व ? यत एवेतो द्युलोकादितो यतश्चासौ पुनः पुरुषात्मना सम्भूतो भवति तमेव पन्थानम् । एतेन घटीयन्त्रवदारोहणावरोहणतोऽस्य भ्रमणक्लेशमात्रपर्यवसानां गतिरित्यनादरणीयता सूच्यते ॥१–२॥

इति पञ्चमाध्याये नवमः खण्डः ।

---

तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षड्‌ुदङ्केति मासाꣳस्तान् ॥१॥ मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रम-

1 और्ध्वदेहिके संस्कारे ।

सो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवयानः पन्था इति ॥२॥

अथ द्वितीयप्रश्नं प्रतिवक्ति सान्निध्यात्[1]। तत्—अपां पुरुषभावम्, ये इत्थम्—उक्तेन प्रकारेण विदुः, द्युलोकाद्यग्नौ देवैर्हुतानामपामेव पुरुषभावो नात्मन इति विदुः, प्रकृतिविलक्षणमात्मानमुपासत इति यावत्, अविवेकिनो ह्यात्मनि शिरःपाण्यादिलक्षणपुरुषभावमारोपयन्ति। ये त्वपामेव तं विदुः, ते ह्यात्मनिष्ठाः। नाप्यात्मनिष्ठां[2] विना वेदनमात्रेण तेऽर्चिषमभिसम्भवन्तीत्यादिना श्रूयमाणमर्चिरादिगमनं घटेत, निष्ठापर्यवसाय्येव च वेदनम्। ये चेमेऽरण्ये इत्युत्तरत्रारण्यशब्दश्रवणात् इमे च ग्रामे इति व्यज्यते। एतेन गृहिणोऽपि ज्ञानाकारं कर्माकलयन्तः कर्मभिरलिप्यमाना उक्तेन वेदनेनार्चिरादिना गच्छन्ति ब्रह्मेति गम्यते। ये चेमेऽरण्ये श्रद्धा तप इत्युपासते—ये तु विहाय गृहान् प्रविश्यारण्यं वानप्रस्थं पारिव्राज्यं वा स्वीकृत्येमे श्रद्धा तप इत्याद्युपासते, उपास्तिरिह तदेकानुष्ठानपरः, श्रद्धां तप एवानुतिष्ठन्ति न गृहिण इवाग्न्यादिकर्म, श्रद्धा तपश्चेह न केवलं कायशोषणपराणामिव, अनात्मविदां हि न घटेतार्चिरादिकः पन्था ब्रह्मगमनं च, किन्त्वात्मनिष्ठाभूयिष्ठमेव तपः, श्रद्धा च। आत्मनिष्ठतामेव बुद्धावाधाय निर्दिशति इमे इति। एषां चात्मविद्भ्यो

---

1 सान्निध्यमुपस्थितिकृतम्। तद्य इत्थं विदुरिति ह्युपक्रमे श्रूयते। 2 'आत्मनिष्ठायां यद्यपि न साक्षाच्छब्दः, अथाप्यर्थापत्त्या तत्सिद्धिरित्याशयेनाह—नापीत्यादिना।

गृहिभ्यो विशेषो निरूप्यते अरण्ये श्रद्धा तप इत्युपासते इति। इद-मत्र बोध्यम्। व्युत्थिता वित्तैषणायाः पुत्रैषणायाश्चात्मचिन्तने प्रवृत्ता वानप्रस्थं पारिव्राज्यं वाऽऽश्रित्य वासनोपशमनाय तपः शारीरं मानसीं च श्रद्धामभ्यस्यन्तः आत्मनि निष्ठां क्रमशः प्राप्यान्त-तोऽर्चिरादिना ब्रह्म गच्छन्ति। न्याय्यं प्रसिद्धं चैतत्, पन्थाश्चाय-मात्मविदामन्यत्रापि श्रुतः, गृहिणां तु नास्य पथः सम्भावना, कर्म-व्यापृतो ह्यसावित्यसम्भावनाऽनेनोपदेशेन निरस्यते। ये चेमे इत्यादि तूदाहरणार्थम्, यथेमे अरण्ये श्रद्धा तप इत्युपास्यमाना वानप्रस्थाः परिव्राजश्चात्मनिष्ठया अर्चिरादिपथा यान्ति ब्रह्म, तथा तद्य इत्थं विदुर्गृहिणोऽप्यलिप्ताः कर्मभिरात्मनिष्ठया यान्ति तेनैव पथा ब्रह्म तत्, इमे इति विशेषनिर्देशाच्चैतद्व्यज्यते। एतेन पञ्चाग्निविद्याप्रकरणे अन्यान्प्रत्यर्चिरादिगत्युपदेशोऽनुचित इति शङ्का प्रत्युक्ता। ननु कथमात्मयाथात्म्यविदां ब्रह्मप्राप्तिः? तत्क्रतुन्यायविरोधात्। नैष दोषः। प्रकृतितोऽत्यन्तविलक्षणतेव ब्रह्मात्मकतापि ह्यात्मनो याथा-त्म्यम्, तदात्मयाथात्म्यनिष्ठानामात्मोपासने ब्रह्मस्वरूपस्याप्यनुप्रवे-शादुपपन्नैव ब्रह्मप्राप्तिः, ब्रह्मात्राक्षरस्वरूपं वा। श्रीभाष्ये तु तद्य इत्थं विदुरिति प्रकृतिवियुक्तब्रह्मात्मकप्रत्यगात्मोपासकाः, ये चेमेऽरण्ये इत्यादिना तु साक्षात् ब्रह्मोपासका इति विभाग आदृतः। तत्र श-ब्दार्थे विशेषश्चेत्थम्, वाजसनेयके समानप्रकरणे 'श्रद्धां सत्यमुपासत' इति तपःशब्दस्थाने सत्यशब्दश्रुतेः तपःशब्दः सत्यशब्देनैकार्थः,

---

१ इदंशब्दो ह्यपरोक्षार्थे, अपरोक्षश्चासन्दिग्धः प्रसिद्धश्च, तदेषामर्चिरादिगमनमस-न्दिग्धं प्रसिद्धं चेति व्यज्यते इति भावः। २ परिशुद्धात्मस्वरूपम्।

सत्यशब्दश्च ब्रह्मणि प्रसिद्धः, 'सत्यं ज्ञानमनन्तं ब्रह्म' 'सत्यं त्वेव विजिज्ञासितव्य'मिति च श्रुतेः, श्रद्धाशब्दो द्वितीयान्तः, लोपश्छान्दसः, पुरस्कृत्येति शेषः, श्रद्धां पुरस्कृत्य ब्रह्मेत्युपासते, ब्रह्मोपासत इति यावत् । श्रद्धा-इतीति निपातेन कर्मणोऽभिधानात् श्रद्धा तप इति च प्रथमान्तम्, ब्रह्मोपास्ते, तदनुकूलां श्रद्धामप्युपास्ते-अनुपालयति, श्रद्धापूर्वकं ब्रह्मोपास्ते इति भावः । तेऽर्चिषमभिसम्भवन्तीत्यादि व्याख्यातपूर्वम् । भाष्यकाराभिमतो नयनप्रकार एव तु पूर्वाचार्याभिमतः ॥१-२॥

अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति ॥३॥ मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ॥४॥

अथ ये पुनरिमे ग्राम एव रता इष्टापूर्ते दत्तमित्युपासते-यागः खातो दानमित्यादीनि कर्माण्येव निरन्तरं सेवन्ते ते सुकृतस्य कर्मणो भोगाय प्रयान्त्यनेन धूमादिना पथा, धूमादिशब्दास्तदभिमानिलोकपराः, नैते संवत्सरमभिप्राप्नुवन्ति-नैषां विदुषामिव संवत्सराभिमानिलोकगमनं किन्तु मासेभ्यः षड्भ्यः-दक्षिणायनात्पितृलोकं तत आकाशं ततश्चन्द्रमसमाह्लादकं मण्डलं प्राप्नोति । व्यावर्तनप्रश्नप्रति-

वचनेनानेन वेत्थ यदितोऽधि प्रजाः प्रयन्तीति प्रथमः प्रश्नोऽपि प्रत्युक्तोऽर्थात् । प्राप्य चन्द्रमसमेष सोमो राजा भवति–रमणीयाकृतिर्भवति । तदवस्थं तद्देवानामन्नम्–कथमेतत् ? तं देवा भक्षयन्ति–तमिमं सुकृतफलभोगार्थं समागतं तत्रत्या आजानदेवा अनुभवन्ति नाम पश्वादिकमिव स्वामी । सुकृतफलस्याप्यन्ततः परभोगपर्यवसायितया जिहासा व्यज्यते ॥३–४॥

तस्मिन्यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ॥५॥ अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥६॥

अथ द्वितीयं प्रश्नं प्रतिवक्ति—तस्मिन्नित्यादिना । तस्मिंश्चान्द्रमसे स्थाने यावत्सम्पातम्–सम्पतत्यनेनेति सम्पातः सुकृतविशेषः, यावत्सुकृतमुषित्वा, अथापरेण कर्मणा एतमेवाध्वानं पुनर्निवर्तन्ते–येन पथोपगताश्चन्द्रमसमेतमेव पन्थानं प्रत्यावर्तन्ते । तत्र न सर्वथा यथागतं प्रत्यागच्छति–आकाशं यथेतम्–यथागतम्, आकाशात्तु विशेषः, यथा–आकाशाद्वायुमागच्छति वायुर्भूत्वा धूमो भवति–वाय्वादिभावश्चेह वाय्वाद्यविभागापत्तिमात्रम्, न तु ताद्रूप्यं तच्छरीरता

चा । अवस्थावैलक्षण्यादभ्रं मेघ इति विभागः । मेघो भूत्वा वर्षति, अविभज्य मेघतो वृष्टिद्वारा त इह पृथिव्यां निपत्य व्रीहियवा ओषधयः तिलमाषाद्या वनस्पतयश्च जायन्ते । इहाप्यभ्रादिष्विवाविभागापत्तिमात्रम्, न तु व्रीह्यादिशरीरकता, तद्धि निहीनतरं जन्म । द्युलोकादवतरतोऽस्य पञ्चमाग्नौ प्रवेशतः प्राङ्नेह शरीरारम्भकं किमप्यस्ति, येन व्रीह्यादिस्थावरजन्मास्य स्यात् । अत एवोत्तरत्रैव श्रूयते 'रमणीयचरणा रमणीयां योनि'मित्यादि । सूत्रकारोऽप्याह 'अन्याधिष्ठिते पूर्ववदभिलापा'दिति । आशङ्क्य निराकरोति च 'अशुद्धमिति चेन्न शब्दात्' इति । अतो वै खलु दुर्निष्प्रपतरम्—अतो व्रीह्यादितः, दुर्निष्प्रपतरम्—दुर्निर्गमतरम् । तत्र तत्राकाशादावनुप्रविशतोऽस्य भूतसूक्ष्मसंवेष्टितस्य जीवस्य ततस्ततो निर्गमोऽचिरेण भवति, व्रीह्यादावनुप्रविष्टस्य तु ततो निर्गमनं त्वनियतकालमसुलभम्, न हि

---

१ अद्भिः पूर्णावस्था अभ्रम्, सेचनोन्मुखावस्था मेघः । २ द्युलोकादवरोहतोऽस्य व्रीह्यादिजन्मप्रयोजकं क्रत्वङ्गपशुविशसनजमशुद्धमवशिष्टमस्तीति चेत्, नास्त्यवशिष्टमशुद्धम् । 'यावत्सम्पातमुषित्वे'ति श्रुतेः । यजमानं स्वर्गं सम्पातयतः क्रतुसाध्यस्य सर्वस्य कर्मणो यावत् क्षयं हि निवासः श्रूयते । पशुविशसनेनाङ्गेनाङ्गी क्रतुरेकं महाऽपूर्वं हि जनयति तेन चोपलभ्यमानं फलं प्रभूतसुखरूपमल्पीयसा दुःखेन नान्तरीयकेन सम्भिन्नमेव, सामग्रीस्वाभाव्यात्, सामग्री हि मिश्ररूपा । अत एव चान्तरान्तरानुभूयते चासुरादिदुःखम् । यद्वा—द्युलोकादवरोहतां व्रीह्यादिजन्मप्रयोजकं क्रतूपकारकपशुविशसनमिति चेत्—न, न तत्तत्र प्रयोजकं भवितुमर्हति, अवगम्यते हि शब्दादेव साधनान्तरेणापि स्वर्गप्राप्तिः, अविशेषेण सर्वेषामेव द्युलोकादवरोहतां पञ्चाग्निसम्बन्धस्यावर्जनीयतया व्रीह्यादिभावस्यापरिहार्यत्वात्, तत्र तस्याभावादनैकान्त्यान्न तस्य तत्र प्रयोजकतेति भावः ।

व्रीहयः सर्वे पुरुषस्योदरमनुप्रविशन्ति, विशीर्यन्ते हि बहवः, न च नियतो रेतःसिग्योगः, बहवो ह्यूर्ध्वरेतसः । तत् कालगत्या ततस्ततो नीयमानस्य कदा रेतःसिग्योगो भवतीत्यनियतमिति दुर्निष्प्रपतरमित्युच्यते । छान्दसस्तकारलोपः । यो यो ह्यन्नमत्ति यो रेतः सिञ्चति—यो हि तदेवान्नमत्ति यश्च स एव रेतः सिञ्चति योनौ, काकतालीयं चैतत् । तत्—तदा, भूय एव भवति—यथापूर्वमिह लोके कर्मणामारम्भाय ॥५–६॥

तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा ॥७॥

तत्र विशेषमाह—तद्य इहेति । इहैवमवतरतां मध्ये, ये रमणीयचरणाः—साध्वाचरणाः पुरा, अभ्याशः—आगन्तारः, ते रमणीयां योनिमापद्येरन् । यत्तत्पदाभ्यां रमणीयाचरणरमणीययोनिप्राप्त्योर्हेतुहेतुमद्भावो व्यज्यते । का रमणीया योनिः ? ब्राह्मणयोनिः क्षत्रिययोनिर्वैश्ययोनिर्वा, तां यथासुकृततारतम्यं विशन्ति । अथ य इह कपूयचरणाः—कुत्सिताचरणाः, ते कुत्सितां योनिमापद्येरन्, श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा । उत्तरोत्तरं सुकृताल्पतयेवोत्तरोत्तरं दुष्कृताल्पतयेयं योनिगणना ॥७॥

अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयꣳ स्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत तदेष श्लोकः ॥८॥

अथ चतुर्थं प्रश्नं प्रतिवक्ति । अथेत्यर्थान्तरे । एतयोर्देवयानपितृयाणयोः पथोः कतरेण च न—एकेनापि न यान्ति, कानि तानि ? क्षुद्राणि दंशमशककीटादीनि केवलमसकृदावृत्तीनि—जननमरणचक्रकावृत्तिमात्रपर्यवसायीनि, न भोगाय न कर्मणे वेति यावत् । अत्यन्तपापभूयिष्ठानि जायस्व म्रियस्वेत्येवेश्वरेण सङ्कल्प्यमानानि । एतत्—उक्तलक्षणं भूतजातम्, तृतीयं स्थानम्—तृतीयस्थानगम्, तृतीयो वर्ग इति लक्ष्यते । तेनासौ द्युलोको न सम्पूर्यते । यद्वा—असकृदावृत्तिमात्रकाणि भवन्तीति यदेतत्तदिदं तृतीयं स्थानं—स्थितिः । तस्मात्—यस्मादेवं संसरतां गतिर्दुःखबहुला, तस्मात् जुगुप्सेत संसारात् । महता प्रयासेन प्राप्यापि द्युलोकं देवानामन्नं भवति, तं देवा भक्षयन्ति, अवसिते च साधनबले सपदि मुद्गराभिहतो मूर्च्छां गत इव विनष्टचेतनो निपतन्, दुर्निर्गमे निपत्य व्रीह्यादौ, कालगत्या कदाचिद्रेतोयोगं प्राप्य प्रविश्य मलमये योनिगर्ते पुनः पिण्डीभावादिक्रमेण स्थूलदेहं समधिगच्छन्, भवति श्वा वा चण्डालो वा सूकरो वा, तृतीयस्थानगतो च गाढान्धकार इव समुद्रान्तर इव निपतितो विलुप्तदृष्टिर्निर्गमनोपायं कथमप्यप्राप्य जन्ममरणान्तराल ए-

वोद्भ्रान्तः परिवर्तते केवलम्। तदिदं सर्वं विमृशतो भवेदेव जुगुप्सा संसार इति भावः। तदेष श्लोकः—तदिदं विज्ञानमधिकृत्य एष वक्ष्यमाणः श्लोकः ॥८॥

स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन्ब्रह्महा च। एते पतन्ति चत्वारः पञ्चमश्चाचरꣳस्तैरिति ॥९॥ अथ ह य एतानेवं पञ्चाग्नीन्वेद न स ह तैरप्याचरन्पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद १०

ये नामैते पञ्च महापातकिनः—हर्ता ब्राह्मणसुवर्णस्य, विप्रो मद्यपायी, गुरोर्भार्यां सङ्गच्छन्, ब्रह्मघ्नः, चतुर्भिरेतैः सम्बन्धमाचरन्नप्रः, इति तैः सह सम्बन्धमाचरन्नप्ययं न पाप्मना लिप्यते। कोऽसौ? अथ य एतानेवं पञ्चाग्नीन्वेद। स्तूयते पञ्चाग्निविद्या। य एवं प्रतिवचनोक्तप्रकारेण वेद स शुद्धः—न लिप्यते, यस्मात्प्रसक्तेऽपि पापे, पूतश्च प्राक्तनपाप्मापगमात्, पुण्यो लोको यस्य तथाभूतश्च भवति ॥९-१०॥

इति पञ्चमाध्याये दशमः खण्डः।

---

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्व-

तराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाꣳसांचक्रुः को न आत्मा किं ब्रह्मेति ॥१॥

अथ प्राचीनशाल औपमन्यवः–उपमन्योरपत्यम्, सत्ययज्ञः पौलुषिः–पुलुषेरपत्यम्, इन्द्रद्युम्नो भाल्लवेयः–भाल्लवेरपत्यम्, जनः शार्कराक्ष्यः–शर्कराक्ष्यस्यापत्यम्, तेहैते पञ्च महाशालाः–महत्यः शाला येषां तथाभूताः, महागृहस्था इत्येतत्, महाश्रोत्रियाश्च–श्रुताध्ययनशालिनश्च । जात्वेकत्र समेत्य–सङ्गत्य मीमांसाञ्चक्रुः–विचारितवन्तः । किमिति, को न आत्मा किं ब्रह्मेति । नेहार्थद्वयजिज्ञासा, आत्मैव विशेष्यते ब्रह्मेति ब्रह्मैव चात्मेति । यदक्षरं[1] ब्रह्म तन्नात्मभूतम्, यद्यपि नः प्रत्येकमन्यान्यदात्मभूतम्, अथापि न तद्ब्रह्म परिच्छिन्नत्वात् । तद्विलक्षणमेव किञ्चित्, नः सर्वेषामात्मभूतमेकं ब्रह्मेति ब्रह्मविदां गोष्ठीषु श्रूयते, तत्किमिति विचारितवन्तः ॥१॥

ते ह सम्पादयाञ्चक्रुरुद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥२॥

ते ह विचारस्यान्तमप्राप्य मनसा सम्पादयाञ्चक्रुः–विनिश्चितवन्तः, किमिति; अयमरुणस्य पुत्र उद्दालक इममात्मानं वैश्वानरम्–विश्वेषामप्यन्तर्यामितया नेतारम्, अध्येति–वेत्ति, तं सम्प्रत्यभ्या-

१ 'कूटस्थोऽक्षर उच्यत' इति स्मर्यमाणम् ।

गच्छामेति । भगवन्त इति च मिथः सम्बोधनम् । हन्तेति हर्षे । तं होद्दालकमभ्याजग्मुः ॥२॥

स ह सम्पादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥३॥

स होद्दालकस्तानागतान् दृष्ट्वा आलक्ष्याशयं मनसि सम्पादयाञ्चकार–विनिश्चयमकरोत् । प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियाः, तेभ्यः प्रतिवक्तुं न सर्वं प्रतिपत्स्ये–तदहमन्यमनुशासान्युपदेष्टारमिति ॥३॥

तान्होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥४॥

इति मनसि निश्चित्य तान्होवाच, हे भगवन्तः केकयस्यापत्यमयमश्वपतिर्नाम राजा सम्प्रतीममात्मानमध्येति–वेत्ति तं हन्ताभ्यागच्छामेति । तं हाश्वपतिमभ्याजग्मुरुद्दालकसहितास्ते ॥४॥

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार स ह प्रातः सञ्जिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नाऽनाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽह-

मस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि ताव-
द्भगवद्भ्यो दास्यामि वसन्तु मे भगवन्त इति ॥५॥

तेभ्यः प्राप्तेभ्यः पृथक् पृथक् अर्हाणि—अर्हणानि कारयाञ्चकार । अथ परेद्युः प्रातः सञ्जिहानः शयनतलम्, स्वभवनं वा, स्वभवनान्निर्गत्येति यावत्, उपगम्य विनयावनतो वचनमिदमवोचत् । न मे जनपदे स्तेनो न कदर्यः—सत्यप्यैश्वर्ये वितरणरहितो लुब्धतमः, न मद्यपो, नानाहिताग्निः, नाविद्वान्, न स्वैरी, कुतः स्वैरिणी, तन्मदीयं द्रव्यं प्रतिग्रहार्हमेव, यक्ष्यमाणो वै भगवन्तोऽहमस्मि, यावदेकैकस्मै ऋत्विजे धनं दास्यामि तावत्प्रत्येकं भगवद्भ्योऽपि दास्यामि वसन्तु भगवन्तस्तावन्मे भवने इति ॥५॥

ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳ हैव वदेदात्मान-
मेवेमं वैश्वानरꣳसम्प्रत्यध्येषि तमेव नो ब्रूहीति ॥६॥

ते होचुरिदम्, येनैवार्थेन लिप्सितेन निमित्तेन पुरुषोऽर्थी चरेत्, तं ह्येवार्थमर्थिने वदेत्, शुश्रूषयाऽर्थिनोऽभिप्रेत्य वदेदित्युक्तिः । शुश्रूषया वयमागताः, न धनलिप्सयेति भावः । वैश्वानरमिममात्मानं सम्प्रत्यध्येषि जानासि, तमेवात्मानं नो ब्रूहीति ॥६॥

तान्होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाण-
यः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुपनीयैवैतदुवाच ॥७॥

तानुवाच राजा प्रातर्वः प्रतिवक्तास्मीति, सपद्यनभिधाने निमित्तमिदं लेशतो वा स्वभावः परीक्ष्य इति । अपरीक्ष्य विद्या हि न

देया । अथास्याशयमालक्ष्य ते ह परेद्युः प्रातः समित्पाणयः, दूरीकृताभिमाना विनीतवेषाः शिष्यसमुचितया वृत्त्या पूर्वाह्णे प्रतिचक्रमिरे राजानम् । राजा तेषामभिमानशून्यतामालक्ष्य प्रसन्नो भूत्वा अनुपनीयैव तान्वर्णतो गरीयांस इति मर्यादां रक्षन्नेतदुवाच ॥७॥

इति पञ्चमाध्याये एकादशः खण्डः ।

---

औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥१॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति ॥२॥

औपमन्यव कं त्वमात्मानमुपास्से । ननु जिज्ञासया समुपागतमेनमुपदेष्टव्यमर्थमुपदेष्टा किमित्येवं पृच्छति १ । यावदत्रैव तैरधिगतं तावदेभ्यो विज्ञायाधिकमुपदेष्टव्यमुपदिशाम इति । औपमन्यव आह दिवमेव भगवो राजन्निति—अवरोऽपि वर्णतो विद्यायाश्चेदुपदेष्टा स हि पूज्यः, तत् विनयोपेतं वचनमस्य भगवो राजन्निति ।

---

१ उपनयनमकृत्वैव, उपनयनं पादयोः प्रणिपातनम् ।

अन्येऽप्येवं पृष्टा राज्ञा भगवो राजन्नित्येव प्रतिवदन्ति । यदा समित्पाणयः समागतास्तत आरभ्य प्रतिवदन्ति राजानं भगवो राजन्निति, राजा च 'कं त्वमात्मानमुपास्से' इति । ततः पूर्वं तु राजा प्राहैतान् 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मी'ति, एते च राजानं 'सम्प्रत्यध्येषि तमेव नो ब्रूही'ति । दिवमेव वैश्वानरमात्मानमुपास इत्यौपमन्यव उवाच । नायं द्युलोकस्वरूपमेव साक्षादात्मस्वरूपं पश्यति, 'को न आत्मा किं ब्रह्मे'ति मीमांसमानानां न हि जडे आत्मभावना भवेत् । किन्तु द्युलोकं वैश्वानरमात्मनोऽवच्छेदकतया भावयति नाम, अवच्छेदकता च शरीरविधया । द्युलोकेनावच्छिन्नं वैश्वानरमात्मानमुपासे इत्येतत् । अथाचार्य आह—एष वै सुतेजाः—शोभनं तेजो यस्य सः, स हि लोकस्तेजसां राशिनाऽऽदित्येन दीप्यते, वैश्वानर आत्मा, यं त्वमात्मानमुपास्से । सुतेजसोऽस्योपासनात्तव कुले सुतं प्रसुतमासुतं दृश्यते—सुतादयः सोमस्यैवैकाहादिभेदाद्भिन्ना व्यवह्रियन्ते । तव कुले सर्वे कर्मनिष्ठा भवन्तीति यावत् । अत्स्यन्नं पश्यसि प्रियम्, योऽप्यन्य एतमेवमात्मानं वैश्वानरमुपास्ते सोऽप्यन्नमत्ति पश्यति प्रियं भवत्यस्य कुले ब्रह्मवर्चसम्—अध्ययनजं तेजः । न त्वया वैश्वानर आत्मा कार्त्स्न्येन यथावदवधृतः, एकोंऽशस्तस्यावधृतः, मूर्धा त्वेष आत्मनो वैश्वानरस्य । द्युलोकादिपृथिव्यन्तशरीरस्य वैश्वानरात्मनो द्युलोकस्तु मूर्धा, ऊर्ध्वस्थितेरुत्तमत्वाच्चेतरेभ्य इति भावः । हन्त ते जिज्ञासा समुत्पन्ना यथावदवगन्तुं मामुपाग-

१ विना भगवच्छब्दमिति भावः । २ एकाहः अहीनः सत्रः इति विभागः कर्मणः । तेषु प्रवर्तमानं सोमाभिषवणं क्रमात् सुतादिशब्दैर्व्यवह्रियते ।

तश्च। यन्मां नागमिष्यः, अयमेव वैश्वानरो नाधिक इति व्यावृत्तोऽवधूतः स्यात्, तथासति मूर्धा ते व्यपतिष्यत्—मूर्धपतनतुल्योऽनर्थः कोऽप्यभविष्यत्। एवमन्धोऽभविष्य इत्यादीनामप्यनर्थमाक्षे तात्पर्यम्। अनर्थश्च संसार एव ॥१–२॥

इति पञ्चमाध्याये द्वादशः खण्डः।

---

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥१॥ प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यद्यन्मां नागमिष्य इति ॥२॥

विश्वरूपः—विश्वमिदं प्रपञ्चं रूपयति प्रकाशयति, विश्वं समस्तं शुक्लादिरूपमस्येति वा, चित्रभानुर्हि। ते कुले विश्वरूपं विश्वप्रकाशकं विद्यावृत्तादिकं भवति, बहुरूपं वस्तु धनधान्यादि भवति ॥१–२॥

इति पञ्चमाध्याये त्रयोदशः खण्डः।

---

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥१॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नागमिष्य इति ॥२॥

भाल्लविरेव व्याघ्रपद्यः, तत्सम्बोध्यते भाल्लवेय एव वैयाघ्रपद्येति । सदागतेर्वायोर्हि वर्त्म पृथगितरस्मात्—विलक्षणम्, तद्वायुः पृथग्वर्त्मोच्यते, पृथक्पृथग्वर्त्मान्याहवादिभेदेन प्रसरतोऽस्य वायोरिति वा पृथग्वर्त्मा । अस्यैवंरूपस्योपासनादेव ते पृथक् पृथक्—विविधदेशतश्च सदा बलयः करा आगच्छन्ति, तथा पृथक् रथश्रेणयश्च ॥१—२॥

इति पञ्चमाध्याये चतुर्दशः खण्डः ।

---

अथ होवाच जनꣳ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवा-

चैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥१॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते सन्देहस्त्वेष आत्मन इति होवाच सन्देहस्ते व्यशीर्यद्यन्मां नागमिष्य इति ॥२॥

बहुलत्वमाकाशस्येतरेभ्यो वैपुल्यात् । सन्देहो मध्यकायः ॥१-२॥

इति पञ्चमाध्याये पञ्चदशः खण्डः ।

---

अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वꣳ रयिमान्पुष्टिमानसि ॥१॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ॥२॥

वृष्टिमूला हि सर्वा सम्पत्तिः, तदुच्यते—एष वै रयिरिति । बस्तिः—मूत्राशयः ॥ १–२ ॥

इति पञ्चमाध्याये षोडशः खण्डः ।

---

अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥१॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥२॥

एष वै प्रतिष्ठा—पृथिवी हि सर्वप्राणिनां प्रतिष्ठा ॥ १–२ ॥

इति पञ्चमाध्याये सप्तदशः खण्डः ।

---

तान्होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमा-

त्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु
सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥१॥

अथ तानुवाचाश्वपतिः, एते यूयमिममात्मानं वैश्वानरं पृथगिव-द्युप्रभृतिपृथिव्यन्तसमस्तरूपमेनं द्यौरेव वैश्वानर आदित्य एव वैश्वानर इत्येवंरीत्या पृथक् प्रतिपद्यध्वे, एवं विद्वांसो यूयमेकदेशदृष्टेः परिमितमन्नं भोग्यमत्थ, यस्तु वैश्वानरमेतं प्रादेशमात्रम्—प्रदेशादनन्यः प्रादेशो द्युप्रभृतिपृथिव्यन्तः, स एवास्य मात्रा—शरीरतया अवच्छेदकीभूय ज्ञापको भवति तदयं प्रादेशमात्रः, द्युप्रभृतिपृथिव्यन्तशरीरकमित्येतत्, वस्तुतस्त्वभिविमानम्—अभिविगतं मानं यस्य, अपरिच्छिन्नमित्येतत्, उपास्ते—द्युप्रभृतिपृथिव्यन्तशरीरकत्वेन स्वरूपतोऽपरिच्छिन्नत्वेन चोपास्त इति यावत् । स न पृथग्दृष्टिरिव परिमितमन्नमत्ति, किन्तु सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु यदेकमनुगतमन्नं आनन्दमयतया निरतिशयभोग्यमद्वितीयं तदत्ति। सर्वगं निरतिशयानन्दं ब्रह्म प्राप्नोतीति यावत् ॥ १ ॥

तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥२॥

१ अन्तर्यामितयेति यावत् ।

उपदिश्य वैश्वानरविद्यामथ तन्निष्ठस्याग्निहोत्रविशेषमादिशन्नात्मनि वैश्वानरदृष्टिमादावापादयति, येनाग्निहोत्रेण स्वात्मा वैश्वानरः परो वैश्वानरविद्यानिष्ठेनाराधितः स्यात् । तस्य ह वा वैश्वानरविद्यानिष्ठस्य मूर्धैव, एतस्य वैश्वानरस्यात्मनः सुतेजाः—सुतेजःसंज्ञः, योऽयं मम मूर्धा स एव वैश्वानरस्य मूर्धा सुतेजा इति भावयेदुपासक इति यावत् । यच्चक्षुरुपासकस्य स एव विश्वरूपः—आदित्यो यश्चक्षुर्वैश्वानरस्योक्तः । एवमुत्तरत्रापि । पृथिव्येव पादौ—उपासकस्य पादावेव वैश्वानरस्य पादतया रूपिता पृथिवी । वैश्वानरमात्मानमन्तर्यामितया स्वशरीरे सन्निहितं स्वमूर्धप्रभृतिपादान्तैरेव द्युलोकप्रभृतिपृथिव्यन्तशरीरकत्वेन भावयेत्, एवं विभाव्य वक्ष्यमाणमग्निहोत्रमनुतिष्ठेदिति भावः । तस्य ह वा एतस्य वौश्वनरस्येत्येतदेकार्थकं[1] वा । वैश्वानरो हि विश्वरूपस्तद्रूपो[2]ऽपि, मूर्धैव—उपासकस्येत्येतदर्थतः प्राप्तम् । भावस्तु स एव । अथाग्निहोत्रोपकरणानि सम्पादयति उर एवास्योपासकस्य वेदिः—स्थण्डिलम्, लोमानि बर्हिः—यान्यास्तीर्यन्ते वेद्यां बर्हींषि; दर्भाः, हृदयं गार्हपत्यः—यतो मनोऽग्निः प्रणीयत इव, सर्वेन्द्रियप्रवृत्तिमूलप्रदेशो हि हृदयम् । मनोऽन्वाहार्यपचनो दक्षिणाग्निः । आस्यमाहवनीयः—हूयते ह्यास्ये आहुतिरन्नलक्षणा ॥२॥

इति पञ्चमाध्यायेऽष्टादशः खण्डः ।

---

**तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयꣳ स यां प्रथ-**

---

१ समानाधिकरणमिति यावत् । २ तद्रूपोऽपि—उपासकरूपोऽपि, उपासकशरीर्यपि ।

मामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति ॥१॥ प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥

अथैवं विभाव्य विभावयेद्धोमीयम्, तद्यद्भक्तमन्नं प्रथममागच्छेत् भोजनपात्रे, विभाव्यैवं स भोक्ता यां प्रथमाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति, अनेन प्राणस्तृप्यति, प्राणे तृप्यति सति चक्षुस्तृप्यति, चक्षुषि तृप्यति तदधिष्ठाताऽऽदित्यस्तृप्यति, आदित्ये तृप्यति तेनाधिष्ठिता द्यौश्च तृप्यति, दिवि तृप्यन्त्यां द्यौश्चादित्यश्च यत्किञ्चिदधितिष्ठति तत्सर्वं तृप्यति, तस्य सर्वस्य तृप्तिमनु स्वयं च (यजमानः) भोक्ता तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा शारीरेण ब्रह्मवर्चसेन–ब्रह्मणो वेदस्याध्ययनतो जातेन वर्चसा चोपलक्षितस्तृप्यति ॥ २ ॥

इति पञ्चमाध्याये एकोनविंशः खण्डः ।

---

अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥१॥ व्याने तृप्यति श्रोत्रं

तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥

इति पञ्चमाध्याये विंशः खण्डः ।

---

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥१॥ अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥

इति पञ्चमाध्याये एकविंशः खण्डः ।

---

अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति ॥१॥ समाने तृप्यति

मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥३॥

इति पञ्चमाध्याये द्वाविंशः खण्डः ।

---

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥१॥ उदाने तृप्यति त्वक् तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥

अथ यां द्वितीयामित्यादि स्फुटम् ॥

इति पञ्चमाध्याये त्रयोविंशः खण्डः ।

---

स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारान-

पोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् ॥१॥ अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥२॥

वैश्वानरविदोऽग्निहोत्रमिदं स्तूयते द्वाभ्याम् । य इदं वैश्वानरदर्शनमात्मन्यविद्वान्, अविद्वांश्चाग्निहोत्रोपकरणविशेषमुक्तलक्षणम्, अग्निहोत्रं प्रसिद्धं जुहोति, यथाऽङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् । इयं च निन्दा प्राणाग्निहोत्रस्तुतये । अथ य एतदित्यादि स्तूयतेऽङ्गिफलेनाङ्गम् ॥ १–२ ॥

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥३॥

य एतदेवं विद्वानग्निहोत्रं जुहोति तस्यास्य सर्वे पाप्मानः प्रदूयन्ते नश्यन्ति सपदि, यथेषीकायास्तृणविशेषस्य तूलमग्नौ प्रोतं–प्रक्षिप्तं सत् सपदि प्रदूयेत तथा ॥ ३ ॥

तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति तदेष श्लोकः ॥४॥

स्तौति विश्वानरविद्याम् । तस्मादेव विद्याप्रभावात्, एवंविद्यद्यपि

---

१ उत्क्रमेण स्वशरीरे वैश्वानरावयवपरिकल्पनप्रकारम् ।

कदाचिच्चण्डालायोच्छिष्टं प्रयच्छेत् न तेनैष दुष्यतीतरवत्, अयं हि सर्वात्मानं वैश्वानरमात्मनीवान्यस्मिन्नपि पश्यन्प्रयच्छति तदात्मन्येव वैश्वानरेऽस्य हुतं भवति–अनेन हुतं भवति। तदेष श्लोकः–तत्रैष वक्ष्यमाणश्लोकः स्तुतिरूपः ॥ ४ ॥

यथेह क्षुधिता बाला मातरं पर्युपा-
सत एवꣳ सर्वाणि भूतान्यग्निहोत्रमु-
पासत इत्यग्निहोत्रमुपासत इति ॥५॥

यथेह लोके क्षुधिता बाला मातरं परित उपासते एवं सर्वाणि भूतानि अग्निहोत्रं वैश्वानरविद्यानिष्ठस्य, प्राणाग्निहोत्रमुपासते तस्य प्राणादितृप्त्या सर्वतृप्तेः। आवृत्तिरादरात्, विद्यासमाप्त्यर्थे वा ॥५॥

इति पञ्चमाध्याये चतुर्विंशः खण्डः।

---

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण–परमहंसवर्य–योगिराज–श्रीगोपालानन्दस्वामिविरचिते छान्दोग्योपनिषद्भाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

---

## अथ षष्ठोऽध्यायः।

ॐ श्वेतकेतुर्हारुणेय आस तꣳह पितोवाच
श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कु-
लीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥१॥

उपक्षिप्तं वैश्वानरविद्यायामैकात्म्यम्, वितन्यतेऽनया सद्विद्यया । आरुणेः पुत्रः श्वेतकेतुरास तं पितोवाच, श्वेतकेतो ! वस ब्रह्मचर्यम् —उपगच्छ कमपि गुरुं ब्रह्मचर्येण विद्यार्थम्, न वै असत्कुलीनः कोऽप्यननूच्य—अनधीत्य ब्रह्मबन्धुरिव भवति—ब्राह्मणान् बन्धून् व्यपदिशति न स्वयं ब्राह्मणवृत्तः स एष ब्रह्मबन्धुः । यो नाधीते स हि ब्रह्मबन्धुरेवेति भावः ॥ १ ॥

स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः
सर्वान्वेदानधीत्य महामना अनूचानमानी
स्तब्ध एयाय तꣳ ह पितोवाच ॥२॥

उपश्रुत्य पितुरिदं वचनं पुत्रो बालो द्वादशवार्षीयः सञ्जातत्वर उपेत्य गुरुमधीत्य वेदान् चतुर्विंशतिवर्षः पितरं प्रत्येयाय, कथंभूतः ? महामनाः—गम्भीरमनाः, अभिमानीत्येतत् । अनूचानमानी —अनुवचने कुशलमात्मानं मन्यते आत्मानमधीतिनमभिमन्यत इति वा अनूचानमानी । स्तब्धः—निश्चलः, कृतकृत्य इवेत्येतत् । पिताऽस्याभिमानमपनयन्नात्मविज्ञानमप्यापादयन्नुवाच ॥ २ ॥

श्वेतकेतो यन्नु सोम्येदं महामना अनूचान-
मानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः, येनाश्रु-
तꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति
कथं नु भगवः स आदेशो भवतीति ॥३॥

प्रकरणं चेदमापादचूडं वेदार्थसङ्ग्रहे विवृतं विस्तरेण।
अथापि वृत्तिरस्यापि वचनैर्मितवर्णकैः।
अनुल्लङ्घितसद्वर्त्म सुश्लक्ष्णमनुवक्ष्यते।

उत तमादेशमप्राक्ष्यः—आदिशति शास्ति यः स्वयमेव सोऽयमादेशः। कर्तुः करणत्वविवक्षया घञ्। यद्ययमादेशो न श्रुतस्त्वया, हन्त कृतकृत्य इव कथमसि स्तब्धः। कोऽयं विशेषोऽस्मिन्नादेशे? येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्—यस्मिंस्तत्त्वतः श्रुते मते विज्ञाते सर्वमेव श्रुतं मतं विज्ञातं भवति। शिष्यः शङ्कते—भगवन्! कथं नु भवति स आदेशः—एकविज्ञानेनान्यान्यविज्ञानं कथं घटेतेति भावः।

यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृ-
ण्मयं विज्ञातꣳ स्याद्वाचारम्भणं विका-
रो नामधेयं मृत्तिकेत्येव सत्यम् ॥४॥

आचार्यः प्राह—यथा सोम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं घटशरावादि मृण्मयं विज्ञातं स्यात्, तथैवेदम्। ननु व्याहतं निदर्शनं अर्थान्तरं हि घटशरावादि, भिद्यते हि व्यवहारः, नैवम्, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्—प्रवर्तते नामान्याऽन्या वाक्-व्यवहारः, तेन व्यवहारेण संस्पृष्टं गवाश्वादिव्यवहारेणेव नार्थान्तरम्, किन्तु घटत्वशरावत्वाद्यवस्थाविशेषलक्षणो विकारभेद-

१ स्वयमेव-स्वेनैव। कर्तुः करणत्वविवक्षां ज्ञापयितुमेतत्। अतिशयितं साधकं हि करणम्। अतिशयश्चेहेतरनिरपेक्षता।

स्तन्निमित्तनामभेदश्च केवलम् । आरभ्यते—आलभ्यते—संस्पृश्यत इत्यारम्भणम् । ननु विकारभेद एव केवलम्, न द्रव्यान्तरमिति कथमेतत्, मृत्तिकेत्येव सत्यम्—प्रत्यक्षप्रमाणसमधिगतम् । विकारभेदे मृदेवेति हि सर्वेषां सर्वदा प्रत्यक्षम् । तदेवमबाधितप्रत्यक्षसमधिगतेऽर्थे कथमपूर्वद्रव्यकल्पना घटेत । अयं भावः—वागियमुदेति नाम नामभेदमुपस्पृश्य, स च नामभेदो निमित्तभेदसव्यपेक्षो नाम, निमित्तभेदश्च न ( द्रव्य ) धर्मिभेदनियतः, असत्यपि तद्भेदे गन्धस्पर्शादिगुणभेदेनापि सुरभिसुकुमारमेतदिति समुदेति हि वाग्विभेदः, तथोपाधिभेदलक्षणनिमित्तभेदेनापि पिता भ्राता निवासः शरणं सुहृदेष एव ममेति, तथेह निमित्तभेदो घटत्वशरावत्वाद्यवस्थाविशेषलक्षणविकारभेद एव न द्रव्यान्तरम्, द्रव्यान्तरमिति काणादवादो हि प्रत्यक्षबाधित इति । विशेषतो व्याख्यातं चैतत् प्राक् प्रसङ्गात् । श्रीमद्रामानुजाचार्यैर्योजना याऽस्य दर्शिता । उपादेयतमा सेयं नास्माभिरतिलङ्घ्यते ॥ अध्यासवादविश्रान्तिं परिहर्तुं परोऽद्भवाम् । किन्त्वमी योजनाभेदाः स्वरसाः सम्प्रदर्शिताः ॥४॥

यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातᳬ स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥५॥ यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातᳬ स्याद्वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव

**सत्यमेवꣳ सोम्य स आदेशो भवतीति ॥६॥**

अपराण्यपि निदर्शनान्याह—यथेत्यादिना।

**न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येत-द्वेदिष्यन् कथं मे नावक्ष्यन्निति भगवाँ-स्त्वेवमेतद्ब्रवीत्विति तथा सोम्येति होवाच ॥७॥**

एवमनेकैर्निदर्शनैर्निरूपितैरवधृत्यैकविज्ञानेन सर्वविज्ञानसम्भवं पुत्रः प्राह—न वै नूनमिति। भगवन्तस्ते मम गुरव एतन्नावेदिषुः यस्मिन्विज्ञाते सर्वं विज्ञातं स्यात्, यद्यवेदिष्यन् कथं मे नावक्ष्यन् न हि मयि वैगुण्यम्। तत् भगवानेव मे अवहिताय ब्रवीत्विति। तथा सोम्येत्युवाच पिता ॥७॥

इति षष्ठाध्याये प्रथमः खण्डः।

---

**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तद्धैक आहुरसदेवेदमग्र आसीदेकमेवा-द्वितीयं तस्मादसतः सज्जायत ॥१॥**

एवं प्रार्थितः पिता सर्वस्यास्यैकमूलकतां निरूपयितुमुपक्रमते—सदेवेत्यादिना। अन्यथा ह्येकविज्ञानेन सर्वविज्ञानं दुःसम्पादम्। इदम्[1]—यदुपलभ्यते विविधं नामरूपबहुलं भोक्तृभोग्यात्मकमिदम्, अग्रे—पुरा सर्गात्, आसीत्, परमेवं नासीत् किन्तु सदेवासीत्। य-

---

१ इदमा गम्यं प्रात्यक्षिकं विशेषमाह।

द्यप्यद्यापि सदिदम्, तथापि पुरा तु सदेव । नायोगो व्यवच्छिद्यते, कस्तर्हि ? अन्ययोगः, अयोगस्त्वासीदित्यनेनैव व्यवच्छिन्नः । आसीदेवेत्येव तु पर्याप्तं सत्त्वस्य दार्ढ्याय । प्रसक्तविशेषान्तरव्यवच्छेदार्थेऽपि क्वचिदेवकारो विशेषणेन सह समभिव्याह्रियते । यथेदं घटशरावादि पुरा मृदेवासीदिति । यैर्विशेषैर्धर्मिणः प्रतिपत्तिस्तान्येवेह विशेषान्तराणि व्यवच्छिद्यन्ते धर्मिणि । इदमा गम्याः कार्यविशेषा व्यवच्छिद्यन्त इत्येतत् । एतेन—इदं पुरा सर्गादासीदिति विप्रतिषिद्धमिति शङ्का निरस्यते । मृण्मात्रमिव सन्मात्रं पुरेत्यविप्र-

---

१ शङ्खः पाण्डुर एवेत्यत्रेवेहायोगव्यवच्छेदकतैव समुचितेत्यत्राह—अयोगस्त्विति । स चायोगः प्रकृते असत्त्वम् । आसीदित्यनेनैवेति । अयं भावः । असत्येवकारे शङ्खः पाण्डुर इति वचनं कस्यचित् पाण्डुरत्वाभावसम्भावनामुपरोद्धुं न प्रभवति । नीलो घट इति वचनवत् । सर्गात्पुराऽपि इदमासीदिति वचनं सृज्यस्य सर्गतः प्रागसत्तामप्रतिक्षिप्य न स्वार्थमवगमयितुमीष्टे, तत्, इदमग्र आसीदिति निर्देशेनैवायोगो व्यवच्छिद्यते इति । २ देवदत्तः पण्डित इति वचनादेव अपाण्डित्यप्रतिद्वन्द्विनि पाण्डित्येऽवगतेऽपि दृढप्रतिपत्तये देवदत्तः पण्डित एवेति यथा प्रयोगस्तथेह सदेवेति वचनमित्यत्राह—आसीदेवेत्येवेति । सदिति पदं व्यर्थं स्यात्, आसीदेवेति च समभिव्याहारस्तदा स्यादिति भावः । ३ विशेषणसङ्गतो ह्येवकारोऽयोगं व्यवच्छिन्दन् दृश्यते यथा शङ्खः पाण्डुर एव, वह्निरुष्ण एवेति । अन्ययोगं तु विशेष्यसङ्गतः, यथा 'पार्थ एव धनुर्धरः' इत्यादौ । तत्कथमिह विशेषणसङ्गतस्यान्ययोगव्यवच्छेदकता, तत्राह—प्रसक्तेति । अन्यस्मिन् योगोऽन्यस्य वा योगोऽन्ययोग उच्यते, तत्र प्रकृतधर्मिणोऽन्यस्मिन् धर्मिणि प्रसक्तधर्मव्यवच्छेदः क्वचित्, (पार्थ एव धनुर्धर इत्यादौ) प्रकृतधर्मादन्यस्य धर्मस्य प्रसक्तस्य योगः प्रकृतधर्मिणि व्यवच्छिद्यते क्वचित्, (घटशरावादि पुरा मृदेवासीदित्यत्र) तदेवमन्ययोगव्यवच्छेदकभेदे तत्प्रयोजकसमभिव्याहारेऽपि विभेदो युक्त इति भावः । ४ घटशरावादि पूर्वं मृण्मात्रमिवेदं पुरा सन्मात्रमासीदित्यर्थः ।

तिषिद्धम् । तच्चास्य स्थूलस्य सूक्ष्मं रूपं घटशरावादेरिव मृण्मात्रम् । तच्चेदमित्युत्तरसन्दर्भात्समानश्रुतिभ्यः सामर्थ्याच्च विनिश्चीयेत । तत्रोत्तरः सन्दर्भः 'तदैक्षत बहु स्यां प्रजायेय' 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' 'स आत्मा' इत्यादिः । तत्रेक्षणश्रवणादजडत्वम्, नामरूपव्याकरणार्थं स्वात्मभूतजीवद्वारा देवतास्वनुप्रवेशसङ्कल्पश्रवणादनुप्रवेशतः प्राक् नामरूपविभागरहितचेतनाचेतनशरीरकत्वम्, आत्मत्वश्रवणाच्च सर्वान्तरात्मत्वं सति ज्ञायते । तथा समानश्रुतयः 'आत्मा वा इदमग्र आसीत्' इत्येवमादयः । यथासङ्कल्पं बहुभवनमविकारिणि स्वरूपतोऽनुपपद्यमानं सदाक्षिपति सतोऽन्तर्यामिब्राह्मणादिसिद्धमविभक्तप्रकृतिपुरुषकालशरीरत्वमिति सामर्थ्यम् । तदेभिः सूक्ष्मचिदचिच्छरीरकः परमात्मा परं ब्रह्म सदिति व्यपदिश्यत इति गम्यते । अथानेनेदमर्थस्य कथमभेदः ? । सन्मात्रं ब्रह्मैव तत्तच्छरीरकतया भोक्तृभोग्यविभागमापन्नमितीदमर्थस्य तस्य स्वेनाभेदे का शङ्का । नन्वपूर्वोऽयमिदमर्थः । सत्यम् । अपूर्वो लोकतः । आदिशति तु श्रुतिः । कथमिदं हार्दं श्रोता प्रतिपद्येत । बुबोधयिषया प्रवृत्तेन तु स्पष्टमुदाहर्तव्यम् । सत्यम् । स्पष्टमुदाहरिष्यति नाम 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मे'ति । सदेवासीदित्यनेनाभिप्रेतं व्यवच्छेदं स्फुटयति—एकमेवेति । सजातीयमन्यन्नासीत् । नामरूपभेदप्रहाणात् । यथा—घटशरावादिनामरूपभेदसम्पत्तिदशायां मृण्मये सजातीयभेदः, अतद्दशायां तु न, तथा वियदादिनामरूपभेद-

१ तच्चेति—सन्मात्रमित्यर्थः ।

सम्पत्येदानीं यः सजातीयभेदः संति विशिष्टस्वरूपे स पुरा नेति भावः । घटशरावादिभेदप्रकृतेर्मृदोऽधिष्ठाता कुलाल इव स्यादस्य सतः सर्वप्रकृतेरधिष्ठाताऽन्य इत्यत्राह—अद्वितीय इति । नास्याधिष्ठातुरपेक्षा, स्वयं सर्वज्ञं सर्वशक्तं च, ज्ञानशक्तिवैकल्ययोगेन ह्यन्यत्र तदपेक्षा, पराऽस्य शक्तिर्विविधैव, स्वाभाविकी ज्ञानबलक्रिया च, तत्स्वयं सङ्कल्प्य स्वयमेव बहु भवतीति प्रकृतिश्चाधिष्ठाता च । यद्वा—विभक्तमिदमखिलं पुरा सदेवासीत्, सन्मात्रमासीत् नैवं विभक्तम्, तच्च सन्मात्रं पराभिमतगुणवन्न बहु, किन्त्वेकमेवेत्युच्यते—एकमेवेति । यद्वा—एकमेवेत्यधिष्ठात्रन्तरनिषेधः, अद्वितीयमिति चैकमेवेत्यस्य विवरणम् । सदेवेत्यसत्त्वव्यावृत्तिः, एकमेवेति नामरूपनिबन्धनेदानीन्तनभेदव्यावृत्तिः,अद्वितीयमित्यधिष्ठात्रन्तरव्यावृत्तिः, इदं प्राक् नामरूपभेदरहितं निमित्तान्तरशून्यं सदेव सच्छब्दितं ब्रह्मैवासीदिति वाक्यार्थ इति चाचार्याः । एवं कार्यस्यास्य सृष्टेः प्रागप्यद्वितीयैकसद्भावेनावस्थानमभिधाय सृष्टेः प्राक्कार्यस्यास्यासद्भावं पराभिमतं निरस्यन्ननुवदति—तद्धैक इति । तस्मिन्विषये एके—काणादाः, आहुरसदेवेदमग्र आसीदिति—इदमखिलं कार्यं सृष्टेः पूर्वमसदेवासीत्—केनापि रूपेण नैवासीदिति यावत् । असदासीदिति व्याहतमिव । अथाऽपि नासीदित्यत्रैव तात्पर्यान्न क्षतिः । तस्मादसतो हेतोः सज्जायत, असद्भावादेव हेतोरिदानीं सदजायतेति यावत् ॥ १ ॥

---

१ चिदचिद्विशिष्टस्वरूपे ब्रह्मणि । विशिष्टमित्येव ब्रह्मणः स्वरूपमिति यावत् । स्वेतरसमस्तवस्तुभिरविनाभूतैर्विशेषणैर्विशिष्टः परमात्मा ब्रह्मेति भावः । २ सत्वरजस्तमांस्येवाविषमाणि समप्राधान्येन प्रधानमिति गद्यन्ते । ३ असत इति भावप्रधानो निर्देशः । उत्पत्तौ हि प्रागभावो हेतुरिति भावः ।

कुतस्तु खलु सोम्यैवं स्यादिति होवा-
च कथमसतः सज्जायेतेति सत्त्वेव सो-
म्येदमग्र आसीदेकमेवाद्वितीयम् ॥२॥

एवमनूद्य परमतं प्रतिक्षिपति—कुत इति । एवं कुतः स्यात्—इदमग्रे नैवासीदित्येतत् कुतः स्यात् । अनुपपन्नमेतदित्यर्थः । यदत्यन्ततः प्राङ् न स्यात् पश्चादपि न स्यात् । इदानीं हि जन्मनाशयोगि सर्वमेव पूर्वं पश्चाच्च रूपान्तरेणोपलभ्यत एव । कथमसतो हेतोः—असद्भावाद्धेतोरिति यावत्, सज्जायेत—आत्यन्तिकासद्भावः सतः पूर्वरूपं कथं भवितुमर्हति ? कथं वा हेतुर्भवितुमर्हति ? 'नासतो विद्यते भावो नाभावो विद्यते सत' इति भावः । ननु न पूर्वं रूपं सतोऽस्य कार्यस्य प्राक्तनोऽसद्भावः, अथाप्ययमस्योत्पत्तौ हेतुः । नैतदुपपद्यते । नीरूपात्मनोऽभावस्य रूपसम्पन्नस्यास्य च कः सम्बन्धः, किं वानुकूल्यं येनायमस्योत्पत्तौ हेतुरिति व्यपदिश्येत । भावाभावयोर्हि देशतः कालतश्च प्रत्युत विरोध एव । तदन्यतरदन्यतरदुपहन्यादेव । न तु जनयेत् । यश्चाभावेन भावस्य संसर्ग इष्यते प्रतियोगित्वमिति, विचारे योगविरोध एव पर्यवस्यतीति स न संसर्गो भवितुमर्हति । तस्यास्य हेतुत्वे सर्वं सर्वत्र हेतुः किं न स्यात् । अथ भावाभावव्यवहाराः कथमुपपद्येरन् ? सत एवैकस्य पूर्वा-

१ नीरूपात्माऽसद्भावः सतः कथं पूर्वं रूपं भवेदितियावत् । २ प्रागभावो ह्युत्पत्स्यमानसम्बन्धी प्रतियोग्युत्पत्तौ हेतुरिति भावः । ३ असम्बद्धस्य प्रत्युत विरुद्धस्याभावस्य भावे हेतुत्वे दण्डादयः पटादौ हेतवः स्युः ।

पररूपावलम्बनतयैवोपपद्यते । प्रात्यक्षिकं चैतदेव । ननु माभूदभावो भावे हेतुरथापीदमुच्यते, यस्मात्पुरा नासीदत एवाधुनाऽपूर्वमिदमुत्पन्नमिति । असतः सदुत्पत्तिवचनस्येहैव तात्पर्यम् । एवमप्यनुपपन्नमेवेदम् । असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् शक्तस्य शक्यकरणात् । एवं परमतं प्रतिक्षिप्य स्वमतमुपसंहरति सत्त्वेव सोम्येदमग्र आसीदिति ॥ २ ॥

तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥३॥

तत्–यत्पुराऽभूत् सन्मात्रं तदविभक्तप्रकृतिपुरुषशरीरकं ब्रह्म, ऐक्षत–व्यचिन्तयत् । किमिति ?, बहु स्यां प्रजायेयेति । देवादिरूपेण बहु स्यां तदर्थं तेजोऽन्नाद्यात्मना च जायेयेत्यर्थः । एवं सङ्कल्प्य यथासङ्कल्पं ससर्जेत्याह—तत्तेजोऽसृजतेति । सृज्यं तेजो नान्यत्स्रष्टुः । स्रष्टुरेष हि सङ्कल्पः, बहु स्यां प्रजायेयेति । स्वात्मानं स्वयं तेजोरूपमसृजदिति यावत् । हन्त परिणतं ब्रह्म । सत्यम्, का क्षतिः ?, विकारप्रसङ्गादविकृतश्रुतिविरोधः । न । [1]यो निषिध्यते विकारस्तस्य न प्रसङ्गो ब्रह्मस्वरूपे । यदुपसंहृतसकलभेदं

---

१ सूक्ष्मचिदचिच्छरीरकस्य स्थूलचिदचिच्छरीरकत्वापत्तौ योऽन्यथाभावः स विलक्षणसंयोगविशेषरूपो नास्य निषिद्धविकारकोटौ गणनेत्याशयेनाह—यो निषिध्यत इति ।

सूक्ष्मचिदचिच्छरीरकं ब्रह्म यथासङ्कल्पं स्थूलचिदचिच्छरीरकमात्मानमापादयत् सौक्ष्म्यस्थौल्ययोगविकाररूपं स्वशरीरभूतचिदचितोरेवापादयति । चिदचितोः शरीरता च श्रूयतेऽन्यत्र । यत्तु परेषां व्याख्यानम्, तत्कथमैक्षत—आह—बहु—प्रभूतं स्याम्—भवेयम्, प्रजायेय—प्रकर्षेणोत्पद्येय, यथा मृद्धटाद्याकारेण यथा वा रज्ज्वादि सर्पाद्याकारेण बुद्धिपरिकल्पितेनेति । कथमिदं मिथो विषमं निदर्शनद्वयमेकस्मिन् । हन्त भ्रान्तिः, अविषममेवान्ततो मिथः, यद्रज्ज्वावेकस्यामेव यथा सर्पाद्याकारा बौद्धाः कल्पिता एव, तथैव मृदि पिण्डघटशरावादयो बौद्धाः कल्पिता एव भेदाः । नैतन्न्याय्यम् । प्रतिनियतक्रियाकारकादिसापेक्षः संस्थानभेदो ह्यकाल्पनिकः । न रज्जौ सर्प इवैकस्य मतिमात्रवैचित्र्यलक्षणः । नापि मृत्स्वरूपं जानतो घटशरावादिदृष्टिरपैति । अथ काल्पनिकत्वे नैकमपि निदर्शनं भवितुमर्हति । बहु स्यां प्रजायेयेति हि श्रूयते, प्रजननं कथमाभासेन निदर्श्येत । न हि पामरः पण्डितो वा जनिमाभासं चाविशेषं पश्यति । तस्मिन्नसम्बन्धस्यावभास आभास उच्यते, जनिस्तु सम्बद्धस्य । मृदि हि पिण्डत्वघटत्वाद्यवस्थाविशेषाः कालविशेषेण सम्बध्यन्ते, आभासः कः ? । सतोऽप्यसता रूपेण भासो ह्याभासः । किञ्च द्रष्टृपुरुषसापेक्षस्तदैकान्तश्चाभासः, जनिस्तु न तथा । तत्रापि तथा कल्पनं कल्पनाकौशलम् । अपि च—बहु स्यां प्रजायेयेति वचनं

---

१ परव्याख्याने दूषणमाह—कथमित्यादिना । २ एकं तात्त्विकमपरमतात्त्विकमिति विभ्रमयोरेकत्र कथं निदर्शनतेत्याशयः । ३ प्रातिभासिकवस्तूत्पत्तिवादं निरस्यन्नाह—तत्रापीति ।

व्याचक्षाणेन निदर्शनं कृतं[1] उदाह्रियते । किमस्फुटार्थं वचनमिति ? उतान्यथाप्रतिपत्तिर्माभूदिति ? आहोस्वित् श्रुतार्थोपपत्तये ? । न प्रथमः, अतिरोहितो ह्यर्थः । न द्वितीयः, नह्यन्यथाप्रतिपत्तेः प्रसङ्गः । पदतोऽन्यथाप्रतिपत्तिर्ह्यनियतार्थकत्वे[2] । स्यां प्रजायेयेति च नानियतार्थे । ननु सत्यं नानियतार्थे, अथापि बहुधा भवनं जननं च तात्त्विकं भेदं गमयतीति सेयमन्यथाप्रतिपत्तिर्माभूदिति निदर्शनमिदमिति चेत्, सेयं प्रतिपत्तिरन्यथाप्रतिपत्तिरिति केनावगच्छति भवान् ? शब्दान्तरत इति[3] चेत् । अस्मादेव शब्दात् शब्दान्तरतो भवतो[4] जायमाना प्रतिपत्तिरेवान्यथाप्रतिपत्तिरिति कुतो नावधार्येत । शब्दान्तराणि हि भेदनिषेधे प्रवृत्तान्यनन्यगतिकानीति ततो विपरीतार्थप्रतिपत्तिरन्यथाप्रतिपत्तिरेवेति चेत् । सत्यम् । भेदनिषेधे प्रवृत्तानि नाम शब्दान्तराणि 'नेह नानास्ती'त्यादीनि । नैतावता बहुभवनस्यातात्त्विकता, एकस्यैव सतो[6] विविधावस्थायोगनिबन्धनं हि बहुभवनम् । नैतावता धर्म्यन्तरस्येह प्रसङ्गः । धर्म्यन्तरासद्भावनिबन्धनानि च भेदनिषेधवचांसि । भेदनिषेधवचसां सरला गतिरियमेव, नहि लोके वेदे वाऽयमेवास्ति नान्य इत्युक्ते सतः[7] स्वभावोऽपि निषेध्यकोटावापतति । तथैव नेह नानास्तीत्यपि विरुद्धधर्मप्रकारकधर्मिभेदनिषेध एव स्वरसगतिः । न तु धर्मधर्मि-

---

१ कस्मै प्रयोजनायेत्येतत् । २ अनियतार्थकत्वे—अनेकार्थकत्वे इति यावत् । (३) भेदनिषेधकश्रुत्यन्तरत इत्यर्थः । (४) भवतः—मृषावादिनः । (५) भेदस्यातात्त्विकत्वप्रतिपत्तिः । (६) सतः—ब्रह्मणः । (७) सतः—वर्तमानस्य । वर्तमानतया विवक्षितस्यैकस्य यः स्वभावः । (८) असाधारणो धर्मः । सोऽपि निषिद्धो नहि भवेदित्याशयः ।

भेदनिषेधे । चराचरमखिलं परस्य ब्रह्मणः स्वभावः—असाधारणो धर्मः, तत् स्वेतरसमस्तवस्तुप्रकारकं परं ब्रह्मैकमेव तत्त्वमिति तमिमं धर्मधर्मिभावमभिप्रेत्य भेदनिषेधवचांसि प्रवर्तन्ते । सोऽयं धर्मधर्मिभावोऽन्तर्यामिश्रुतिसिद्धः । तथा च बहु स्यां प्रजायेयेत्यतो या बहुभवनप्रतिपत्तिर्न साऽन्यथाप्रतिपत्तिः । येनातात्त्विकता भेदस्य निदर्शनेन सम्पाद्या स्यात् । किंवा निदर्शनमात्रेण स्वोत्प्रेक्षितेन शब्दोऽसम्बद्धोऽर्थे नेतुं शक्येत ? ननु निदर्शनं न स्वोत्प्रेक्षितम्, नाप्यर्थोऽसम्बद्धः, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यनेनैव जनिमतामतात्त्विकत्वं हि ज्ञापितम् । जनिश्चेदाभास एवेति नासम्बद्धोऽर्थः । मैवम्—जनिश्चेदाभास इति स्वोत्प्रेक्षणमात्रम्, अनुपपत्तेः । निरूपिता च सा । वाचारम्भणश्रुतेरपि हार्दमन्यदेव, तदपि प्रकाशितं तद्विवरणावसरे । किञ्च—'प्रजायेये'त्यस्य स्थाने 'आभासेय' 'प्रतिफलेय'मिति वा किं न श्रावयति श्रुतिः ? स्पष्टे शब्दे स्वायत्ते किं क्लिष्टेन । अन्यत्रापि 'जायन्ते' इति स्थाने 'आभासते' इति कुतो न श्रूयेत । किञ्च—इदं बहुभवनमुपपादयन्ती श्रुतिः किमिति नोपपादयति 'इह प्रतिफलित्वा नामरूपे व्याकरवाणी'ति । 'अनेन जीवेनात्मनानुप्रविश्येति'ति हि श्रूयते । किञ्च—कथं सति शुद्धे निर्विशेषे विविधाध्यासास्पदं स्यामितीक्षणमुपपद्येत । अथापि बहुधाभवनस्य जननस्य च तत्त्वतोऽनवधारणे

१ येनेति—कारणेनेति शेषः । २ जनिरस्ति चेदाभासोऽप्यस्त्येवेति भावः । ३ ईदृशमीक्षणमशुद्धं ब्रह्म च शुद्धम्, ईक्षणम्—कश्चिद्विशेषः, ब्रह्म च निर्विशेषं कथमिदमुपपद्यते इति भावः । ४ तृतीयपक्षानुवादः—अथापीति ।

यः श्रुतोऽर्थ एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानलक्षणः स नोपपद्येत भेदावगमादिति । तदुपपादनार्थेदं निदर्शनमादृतमिति चेत् । नैतत् । न हि भेदमात्रं तद्विरोधाय, अतदात्मकता तु । नच घटशरावादिप्रभेदमात्रेण तेषां मृदनात्मता । नापीदं निदर्शनं श्रुतार्थोपपत्तये प्रभवति । अधिष्ठाने विज्ञातेऽध्यासो हि निवर्तते, न विज्ञायते, विज्ञातं भवतीति तु श्रूयते, न निवर्तत इति । ननु विकाराणां यदनृतत्वं वाचारम्भणमित्यनेन प्रस्तुतं तदिदं सङ्गमयद्भिरस्माभिरिदं निदर्शनमादृतमिति चेत्, न तद्वचनस्तथात्वावगम इति प्रागेवोक्तम् । निदर्शनं चोन्मूलमात्मदृष्ट्या समानीतमिति न प्रामाण्यमर्हति । यच्च—यथा सतोऽन्यद्वस्त्वन्तरं परिकल्प्य पुनस्तस्यैव प्रागुत्पत्तेः प्रध्वंसाच्चोर्ध्वमसत्त्वं ब्रुवते तार्किकाः, न तथाऽस्माभिरित्यादि वदता सत्कार्यवादः समर्थ्यत इव । तेन किं समर्थितम् । प्रागुत्पत्तेरूर्ध्वं प्रध्वंसाच्चासतो मध्ये कञ्चित्समयं वर्तमानस्य पराभिमतकार्यव्यपदेशस्य प्रतिक्षेपमात्रेण नहि सत्कार्यवादे प्रवेशः सुशकः । नहि सत एव कार्यभावः साधितः । सदसद्विलक्षणभूताया अविद्याया विलासभूतेन भेदेन तथाभूतेनैव हि भाव्यम् । तथाचानिर्वचनीयकार्यवादः समर्थितो नाम । नच सतः कार्याधिष्ठानत्वमात्रेण सत्कार्यवादः स्वीकृतः स्यात् । तथोपपादनं तु मोहनं केवलमर्थस्वरूपानभिज्ञानाम् । ननु न वयं कापिला इव सत्कार्यवादिनः, किन्तु सन्मात्रवादिनः, प्रतिक्षिप्यते च स्थाणोरन्यश्चोरो नास्तीतिवत् सतोऽन्यत्कार्यं नास्तीति, तदनया शैल्या वयं सत्कार्यवादिन इति चेत्, अत एवोक्तम्—मोहनं नाम केवलमर्थस्वरूपानभिज्ञानामिति । शोभते

नाम सन्मात्रवादिनो वयमिति । तत्तेज ऐक्षत–तेजस्त्वेनं व्यक्तिमापन्नं तत्सत् पुनः सङ्कल्पमकरोत्, बहु स्यां प्रजायेयेति । यथासङ्कल्पं तदपोऽसृजत, आत्मानमबात्मकमसृजदिति यावत् । तदात्मता च तच्छरीरतयेत्येतत्पूर्ववद्बोध्यम् । अप्प्रकृतित्वं तेजसि घटयति निदर्शनेन–तस्मादिति । अपां तेजःप्रकृतित्वादेव यत्र क्वचन देशे काले वा शोचति शोकाग्निना सन्तप्तो भवति पुरुषः, स्वेदते वा प्रस्विद्यत एव । वाशब्दोऽवधारणार्थः । प्रसिद्ध्यर्थो वा । तदापस्तेजस एवाधिजायन्ते ॥ ३ ॥

ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते ॥४॥

अबात्मनाऽवस्थितं सदेव बहु स्यां प्रजायेयेति सङ्कल्प्यान्नं पृथिवीलक्षणमसृजत् । यस्मादप्प्रकृतित्वमन्नस्य तस्मादेवाद्यापि यत्र क्वचन वर्षति तत्र भूयिष्ठमन्नं व्रीहियवादिलक्षणं भवति । तदद्भ्य एवान्नाद्यं जायते ॥ ४ ॥

इति षष्ठाध्याये द्वितीयः खण्डः ।

---

तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ॥१॥

पृथिव्यन्तानि महाभूतानि सन्मूलानीत्येतदुक्तम्, आहिरण्यगर्भ-

मास्तम्त्वमखिलमिदं तन्मूलकमेवेत्युपपादयितुमारभते—तेषामित्यादिना । सर्वस्यास्य देवतिर्यङ्मनुष्यस्थावरान्तस्य त्रीण्येव बीजानि, आण्डजं जीवजमुद्भिज्जं चेति । तत्र तरुगुल्मादीनां बीजमुद्भिज्जम्, उद्भिद्य भूमिं जायमानतया, संशोकजस्येह सङ्ग्रहो बोध्यः । देवमनुष्यादीनां बीजं जीवजं जरायुजमित्येतत्, पक्ष्यादीनां बीजमाण्डजम्, अण्डजमेवाण्डजम्[1] । तदयं दृश्यः प्रपञ्चः सर्वोऽपि त्रिविधबीजविततिरेव । तानीमानि त्रीण्यपि बीजानि, तेषां खल्वेषां भूतानां भवन्ति—तेषाम्—सन्मूलकतया सतो विततिरूपाणाम्, एषाम्—अव्यवधानेनोपदिष्टानाम्, भूतानाम्—महाभूतानां भवन्ति । सम्बन्धसामान्ये षष्ठी, तेषामेव परिणतिलक्षणानीत्येतत् । अस्यैव वृक्षस्येमानि बीजानीतिवत् । यद्यपि तेजोऽबन्नलक्षणानां महाभूतानामिह तत्र तत्र देवताशब्देनैव निर्देशः श्रूयते 'हन्ताहमिमास्तिस्रो देवताः' 'सेयं देवतेमास्तिस्रो देवताः' 'सोम्येमास्तिस्रो देवताः' 'एतासामेव देवतानां समास' इति । तदस्य सन्दर्भस्याननुगुणोऽयं निर्देशः 'तेषामेषां भूतानामि'ति । अथापि भौतिकतयोपलभ्यमानस्यास्य प्रपञ्चस्य यत्समवायो[2] मूलं तान्यपि भूतान्येवेति भौतिकतां सङ्गमयितुमिह तथा निर्देशः । इमानि[3] बीजान्येषामेव तेजोबन्नलक्षणानां परिणतिविशेष इति कथमवगम्यते ?, अनुपदमुपपाद्यते अनेन जीवेनेत्यादिना । यत्तु[4]-तेषामेषां जीवाविष्टानां पक्ष्यादिभूतानाम्, त्रीण्येव बीजान्याण्डजादी-

१ उत्तरोत्तराण्डजेषु पूर्वपूर्वाण्डजानां हेतुतया आण्डजानां बीजता । एवमेव जीवजोद्भिज्जयोः । २ यत्समवायः—तेजोबन्नलक्षणसमुदायः । ३ इमानीत्यनेन जीवाविष्टत्वं विवक्षितम् । ४ शाङ्करं मतम् ।

नीति परेषां भाषितम्; तत्तु साशङ्कम्। एवं ह्याशङ्काऽत्र भवति–सन्मूलतां सर्वस्योपपादयितुं प्रवृत्तेऽत्र सन्दर्भे पशुपक्ष्यादिबीजत्रयनिरूपणं किमर्थमिति १। ननु पशुपक्ष्यादेर्यद्बीजं तदपि सन्मूलानां तेजोऽबन्नानामेव परिणतिरिति सर्वस्यास्य सन्मूलतामवगमयद्वचनमिदं सङ्गतमिति चेत्, क तत्र शब्दः?, प्रकरणात्तात्पर्यतः समुन्नेयोऽयमर्थ इति चेत्, नैतद्युक्तम्, प्रधानोऽर्थः समुन्नेय इति, शब्दतस्तदुपपादनमेव ततो न्याय्यम्। यश्चार्थस्तेषामित्यस्य जीवाविष्टानामिति, स कुतो लभ्यते?, ननु पूर्वाध्याये येषां गत्यागती दर्शिते तानि तच्छब्देन परामृश्यन्त इति, हन्त सुदूरं दत्ता दृष्टिः। अपरे तु सर्वस्येतरस्य तेजोऽबन्नात्मकबीजत्रयप्रसूतत्वं दर्शयति तेषामित्यादिनेत्यवतारयन्ति, अण्डजादिशब्दनिर्दिष्टानामेषां भूतानां तेजोऽबन्नानि त्रीण्येव बीजानीत्यर्थ इति च व्याचक्षते। सङ्गतं नाम प्रकरणतः, पदानां योजना कथमिति तु विचार्यम्, अण्डजं जीवजमुद्भिज्जमित्येषां खलु भूतानां त्रीण्येव बीजानि तेजोऽबन्नलक्षणानीति चेत्। तत्रापि न शब्दः, त्रीण्येव बीजानीत्येव हि श्रूयते। न तेजोऽबन्नानीति न वा तानीति। किञ्च–नच स्वेदजानामत्र सङ्कीर्तनाभावात् कथं त्रीण्येव बीजानीत्यवधारणमित्याशङ्क्य उद्भिज्जशब्देन स्वेदजस्यापि सङ्ग्रहोपपत्तेरिति समाहितं तैरेव, अतो विज्ञायते आण्डजं जीवजमुद्भिज्जमितीमानि त्रीण्येव बीजानीत्येव योजनाऽभिप्रेतेति। एवं सति अण्डजादिशब्दनिर्दिष्टानामेषां भूतानां तेजोऽब-

१ तत्र पशुपक्ष्यादिबीजानां तेजोऽबन्नमूलकत्वे। २ रङ्गरामानुजमुनेर्मतमेतत्। ३ एवमन्वये सति।

न्नलक्षणानि त्रीण्येव बीजानीत्यर्थ इति विवरणं कथं घटेत ? । ननु भावो निगदित इति चेत्, स च भावः कस्मादानीतः । प्रकरणादुन्नीत इति चेत्, प्रधानार्थः शब्दानारूढः । किञ्च—प्रकरणात्समुन्नीतश्चेत्,इति भाव इति भाव्यम्, नतु इत्यर्थ इति । त्रीण्येव बीजानीत्यर्थ इत्युल्लेखो मौलार्थतां ज्ञापयति आनुपूर्वीतौल्यात् ।

अस्तु वा न विरोधो नस्तत्त्वे दृष्टिं प्रयच्छताम् ।
सन्मूलत्वं तु सर्वस्य कथञ्चन विवक्षितम् ॥१॥

**सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥२॥**

आहिरण्यगर्भमास्तम्बं सन्मूलकानां तेजोऽबन्नानामेव परिणतिविशेष इति यदाह तदुपपादयति—सेयमित्यादिना । सेयं देवतैक्षत—या तेजोऽबन्नान्यसृजत्सेयं सदाख्या देवता पुनर्व्यचिन्तयत् । किमिति ? । हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति । इमास्तेजोऽबन्नलक्षणास्तिस्रो देवताः[1] अनुप्रविश्य नामरूपे व्याकरवाणि । अनुप्रवेशश्च अनेन जीवेनात्मना द्वारेण । चारेण प्रविश्य परबलं सङ्कलयानीतिवत्करणे तृतीया । जीवसमष्टिभूतेन जीवसमष्टिशरीरकेणात्मना स्वरूपेण[2] । एतेन व्याकरणकर्तुः प्रवेशकर्तुश्चाभेदेऽपि धर्मभेदेन तस्यैव करणत्वविवक्षया न काऽप्यनुपपत्तिः । यद्वा—

१ अभिमानिदेवताधिष्ठितत्वात् देवता इति निर्देशः । २ आत्मशब्दस्य व्याख्या स्वरूपेणेति ।

आत्मना जीवेन—शरीरभूतेन जीवेन । यद्वा—जीवेनात्मना—जीवात्मना । नामरूपसम्पत्तये स्वशरीरभूतजीवद्वाराऽनुप्रवेशसङ्कल्पमकरोदिति यावत् ॥ २ ॥

**तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति ।**

इदमप्यसङ्कल्पयत्—तासामिति । तासां तेजोऽबन्नलक्षणानां देवतानां मध्ये एकैकां त्रिवृतं त्रिवृतं करवाणीति । त्रिवृत्करणं च एकैकां द्वेधा विभज्य भागमर्धमेकैकस्या द्वेधा विभज्य एकस्या अर्धांशे अपरयोस्तुरीयांशसम्मेलनेन बोध्यम् । अयं च सङ्कल्पो विशेषसृष्टये, अत्रिवृत्कृतैर्भूतैरण्डसृष्ट्यसम्भवात् ।

**सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् ॥३॥**

**तासां त्रिवृतं त्रिवृतमेकैकामकरोत् ।**

सेयं परा देवता सच्छब्दवाच्या यथासङ्कल्पम्, तासां तेजोऽबन्नलक्षणानां देवतानां त्रिवृतं त्रिवृतमेकैकामकरोत्, ताश्चानेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् ॥३॥

**यथा नु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥४॥**

तदेवं सत एव तेजोऽबन्नात्मना बहुभवनं तथाभूतस्यैव त्रिवृत्करणयोगमापन्नस्य स्वात्मकजीवानुप्रवेशेन नामरूपयोगेनाण्डजादिसकलभूतात्मता चोक्ता । इदानीं सर्वस्यैव कार्यस्य सदुपादानकतेजोऽब-

न्नलक्षणदेवतात्रयसमुदायविशेषानतिरिक्ततां निदर्शनैः सुखेन ग्राहयन्नाह—यथेति । इह कार्यप्रपञ्चे ता एव तिस्रो देवतास्त्रिवृत्करणयोगं प्राप्ता उपलभ्यन्ते तदिदं मे मत्तो निगदतः शृणु ॥ ४ ॥

इति षष्ठाध्याये तृतीयः खण्डः ।

---

**यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥१॥**

योऽयमग्निः कार्यविशेषः स चेत्परीक्ष्येत तेजोऽबन्नसमुदायविशेष एवेति निश्चीयते । तत्र हि रूपत्रयमुपलभ्यते—लोहितं शुक्लं कृष्णं च, तत्र यल्लोहितं तद्धि तेजसः, यच्छुक्लं तद्ध्यपाम्, यत्कृष्णं तत्पृथिव्याः, तदेवं विमर्शे तेजोऽबन्नसङ्घातविशेष एव धर्मी अवधार्यते । इत्थं च पामरा[1] यन्मन्यन्ते अग्निः कश्चिदपूर्वो धर्मी तस्याग्नित्वं धर्म इति, अपागादग्नेरग्नित्वम्—यदिदमग्नित्वं नामावस्थान्तरं तन्नाग्नेरपूर्वस्य वस्तुनः, किन्तु तेजोऽबन्नसमुदायस्यैव सङ्घातविशेषयोगेन व्यवहारो भिद्यत इत्येतावता न गजाश्वादिवदर्थभेदः, तदालम्बनं तु अग्नित्वाख्यविलक्षणावस्थालक्षणविकारः, तत्कृतं नामधेयवैचित्र्यं च, वस्तुस्वरूपं तु त्रीणि तेजोऽबन्नलक्षणानीत्येव सत्यम्, न ततोऽत्यन्तभिन्नानि ॥ १ ॥

**यदादित्यस्य रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं**

---

१ वैशेषिकादयः ।

तदपां यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥२॥ यच्चन्द्रमसो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥३॥ यद्विद्युतो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥४॥

अपराण्यपि निदर्शनान्याह—यदादित्यस्येत्यादिना । व्याख्यातप्रायम् ॥ २–३–४ ॥

एतद्ध स्म वै तद्विद्वाꣳस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदाञ्चक्रुः ॥५॥

स्वोक्तार्थे प्राचां सम्मतिमाह—एतद्ध स्म वै इति । महाशाला महाश्रोत्रियाः पूर्वे विद्वांसस्तदेतदाहुः—नः कुले विज्ञानकुले शिष्यप्रशिष्यपरम्परायां इदमश्रुतममतमविज्ञातं वस्त्वस्तीति न कश्चिदुदाहरि-

ष्यतीति। ते च पूर्वे विद्वांस एभ्यो रूपेभ्यस्त्रिभ्यो विज्ञातेभ्यः सर्वं विदाञ्चक्रुः ॥ ५ ॥

यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदाञ्चक्रुर्यदु शुक्लमिवाभूदित्यपा रूपमिति तद्विदाञ्चक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदाञ्चक्रुः ॥६॥

कथं विदाञ्चक्रुः? आह—यद्विति। यदिह कार्यवर्गे रोहितमिवाभूत् तत्तेजस इति, यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति ॥ ६ ॥

यद्वविज्ञातमिवाभूदित्येतासामेव देवतानाᳫ समास इति तद्विदाञ्चक्रुर्यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥७॥

यच्च किञ्चिदविज्ञातं स्यात्—विशेषतोऽगृहीतं स्यात् सर्वमेव तदा-
ग्नेव तेजोऽबन्नलक्षणानां देवतानां समुदायविशेष इति विदाञ्चक्रुः।
मध. यादिषु भूतानां त्रिवृत्कृतत्वमेवं प्रदर्शितम्। अथैषामेव
दुरवबोध. त्रिवृत्कृतानां व्रीह्याद्यन्नादिरूपेणावस्थितानां प्रकारान्तरेण
नामुपचार णमाभ्यन्तरनिदर्शनेन निदर्शयति—यथा नु खल्वित्यादि-
सनिदर्श ...मास्तिस्रो देवताः—त्रिवृत्कृता व्रीह्याद्यात्मनाऽवस्थितास्तेजोऽब-
न्नलक्षणाः। पुरुषम्—त्वङ्मांसरुधिरास्थिमयं वाङ्मनःप्राणसंश्लेषवि-

शेषलक्षणं प्राप्यैकैका त्रिवृत्त्रिवृद्भवति, तमिममपरं त्रिवृत्करणं निगदतो मत्तो जानीहि । बहिरग्न्यादीनामिवान्तर्मांसादीनामप्युक्तम् । तत्र परिणतिरूपताज्ञापनेन सर्वस्यास्य भूतत्रयात्मकताज्ञापनायायमारम्भः ॥ ७ ॥

इति षष्ठाध्याये चतुर्थः खण्डः ।

---

अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मा्ँसं योऽणिष्ठस्तन्मनः ॥१॥ आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ॥२॥ तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक् ॥३॥

व्रीहियवादिलक्षणमन्नमशितं त्रेधा विभक्तं भवति, तत्र यो धातुरन्नस्य स्थविष्ठः—स्थूलः स पुरीषं भवति, यो मध्यमस्तन्मांसं योऽणिष्ठः सूक्ष्मस्तन्मनो भवति । मनस उपचायकमाप्यायकं त्येतत् । एवमापः पीतास्त्रेधा विभज्यन्ते । तत्र स्थूलो ... भवति यो मध्यमस्तल्लोहितं भवति यः सूक्ष्मः स प्राणो भ... तेजो घृततैललक्षणमशितं त्रेधा विभज्यते, तत्र स्थूलो धातुरस्थि भवति,

यो मध्यमः स मज्जा, यः सूक्ष्मः सा वाक् भवति—वाच आप्यायको भवति । अयं भावः—त्रिवृत्कृतमहाभूतपरिणतिविशेषरूपा ये पुनर्व्रीह्यादिलक्षणा अन्नादयस्ते च पुरुषेणोपभुज्यमाना जाठराग्निना पच्यमाना विश्लिष्टावयवाः स्वैरेवांशैः स्थूलादिभिस्त्रिभिः पुरीषाद्यारम्भका भवन्तीति विज्ञायते । मांसाद्यप्यान्तरं स्थूलाद्यंशत्रयेण त्रिवृत्करणमापन्नानां महाभूतसङ्घातपरिणतिविशेषलक्षणानां व्रीह्यादीनामेव विपरिणतिभेद इति तदिह नार्थान्तरं किमपि सदात्मकाद्देवतात्रयादिति । इदमत्र बोध्यम्—ये पुनरन्नमात्रभक्षा ये वाऽब्भक्षा ये वा तैजसमात्रभक्षास्तेषां सर्वेषां वाङ्मनःप्राणसम्पत्तिदर्शनान्मांसमज्जास्थिदर्शनाच्च सर्वस्यैवाद्यस्यान्नादेस्त्रिवृत्कृततेजोऽबन्नरूपता विज्ञायत इति ॥१–२–३॥

**अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥४॥**

यत एवम्—अत एवान्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वागिति । प्रसिद्धश्चायमर्थ इत्याह—हीति । अथ शिष्य आह—दुरवबोधोऽयमर्थः, यदन्नादीनामुपभुक्तानां सूक्ष्मो धातुर्मनःप्रभृतीनामुपचायक इति, तदिदमर्थं पुनर्मां बोधयेति । विज्ञापयतु—विविच्य सनिदर्शनं बोधयतु । आहाचार्यस्तथा सोम्येति ॥४॥

इति षष्ठाध्याये पञ्चमः खण्डः ।

---

दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊ-
र्ध्वः समुदीषति तत्सर्पिर्भवति ॥१॥ एवमेव
खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स
ऊर्ध्वः समुदीषति तन्मनो भवति ॥२॥

दधिमथनतः प्राक् नोपलप्स्यते नाम सर्पिरारम्भकोंऽशः, मथनेन तु ततो विनिःसृतः सूक्ष्मोंऽशः सर्पिरारम्भको व्यक्तीभवति आरभ्यते च ततः सर्पिः, तद्वदेवान्नादीनां सूक्ष्मा अंशा अविभक्ताः पूर्वमशिताः पश्चाद्विभज्योर्ध्वं विनिःसृता मनस आप्यायकभावं प्राप्नुवन्ति, तदुच्यते—तन्मनो भवतीति ॥१-२॥

अपाꣳ सोम्य पीयमानानां योऽणिमा स
ऊर्ध्वः समुदीषति स प्राणो भवति ॥३॥
तेजसः सोम्याश्यमानस्य योऽणिमा स
ऊर्ध्वः समुदीषति सा वाग्भवति ॥४॥

व्यक्तम् ॥३-४॥

अन्नमयꣳ हि सोम्य मन आपोमयः प्राण-
स्तेजोमयी वागिति । भूय एव मा भगवा-
न्विज्ञापयत्विति तथा सोम्येति होवाच ॥५॥

उपसंहरति अन्नमयं हीति । शिष्य आह—ननु निदर्शनेनापि नेमम-

र्थमवधारयाम्यहम्—अन्नमयं मनः, आपोमयः प्राण इति । तमिमं संशयमनुभवेनैवास्य परिहरन्नाह—तथेति ॥५॥

इति षष्ठाध्याये षष्ठः खण्डः ।

---

षोडशकलः सोम्य पुरुषः पञ्चदशा-
हानि माशीः काममपः पिबापोमयः प्रा-
णो न पिबतो विच्छेत्स्यत इति ॥१॥

इह शिरःपाण्यादिलक्षणः पिण्डविशेषो न पुरुषशब्देनोच्यते, किन्तु तदधिष्ठाता जीवः स चान्नरसोपचितं मानसं बलं षोडशधा विभज्य मानसेन बलेन परिपूर्ण उच्यते षोडशकल इति । पञ्चदशाहानि माशीः, काममपः पिब, पिबतः प्राणो न विच्छेत्स्यते, यदापोमयः प्राणः, तेनानेनानुभवेन ज्ञास्यसि त्वमापोमयः प्राण इति, मानसबलापचये च ज्ञास्यसि त्वमन्नमयं मन इति ॥१॥

स ह पञ्चदशाहानि नाशाथ हैनमुपससाद किं
ब्रवीमि भो इत्यृचः सोम्य यजूꣳषि सामानीति
स होवाच न वै मा प्रतिभान्ति भो इति ॥२॥

तदेवमादिष्टः पुत्रः स्वानुभवेनैनमर्थं निश्चिन्वन् पञ्चदशाहानि नाश—नैवान्नं किमप्यशितवान् । उपससाद पितरं षोडशेऽहनि, उवाच चेदम्—किं ब्रवीमि भो इति । आह पिता—ऋचो यजूंषि सामानि ब्रूहि, यान्यभ्यस्तान्येतावता कालेनेति । आह पुत्रः, नाधुना मे प्रतिभान्तीति ॥२॥

तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यै-
कोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन
ततोऽपि न बहु दहेदेवꣳ सोम्य ते षोडशानां
कलानामेका कलाऽतिशिष्टा स्यात्तयैतर्हि वेदा-
न्नानुभवस्यशानाथ मे विज्ञास्यसीति ॥३॥

आह—अप्यवगतमधुना कुतो न प्रतिभान्तीति, यथा अभित आहितस्य महतोऽग्नेरेकोऽङ्गारः खद्योतमात्रोऽवशिष्टः स्यात्, तेन न बहु दहेत्, एवमेव मानसबललक्षणानां कलानामन्नरसोपचितानामपचयेनान्नरसस्यापचयं गतानामेका कलैव खद्योतकल्पाऽवशिष्टा, तदधुना तया खद्योतकल्पया नानुभवसि वेदान्—स्मर्तुमसमर्थोऽसि। अशान, अथ विज्ञास्यसीति ॥३॥

स हाशाथ हैनमुपससाद तꣳ ह य-
त्किञ्च पप्रच्छ सर्वꣳ ह प्रतिपेदे ॥४॥

स यथानिदेशं भुक्त्वा पितरमुपससाद, यद्यत्पिता पप्रच्छ ऋगादि तत्सर्वं तदा प्रतिपेदे—प्रत्यबुध्यत ॥४॥

तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं
खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वल-
येत्तेन ततोऽपि बहु दहेत् ॥५॥ एवꣳसोम्य ते षो-
डशानां कलानामेका कलातिशिष्टाऽभूत्साऽन्नेनो-

पसमाहिता प्राज्वालीत्तयैतर्हि वेदाननुभवस्यन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति विजज्ञाविति ॥६॥

उवाच तदानीं पिता तम्—पुरा नासार्षीरधुना तु सरस्यर्थानखिलान्, तदवधारय; यथा सोम्य महतोऽभ्याहतस्याग्नेरेकोऽङ्गारः खद्योतमात्रः परिशिष्टोऽसमर्थो दहने पश्चात्तृणैरुपसमाहितः प्रज्वालितो बहु दहेत्, तथैवानशनेन मानसी कला प्रक्षीणपञ्चदशांशा एकाऽवशिष्टा प्रत्यवबोधनासमर्था पुनरन्नरसेनाधुनोपचयं गमिता प्राज्वालीत्—परितः प्रवृद्धा, तया वेदाननुभवसि, तदन्वयव्यतिरेकाभ्यां सिद्धमन्नमयं हि सोम्य मन इति, एवमेवापोमयः प्राण इति तेजोमयी वागिति चावधार्यतामिति । तद्धास्य पितुरुपदेशं मनःप्रभृतीनामन्नादिमयत्वं पुत्रो विजज्ञौ—अवधृतवान् ॥५–६॥

इति षष्ठाध्याये सप्तमः खण्डः ।

---

उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳ ह्यपीतो भवति ॥१॥ स यथा शकुनिः सूत्रेण प्रबद्धो दिशं

**दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवो-पश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपश्र-यते प्राणबन्धनꣳ हि सोम्य मन इति ॥२॥**

इह चिदचित्प्रपञ्चेऽचिदंशस्य सर्वस्य सत्कार्यतेजोऽबन्नलक्षणदेवतात्रयानतिरिक्तत्वोपपादनेन सदात्मतोपपादिता। इदानीं चिदंशस्य विचित्रसुखदुःखोपभोगैकलक्षणविविधयोनिवैचित्र्यस्य सदात्मकतामुपपादयन्नाह—स्वप्नान्तमिति। आरुणिरुद्दालकः श्वेतकेतुं पुत्रमुवाच—यश्च विचित्रो भोक्तृवर्गोऽत्यन्तभिन्न इवालक्ष्यते, तस्य चेत्तत्त्वं विचारयामः, सोऽपि सत एवांशः, कदाचित्ततो विभक्तो वस्त्वन्तरमिवाभाति अविभागे च तस्मिंस्तदात्मक एव तु सः, इमं विभागमविभागं चाजानतामर्थान्तरभ्रमः, स्वप्नान्तं मे सोम्य विजानीहि, येनाविभागो जीवस्य सता ज्ञायेत। स्वप्नान्तम्—स्वप्नोऽपि यस्यां दशायां न सा, सुषुप्तिः। यदा पुरुषः स्वपिति नाम—सुषुप्त्यवस्थां प्राप्तो भवति, तदा सता सम्पन्नो भवति—अविभक्तो भवति, यस्माच्चायं विभक्तो यस्मिंश्चाविभागं प्राप्नोति तद्धि स्वमेव, तदपीतो भवति—तेन सङ्गतो भवति, अतएवाचक्षते लोकाः स्वपितीति। स्वं ह्यपीतो भवति, तदस्मिन्नर्थे लोकानां विकृतोऽयं प्रयोगः—स्वपितीति। कथमेतत् सता तदा सम्पन्नो भवतीति स्वं वाऽपीत इति—तदिदं निदर्शनमुखेनावगमयति—स यथेति। यथा पक्षी सूत्रेण निबद्धो दिशं दिशं पतित्वाऽन्तत आयतनमन्यदलब्ध्वा बन्धनमेवोपश्रयते,

एवमेव मनो दिशं दिशं तत्तदिन्द्रियार्थादिलक्षणमभिपतित्वाऽन्ततो विश्रामस्थानमलब्ध्वा स्वयमायस्तं सदतीत्य जाग्रत्स्वप्नौ, प्राणमेव-मुख्यप्राणमेवाश्रयते, प्राणबन्धनं हि मनः । अयं भावः—विज्ञानैकघनस्यास्य चेतनस्य यन्नानायोनिवैचित्र्यं न तदेकस्यैव मृत्पिण्डस्य घटशरावादिवैचित्र्यमिव स्वरूपविकारमूलम् । तत्तद्योनिसंसर्गमात्रं तु नास्य वैचित्र्याय, अतिप्रसङ्गात्, उदासीनस्य वियदादेरपि योनिसम्बन्धाविशेषात् । किन्तु तत्तदभिमानतन्मूलकसुखदुःखोपभोगात्मकस्वभावभेदसम्पत्तिमूलम् । तत्तदभिमानादिसम्पत्तिश्च मुख्यप्राणाप्यायितचेतोवृत्तिप्रसरणात् भवति हि तद्वृत्तिवैचित्र्यादेवायं विज्ञानघन एकरूपोऽपि द्रष्टा श्रोता रसयिता सुखी दुःखी च, एतद्विभेदमूलश्चास्य नामरूपभेदः, चेतस्ततः परिभ्रम्य प्रतिनिवृत्तं प्राणमेव यदा प्रविशति तदा व्यपगतनामाभिमानादिवैचित्र्यमखिलम्, अपगतनामरूपो विज्ञानघन एवायं चेतनः, अविभक्त एव च तदा स्वात्मना[1] परब्रह्मणा यतोऽसौ विभक्तः, यद्यपि कुसूलोदराद्धान्यराशिरिव न परमात्मनः किमपि जगति विभक्तं भवति, स ह्यन्तरात्मा सर्वस्य, सर्वमिदं तनुतया तस्यापृथक्सिद्धं विशेषणम्, अथापि विभिन्ननामरूपसम्पत्त्या ततो विभक्तमुच्यते तत्प्रहाणेन चाविभक्तमुच्यते । चेतनश्चायं तत्तदभिमानतोऽयमहमस्मीत्यात्मानं विभक्तमुत्पश्यति, सुषुप्तौ च नेति सता सोम्य सम्पन्नो भवति, अविभक्तो भवतीत्युच्यते, तथाच प्राप्तं वस्तुतो जीवस्यापि सदात्मत्वमिति । उपक्रमे च श्राविता अनेन जीवेनात्मनेति जीवस्य स्वात्मता । स्वाप्ययश्च—यश्चायं कार्या-

१ स्वस्याप्यन्तरात्मना परमात्मना ।

वस्थस्तत्तदभिमानानुगुणजाग्रदवस्थजीवशरीरकः परमात्मा स तत्त-दभिमानानुगुणजाग्रदवस्थाशून्यजीवशरीरकं स्वमेव कारणं रूपं प्रति-पद्यते इति ॥१-२॥

अशनापिपासे मे सोम्य विजानीहीति यत्रै-तत्पुरुषोऽशिशिषति नामाप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्ग-मुत्पतितꣳ सोम्य विजानीहि नेदममूलं भवि-ष्यतीति ॥३॥ तस्य क्व मूलꣳ स्यादन्यत्रान्नादे-वमेव खलु सोम्यान्नेन शुङ्गेनापोमूलमन्वि-च्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेज-सा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सो-म्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः॥४॥

अशनापिपासे सोम्य विजानीहि—तयोः स्वरूपं विचारय, येन विचारेण सन्मूलकता जगतो विज्ञायेत । यदा पुरुषोऽशिशिषति नाम, तदा कुतोऽस्य अशिशिषा जातेति विचार्यम् । आपस्तदशितम् —भुक्तमन्नं रसभावेन विपरिणमय्य नयन्ति मांसादिभावम् । यत एवमाप एवान्नादीन्विपरिणमय्य भावान्तरं नयन्ति, अतएव गां नयन्तं गोनाय इत्यश्वं नयन्तमश्वनाय इति च यथा लोका आच-

क्षते, एवमेव अशनायेत्याचक्षते अशिशिषावस्थाम् । तत्रैतच्छुङ्गमुत्पतितम्—अद्भिर्भावान्तरं प्रापिते अन्नरसे एतच्छुङ्गं शरीरलक्षणं सूक्ष्म इव न्यग्रोधबीजे न्यग्रोधाङ्कुरलक्षणं शुङ्गमुत्पतितम् । नहि शुङ्गमिदं कार्यममूलं स्यात्, मूलं च तस्यास्य शरीराख्यस्य शुङ्गस्यान्यत्रान्नात् किं मूलं स्यात् ? न ह्युपलभ्यते, अन्नमेव तु भुक्तं रसान्तरभावं प्राप्तमन्ततः शुक्रशोणिताद्यात्मना तन्मिथःसंश्लिष्टमुद्भवति शरीरात्मना । एवं शरीरस्येव तदारम्भकस्यान्नस्यापि शुङ्गत्वाविशेषात् ( कार्यत्वाविशेषात् ) तस्यापि मूलभूतैरद्भिर्भाव्यम्, अपामपि तथात्वात् । तन्मूलभूतेन तेजसा भाव्यम्, तेजसा च शुङ्गेन सन्मूलेन भाव्यमित्यन्विच्छ—जानीहीत्येतत् । देहस्यास्यान्नरसमूलत्वेऽवधृते सन्मूलत्वमन्ततोऽवधृतं भवतीति भावः । तस्मात्—सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः—सदेवायतनमात्मतयाऽऽधारभूतं यासां ताः, सदेव प्रतिष्ठा लयस्थानं यासां तथाभूताः ॥३—४॥

अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥५॥

अशनायानामनिर्वचनपूर्वकं देहारम्भकान्नमूलद्वारा सन्मूलत्वं प्रजासु ज्ञापितम् । अथ उदन्यानामनिर्वचनपूर्वकं देहारम्भकार्यद्वारेण

---

१ शुङ्गमित्यङ्कुरादिकार्यमुच्यते ।

सन्मूलत्वमवगमयति—अथेति । यदा पिपासति नाम पुरुषः, तदाऽस्योदन्या जातेति व्यवहरन्ति जनाः, तत्र निमित्तमेतत्, यत्पीतमुदकं देहारम्भकरसभावं नयति तेजः, तत् गां नयत्यश्वं नयति वा गोनायोऽश्वनाय इति व्यवहारवदयं प्रयोग उदन्येति । यदिदं कार्यं शरीरं तत् तेजसा रसभावं प्रापितास्वप्स्तूत्पतितमुत्पन्नं विजानीहि । नेदं कार्यं शरीरममूलं भविष्यति ॥५॥

तस्य क्व मूलꣳ स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः । यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवति ।

तस्येति व्याख्यातप्रायम् । ननु तेजोऽबन्नानां विसजातीयानां केन प्रकारेण देहारम्भकतेत्यत्रासाङ्कर्येणैव यथादेहावयवविभागमारम्भकतेति वक्तव्यम्, सच प्रकार उक्त एवेति स्मारयति—यथा तु खल्विति । तदुक्तं पुरस्तादेवेति । तेजोऽबन्नानां धातुभिर्मध्यमैः सूक्ष्मैश्च यथाक्रमं मज्जादिरसभावेन देहोपचायकत्वं पूर्वमुक्तमिति यावत् ।

अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥६॥

एवमावेदितं देहारम्भविचारेण सन्मूलत्वम्, अथ तद्विशरणलक्षणमरणदशाविचारेणापि सन्मूलतामवगमयति—अस्येति । अस्य पुरुषस्य प्रयतः—म्रियमाणस्य, विशीर्यमाणे देह इति यावत्, वाक्—यान्यस्य वागादीनि बाह्यकरणानि तानि मनसि सम्पद्यन्ते—सम्पत्तिश्चेह संश्लेषविशेष एव । उपरतव्यापाराणि च स्वव्यापारे व्यापृतेन मनोमात्रेण सहैकीभवन्ति । अत एव मुमूर्षुः पुरुषः पुरोवर्त्तिनमप्यविन्दन् व्यवहर्तुमप्यसमर्थः केवलं किमपि चिन्तयन्निव भवति । मनश्च पश्चात् प्राणे सम्पद्यते—तदप्युपरतस्वव्यापारमुच्छ्वासनिःश्वासलक्षणस्वव्यापारमात्रशेषे प्राणे एकीभवति । प्राणश्च पश्चादुपरतस्वव्यापारं तेजसि सम्पद्यते—यदध्यात्म्यं तेजो भूतसूक्ष्मम्[1] । अयं विशेषः सुषुप्तेः[2], तत्र हि मनः प्राणमुपश्रयते प्राणस्तु न तेजः, नोपरमते हि स्वव्यापारात् । सम्पत्तिश्च तेजसि प्राणस्य साध्यक्षं जीवं द्वारीकृत्येति विशेषोऽत्र बोध्यः । वागादिकरणनिलयनास्पदस्य प्राणस्यापि निलयनास्पदभूतं तत्तेजः परस्यां देवतायाम्—या प्राक् प्रस्तुता सच्छब्दवाच्या परा देवता तस्यां सम्पद्यते ॥६॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति ।**

स एषोऽणिमा—सच्छब्दवाच्योऽणुः सूक्ष्मः, अविवक्षितो भावार्थः । यद्वा—सेयं सम्पत्तिरणिमा, सर्वतः सूक्ष्मावस्था । विधेयप्राधान्यात्पुंल्लिङ्गता । सेयं कारणावस्थेत्युपदिष्टं भवति । सत्यविभागे नहि

---

१ तेजसो भूतसूक्ष्मोपलक्षणकतामभिप्रेत्य ।    २ सुषुप्तेरिति पञ्चमी ।

सम्पत्तिः सा । अध्यक्षो ह्ययं जीवस्तेजसा प्राणं प्राणेन मनो मनसा च वागाद्यधिष्ठाय हि वक्ता श्रोता द्रष्टा वा भवन्विविधसुखदुःखयोगेन विविधनामरूपविभागवान् भवति, यदा चायं स्वाधिष्ठानेन निलीनप्राणान्तेन तेजसा सह परस्यां देवतायां सम्पन्नो भवति, तदाऽयमणिमानमेव नामरूपविभागराहित्यलक्षणमनु सम्पन्नो भवति । यदा चायं यथाकर्मवासनं पुनस्तेजसा व्यापृत्युन्मुखेन योनिविशेषमापन्नेन प्राणादीन्व्यापारयति, भवति नाम नामरूपविभागवांस्तदा । तस्मात्सति सम्पत्तेस्तत एव च विनिर्गमादैतदात्म्यमिदं सर्वम्–एतदात्मकमेवैतत्सर्वं क्षेत्रज्ञान्तम् । एष आत्मा यस्य तत्तथा । स्वार्थे ष्यञ् । तत्सत्यम्–ऐतदात्म्यमेव सत्यम्, सदात्मकतयैव सत्यम्, न त्वतदात्मकतयेत्येतत् । स आत्मा–स एव सर्वस्यात्मा । यस्मात्सर्वस्यान्तरात्मा सः, तदात्मकश्च सर्वोऽपि, तत्–तस्मात्, श्वेतकेतो ! त्वमपि तदसि । यत्प्रस्तुतं सार्वज्ञ्यादिगुणविशिष्टं ब्रह्म तदसि । तदात्मक एवासीति यावत् । सर्वत्रोपदिष्टं सदात्मकत्वं चेतनविशेषे उपसंहृतम् । ननु तच्छब्दस्य तदात्मके लक्षणाश्रयणाद्दोषः । न । लक्षणानाश्रयणात् । अथ कथं सामानाधिकरण्यं तत्त्वम्पदयोः ? । अर्थैक्यात् । भेदवादिनस्तव तत्कथम् ? सत्यं भेदवादिनो वयम्, अथापीह युष्मत्पदोपस्थाप्यं तच्छब्दवाच्यादनर्थान्तरमेव ब्रूमः । तेनापि पदेन परं ब्रह्मैव ह्युपस्थाप्यते । चेतनविशेषस्तु प्रवृत्तौ निमित्तमात्रम् । नामरूपव्याकरणश्रुत्या चेदमवगम्यते । तत्सर्वेषामेव पदानां सर्वशरीरिणि परमात्मन्येव प्रवृत्तिर्मुख्या, तत्तदर्थास्तु जात्यादिवत्प्रवृत्तौ निमित्तभावमुपयान्ति, अत एव न वय-

मत्यन्तभेदवादिनः, प्रकारवैविध्येऽप्येक एव परमार्थः, प्रवृत्तिनिमित्तपरित्यागेनाखण्डार्थतां वर्णयतो भवत एव तु लक्षणाश्रयणदोषः प्रसजति । नन्वेवं कथं मध्यमः पुरुषः ? । विधानात् । युष्मद्युपपदे हि तद्विधानम् । सत्यम्, तेन च सर्वनामसु पठितेन भाव्यम् ? । सत्यम्, न हि ततो बहिर्भूतमेतत् । ननु सम्बोध्यादर्थान्तराश्रयणाद्बहिर्भूत एवायम् । नैतत् । नहि सम्बोध्यार्थस्त्यक्तः, सम्बोध्यश्चेतनविशेषो ह्यस्य प्रवृत्तिनिमित्तभूतोऽर्थः, तेनैव तु मुखेनोपसर्पति परमात्मानम् । न तावता तदर्थत्वाभावः । न हि गवादिशब्दः जात्या मुखेनोपसर्पन् पिण्डविशेषं जातिवाचकेभ्यो बहिर्भूतो गण्येत, किन्तु जातिवाचिष्वेव, एवमेवेहापि । नन्वथापि सम्बोधकपदस्य युष्मत्पदस्य च सामानाधिकरण्यं न घटेत, किं तावता । एकवाक्यताभङ्ग इति चेत् । सत्यां तदभिमतौ तद्भङ्गो ह्यनिष्टः । वस्तुतः सम्बोधकं पदं श्रोतुः सम्बोध्यतां ज्ञापयित्वा चरितार्थीभवति, नोत्तरेणान्वेति । ननु सम्बोध्यादनर्थान्तरेण भाव्यं युष्मत्पदेनेति चेत् । कुतोऽयं नियमः ? । अतिप्रसङ्गो माभूदित्येतदर्थमिति चेत् । सत्यां सामग्र्यामापाद्यमानः किं नियमेन वार्येत ? । नियमो हि सामग्रीविशेषकल्पक इति चेत् । श्रौतीं व्युत्पत्तिमनुसृत्यैव तु पदानां व्युत्पत्तिः पूर्यते इत्यलं विस्तरेण । यदि सुषुप्तौ मरणे च सति सम्पद्यन्ते, किमित्ययमहमस्मीति, इहासीति च न विदन्ति, दुर्लक्ष्योऽयमणिमा ।

भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥७॥

पुनर्मामवगमयतु भगवानित्युवाच श्वेतकेतुः। एवं पृष्टस्तथा सोम्येत्युवाच पिता ॥७॥

इति षष्ठाध्याये अष्टमः खण्डः।

---

यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाꣳ रसान्समवहारमेकताꣳ रसं गमयन्ति ॥१॥ ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामहे इति ॥२॥

पुत्रस्याशङ्कामूलमालक्ष्य निदर्शनमुखेनोपदिशति—यथेति। हे सोम्य! मधुकृतो भ्रमराः मधु निस्तिष्ठन्ति–निष्पादयन्ति, कथम्? इत्थम्, नानात्ययानाम्–अत्ययः–गतिः स्वभाव इत्येतत्। नाना–अन्यान्यः अत्ययो येषां तथाभूतानां वृक्षाणां रसान् समवहारं गमयन्ति, एकीकुर्वन्तीत्येतत्, समवहृत्य चैकतां सङ्गमयन्ति, एकरसतां गमयन्तीत्येतत्। एकरसतां गमिताश्च ते रसा न विवेकं लभन्ते—अमुष्य वृक्षस्य रसोऽहममुष्य वृक्षस्य रसोऽहमिति। यद्यपि जडानामेषां पूर्वमपि न विवेकयोग्यता, अथापि चैतन्यारोपेणेदं निदर्शनम्, नहि निदर्शनं सर्वांशमनुसरति। यथेदम्, एवमेव खलु सोम्येमाः सर्वाः प्रजाः सुषुप्तौ मरणे वा सति सम्पद्य न विदुः सति सम्पद्यामह इति—अमुष्याहं पुत्रः, अमुष्य पौत्रः, अयमहमास्मि, अधुना सति सम्पद्ये,

इति न विवेकं लभन्ते। अयं भावः—द्रवद्रव्यमात्रस्वरूपा अपि रसा माधुर्यकट्वादिस्वभावभेदमाश्रयानुषङ्गवैलक्षण्यप्रतिनियतं नामभेदं च तत्प्रतिनियतमापन्ना अयमहममुष्येति विवेकेनात्मानं वेत्तुं प्रभवन्ति नाम, प्रभवन्ति चान्येऽपि तांस्तथा वेत्तुम्, तेषामेवं भ्रमरैराचूषितानां समवहारं गमितानामाचूषणसमवहारमहिम्नाऽपगच्छतो नामरूपे, अथ तदानीं कथं नाम प्रभवेयुरयमहमस्यासीत्यात्मानं वेत्तुम्, अयमस्मि, अस्यासीति विवेकस्तु नामरूपविलासः। तदेवं ज्ञानमात्रस्वरूपाणामपि जीवानामपगच्छतो नामरूपे, सुखदुःखादिवैचित्र्यनिबन्धने हि ते, तच्च वैचित्र्यं प्राणादिव्यापृत्यधीनम्, सति सम्पद्यमानानां सम्पत्तिमहिम्ना तु साऽपैति, इदं च पूर्वमुपपादितम्, तदेते न विदुः सति सम्पद्यामह इतीति ॥१–२॥

त इह व्याघ्रो वा सिꣳहो वा वृको वा
वराहो वा कीटो वा पतङ्गो वा दꣳशो वा
मशको वा यद्यद्भवन्ति तदाभवन्ति ॥३॥

निःश्रेयसमधिगच्छतां भवति नाम सति सम्पत्तिः, इयं तु न तादृशीति विशेषं गमयन्नाह—त इहेति।

ये पुनर्निर्वाणपरास्ते स्वात्मानं ब्रह्मात्मकमेव साक्षात्कुर्वन्तः प्रणिधानदृष्ट्या वियुक्ता वागादितेजोन्तैः सति सम्पद्यन्ते, तच्च परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते, न पुनराभवन्ति, एते त्वन्वहमविद्याविततिभूतैश्चक्षुरादिकरणैर्द्रष्टा श्रोता घ्राता रसयिता वक्ता स्थूलः कृश इत्येवमादिभिरेव केवलैरौपाधिकाकारैरात्मानं

पश्यन्तो वागादितेजोन्तैः संश्लिष्टा एव निहता इव मूर्च्छिताः पतन्तः सति सम्पद्यन्ते । तद्ध्यायतनं सर्वस्य । अकामोऽपि मूर्च्छितः स्वायतनं भूतलमाश्रयते । सेयं सम्पत्तिर्न विद्यानिबन्धना, अत एव सुप्तोत्थितः पुरुषः पूर्वं यथा यथाऽऽत्मानमभ्यमन्यत—व्याघ्रोऽहं सिंहोऽहं वृकोऽहमिति तथैवाभिमन्वानः पुनरिह जाग्रद्दशायामाभवति । यद्यद्भवन्तीति । यद्यदभिमानयुक्ता अभूवन्निति यावत् ॥३॥

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्स-
त्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति ॥

व्याख्यातमेतत् ।

भूय एव मा भगवान् विज्ञापय-
त्विति तथा सोम्येति होवाच ॥४॥

दुरवबोधोऽयमर्थः पुनरवबोधयेति पृष्टः पिता निदर्शनान्तरेणावबोधयति ॥४॥

इति षष्ठाध्याये नवमः खण्डः ।

---

इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चा-
त्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति समुद्र एव
भवन्ति ता यथा तत्र न विदुरियमहमस्मीति ॥१॥

इमा गङ्गाद्या नद्यः पुरस्तात् पूर्वां दिशमभिनिर्गताः प्राच्यः स्यन्दन्ते, पश्चात् पश्चिमां दिशमभिप्रवृत्ताः प्रतीच्यः स्यन्दन्ते, ताः

समुद्रादादित्येनोन्नीता मेघभावमापन्नास्तत्र वृष्टिरूपेण निपतिताः समाश्रयन्ते नामरूपे । ताश्चान्ततः समुद्रान्निर्गत्य समुद्रमेवापियन्ति प्रविशन्ति । समुद्र एव भवति—नामान्तररूपान्तररहितो भवतीत्येतत् । अस्य वाक्यस्य हि तावत्येवावधारणार्थे तात्पर्यम् । नामरूपापगम एव तु इयमहमस्मीति न विदुरित्यत्र निमित्तम् । संश्लेषविशेषाच्च तथाविधात् समुद्र एव भवतीति । ताश्च यथा न विदुरियमहमस्मीति—गङ्गाऽस्मीति यमुनाऽस्मीति । एवमेव प्रवहन्त्योऽपि न विदुर्वयमिमाः समुद्रान्निर्गताः स्म इति । वयमिमा इति नामरूपविभागो हि पश्चात्तनः । स्वरूपग्रहश्च नामरूपपूर्वक एव ॥१॥

एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगत्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥२॥

एवमेव सर्वाः प्रजाः सत आगत्य न विदुः—सुषुप्तितः प्रत्युत्थिताः सत आगत्यापि सतो वयमिमे आगच्छाम इति न विदुः, सुषुप्तिसमये सति सम्पद्यापि न विदुः वयममी सति सम्पत्स्यामह इति । त इह पुनस्ततः प्रत्यागताः पूर्ववासनानुबद्धव्याघ्रादिनामरूपसम्पन्ना एव भवन्ति । पुनर्भवे तु पूर्वपूर्वकर्मप्रतिनियतयोनिविशेषसंश्लेषानुबद्धवासनानुगुणनामरूपाद्यभिमानसम्पन्नो व्याघ्रो वा सिंहो वा भवति ॥२॥

---

१ समुद्राद्विभागानन्तरभवः ।

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति। भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥**

व्याख्यातम् ॥३॥

इति षष्ठाध्याये दशमः खण्डः।

---

**अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन्स्रवेद्यो मध्येऽभ्याहन्याज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत्स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥१॥**

ननु नेदमवधारयामि सम्यक्, यदयं जीवो म्रियमाणः सति सम्पद्यते, यथाकर्मवासनं पुनर्भवाय प्रभवति चेति, न प्रत्यभिजानाति नामायं पुनर्भवन्। तदयमुच्छिद्यत एव तरङ्गबुद्बुदादिवदित्याशयेन भूय एव मा भगवान्विज्ञापयत्विति पृष्टः पिता जीवस्याविनाशित्वं सुखेन ग्राहयन्नाह—अस्येति। हे सोम्य! योऽयं विततायतानेकशाखो महान्वृक्षः स हि जीवेनात्मनानुप्रभूतः—अभितो व्याप्तः, पेपीयमानो—मूलेनापः पार्थिवं च रसं पिबन् मोदमानस्तिष्ठति। कथमिदमवगम्यते?। पश्य, यद्येनं कश्चिन्मूलेऽभ्याहन्यात् स्रवत्येवायम्, जीवन्नेव तु स्रवति, रसास्रवस्तु जीवस्य सतो लिङ्गम्, जीव एव हि प्राणाद्युपकरणः पीतमशितं वा रसभावं गमयति, एवं मध्येऽभ्याहन्याज्जीवन् स्रवेत्, योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत्, तत् तद्विज्ञायते जीवेनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठतीति ॥१॥

अस्य यदेकाᳫं शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यत्येवमेव खलु सोम्य ! विद्धीति होवाच ॥२॥

ततः किं प्रकृतस्येत्यत्राह—अस्येत्यादि । जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति । यदा चास्य शाखामेकामभिहतां व्याधितां वा जहात्ययं जीवः—सर्वतः प्रसृतोऽयं यदा स्वात्मानं ततः शाखातः सङ्कुच्यावतिष्ठत इत्यर्थः । यद्यपि नाविकृतस्यास्य स्वरूपे सङ्कोचो विकासो वा, किन्तु स्वज्ञानप्रभया सर्वतः प्रसारितायाः सङ्कोचनमेव तु हानम् । अथ सा शुष्यति । एतेन शोषणेन जीवसत्ता तदंशे नेत्यवगम्यते । रसापगमात् । अनेनावगम्यते जीवस्ततोऽपसृत इति नतूच्छिन्न इति । यद्युच्छिन्नः स्यात्, सर्वतः शुष्येत् । अथ द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति अनेनैव न्यायेन सर्वतः शोषणे सर्वतोऽपसृत इत्येव कल्प्यम् । नतूच्छिन्न इति । एवमेव खलु सोम्य ! सर्वत्र शरीरे विद्धि, जीवोऽपैतीति । तस्माज्जीवापेतं शरीरं म्रियते नश्यति । न तु जीवो म्रियते—नश्यति ॥२॥

स य एषोऽणिमैतदात्म्यमिदᳫं सर्वं तत्सत्यᳫं स आत्मा तत्त्वमसि श्वेतकेतो इति ।

---

१ प्रकृतस्य—जीवाविनाशित्वनिरूपणस्य ।

व्याख्यातम् ।

भूय एव मा भगवान् विज्ञापय-
त्विति तथा सोम्येति होवाच ॥३॥

जगदणुतमात्सतः प्रादुर्भवेदित्याशङ्कया भूय एव मा भगवान्वि-ज्ञापयत्विति पृष्टः पितोवाच ॥३॥

इति षष्ठाध्याये एकादशः खण्डः ।

---

न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति
भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा
धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव
इति किमत्र पश्यसीति न किञ्चन भगव इति ॥१॥

यद्येवं ते सूक्ष्मात्कथमिदं स्थूलमिति, प्रत्यक्षेणैवैतदवधारयाम-स्त्वाम्, अतो वृक्षान्न्यग्रोधात् फलमेकमाहर । एवमुक्तः पुत्र आहृ-त्योवाच–इदमाहृतं भगवन्निति । अवोचत् पिता भिन्धीति । तथा कृत्वा प्राह पुत्रः–भिन्नं भगवन्निति । आह पिता–किमत्र पश्यसीति । आह पुत्रः–अण्व्य इमा धाना इति–दृश्यन्ते वीजानि सूक्ष्माणीति । आह पिता–आसां धानानामेकां भिन्धीति । तथा कृत्वा पुत्रः प्राह–भिन्ना भगवन्निति । आह पिता–भिन्नायामस्यां किं पश्यसीति पुत्रः प्राह–न किञ्चन भगवन्निति ॥१॥

तꣳ होवाच यं वै सोम्यैतमणिमानं न निभालयस
एतस्य वै सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति २

तं होवाच पिता—यं वै त्वमिह न निभालयसे—न पश्यसि, एतस्यैवायं महान्न्यग्रोधः स्थूलं रूपं यदयमणुस्त्वं न शक्नोष्येनं द्रष्टुम् । अणिमानमिति हेतुगर्भं विशेषणम्, अणुमित्येतत् ॥२॥

श्रद्धत्स्व सोम्येति स य एषोऽणिमैतदा-
त्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वम-
सि श्वेतकेतो इति भूय एव मा भगवान्
विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥

क्वायं न्यग्रोधो महान्, क्व चेमा धाना अण्व्यः, क्व चायमास्वणुतमो भागः, कथमितोऽयं महानाविर्भवति ? अप्रतर्क्यस्वभावानां बीजानां गतिः । तत् श्रद्धत्स्व सोम्य—न्यायागमाभ्यामुपपादितोऽयमेव स्यादिति श्रद्धायां ह्यवहितं मनो भवेत्, तेन चावहितेन मनसा मननस्य प्रसङ्गः, तेन चोपदिष्टार्थो दृढीभवेत् । ऐतदात्म्यमित्यादि व्याख्यातम् । अनुपलभ्यमानमपि मूलं सदेवेत्येतत्तु न सम्यगवधार्यते, निर्भिण्णासु धानासु नोपलभामहे सूक्ष्मं रूपमिति, निदर्शनमपि न सन्मूलतां द्रढयितुमलम्, अनुपलम्भादेवासद्भावस्त्वाशङ्क्यतेत्याशयेन भूय एव मा भगवान् विज्ञापयत्वित्याह पुत्रः, तथा सोम्येत्युवाच पिता ॥३॥

इति षष्ठाध्याये द्वादशः खण्डः ।

---

लवणमेतदुदकेऽवधायाथ मा प्रातरुप-
सीदथा इति स ह तथा चकार तꣳ हो-
वाच यद्दोषा लवणमुदकेऽवाधा अङ्ग
तदाहरेति तद्धावमृश्य न विवेद ॥१॥

यथा त्वमेव ज्ञास्यस्यनुपलभ्यमानमपि चक्षुरादिना स्वादेव सदिति तथा त्वां बोधयामि, लवणमेतदुदके अवधाय निधायाथ मां प्रातरुपसीदथाः–उपगच्छेति । स पुत्रस्तथाऽकरोत् । तमुवाच पिता, यद्दोषा–रात्रौ लवणमुदकेऽवाधाः प्रक्षिप्तवांस्त्वम्, तदाहरेति । स तदा जिहीर्षुरवमृश्याभितः सलिलं न विवेद नोपलब्धवान् लवणम् ॥१॥

यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति
लवणमिति मध्यादाचामेति कथमिति लवणमि-
त्यन्तादाचामेति कथमिति लवणमित्यभिप्रास्यै-
नदथ मोपसीदथा इति तद्ध तथा चकार तच्छ-
श्वत्संवर्तते तꣳ होवाचात्र वाव किल सत्सोम्य
न निभालयसेऽत्रैव किलेति ॥२॥ स य एषोऽणि-
मैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्व-
मसि श्वेतकेतो इति भूय एव मा भगवान्
विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥

तदा तमाह पिता—अथाधुना किमवधारयसि त्वम् ? यदेवान्विष्यमाणमपि चक्षुषः करतलस्याप्यगोचरमधुना किमत्यन्तमुच्छिन्नमिति मन्यसे ?, नैतत्, किन्तु विलीनम्; विशेषतो लीनम्, अविभक्तं नाम, विभागानर्हसंश्लेषविशेषमापन्नं नाम। यथैतद्बोधयामि त्वाम् । अस्य सलिलस्य अन्तात् पर्यन्तात् उपरितनभागादादायाचामेति, तं तथा कृतवन्तं पुत्रमपृच्छत् कथमिति । लवणमित्याह पुत्रः । मध्यादादायाचामेति पुनरादिशत्, आदिष्टश्च तथाऽकरोत् । कथमिति पृष्ट आह—लवणमिति । अन्तात्—अधःप्रदेशादाचामेत्याज्ञप्तस्तथाऽकरोत् । कथमिति पृष्ट आह—लवणमिति । अथैतत्सलिलमभिप्रास्य प्रक्षिप्य मामुपगच्छेत्युक्तस्तथा चकार । इदं चावोचत् यद्रात्रौ मया प्रक्षिप्तं तत् शश्वत् सदा संवर्तते । अद्यापि वर्तत इत्येतत् । तदा पिता आह—अत्र वाव किल सोम्य न निभालयसे, अत्रैव किलेति—चक्षुषा स्पार्शनेन वा जलान्तर्निमग्नोपलशकलवदत्रैवेदमुपलभ्यत इति पूर्ववत् न गृहीतुं शक्यते, नैतावता तन्नास्तीति, अथ रसनया तु तदवधार्यते । तदेवमिहाप्यनुपलम्भमात्रेण सर्वतः सूक्ष्मे सति सर्वमूले नाशङ्का युक्ता । ननु चक्षुषा स्पार्शनेन वाऽनुपलम्भेऽपि रसनया तु तत्र सूक्ष्मस्योपलम्भः, इह तु कथमित्याशयेन भूय एव मा भगवान् विज्ञापयत्वित्युक्तः पिता यथा चक्षुःस्पर्शनाभ्यामनवगतस्य लवणस्यावगमकं मानान्तरं तथैवेहापि प्रत्यक्षादि-

१ विलीनमित्यस्य भावः—अथेत्यादि नामेत्यन्तम् । २ यथेत्यस्य भावः—यथैतद्बोधयामि त्वामिति ।

नाऽनवगम्यमानस्य सतः सूक्ष्मस्यावगमकः आचार्योपदेश एवेति बोधयन्नाह—तथेत्यादि ॥२-३॥

इति षष्ठाध्याये त्रयोदशः खण्डः ।

---

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्ष-मानीय तं ततोऽतिजने विसृजेत्स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्रत्यङ्वा प्रध्मायीता-भिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥१॥

यथा गाढे तमसि कश्चिच्चोरः अलक्षित एव भूत्वा चक्षुराबद्ध्य आबद्ध्य च हस्तौ गान्धारेभ्यो देशेभ्यस्तथैवाभिनद्धाक्षं कश्चित्पुरुष-मतिजने—अतिगतो जनो यस्मात् जनशून्ये क्वचन वने विसृजेत्, तदा स अभिनद्धाक्षः प्राङ्वोदङ्वा—प्रागादिदिग्विवेकशून्यः अभिनद्धाक्ष आ-नीतोऽहमत्र विसृष्टः इत्यभिध्मायीत केवलम्—विक्रोशेत केवलम् ॥१॥

तस्य यथाभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृ-च्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येतै-वमेवेहाचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति ॥२॥

यथा कश्चिद्दयार्द्रचेतास्तस्याक्रोशं श्रुत्वा अभिनहनं बन्धनमुन्मुच्य प्रब्रूयादेतां दिशमनु गान्धाराः सन्ति, तदेतां दिशं व्रजेति, प्रदर्शितदिग्विभागश्च स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गान्धारानेव व्रजेत्, एवमेवाचार्यवान्—आचार्यादधिगतसत्पथः पुरुषो वेद तत्सर्वमूलं सदद्वितीयम् । अनादिकालप्ररूढवासनाजालनियन्त्रितसकलकरणः पिहितदृष्टिश्च दृढतरेण महता मोहप्रावरणेन विषमविषयारण्ये निपतितः स्वात्मानमप्यालक्षितुमसमर्थोऽयं कथं नाम जानीयात् सत्पदम्, यदा तु सुकृतपरिपाकेन भूयसा, पिहितनयनं नियन्त्रितसकलकरणं चात्मानमवबुध्यावबुध्य च विषमारण्यप्रवेशमात्मनः, व्याकुलचेताः, हन्ताहमस्मिन् महारण्ये परितः प्रसरद्भिः क्षुत्तृष्णाकामक्रोधादिहिंस्रैरभिभूयमानोऽशरणोऽस्मि, शोकस्यास्य मां पारं तारयतु भगवानिति दीनदीनमाक्रन्देत्[1], तस्येदमाक्रन्दितं श्रुत्वा दयार्द्रहृदयः सत्पददर्शी कश्चिदाचार्यः शोकमपनेष्यन्नुपदिशेत्ततः पदस्य स्वरूपं तदाऽयं पण्डितो मेधावी मननादिभिर्दृढतरमवधृत्य तत्स्वरूपं नातिचिरेण तत्पदं व्रजेत् । तस्य तावदेव चिरं विलम्बः, यावदसौ प्रारब्धाद्देहाद्विमोक्ष्ये विमुच्यते, छान्दसः पुरुषव्यत्ययः, अथ—प्रारब्धेऽवसिते सम्पत्स्यते तत्सत्पदं सपदि ॥२॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स**

---

१ आचार्यस्य प्रसादनोपायेष्वन्तरङ्गोपायस्तु आक्रन्दितम्, आर्तिलक्षणं ह्येतत् । निदर्शने चास्मिन्नयं विशेषो ध्वन्यते । समित्पाणिरिति यद्विधानं बहिरङ्गं नाम तत् । आचार्यश्च परमकारुणिको भगवत्स्वरूपः । भगवान् हि अशरणेष्वार्तेषु सपदि प्रसीदति ।

आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥

स य एष इति व्याख्यातम् । नंनु आचार्यादधिगतसद्विज्ञानस्य सति सम्पत्तौ तावान् विलम्बः, यावद्देहयोगः, अपगते तस्मिन् सपदि सत्सम्पत्तिरित्येतत् भूय एव मां भगवान् विविच्य बोधयत्विति पृष्टः पिता तथा सोम्येत्युवाच ॥३॥

इति षष्ठाध्याये चतुर्दशः खण्डः ।

---

पुरुषꣳ सोम्योतोपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥ अथ यदाऽस्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥२॥

निदर्शनेन बोधयति—पुरुषमिति । उपतापिनम्—अन्तकाले ज्वरेणाभितप्यमानं पुरुषं प्रशिथिलकरणं ज्ञातयो बन्धवः, जानासि मां जानासि मामिति स्वं स्वं सम्बन्धं प्रत्यभिज्ञापयन्तः परितः परिवार्योपासते । पुरुषश्चायं कथं कथमपि प्रत्यभिजानाति नामायमसावय-

---

१ विदुषो देहयोगसमयेन कथं विलम्बः । यद्येवमधिकेन वा स कुतो नेत्याशयः ।

मसाविति यावदस्य वाङ्मनसि न सम्पद्यते न सम्पद्यते च मनः प्राणे प्राणश्च न तेजसि तेजश्च न परस्याम्, अथ यदाऽस्य वाङ्मनसि सम्पद्यते मनश्च प्राणे प्राणश्च तेजसि तेजश्च परस्यां देवतायां सता सम्पन्नोऽयं न जानात्ययमसावहमयमिति च । इदमत्र हार्दम्—अयमहमस्मि, अयमसावित्यभिमतिर्हि बन्ध[1]ः, सा हि सर्वानर्थमूलम्, नापैति नाम सा यावद्वागादिव्यापृतिविभागम्, तदपगमे तदपगमश्च, तदपगम[2]श्च मृतस्य, तदा हि तेजःपर्यन्तस्य सति सम्पत्तिः, तत्तदा विमुक्त एवायं ततो बन्धात्[3], पश्चात्कुतो विलम्बः स्यात्? मूलं[4] ह्यपगतम्, यद्यन्यस्येवा[5]न्यत्रेव वासनाशेषमवशिष्येत्कर्मबीजं तदाऽयं पुनराभवेत् । तथा तु न। विदुषो ब्रह्मदर्शिनो व्यपगताभिमतेरस्त्येव फलद्वारा तदन्वयो[6] यावद्वागादिसम्पत्तिम्, तत्फलभूत एव ह्ययं देहयोगः, देहफलयोगोऽपि शेषयोग एव हि, तत्तस्य तावान्विलम्बो यावन्न विमोक्ष्यते तेन देहेनेति ॥१–२॥

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच॥३॥

स एष इत्यादि व्याख्यातम् । अविद्वान् सति सम्पन्नोऽप्यनर्थ-

---

१ बध्यते अनेनेति बन्धः । २ तस्या अभिमतेः अपगमस्तदपगमः । ३ ततो बन्धात्–अभिमतिलक्षणात् बन्धात् । ४ मूलम्–बन्धनमूलम् । ५ अन्यस्येव अविदुष इव, अन्यत्रेव–सुषुप्ताविव । ६ तस्या अभिमतेरन्वयः ।

मवाप्नोति न विद्वानिव निःश्रेयसमित्येतत् भूय एव मा भगवान् बोधयत्विति पृष्टः पिता प्राह ॥३॥

इति षष्ठाध्याये पञ्चदशः खण्डः।

---

पुरुषꣳ सोम्योत हस्तगृहीतमानयन्त्यपहार्षी-त्स्तेयमकार्षीत्परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽ-नृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ॥१॥ अथ यदि तस्याः कर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ॥२॥

राजपुरुषाश्चोरान्वेषणे प्रवृत्ता अयमेवापहर्ता स्यादित्याशङ्कया पुरुषं कञ्चित् हस्तगृहीतम्—हस्ते गृहीतम्, निबद्धहस्तमानयन्ति, निवेदयन्ति च अयमेवाहार्षीदस्य धनम्, साक्षात् स्तेयस्य कर्ता अयमेवेति। नाहं कर्ता स्तेयस्येति पुरुषे प्रतिवदति सन्देहस्यान्तं गन्तुमिदमाहुः। अपह्नवं कुर्वतेऽस्मै परशुं तपत—तप्तमायसं पिण्डमेनं ग्राहयतेति। यदि तस्य स्तेयस्य स कर्ता भवति तत एवापह्नवादात्मानमनृतं कुरुते—चोरं सन्तमचोरं करोति, तदनृतं करोति, सोऽयम-

नृताभिसन्धः अनृतेनात्मानमन्तर्धाय तप्तं परशुं प्रतिगृह्णाति, अन्तर्द्धिश्च अनृतम्, स दह्यते सपदि, अथ हन्यते राजपुरुषैर्निगडेन निबध्यते च । अथ यदि तस्य स्तेयस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते, अचोरमचोरमेव करोति, स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय तप्तं परशुं प्रतिगृह्णाति, अन्तर्द्धिश्च सत्यस्वरूपैव, तदयं न दह्यते । अथ राजपुरुषैरेष मुच्यते ॥१-२॥

**स यथा तत्र नादाह्यतैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ३ ॥**

स सत्याभिसन्धस्तत्र यथा नादाह्यत, एवमेवेहापि । यथा तस्करतदितरयोस्तप्तपरशुस्पर्शसाम्येऽप्यनृतसत्यलक्षणप्रावरणभेदाद्दाहबन्धनादाहविमुक्ती, तथैव विदुषोऽविदुषश्च मरणे सत्सम्पत्तिसाम्येऽपि सत्याभिसन्धितदभावाभ्यां विमुक्तितदभावौ, विद्वानेव तु ब्रह्मात्मकोऽहमस्मीत्यात्मानं पश्यन् भवति सत्याभिसन्धः, अविद्वांस्तु अयमहमस्मीत्यन्यथाऽवगच्छन्नसत्याभिसन्धः, असत्याभिसन्ध एव च म्रियमाणः सति प्रविशति केवलं गतिवशात् । निदर्शनमुखेन हार्दं प्रकाशितमिहेति पूर्वखण्डाद्विशेषः ॥३॥

इति षष्ठाध्याये षोडशः खण्डः ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण-परमहंसवर्य-योगिराज-श्रीगोपालानन्दस्वामिविरचिते छान्दोग्योपनिषद्भाष्ये षष्ठोऽध्यायः ॥ ६ ॥

---

## अथ सप्तमोऽध्यायः ।

पूर्वखण्डे सर्वोपादानतयाऽऽत्मोपदिष्टः, सप्तमे सर्वेभ्योऽतिशयिततयोपदिश्यते, नामादि सर्वमल्पमात्माऽनल्प इति ह्युपदिश्यते । आख्यायिका च विद्यास्तुतये, सर्वमन्त्रविन्नारदोऽप्यलभमानः श्रेयो विद्यायै सनत्कुमारमुपससादेति विद्या हि स्तुता भवति ।

**अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तꣳ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति ॥१॥**

अधीहि भगव इति ब्रुवन्नेव उपससाद शिष्यलक्षणोपेतः सनत्कुमारमुपेयाय । तमुवाच सनत्कुमारः—किं त्वामवबोधयामि, विविधं नाम वेदितव्यम्, यद्वेत्थ त्वं तेन मामुपसीद—इदमिदमहं वेद्मि इदं तु नेति ज्ञाताज्ञातविभागनिवेदनमुखेन मामुपसीद ॥१॥

**स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥२॥**

अध्येमि—जानामि । आथर्वणं चतुर्थवेदम्—वेदमिति प्रकृतम् । इतिहासपुराणम्—यश्चेतिहासः पुराणः, अदृष्टशाखार्थावबोधकतया

वेदैश्चतुर्भिः परिगणनया पञ्चमम् । यश्च वेदानां ऋगादीनां पदादिविभागावबोधकतयाऽऽवेदकस्तं वेदानां वेदम् । पित्र्यं श्राद्धकल्पम्, राशिं गणितम्, दैवम्—उत्पातादिविज्ञानम्, निधिम्—निधिविज्ञानशास्त्रम्, वाकोवाक्यम्—तर्कशास्त्रम्, एकायनम्—नीतिशास्त्रमेकायनशाखां वा, देवविद्याम्—देवानां सूर्यादीनां विद्यामुपासनप्रकारभेदम्, ब्रह्मविद्याम्—ब्रह्मणो वेदस्य या अङ्गभूता ताम्, भूतविद्याम्—भूतवशीकरणविद्याम्, क्षत्रविद्याम्—धनुर्वेदम्, नक्षत्रविद्याम्—ज्योतिषम्, सर्पदेवजनविद्याम्—सर्पादिवशीकरणविद्याम्, गारुडं गान्धर्वमायुर्विद्यां वा, एतदखिलं भगवन्नहं वेद्मि ॥ २ ॥

सोऽहं भगवो मन्त्रविदेवास्मि नात्मविच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति तꣳ होवाच यद्वै किञ्चैतदध्यगीष्ठा नामैवैतत् ॥३॥

हन्तावगताखिलार्थः कृतकृत्योऽसीत्यत्राह—सोऽहं भगवो मन्त्रविदेवास्मि शब्दब्रह्मनिष्ठ एवास्मि, अखिलमिदं मन्त्रमात्रं यदवगतं मया शब्दराशिरेव केवलम्, न हि शब्दैः श्रुतैः कश्चिल्लाभः, नामस्वाभाव्यात्तैरर्थोपस्थापनेऽपि न परमार्थलाभः, भ्रान्तानां ह्ययमर्थो यः संसृतिगतागतलक्षणः, तदहं मन्ये—ऐहिकामुष्मिकलक्षणगतागतक्लेशैकावबोधनविश्रान्तैरेतैरृगादिभिरपश्यन्परमार्थं मन्त्रविदेवा-

१ या पाञ्चरात्रस्य मूलभूता शाखा, सेयमेकायनशाखा ।

सीति । एवकारव्यवच्छेद्यं स्फुटयति—नात्मविदिति । आत्मा हि परमोऽर्थः, यद्विज्ञानात् शोकस्य तरणम्, श्रुतं च भवादृशेभ्य इदम्—तरति शोकमात्मविदिति । ननु मन्त्रविन्नात्मविदिति कथम्? आत्माऽप्युपस्थाप्यते क्वंचिन्मन्त्रेण । सा हि शाब्दी उपस्थितिः, परोक्षभूता, आपाततस्तु सा, किं तया, शब्दं शृण्वतः सर्वस्येयं समा, न च तरति तावता कश्चित् शोकम्, यस्तरति शोकं स ह्यात्मदर्शी, अकार्यकरं तच्छाब्दं वेदनमेव, तदुच्यते मन्त्रविदेव नात्मविदिति । अलब्धशोकसन्तरणोपायः सोऽहं शोचामि, तं मां भगवान् शोकस्य पारं तारयत्वित्युवाचेति पूर्वेण सम्बन्धः । तं होवाच सनत्कुमारः, यद्वै किञ्चिदध्यगीष्ठाः—अधीतवानसि—विज्ञातवानसि, नामैवैतदखिलम् ॥३॥

नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्स्वेति ॥४॥

कथं नाम नामैवैतत्? उपपाद्यते—यस्त्वयाऽधीतो ऋगादिलक्षणः शब्दप्रपञ्चः स सर्वोऽपि नामैव, वृत्त्याऽर्थबोधनसामर्थ्यमात्रात्[2] । विद्यात्वेऽपि परोक्ष एव तु पर्यवसानम् । तन्नामोपास्स्व—तदखिलार्थो-

---

१ क्वचिदृगाद्यन्यतमे । २ मात्रशब्दात् अपरोक्षानाधायकताऽभिप्रेता ।

प्रस्थापनातिशयसम्पन्नं नामैवोपास्स्व । आत्मज्ञानविधुरतया शोचन्तं प्रत्ययमुपदेशः कथम्? आत्मा ह्युपदेष्टव्यः । सत्यम् । अथापि शाखाचन्द्रन्यायेनात्मानमवगमयन्नामादिष्वात्मदृष्टिविधानमारभते । यं त्वमात्मानं जिज्ञाससि नामैव स आत्मा, तमेवोपास्स्वेति भावः । एतेन[1] नामादिप्राणान्तानामवरत्वं च ज्ञापितं भवति ॥४॥

स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्ते अस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥५॥

नाम्नि ब्रह्मदृष्टेः फलमाह—यो नाम ब्रह्मेत्युपास्ते तस्य यावन्नाम्नो गतम्—प्रवृत्तिरस्ति तावन्तं देशमभिव्याप्य कामचारः—स्वेच्छासञ्चरणं सिद्ध्यति । अतृप्यन्नारदः पप्रच्छ—अस्ति भगव इति । हे भगवन्! अप्यस्ति नाम्नो भूयः—समधिकम्, यत्र ब्रह्मदृष्टिरुचिता स्यात्, अतिशयितमितरेभ्यो हि ब्रह्म भवति, बृहत्त्वगुणनिमित्तेन हि ब्रह्मशब्दः प्रवर्तते । सनत्कुमार आह—नाम्नो वाव भूयोऽस्तीति । नारद आह—तन्मे भगवान् ब्रवीत्विति ॥५॥

इति सप्तमाध्याये प्रथमः खण्डः ।

---

वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञाप-

---

१ एतेन—शाखाचन्द्रन्यायेनाववोधनेन ।

यति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहा-
सपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं
निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां
भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजन-
विद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च
तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳ-
सि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपि-
पीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु
चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ्
नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं
नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो
वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति ॥१॥

वागेव तु नाम्नो भूयसी । कथमेतत् ? उच्यते—या नाम्नो विभूतिः ऋगादिलक्षणा सर्वां तां वागिन्द्रियमेव हि विज्ञापयति वर्णाभिव्यञ्जकत्वात् । अथ तस्मिन्नसति कथमुच्चरेदृगादि, यदभिव्यक्तमन्यो गृह्णीयात्, द्युपृथिव्यादिकमपि तदेवेन्द्रियं ज्ञापयति—इयं द्यौरियं पृथिवी अयं धर्मः अयमधर्म इति विवेचनेन, यदि वाङ् नाभविष्यत् न धर्मो नाधर्मो व्यज्ञापयिष्यत्—न विज्ञातमभविष्यत् । तत्प्रकाश्याप्रकाशकं समधिकम् । तद्वाचो बृहत्त्वाद्वाचमेव ब्रह्मोपास्स्व ॥१॥

स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

अतिरोहितोऽर्थः ॥२॥

इति सप्तमाध्याये द्वितीयः खण्डः ।

---

मनो वाव वाचो भूयो यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीतेत्यथ कुरुते पुत्रांश्च पशूंश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति ॥१॥

मनसो भूयस्त्वे हेतुमाह—यथा वै इति । द्वे वा आमलके फले, द्वे वा कोले फले, द्वौ वा अक्षौ विभीतकफले, मुष्टिरनुभवति—व्याप्नोतीत्येतत् । एवं वाचं च नाम च मनोऽनुभवति व्याप्नोति । फलद्वयमपि यथा मुष्ट्यन्तर्गतं भवति तथा वाङ्नामद्वयं मनोऽन्तर्गतं

भवति, तद्द्वयाद्वाङ्नामतो व्यापकं मनः समधिकमिति भावः । मनसो व्यापकतामुपपादयति—स यदेत्यादिना । सर्वेषामेव वागादीन्द्रियाणां मनसा मननव्यापारेणाभिसंस्पृष्टानामेव कार्यावहतया व्यापकत्वं मनसो वागादीनां च व्याप्यत्वं सुव्यक्तमिति भावः । मनो ह्यात्मा तदाधीन्याद्भोगस्य । मनो हि लोकः, लोकानामपि तदाधीन्यात् । तदतिशयितं मनो ब्रह्म, मन उपास्स्व ॥१॥

स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

स्पष्टम् ॥२॥

इति सप्तमाध्याये तृतीयः खण्डः ।

---

सङ्कल्पो वाव मनसो भूयान्यदा वै सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥१॥

सङ्कल्पो वाव मनसो भूयान्—इदं कर्तव्यमिदं नेत्यवधारणं सङ्कल्पः, स हि मनसो भूयान्, कुत एतत् ? । यदा वै सङ्कल्पयते अथ मनस्यति, इदं न कार्यमिदमेव तु कार्यमिति यदाऽवधारय-

त्यथ मनस्यति चिकीर्षालक्षणा मनोवृत्तिरधीयीयेत्येवंरूपा भवति, न त्ववधारणात्पूर्वम् । अथ मनःप्रवर्तनानन्तरम्, वाचमीरयत्युच्चारणार्थम् । तां वाचं नाम्नि ईरयति, न तु यस्मिन् कस्मिंश्च । नामोच्चारणाय वाचमीरयतीत्येतत् । नाम्नि च मन्त्रा एकं भवन्ति—मन्त्रा हि नाम्नो विशेषाः, तन्नामसु मन्त्रा अन्तर्भवन्ति । नामोच्चारणे प्रेरिता वाङ्मन्त्रानभिव्यनक्तीत्येतत् । मन्त्रेषु कर्माणि—एकं भवन्तीति सम्बध्यते । मन्त्रैकप्रकाश्यत्वात्कर्मणां मन्त्रेषु कर्माण्यन्तर्भूतानीत्युच्यते १

तानि ह वा एतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाकाशं च समकल्पन्तामापश्च तेजश्च तेषाᳶ संक्लृप्त्यै वर्षᳶ सङ्कल्पते वर्षस्य संक्लृप्त्या अन्नᳶ सङ्कल्पतेऽन्नस्य संक्लृप्त्यै प्राणाः सङ्कल्पन्ते प्राणानाᳶ संक्लृप्त्यै मन्त्राः सङ्कल्पन्ते मन्त्राणाᳶ संक्लृप्त्यै कर्माणि सङ्कल्पन्ते कर्मणाᳶ संक्लृप्त्यै लोकः सङ्कल्पते लोकस्य संक्लृप्त्यै सर्वᳶ सङ्कल्पते स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति ॥२॥

तान्येतानि—मनोवाङ्नामानि सङ्कल्पैकायनानि—सङ्कल्प एवायनं पदं येषां तानि सङ्कल्पे विलीने तमनु विलीयन्ते इत्येतत् । सङ्क-

१ विलयश्चेह वृत्तिद्वारा ।

ल्पात्मकानि—सङ्कल्पप्रभवत्वात् । सङ्कल्पे प्रतिष्ठितानि—तत्सत्ताधीनसत्ताकत्वात् । अतः सङ्कल्पो वाव भूयान् । इतश्च भूयान्—समकल्पेतां द्यावापृथिवी—द्यौश्च पृथिवी च सङ्कल्पं कृतवत्यौ, वायुश्चाकाशं च तथा, आपश्च तेजश्च तथा । अचेतनेष्वपि तेषु स्वभावाप्रच्यवमपेक्ष्य अपेक्ष्य चासङ्कीर्णकार्यारम्भनैयत्यमुपचर्यते सङ्कल्पः । तेषां संक्लृप्त्यै—सङ्कल्पाय सङ्कल्पं पूरयितुं सफलीकर्तुं वर्षं सङ्कल्पते प्रभवति, द्युलोकादिकार्यत्वाद्वर्षस्य तदीयसङ्कल्पपूरकत्वोपचारः । फलेन हि साधकस्य सङ्कल्पः पूर्यते । वर्षस्य संक्लृप्त्यै अन्नं सङ्कल्पते—वर्षफलत्वादन्नस्य । अन्नस्य सङ्कल्पाय प्राणाः—अन्नबलेन हि प्राणा उपष्टभ्यन्ते । प्राणानां सङ्कल्पाय मन्त्राः सङ्कल्पन्ते—प्राणबलाधीनत्वं मन्त्राध्ययनस्य । मन्त्रस्य सङ्कल्पाय कर्माणि—मन्त्राधीनत्वात् । कर्मणां सङ्कल्पाय लोकाः सङ्कल्पन्ते—लोको हि कर्माधीनः । लोकस्य सङ्कल्पाय सर्वं सङ्कल्पते—सर्वो हि लोकमेव कामयते । स एष सङ्कल्पः—सोऽयमुक्तेन प्रकरेण भूयान् सङ्कल्पः । तत्सङ्कल्पमुपास्स्वेति ॥२॥

स यः सङ्कल्पं ब्रह्मेत्युपास्ते संक्लृप्तान्वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावत्सङ्कल्पस्य गतं तत्रास्य यथाकामचारो भवति यः सङ्कल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः सङ्कल्पाद्भूय इति सङ्कल्पाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥३॥

स यः सङ्कल्पं ब्रह्मेत्युपास्ते स संक्लृप्तान्—उपासनफलतया भगवता सङ्कल्पितान् लोकान् अभिसिध्यति—प्राप्नोति । कीदृशान् लोकान् ? कीदृशः सन् ?, ध्रुवान् ध्रुवः सन्, ध्रुवत्वं चापेक्षिकम्, प्रतिष्ठितान् प्रतिष्ठितः सन्, प्रतिष्ठा—उपकरणसम्पत्तिः, तत्सहितांस्तत्सहितः सन्, अव्यथमानान् अव्यथमानः सन्—व्यथा शत्रूपतापः, तद्रहितांस्तद्रहितः सन् । कियन्तं कालम्—यावत्सङ्कल्पस्य गतं प्रवृत्तिः । तत्र लोकेऽस्योपासकस्य कामचारो भवति । फलवादमुपसंहरति—यः सङ्कल्पं ब्रह्मेति । अस्ति भगव इत्यादि पूर्ववत् ॥३॥

इति सप्तमाध्याये चतुर्थः खण्डः ।

---

चित्तं वाव सङ्कल्पाद्भूयो यदा वै चेतयतेऽथ सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥१॥

चित्तम्—चिन्तनलक्षणवृत्तिवैचित्र्यान्मन एव पृथग् निर्दिश्यते । प्राप्तकालानुरूपावबोधनम्—एवं गतम्, एवं भविष्यति इति निरूपणं चिन्तनमुच्यते । एवंभूतं चिन्तनविशिष्टं मनः सङ्कल्पाद्भूयः । यदा वै इत्यादि व्याख्यातप्रायम् ॥१॥

तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वा अयं

विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान्भवति तस्मा एवोत शुश्रूषन्ते चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा चित्त प्रतिष्ठा चित्तमुपास्स्वेति ॥२॥

चित्तं स्तौति–तानि ह वेति पूर्ववत् । पुनस्तस्य भूयस्त्वं लोकवादतोऽपि ज्ञापयति—तस्मादित्यादि । यद्यपि बहुशास्त्रविन्नाम कश्चित्, परन्तु अचित्तः–उक्तनिरूपणसामर्थ्यरहितः, तमेनं नायमस्तीत्येवाहुः–वैफल्यादनेकशास्त्राध्ययनस्यासत्कल्पं मत्वा नायमस्तीत्याहुः । यच्चायं वेद तन्नैवेत्यप्याहुः । अधीतमपि व्यर्थमित्याहुरित्येतत् । कुत एतत् ?, यदि विद्वान्नेत्थमचित्तः स्यादिति । अथाल्पविदपि–यदि चित्तवान् स्यात् तस्मा एव शुश्रूषन्ते–तस्मादेव श्रोतुमिच्छन्तीत्येतत् । चित्तं ह्येवैषामित्यादि व्याख्यातप्रायम् ॥२॥

स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान्वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥३॥

चित्तान्–उपचितान् गुणैः । शिष्टं स्पष्टम् ॥३॥

इति सप्तमाध्याये पञ्चमः खण्डः ।

ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायन्तीवापो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्यास्तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादांशा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादांशा इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥१॥

विजातीयप्रत्ययानन्तरितस्तैलधारावदविच्छिन्न उपास्यावलम्बी प्रत्ययप्रवाहो ध्यानम् । ध्यानस्य भूयस्तामुपपादयन्नाह—ध्यायतीवेति । निश्चलत्वसाम्यात् । ध्याता हि निरुद्धसकलबाह्यव्यापारो निश्चल आस्ते । ये पुनर्मनुष्याणां मध्ये महत्तां प्राप्नुवन्ति ते ध्यानापादानाम्—ध्यातॄणामंशा इव भवन्ति, अवचनशीलतया निश्चला इव लक्ष्यन्ते । अथ ये अल्पाः, ते कलहिनः पिशुना उपवादिनः समीप एव परदोषवादिनो भवन्ति । ध्यातृसाम्यं लेशतोऽपि नार्हन्तीत्येतत् । अथ ये प्रभवः—विद्यादिभिः, ते तु ध्यानापादांशा इव भवन्ति ॥१॥

स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मे-

त्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ध्यानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

पूर्ववत् ॥२॥

इति सप्तमाध्याये षष्ठः खण्डः ।

---

विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥१॥

विज्ञानम्–प्रमाणजन्यं ज्ञानम् । अस्य च ध्याने हेतुत्वात् ततो भूयस्त्वम् । शिष्टं स्पष्टम् ॥१॥

स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकाञ्ज्ञानवतोऽभिसिध्यति यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

विज्ञानवत इति–विशिष्टं ज्ञानं विज्ञानम्–शास्त्रार्थविषयकम्, तद्वतो लोकान् । ज्ञानमितरविषयकं तद्वतो लोकान् । विशेषतः सामान्यतश्च ज्ञानं येषु लोकेषु तानिति वा । शिष्टं स्पष्टम् ॥२॥

इति सप्तमाध्याये सप्तमः खण्डः ।

---

बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्ब-

लेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति ॥१॥

बलम्—तच्च मानसं मितहितान्नोपभोगजनितं प्रतिभानपाटवम्, वागादीन्द्रियपाटवं च, शारीरं चोत्थानादिसामर्थ्यलक्षणम् । विज्ञानाद्भूयस्त्वं मानसे तद्धेतुत्वात्, इतरयोश्च तदुपकारकत्वात् । लोकदृष्ट्यापि विज्ञानाद्बलस्य भूयस्तामुपपादयति—विज्ञानवतामेक इति । परिचरिता—गुरोरिति शेषः । गुरोः परिचरणे समर्थो भवतीत्येतत् । उपसत्ता—गुरोः पार्श्ववर्ती भवति । परिचरणप्रसन्नो हि गुरुः पार्श्वमुपनयति शिष्यम् । द्रष्टा भवति—प्रसन्नस्योपदेष्टुर्गुरोरिति शेषः । मन्ता—उपपत्तित आचार्योपदिष्टार्थस्य मन्ता । बोद्धा—एवमेवेदमिति दृढाध्यवसायो बोधः । कर्ता—अनुष्ठाता । विज्ञाता—अनुष्ठानफलस्यानुभविता । बलं स्तौति—बलेनैवेति ॥१॥

स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

स्पष्टोऽर्थः ॥२॥

इति सप्तमाध्याये अष्टमः खण्डः ।

अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्नस्यायै द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥१॥

अन्नं वाव बलाद्भूयः—तस्य तद्धेतुत्वात् । अतएव दशरात्रीः कश्चिद्यदि नाश्नीयात्, यदि वा जीवेत्—नैव जीवेदनशनेन प्रक्षीणबलः, यदि वा जीवेत्, तदा दर्शनाद्यसमर्थो भवति । अथान्नस्यायै—लाभे सतीति शेषः । अन्ने भुक्त इत्येतत्, द्रष्टा भवति श्रोता भवति—दर्शनादिसमर्थो भवति । एवमन्वयव्यतिरेकाभ्यामन्नस्य बलहेतुत्वेन भूयस्त्वादन्नमुपास्स्वेति ॥१॥

स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान्पानवतोऽभिसिध्यति यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद्भूय इत्यन्नाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

अतिरोहितोऽर्थः ॥२॥

इति सप्तमाध्याये नवमः खण्डः ।

---

आपो वा वान्नाद्भूयस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्वता यद्देवमनुष्या यत्पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवेमा मूर्ता अप उपास्स्वेति ॥१॥

आपो वाव अन्नाद्भूयस्यः—तासां तद्धेतुत्वात् । हेतुहेतुमद्भावमेवोपपादयति—तस्मादित्यादिना । व्याधीयन्ते प्राणाः—प्राणिनः सीदन्तीत्येतत् । आनन्दिनः प्राणा भवन्ति—प्राणिनः प्रहृष्यन्तीत्येतत् । आपः स्तौति—आप एवेत्यादि । साध्ये साधनोपचारः । अम्मूलानि हि पृथिव्यादीनि मूर्तानि । अन्तरिक्षमिति लोकविशेषः ॥१॥

स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान्कामाꣳस्तृप्तिमान् भवति यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

स्पष्टम् ॥२॥

इति सप्तमाध्याये दशमः खण्डः ।

---

तेजो वावाद्भ्यो भूयस्तद्वा एतद्वायुमागृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्लादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति ॥१॥

तेजो वाव अद्भ्यो भूयः—तद्धि तासु हेतुः । तस्मादेवैतत्तेजो वायुमागृह्य—अवष्टभ्याकाशमभिव्याप्य तपति यदा तदाऽऽहुर्लौकिकास्तेजो निशोचति जगत्, तपतीत्येतत्, नितपति—नितरां तपति शरीरम्, वर्षिष्यतीति । तत्तेज एव पूर्वं—प्रथमं दर्शयित्वा प्रभूतमात्मनः स्वरूपं तापेन कार्येण अथानुपदमापः सृजते । तत् तस्मादेव एतत्—एतस्मिन् समये ऊर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्लादाः—स्तनयन्तो ध्वनयश्चरन्ति । तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति । तत्तेज एव पूर्वं स्वं रूपं विशेषतः प्रकाश्य तत आपः सृजते, तत्तेज उपास्स्व ॥१॥

स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान्भास्वतोऽपहततमस्कानभिसिध्यति यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

तेजस्वतः, अतएव भास्वतः—प्रकाशमानान्, अत एव अपहततमस्कान् लोकानभिसिध्यति—प्राप्नोति ॥२॥

इति सप्तमाध्याये एकादशः खण्डः ।

---

आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशेन रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति ॥१॥

आकाशो वाव तेजसो भूयान्—वायुसहितात्तेजस इत्यर्थसिद्धम् । पूर्वखण्डे हि वायुमवष्टभ्येति वायुः प्रकृतः । आकाशादेव वायुसहितं तेजः प्रभवति, आकाश एव तु सूर्याचन्द्रमसौ विद्युन्नक्षत्राण्यग्निरित्यखिलं तेजोद्रव्यमाहितम् । किञ्च आह्वानाद्यखिलक्रियाजातमाकाश एव प्रभवति । तदाकाशो भूयांस्तमुपास्स्व ॥१॥

स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान्प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिध्यति यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

आकाशवतः—अवकाशवतः, विपुलानित्येतत् । असम्बाधान्—सम्बाधः—अन्योन्यमुपमर्दः, तद्रहितान् । इतरत्स्पष्टम् ॥२॥

इति सप्तमाध्याये द्वादशः खण्डः ।

---

स्मरो वावाकाशाद्भूयस्तस्माद्यद्यपि बहव आसीरन्नस्मरन्तो नैव ते कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन् स्मरेण वै पुत्रान्विजानाति स्मरेण पशून् स्मरमुपास्स्वेति ॥१॥

स्मरः—स्मरणम् । भूय इति लिङ्गव्यत्ययश्छान्दसः । स्मरणस्य भूयस्ता कुतः ?, आह—यद्यपीत्यादि । बहवः समवेता अपि स्मरणशून्या नैव कञ्चन शृणुयुः न मन्वीरन् विजानीरन्, एवमेव स्मरणशून्यानां नायमाकाशो न तेजो नापो न पृथिवी, अकार्यकरत्वात् ।

यदा वाव स्मरेयुरथ शृणुयुर्मन्वीरन्विजानीरन् । स्मरणगुणयोगेनैव पुत्रादिविज्ञानमपि । तत्स्मरो भूयांस्तमुपास्स्व ॥१॥

स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इति स्मराद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

स्पष्टोऽर्थः ॥२॥

इति सप्तमाध्याये त्रयोदशः खण्डः ।

---

आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्रांश्च पशूंश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥१॥

आशा वा स्मराद्भूयसी—आशायाः स्मरणे हेतुत्वात् । नहि निराशः किञ्चित्स्मरति, आशयैव तु स्मरति । अत एवाशेद्धः—आशया इद्धः उद्दीपितः स्मरः स्मरणं भवति । ततश्च स्मरणबलेन मन्त्रानधीते, कर्माणि कुरुते, पुत्रादिकामनाप्याशाबलादेव । तदाशा भूयसी तामुपास्स्व ॥१॥

स य आशां ब्रह्मेत्युपास्त आशयाऽस्य सर्वे कामाः समृद्ध्यन्त्यमोघा हास्याशिषो भवन्ति यावदाशाया

गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

व्याख्यातप्रायम् ॥२॥

इति सप्तमाध्याये चतुर्दशः खण्डः ।

---

प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वꣳ समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥१॥

नामाद्याशान्तेषूत्तरोत्तरं भूयस्त्वगुणयोगेनोपास्यतयोपदिष्टेषु शोकापनोदकतामपश्यता शोकस्य पारं तितीर्षुणाऽऽत्मनः स्वरूपं जिज्ञासमानेन आशाया वाव भूयोऽस्तीति पृष्टः प्राहाचार्यः—प्राणो वा आशाया भूयानिति। यस्येदं नामाद्याशान्तं गुणीभवत्युपकरणतया भोग्यतया वा सोऽयं जीवः प्राणशब्देनेह लक्ष्यते । प्राणो ह पिता प्राणो मातेत्यादिना पितृत्वादिकं ह्यनुपदं प्राणे श्रावयिष्यते । तच्च जीवस्यैव यथाकर्म तत्तद्योनीराविशतः प्रसिद्धम् । हिंसाऽपि प्राणिपीडनलक्षणा दुःखाधायकतयैवेति 'पितृहा वै त्वमसी'त्याद्यपि वाक्यं जीवपरत्वे समन्वेति । चेतनधर्मो हि सुखदुःखादिः । यश्चायमनुपदं

श्रूयते प्राणादधिकतया भूम्न उपदेशः 'एष तु वा अतिवदति यः सत्येनातिवदती'ति, तं जीवादध्युपदेशमभिप्रेत्य भगवता बादरायणेनेदमेव प्रकरणं विचारयता 'भूमा सम्प्रसादादध्युपदेशा'दिति सूत्रितम् । सम्प्रसादो जीवः । 'स एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति जीवे हि सम्प्रसादशब्दः श्रूयते । भूयस्तामेवोपपादयति—यथा वेत्यादिना । अस्मिन्प्राणे—जीवे । सर्वं समर्पितम्—सर्वस्य भूतभौतिकस्य चेतनाधिष्ठितत्वात् । इतोऽपि जीव एव भूयान् । गन्तृदातृप्रतिगृहीत्रादि सर्वव्यवहारपदं स एव हीत्याह—'प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाती'त्यादिना । गन्ता गमनसाधनं दाता देयं प्रतिग्रहीता पित्रादिः सर्वः प्राण एव ॥१॥

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किञ्चिद् भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥२॥ अथ यद्यप्येनानुत्क्रान्तप्राणान् शूलेन समासं व्यतिषंदहेन्नैवैनं ब्रूयुः पितृहाऽसीति न मातृहाऽसीति न भ्रातृहाऽसीति न स्वसृहाऽसीति नाचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥३॥

ननु पिण्डविशेषो हि देहलक्षणः पित्रादिः, कथं जीवस्तथोच्यते ? तत्राह—स यदि पितरं वेत्यादि। पितरं वेति। जीवन्तमिति शेषः। परुषवचनैस्तेषां दुःखाधानेन पीडापादनात्। अथ ह्येनानुत्क्रान्तप्राणान् शूलेन समासम्—समस्य—प्रक्षिप्य, व्यतिसन्दहेत्—व्यत्यस्य सन्दहेत्, तथाऽप्येनं नैव ब्रूयुः पितृहाऽसि मातृहाऽसीति वा। तत्र देहे पितृत्वादिकम्, किन्तु जीव एवेति भावः ॥२-३॥

प्राणो ह्येवैतानि सर्वाणि भवति स वा
एष एवं पश्यन्नेवं मन्वान एवं विजान-
न्नतिवादी भवति तं चेद्ब्रूयुरतिवाद्यसी-
त्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥४॥

तत्सर्वाणि भूतानि प्राण एव—जीव एव, न हि जीवेन प्रत्यगात्मना विनाभूतं किमपि भूतं विद्यते जगति। स वा एष प्राणो जीवः एवं मन्वान एवं विजानन् एवं पश्यन्—प्राण एव सर्वाणि भूतानीति मननं कुर्वन्, तथैवोपासनं कुर्वन्, तथैव च साक्षात्कुर्वंस्तेन साक्षात्कारेणातिवादी भवति। अयं भावः—देहात्मभ्रमादेव तु परिवर्तन्ते प्रतियोनि जीवाः, पश्यन्ति चात्मानं दैहिकेनैव संस्थानेन मिथोऽत्यन्तविषमेण, देहमेव च कर्तारं भोक्तारं सुखदुःखादिभागिनं च स्वतन्त्रम्, न तथा विद्वान् मन्येत, किन्तु सर्वाण्येतानि भूतानि जडान्यसमर्थानि कार्ये, प्राणेनैव तु प्रत्यगात्मनाऽधिष्ठितानि प्रभवन्ति कार्येषु, तत्सर्वाणि भूतानि प्राण एव, प्राणश्चायं प्रत्यगात्मा तत्तद्भूतेष्वनुप्र-

विष्टोऽप्यविषम एव, तत्सर्वभूतेष्वविषमाकारतया स्वरूपेण तं सर्वेषु भूतेषु पश्यन् स्वोपास्यं स्वेन साक्षात्कृतं प्रत्यगात्मतत्त्वं सर्वाण्यतिक्रम्य वर्तमानं वदतीति अतिवादी भवतीति । अतिवदनं शीलमस्येत्यतिवादी । तं चेदेनं केचिद्दोषमारोपयन्तो ब्रूयुस्त्वमतिवाद्यसीति, तदा नापह्नुवीत—परतो भीत्या नाहमेवमस्मीति, यदात्मतत्त्वं साक्षात्कृतं सर्वाधिकमेव तत् । तद्यथावस्थितार्थप्रख्यापने न कश्चिद्दोषः, यद्भीत्याऽपह्नवः कर्तव्यः स्यादिति भावः ॥४॥

इति सप्तमाध्याये पञ्चदशः खण्डः ।

---

एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥१॥

श्रुत्वेदं नारदो नापृच्छदधिकम्, स ह्यमन्यतायमेवात्मोपदेशस्य पर्यवसानभूमिरिति, यदाचार्य इहातिवादित्वमधिकमाह, आह च नापह्नुवीतेति । आचार्यस्त्वविज्ञातपरमात्मतत्त्वस्यास्थाने आत्मोपदेशपर्यवसानताग्रहणेन माभूदस्य प्रच्यव इत्यनुजिघृक्षया प्राह—एष तु वेत्यादि । तुशब्दः पूर्वस्मात्प्राणातिवादिनोऽस्य सत्यातिवादिनो वैलक्षण्यं ज्ञापयति । एषः—वक्ष्यमाणः सत्यातिवादी । यः सत्येनातिवदति—सत्येन परेण ब्रह्मणाऽतिवदति । ननु प्राप्तं पूर्वस्तु अनृतेनातिवदतीति । नैतत् । 'प्राणा वै सत्यं तेषामेष सत्यम्' इति प्राणेष्वपि सत्यताश्रुतेः । तद्देशकालसम्बन्धितया प्रतीयमानस्य तद्देशकालास-

म्बन्धो ह्यनृतत्वं मुख्यम्। तच्च शुक्तिरूप्यादिष्वेव, तच्च परिमितकालवर्तिनि कालपरिच्छिन्ने घटपटादावसम्भाव्यमानं कालानवच्छिन्ने जीवात्मनि कथमिव सम्भाव्येत। सत्यत्वे प्रकर्षमभिप्रेत्य च 'प्राणा वै सत्य'मिति निर्देशः, अबाधितत्वलक्षणं हि सत्यत्वं कालविशेषसापेक्षमस्थिरेषु, कालान्तरे बाधात्, जीवात्मनि तु स्थिरे तन्निरपेक्षं तदिति प्रकृष्टं तत्र सत्यत्वम्। तस्य च कालत्रयसत्ता परमात्मायत्तेति 'तेषामेष सत्य'मिति विशेषश्रुतिः। प्राणानां सत्यत्वं परमात्मसत्यत्वोपजीव्यमित्येतत्। अनन्याधीनसत्यत्वं परमात्मासाधारणमभिप्रेत्य 'एष तु वा अतिवदति यः सत्येनातिवदती'ति परमात्मातिवादिनः सत्यातिवादित्वं विशेष इह श्रूयते। सत्यत्वपौष्कल्यात्। यद्येवं प्राणाद्भूयः सत्यम्, भगवन्नहं तेन सत्येनातिवदानि। आचार्य आह— तर्हि सत्यं त्वेव विजिज्ञासितव्यमिति। शिष्य आह सत्यं भगवन्! विजिज्ञासे इति ॥१॥

इति सप्तमाध्याये षोडशः खण्डः।

---

**यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥१॥**

विजानातिः साक्षात्कारपरः। यदा सत्यं साक्षात्करोति तदा सत्यं वदति सर्वोत्कृष्टत्वेन वदति। सत्यातिवादी भवतीत्येतत्। तत्

विज्ञानं त्वेव विजिज्ञासितव्यम्—तत्साक्षात्कार एव सम्पाद्यः । धात्वर्थस्त्वविवक्षितः, लक्षणा वा । इतरत् स्फुटम् ॥१॥

इति सप्तमाध्याये सप्तदशः खण्डः ।

---

यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥१॥

मनुत इति । मननमिह साक्षात्कारसाधनीभूतम् । मननातिशयेन हि ध्यानसम्पत्तिः, ध्यानमेव त्वतिशययोगेन साक्षात्कारभावमापद्यते । तन्मत्वैव—मननविशेषं कृत्वैव विजानाति—साक्षात्करोति । व्यक्तमितरत् ॥१॥

इति सप्तमाध्याये अष्टादशः खण्डः ।

---

यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥१॥

नाश्रुतस्य मननमिति मननोपन्यासेन श्रवणमप्यर्थसिद्धम् । अथ श्रवणे मुख्योपयुक्तां श्रद्धां सम्पाद्यामाह—यदा वै इत्यादिना । स्पष्टम् ॥१॥

इति सप्तमाध्याये एकोनविंशः खण्डः ।

---

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥१॥

इदमेव श्रोतव्यं नान्यदिति निष्ठाविशेषः सम्पाद्य इत्याह—यदा वै इत्यादिना ॥१॥

इति सप्तमाध्याये विंशः खण्डः ।

---

यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥१॥

कृतिरिह मनसो नियमनलक्षणा विषयान्तरेभ्यो निवर्तनरूपा । सा सम्पाद्येत्याह ॥१॥

इति सप्तमाध्याये एकविंशः खण्डः ।

---

यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥१॥

विषयेभ्यो मनोनियमनस्य लब्धव्ये सुखरूपताज्ञानं हि कारणम्, तत् यदा वै लब्धव्ये ब्रह्मणि निरतिशयसुखरूपतां लभते—जानाति, तदा करोति । शिष्टं स्पष्टम् ॥१॥

इति सप्तमाध्याये द्वाविंशः खण्डः ।

---

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति
भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य
इति भूमानं भगवो विजिज्ञास इति ॥१॥

यो वै भूमा–बहु, विपुलम्–अपरिच्छिन्नमित्येतत्, तदेव सुखम्, अपरिच्छेदश्चेह गुणतः । शिष्टं स्पष्टम् ॥१॥

इति सप्तमाध्याये त्रयोविंशः खण्डः ।

---

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजा-
नाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्य-
न्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ
यदल्पं तन्मर्त्यꣳ स भगवः कस्मिन्प्रतिष्ठित
इति स्वे महिम्नि यदि वा न महिम्नीति ॥१॥

यत्र–यस्मिन्ननुभूयमाने नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, ब्रह्मण्यनुभूयमाने हि नान्यद्दृश्येत नान्यच्छ्रूयेत नान्यद्विज्ञायेत । कथमेतत् ?, न ह्यन्यन्न, सदप्यन्यदेकस्मिन्ननुभूयमाने नानुभूयेतेति तु तुल्यमल्पेऽपि । अपरमार्थतया तथेति तु परमतप्रवेशः । उच्यते–यावत् ब्रह्म न साक्षात्करोति तावदन्यान्यद्वस्तु तत्तत्पश्यति–इदमेकमिदमपरमिदं तृतीयमिति । यदा तु साक्षात्करोति न तदा तथा दृष्टिप्रसङ्गः । जातिगुणादिवत्सर्वमेव तत्स्वभावानतिरिक्तमेव वस्तुतः । अपृथक्सिद्धः प्रकारो हि स्वभाव एव,

नहि स्वतन्त्रसत्ता क्वापि । तत् ब्रह्म सकलचेतनाचेतनप्रकारं साक्षात्कुर्वन्पुरुषः स्वरूपेण स्वभावेन च तमेव साक्षात्करोतीति नान्यत्पश्यति नान्यच्छृणोतीत्युपपन्नं नाम । परे तु—यत्र ब्रह्मणि अनुभूते नान्यत्पश्यति, नान्यच्छृणोति, नान्यद्विजानाति, द्रष्टव्यस्य श्रोतव्यस्य विज्ञातस्य वाऽभावात् । आत्मनि खल्वरे श्रुते मते विदिते सर्वं श्रुतं मतं विदितं भवति, ब्रह्मस्वरूपे सर्वस्यान्तर्भावात्, विशिष्टं हि ब्रह्मणः स्वरूपम् । यत्र अनुभूयमाने अनुभूते वा अन्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् । यो वै भूमा तदमृतं यदल्पं तन्मर्त्यम्—स्वरूपेण स्वभावेन वा विकारि । तस्यास्य भूम्नः प्रतिष्ठापदं किमिति शिष्यः पृच्छति—स भगवः कस्मिन्प्रतिष्ठित इति । आचार्य आह—स्वे महिम्नीति । भ्रमं वारयन्नाह—यदि वा न महिम्नीति ॥१॥

गो अश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन्प्रतिष्ठित इति ॥२॥

को भ्रमः ? यस्य वारणायोच्यते—यदि वा न महिम्नीति । तदेतद्विशदयति—गो अश्वमिति । इह लोके गवाश्वादिकं हस्तिहिरण्यं दासभार्यं क्षेत्रादि सर्वमेव स्वामिनो महिमेत्याचक्षते, तत्प्रतिष्ठश्च तत्स्वामीति नाहमेवं ब्रवीमि—कस्मिन्प्रतिष्ठित इति पृष्टस्त्वया गवाश्वादिषु तत्स्वामी यथा प्रतिष्ठितस्तथाऽयं स्वे महिम्नि प्रतिष्ठित इति नाहं ब्रवीमि, स्वे महिम्नीति वचसश्चेदेवं तवार्थभ्रमः, तर्हि ब्रवीमि—

न महिम्नीति । तत्ते माभूदयं भ्रमः, स्वे महिम्नि प्रतिष्ठितः—नास्य प्रतिष्ठापदमितरत् महिमैवायम्—अनन्याधीनप्रतिष्ठ इति विजानीहि, अनन्यप्रतिष्ठत्वमुपपादयति—अन्यो हीति । अयं तु भूमा—कथमयमन्यस्मिन्—भूम्नोऽन्यस्मिन्नल्पे प्रतिष्ठितः स्यात् । अल्पे प्रतिष्ठितश्चान्यो हि भूम्नः—अल्पो हि । तद्भूम्नः प्रतिष्ठा भूमैव—अनन्याधीनप्रतिष्ठ इत्येतत् ॥२॥

इति सप्तमाध्याये चतुर्विंशः खण्डः ।

---

स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स
दक्षिणतः स उत्तरतः स एवेदꣳ सर्वमिति ।

दिशि दिशि अन्यान्यदिवालक्ष्यते, तत्त्वतश्चेद्विचार्येत ब्रह्मैव सर्वप्रकारावस्थितमिति भूमैवायमधस्तादुपरिष्टात्पश्चात्पुरस्ताद्दक्षिणत उत्तरतश्च सर्वमिदं स एव, तत्तस्मिन्ननुभूयमाने अनुभूते वा नान्यत्पश्यति नान्यद्विजानाति ।

अथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳ सर्वमिति ॥१॥

अहमहमिति च पामराः शरीरं जीवं वाऽभिमृशन्तो मन्यन्तेऽहमिहैवास्मि नान्यत्रेति । ये पुनः पण्डिताः परमार्थतोऽहङ्करस्य पर्यवसानभूमिं जानन्ति न ते तथा । यत्सर्वान्तरात्मानं परमात्मानमेव हि अहङ्करपर्यवसानभूमिं जानन्ति ते । तदहङ्कारादेशस्तु अयमेव

तत्त्वतः—अहमेवाधस्तादहमेवोपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणत अहमुत्तरतोऽहमेवेदं सर्वमिति ॥१॥

अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदँ सर्वमिति।

इत्थमेव चात्मादेशोऽपि। आत्मा हि सर्वस्य स एव भूमा परमात्मा—तदयमेव तत्त्वत आत्मानुसन्धानप्रकारोऽपि—आत्मैवाधस्तादात्मैवोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वमिति।

स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति।

य एवमहङ्ग्रहस्य पर्यवसानभूमिं तां सर्वान्तरात्मतां सर्वप्रकारावस्थितिं च भूम्नः परस्य ब्रह्मणो वेत्ति स एषोऽधिकारी एवम्—स एवाधस्तात्स उपरिष्टात्, अहमेवाधस्तादहमुपरिष्टात्, आत्मैवाधस्तादात्मैवोपरिष्टादित्यादिना प्रकारेण, मन्वानो विजानन् पश्यन्, अतएव स्रगादिना उद्यानादिना स्त्र्यादिना वा विभूतिभिर्वाऽन्याभिः योऽयमानन्दः पामराणां स सर्वोऽप्यानन्दो यस्मात्सन्त्येव तथाभूतः

सन् स्वराड् भवति, कर्मवश्यताप्रयुक्तदुःखरहितो भवति। तस्यैवंभूतस्य सर्वेषु लोकेषु कामचारः—स्वेच्छासञ्चारसामर्थ्यं सिद्ध्यति।

अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषाꣳ सर्वेषु लोकेष्वकामचारो भवति॥२॥

अन्योऽधस्तादन्य उपरिष्टात्, अहमधस्तादन्य उपरिष्टात्, आत्माऽधस्तादुपरिष्टाच्चान्य इति सर्वथाऽत्यन्तभिन्नभिन्नस्वतन्त्रवस्तु मन्यन्ते, तेऽन्यराजानो भवन्ति—परवशा भवन्ति, कर्मपरवशा भवन्तीत्येतत्। अत एव क्षय्यलोका भवन्ति, तेषां सर्वेषु लोकेष्वकामचारो भवति—सांसारिकदुःखभागिनो भवन्तीत्येतत् ॥२॥

इति सप्तमाध्याये पञ्चविंशः खण्डः।

---

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदꣳ सर्वमिति ॥१॥

विदुषो विशेषमितरस्माद्विशदयति—तस्य ह वेति । यः पुनरविद्वान् प्राणादिकर्मान्तमखिलमात्मनोऽन्यस्मादुत्पन्नं मन्यते, तदविदुषो दृष्ट्या प्राणादिकार्यमात्मनोऽन्यस्मात् । एवं विजानत एवं मन्वानस्य एवं पश्यतस्तस्यैतस्य तु—उक्तप्रकारेण परमात्मानमेव चेतनाचेतनसकलप्रकारेणावस्थितमखिलात्मकमद्वितीयं श्रवणमननध्यानपूर्वक्रमेण साक्षात्कुर्वतस्तु दृष्ट्या आत्मत एव प्राण आत्मत एवाशा आत्मत एव सर्वं कर्मान्तं कार्यम्, न ह्ययमन्योऽयमन्य इति पश्यति, किन्तु परमात्मानं स्वप्रकारतयाऽवस्थितमहमित्यात्मेत्येव तु यथाऽवस्थितं साक्षात्करोति, तदेतस्योपासकस्यात्मत एव प्राणादिकर्मान्तकार्यदृष्टिः ॥१॥

तदेष श्लोको न पश्यो मृत्युं पश्यति
न रोगं नोत दुःखताꣳ सर्वꣳ ह पश्यः
पश्यति सर्वमाप्नोति सर्वश इति ।

उपासकस्य फलमुच्यते—तदेष इत्यादिना । तत्—तस्मिन्विषये एष वक्ष्यमाणः श्लोकः फलवादलक्षणो भवति । पश्यः—उक्तलक्षण उपासको न मृत्युं पश्यति न रोगं पश्यति न वा दुःखितां पश्यति । अपहतपाप्मा विज्वरो विमृत्युर्विशोको विजिघत्सोऽपिपासो भवतीत्येतत् । सर्वं ह पश्यः पश्यति, सर्वशः सर्वमाप्नोति, नास्याप्राप्यं किञ्चित् । सत्यकामो भवतीति यावत् ।

स एकधा भवति त्रिधा भवति पञ्चधा
सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतं

च दश चैकश्च सहस्राणि च विंशतिः ।

सत्यसङ्कल्पश्च भवतीत्याह—स एकधेति । यथासङ्कल्पमनेकरूप-परिग्रहणसमर्थश्च भवतीति यावत् ।

आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारस्तꣳ स्कन्द इत्याचक्षते तꣳ स्कन्द इत्याचक्षते ॥२॥

एवमुपासनमुपासनफलं चोक्त्वा उपासननिष्पत्तये साधनमुपदिशन्नुपसंहरति—आहारेति । आहारशुद्धौ—सात्त्विकाहारसेवने इत्येतत् । सत्त्वशुद्धिः—अन्तःकरणनैर्मल्यम् । सम्पन्ने च तस्मिन् ध्रुवा स्मृतिः—विजातीयप्रत्ययानन्तरिता स्मृतिः । ध्यानसिद्धिरित्येतत् । स्मृतिलम्भे सर्वग्रन्थीनां कर्मग्रन्थीनां विप्रमोक्षः । तस्मै नारदाय मृदितकषायाय—प्रणष्टसकलमनःकल्मषाय पात्रभूताय तमसः परमुक्तलक्षणं परंब्रह्म दर्शयति स भगवान् सनत्कुमारः, तं भगवन्तं स्कन्द इत्याचक्षते । द्विरुक्तिरध्यायसमाप्त्यर्था ॥२॥

इति सप्तमाध्याये षड्विंशः खण्डः ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण—परमहंसवर्य—योगिराज—श्रीगोपालानन्दस्वामिविरचिते छान्दोग्योपनिषद्भाष्ये सप्तमोऽध्यायः ॥७॥

## अथाष्टमोऽध्यायः।

अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ॥१॥

अथेति विद्यान्तरोपक्रमे। यदिति प्रसिद्धानुवादः। इदमिति सान्निध्यात्[1]। अस्मिन्निति च[1]। ब्रह्मणः पुरमिदं शरीरम्, द्वारादिसाम्यात्पुरमुच्यते, 'पुरमेकादशद्वार'मिति चान्यत्र श्रूयते। इदं च ब्रह्मणः, तस्यैव लीलारसोपभोगाय हीदम्। जीवस्तु ग्रामाध्यक्ष इवानेन नियुक्तः केवलम्, नैसावता तस्येदम्। अस्मिन् ब्रह्मपुरे यदिदं दहरं अल्पम्—पुण्डरीकं वेश्म—अङ्गुष्ठपरिमितं हृदयकमलमिति यावत्। दहरोऽस्मिन्नन्तराकाशः—यो[2]ऽस्मिन्नन्तर्दहरः सूक्ष्म आकाशः, सदा जनानां हृदये सन्निविष्टः परमात्मा आ समन्तात्काशते प्रकाशत इत्ययमाकाश उच्यते, तस्मिन्यदन्तः, गुणजातमिति व्यक्तीभविष्यति। स च तच्चोभयमन्वेष्टव्यम्। नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामित्यनेनैकशेषः। निगूढं तदुभयं गुरूपसदनादिभिरुपायैरन्वेष्टव्यम्। तद्वाव विशेषतः श्रवणमननादिभिर्विजिज्ञासितव्यम्। अत्र श्रीमद्रामानुजाचार्यैः श्रीभाष्ये इदमभाषि—यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मेत्यनूद्य तस्मिन् दहरपुण्डरीकवेश्मनि यो दहर आकाशः, यच्च तदन्तर्वर्ति गुणजातं तदुभयमन्वेष्टव्यमिति विधीयते इति ॥१॥

---

१ सान्निध्यादित्यस्यानुषङ्गः। २ लिङ्गविपरिणामेनानुषङ्गमभिप्रेत्याह—य इति। छान्दो० २२

तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति ॥२॥

स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति ॥३॥

दहराकाशं तदन्तर्वर्तिं च विशदयन्ती श्रुतिरेवाशङ्कामुद्भाव्य परिहरति—तं चेदित्यादिना। तं चेद्ब्रूयुः—तमेवमुपदिशन्तं गुरुं शिष्याश्चेदजानन्तो हार्दं गुरोरन्यथा सम्भाव्य ब्रूयुः। किमिति ?। यदिदमस्मिन्पुरे वेश्म पुण्डरीकं तद्दहरम्, तत्र योऽन्तराकाशः स दहरः, ततोऽप्यल्पः, तदस्मिन्नल्पे किं विद्यते यदन्वेष्टव्यं स्यात् ?। पुण्डरीकादल्पस्य ततोऽप्यल्पस्यान्वेषणेन को महानर्थः स्यादिति यावत्। एवं पृष्टे गुरुर्ब्रूयात्, दहरपुण्डरीकान्तःस्थ आकाशो दहरो नाम, आविर्भावावच्छेदकस्थानापेक्षया। अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य। स तु न स्वरूपतोऽल्पः, यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदये आकाशः, दृष्टवस्तुषु वैपुल्यं प्रकृष्टमभिप्रेत्य अल्पताभ्रमापनोदनायेदमुदाहरणमादृतम्। वस्तुतोऽ-

नन्तस्तु सः। भूताकाशादत्यन्तविलक्षणोऽप्ययं प्रकाशविशेषनिमित्तयोगेनाकाशशब्देनोक्तः। यदयं द्युपृथिव्यादिनक्षत्रान्तस्य सर्वस्य कार्यवर्गस्य आधारभूतः, अरा इव रथनाभौ यस्मिन् सर्वं समर्पितम्। य एनमुपास्ते तस्यास्योपासकस्य यदिष्टमिह लोकेऽस्ति यच्च नास्ति एतल्लोकगम्यं लोकान्तरगम्यं वा तदखिलमस्मिन्नेव समाहितम्। तदाश्रयोऽयं सर्वेषां कामानाम्। आनन्दमयेऽस्मिन् समुद्रे गोष्पदवत्सर्व एवानन्दाः सन्तीति सर्वमस्मिन्समाहितमित्युपपन्नं नाम निरतिशयभोग्य इत्येतत् ॥२-३॥

तं चेद्ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितꣳ सर्वाणि च भूतानि सर्वे च कामा यदैनज्जरामाप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति ॥४॥

शिष्याशङ्कामनुवदति—तं चेदिति। तमाचार्यमेवमुपदिशन्तमाशङ्कमानाः पृच्छेयुः शिष्याः, किमिति?, एवं तु प्राप्तं ब्रह्मपुरेऽस्मिन् शरीरे सर्वमिदं सर्वाणि भूतानि सर्वे च कामाः समाहिता इति, यो दहराकाशो यच्च तद्वेश्म तदुभयं ब्रह्मपुरमाधारं ह्याश्रित्य वर्तते, ततश्च एनद्ब्रह्मपुरं शरीरं यदा जरामाप्नोति तदा प्रध्वंसत एवैनत्, मूलाधारे प्रणष्टे किमिति शिष्येत? सर्वमेव विनश्येदिति ॥४॥

स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको

**विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथाऽनुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥५॥**

परिहारप्रकारमाह—स इति। स गुरुरेवं प्रतिब्रूयात्—नास्य शरीरस्य जरया एतत्—दहरे पुण्डरीके वेश्मनि सन्निहितं जीर्यति, नास्य वधेन हन्यते, एतत्सत्यम्—अविक्रियम्, स्वरूपतः स्वभावतो वा विकारानर्हम्। इदं तु ब्रह्माख्यं पुरम्। इदं तु विलक्षणं पुरम्, यस्मिन्नन्तरेव समाहिते द्यावापृथिवी उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि, विचित्रभोग्यभोगोपकरणसम्पन्नतया पुरमिदम्। द्वारमात्रसाम्यात्तु तत्पुरमुक्तम्, विकारि च, ब्रह्मणः प्रादुर्भावविशेषावच्छेदकवेश्मसम्बन्धेन ब्रह्मणः पुरमुक्तम्। इदं तु ब्रह्मैव पुरम्। काम्यन्त इति कामाः—कल्याणगुणाः समाहिताः। उपासकस्य कामा नातोऽतिरिच्यन्ते। अन्ये च कामाभासा एव। उत्तरितमनेन यत्पृष्टं किं तदत्र विद्यते इति। कामानेव विशदयति—एष इति। अपहतपाप्मा—व्यपेतपुण्यपापः। विजिघत्सः—बुभुक्षारहितः। हेयप्रत्यनीकत्वमुक्तम्। सत्यकामः सत्यसङ्कल्पः—अनन्तकल्याणगुणाश्रय इत्येतत्। ये पुनरेनमात्मानं न विदन्ति ते प्राप्यापि कृतेन कर्मणा किमपि पारलौकिकं फलं परोपजीविन एव भवन्ति, तन्न सुखलेश एषामित्याह—यथा ह्येवेहेति। यथेह प्रजा यथाऽनुशासनम्—प्रभो-

र्नियमनमनतिलङ्घमाना एवान्वाविशन्ति—अनुसृत्यैवाविशन्ति तं तमर्थम् । दृश्यते ह्येतल्लोके—प्रजा यं जनपदं यं क्षेत्रभागं एवमादिं यं यमन्तम्—मनोरथस्यान्तं फलम्, प्रदेशविभागं वा । अभिकामा भवन्ति—कामयमाना भवन्ति प्रभोः प्रसादतः प्राप्यापि तं तं न तं प्रति प्रभवन्ति, किन्तु तं तं जनपदं क्षेत्रभागं वा उपजीवन्ति उपश्रित्य जीवन्ति । वृत्तिकर्शिता वृत्तिलाभेन कथञ्चिज्जीवन्ति नाम, नहि ते तस्य प्रभवः, प्रभुस्तु पार्थिव एव । एवकारस्य भिन्नक्रमेणान्वयः । उपजीवन्त्येवेति । एवमेवामुत्रेत्युत्तरत आकृष्यान्वयो बोध्यः । यस्य देवस्य प्रसादाद्यं लोकं गच्छति तस्यैव वशगः पशुरिव केवलमुपजीवतीति यावत् ॥५॥

तद्यथेह कर्मचितो लोकः क्षीयत एव-
मेवामुत्र पुण्यचितो लोकः क्षीयते ।

एवं पुण्यचितो लोकः पारतन्त्र्यनिरयलक्षण इत्युक्तम्, अथास्थिर इत्याह—तदिति । स्पष्टम् ।

तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्
कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवति ।

विदुषो विशेषं वदन् अविदुष उक्तमेव पारतन्त्र्यमनुवदति—तद्य इहेति । उक्तलक्षणमात्मानं दहराकाशमननुविद्य श्रवणमननादिभिरननुविद्य च सत्यान् कामान्[2]स्य, सत्ये ब्रह्मपुरे ये कामाः कल्याण-

१ अनुसृत्यैवाविशन्तीत्येतत् । कुत अवगम्यत इत्याशङ्कापरिहारपरतया उत्तरवाक्यमवतारयति—दृश्यत इति । उक्तोऽर्थो विशदीक्रियत इत्येतत् । २ अस्य—दहराकाशस्य ।

गुणास्ते सत्यास्ताननुविद्य, ये व्रजन्ति परलोकम्, तेषामकामचारः पारतन्त्र्यं भवति ।

**अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥६॥**

विदुषां विशेषमाह—अथ य इति । य इहात्मानमस्य सत्यांश्च कामाननुविद्य श्रवणमननादिभिर्व्रजन्ति, कम्? परमेव सर्वस्मात्, पर एव हि दहराकाश उपास्य एषाम् । तमननुविद्य व्रजतां ह्यन्यान्यो लोकः, अकामचारता च, तेषामेषां सर्वेषु लोकेषु कामचारो भवति—कर्मप्रक्षयात्, कर्मणैव हि पुण्यापुण्यलक्षणेन परवशता, अपहतपाप्मनामेषां न तत्प्रसङ्गः । अपहतपाप्मन उपासनादेते अपहतपाप्मानो नाम । ननु स्यात् कामचारता, सर्वेषु लोकेष्विति कथम्?, लोका हि कर्मफललक्षणाः, सत्यम्, ततः को विरोधः?, फलोपभोगार्थस्तत्सम्बन्धो हि विरुद्ध्यते, यथाकामं तु न, कर्मनियन्त्रितो हि यथाकर्म तेषु चरति, अयं तु यथाकामम्, स च यथाकर्म तत्र तत्र, अयं तु सर्वेषु, कर्मफललक्षणेष्वपि लोकेषु घटेत प्रवेशो मुक्तानामपि भगवदनुभवशेषतया, भगवतो विभूतिरिति हि सकलमिदमवधत्ते ॥६॥

इत्यष्टमाध्याये प्रथमः खण्डः ।

---

**स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते ॥१॥ अथ यदि मातृलोककामो भवति**

सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृ-
लोकेन सम्पन्नो महीयते ॥२॥ अथ यदि भ्रातृ-
लोककामो भवति सङ्कल्पादेवास्य भ्रातरः स-
मुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयते
॥३॥ अथ यदि स्वसृलोककामो भवति सङ्क-
ल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलो-
केन सम्पन्नो महीयते ॥४॥ अथ यदि सखि-
लोककामो भवति सङ्कल्पादेवास्य सखायः
समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो मही-
यते ॥५॥ अथ यदि गन्धमाल्यलोककामो
भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठत-
स्तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ॥६॥
अथ यद्यन्नपानलोककामो भवति सङ्कल्पादे-
वास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन स-
म्पन्नो महीयते ॥७॥ अथ यदि गीतवादित्र-
लोककामो भवति सङ्कल्पादेवास्य गीतवा-
दित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन स-

म्पन्नो महीयते ॥८॥ अथ यदि स्त्रीलोक-
कामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्ति-
ष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते ॥९॥

अथास्य सङ्कल्पमात्रेण कामा निष्पद्यन्त इत्याह—स यदीति । यस्तमात्मानमनुविद्य व्रजति स यदि पितृलोककामो भवति—पितृलोकः पितर एव लोकः, पितॄणां लोको वर्गो वा, तत्कामो यदि भवति, कामना चास्मिन्नस्य भगवद्विभूतितया, सङ्कल्पादेव सङ्कल्पमात्रेण, सामग्र्यन्तरनिरपेक्षम्, अस्य पितरः समुत्तिष्ठन्ते, तेन पितृलोकेन सहितो महीयते पूज्यते । शिष्टं स्पष्टम् ॥१-९॥

यं यमन्तमभिकामो भवति यं कामं
कामयते सोऽस्य सङ्कल्पादेव समुत्ति-
ष्ठति तेन सम्पन्नो महीयते ॥१०॥

यं यमन्तं प्रदेशमभिकामो भवति—कामयमानो भवति, यं काममन्यं वा कामयते, कामना चास्यास्मिन्पूर्ववद्बोध्या, सोऽस्य सङ्कल्पमात्रेण सिद्ध्यति । एतेन—सत्यकामत्वसत्यसङ्कल्पत्वगुणयोगोऽस्य प्रदर्शितो भवति । अवितथा ह्यस्य कामाः, सङ्कल्पश्चावितथः । इदमिह बोध्यम्—गुणाष्टकेषु प्रथमस्यापहतपाप्मत्वस्य कामचारो भवतीत्यनेन ज्ञापनात्, सत्यकामत्वसत्यसङ्कल्पत्वयोरन्त्ययोः स यदीत्यादिना ज्ञापनात् अपहतपाप्मत्वादिगुणाष्टकलक्षणस्वस्वरूपाविर्भावलक्षणं दहराकाशोपासनफलं ज्ञापितं भवतीति ॥१०॥

इत्यष्टमाध्याये द्वितीयः खण्डः ।

---

त इमे सत्याः कामा अनृतापिधानास्तेषाꣳ सत्यानाꣳ सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥१॥

नन्वेष ह्यात्मा, सन्निहितश्च हृदय एव, तत् सन्निहितेऽस्मिन्नात्मनि समाहितान् सत्यान् कामान् कल्याणगुणान् नानुविन्दन्त्याश्चर्यम्, इत्यत्राह—त इमे इति । त इमे अपहतपाप्मत्वादिलक्षणाः सत्याः कामाः सन्निहितगता अपि अनृताभिधाना यतो नानुविन्दन्ति सर्वे एव ततस्तान् । तेषां सत्यानां सतामनृतं कर्म आच्छादकम्, कामनामूलं कर्म अनृतमुच्यते भ्रममूलकत्वात् । कामनाया मूलं हि देहात्मभ्रमः स्वतन्त्रात्मताभ्रमश्च, अविद्यामूलकप्राचीनकर्मणा तिरोहिता इत्येतत् । तेनैवापिधानेन यो यो बन्धुः पिता भ्राता पुत्रो वाऽस्य प्रैति न तमिह पिधानव्यवहिते प्रदेशे दर्शनाय लभतेऽयम् ॥१॥

अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानाः ।

अथात्र गत्वा—प्रविश्यास्मिन् ब्रह्मपुरे[1] सत्ये विन्दते तत्सर्वम्, ये चास्य जीवाः—जीवन्तो बन्धवः प्रेता वा, यच्चान्यदिच्छन्न लभते पुरा, अपहतपाप्मा[2] ह्ययं तदानीम्, यस्त्वात्मानमस्य सत्यान्कामांश्चानुविद्य व्रजति स एव हि सत्यं ब्रह्मपुरं प्रविशति । अस्य उपसाकस्य

१ ब्रह्मपुरे—परमात्मनि ।　२ अपहतपाप्मा—अपगतकर्माच्छादन इति यावत् ।

कामाः—निरतिशयभोग्यतया कामनागोचरभूताः सत्या गुणा अपहतपाप्मत्वादयः अत्र परे ब्रह्मणि वर्तमाना अनृतापिधाना हि, अपगते अनृते—अनृतमूलककर्माच्छादने प्रकाशन्ते एव। अत एवोच्यते यच्चान्यदिच्छन्न लभते, तत्सर्वमत्र गत्वा विन्दत इति, निरतिशयभोग्यदिव्यगुणानुभवलाभात्। परे व्याचक्षते—अजानन्तो ब्रह्माख्यं पुरमजानन्तश्च दहरं पुण्डरीकं तद्वेश्मलक्षणं शरीरं च तत्पुरलक्षणमजानन्तः, देवोऽहं मनुष्योऽहं ब्राह्मणोऽहं क्षत्रियोऽहमित्यादिविविधानृताभिमानलक्षणतिरोधाननिरुद्धदृष्टयः पिण्डविशेषेषु तद्गुणेषु वा वस्तुतो दुःखोपाधिष्वानन्दादन्येष्वानन्दाभासोपाधिष्वानन्दताभ्रमेण तांस्तान् कामयन्ते, को ह्यभ्रान्त आनन्दादन्यं कामयेत, तदेषां कामा अनृताभिमानमूलत्वादनृताः कामाः। य एष अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प अस्मिन्सत्ये ब्रह्मपुरे सर्वे सत्याः कामाः समाहिता इति।

**तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥२॥**

अनृतापिधानतां दृष्टान्तनिरूपणमुखेनोपपादयति—तद्यथेति। यथा हिरण्यनिधिमन्तर्निगूढमक्षेत्रज्ञाः—क्षेत्रस्वभावानभिज्ञा उपर्युपर्यन्वहं सञ्चरन्तोऽपि न विन्देयुः, एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्योऽपि—सुषुप्तौ सङ्गच्छन्त्योऽप्येतं ब्रह्मलोकं न विन्दन्ति। यद्वा—

१ तद्वेश्मेत्यजानन्त इति यावत्। २ तस्य पुरमित्यजानन्तः। ३ जडत्वात्।

अहरहर्गच्छन्त्योऽपि—अन्तर्यामिण्येवास्मिन्नन्वहं सञ्चरन्त्योऽपि न विन्दन्त्येतं ब्रह्मलोकमन्तर्याम्यात्मतत्त्वलक्षणम् । ब्रह्मैव लोको ब्रह्मलोकः । तत्र हेतुमाह—अनृतेन हीति । प्रत्यूढाः—विपरीतं नीताः, विपरीतात्मग्रहाविष्टा इति यावत् । अनृतेनेति व्याख्यातम् ॥२॥

स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयम् । अहरहर्वा एवंवित्स्वर्गं लोकमेति ॥३॥

हृदयशब्दनिर्वचनमुखेन हार्दाकाशस्यान्तरात्मतां द्रढयन्नाह—स वेति । स एषः—यस्मिन् सत्याः कामाः समाहिताः, यं न विन्दन्त्यनृतेन प्रत्यूढाः स एष आत्मा हृदि—हृदयपुण्डरीके सन्निहितः । अत एव तस्य हृदयमिति नाम्नः एतदेव निरुक्तम्—निर्वचनम् । किमिति ? हृदयमिति । अत एव हेतोर्हृदयमिति नाम्नः प्रवृत्तिः । इतश्च नामनिर्वचनाद्धार्दाकाशस्यात्मत्वं व्यक्तम् । अहरहः आप्रयाणादेवंवित्—हार्दाकाशमेवंप्रकारमनुस्मरन् स्वर्गं लोकमेति—निरतिशयसुखलक्षणं परब्रह्माख्यं लोकमेति ॥३॥

अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥४॥

मुक्तोपसृप्यत्वलक्षणं विशेषं हार्दाकाशस्य प्रदर्शयंस्तममृतत्वादिलक्षणैर्विशिनष्टि—अथेति । अथेति विशेषान्तरप्रस्तावे वर्तते । स एष सम्प्रसादः—योऽहरहरेवंवित्प्रस्तुतः स एष सम्प्रसादः—स हि हार्दाकाशनिध्यानात् बाह्याभिमानलक्षणकालुष्यापगमेन वर्षापगमेन प्रसन्न इव जलाशयः संप्रसादैकस्वभावः । शैत्यं हि यत् सा प्रकृतिर्जलस्येतिवत् ज्ञानैकघनस्य जीवात्मनः सम्प्रसादः प्रकृतिरिति सामान्यतो जीवात्मैव वा सम्प्रसादशब्देनोच्यते । स एष इति विशेषाच्च प्रकृत उपासकः । अस्मात् शरीरात्—प्रारब्धक्षये समुत्थाय, अन्यत्र च श्रूयते—'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति । परं ज्योतिः—परब्रह्मलक्षणं उपसम्पद्य स्वेन रूपेण—स्वासाधारणेनापहतपाप्मत्वादिना अभिनिष्पद्यते—आविर्भवति । एषः—अभिसम्पदनीयः परज्योतिर्लक्षणः आत्मा—उक्तो हार्दाकाश आत्मा । परैरपि—यत्परंज्योतिरुपसम्पद्यते एष आत्मेत्यभिसम्पदनीयपरतयैवैतच्छब्दो व्याख्यातः । स्वं परं ज्योतिरिति तु विशेषः परव्याख्याने जीवस्यार्थान्तरत्वप्रतिषेधाय । स च न श्रौतोऽर्थः । अथ परं ज्योतिश्चेत् परम्, कथमपरं प्राप्तस्य स्वेन रूपेणाभिनिष्पत्तिः । को विरोधः ? । न हि परज्योतिरुपसम्पत्तिस्तत्स्वरूपापत्तिः । प्राप्तिर्हि सा । ननु ग्रामादिवत् कथं प्राप्यता । सर्वतः सतोऽपि तस्य देशविशेषावच्छेदेनोपलम्भो ह्यपूर्वो घटेत । ननु तद्योगात्सम्भवदपूर्वमेव रूपं स्यात्, स्वेनेति व्याहतम् । नैतत् । सहजमेव रूपं प्राक् ब्रह्मसम्पत्तेः कर्मणा तिरोहितं कर्मक्षये तदुपसम्पत्तिसमसमयमेवाविर्भवतीत्यनवद्यम् । न च तरङ्गाणामिव तोयधेः सम्प्रसादानां परस्माज्ज्योतिषोऽनर्थान्तरता ।

अर्थान्तरत्वं तत्र तत्र हि श्रूयते । एतत्तत्त्वं त्वन्यत्र । एतत्—परं ज्योतिर्लक्षणमात्मतत्त्वं दहराकाशशब्दनिर्दिष्टं अमृतमभयम्—अमृतमानन्दमयत्वादभयं दुःखासम्भिन्नत्वात् । अत एव चैतद्ब्रह्म । उपासनास्तुतये उपास्यनाम स्तुवन् उपास्यस्य नाम निर्दिशति—तस्येति । स्पष्टोऽर्थः ।

तानि ह वा एतानि त्रीण्यक्षराणि स ती यमिति तद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यं अथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यं अहरहर्वा एवंवित्स्वर्गं लोकमेति ॥५॥

अक्षरनिर्वचनमुखेन नाम स्तूयते—तानि ह वा एतानि त्रीण्यक्षराणि—दहराकाशस्य वाचके सत्यमिति शब्दे तान्येतानि स ती यमिति त्रीण्यक्षराणि भवन्ति, तीत्यत्रोच्चारणसौकर्यार्थं ईकारः । तत्र तद्यत् सत्—तकारान्तो निर्देश उच्चारणार्थः । सकार इत्येतत् । तत्तु अमृतम्, यदमृतं तत्सकार एव । यत्ति तन्मर्त्यम्—यन्मरणधर्म तदखिलं तकारः । उभे यच्छति स्ववशे तद्यम् । तस्माद्यमुच्यते । एवमक्षरमहिमोपवर्णनेनोपास्यं वाच्यं स्तुतं भवति । यद्वा न स्तुतिमात्रमेतत् । किन्तु नामनिर्वचनमुखेन वाच्यस्य दहराकाशस्यासाधारणः स्वभावविशेषो बोध्यते । तत्र—अमृतमिति जीवात्मस्वरूपम्, मर्त्यमिति प्राकृतमचेतनस्वरूपम्, तदुभयात्मकं प्रपञ्चमन्तर्यामीभूय नियमयतीत्ययमर्थ एकैकाक्षरनिर्वचनमुखेन ज्ञाप्यते ॥५॥

इत्यष्टमाध्याये तृतीयः खण्डः ।

---

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ॥१॥**

दहराकाशस्य जगद्विधरणाख्यो विशेष उच्यते—अथेति। अथेति विशेषान्तराख्यानोपक्रमे। य आत्मा—दहराकाशशब्दनिर्दिष्टः पूर्वं प्रस्तुतः स सेतुः—सेतुरिव सेतुरुच्यते। केन सामान्येन?, आह—विधृतिरिति। विधारको ह्ययम्। अनेनाविधृता हि लोकाः सङ्कीर्णाः स्युः, तदेतत्कर्तृका विधृतिरेषां लोकानामसम्भेदाय—असाङ्कर्याय। अन्यथा पृथिव्या एव काठिन्यं जलस्यैव शैत्यं अग्नेरेवौष्ण्यमित्यादिस्वभावनियत्यादिभिर्व्यवस्थितं तत्तन्न स्यात्। अहोरात्रे नैतं सेतुं तरतः—तरतिः प्राप्तिवचनः। अहोरात्रलक्षणकालविभेदो नास्य परिच्छेदक इति यावत्। अत एव न जरा न मृत्युः। न सुकृतं दुष्कृतं न शोकः। सर्वे पाप्मानोऽतो निवर्तन्ते न स्प्रष्टुमीशते। स्वतोऽपहतपाप्मा ह्येष ब्रह्मलोकः—ब्रह्माख्यो लोकः ॥१॥

**तस्माद्वा एतं सेतुं तीर्त्वा अन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवति उपतापी सन्ननुपतापी भवति। तस्माद्वा एतं सेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥२॥**

यस्मादपहतपाप्माऽयं दहराकाशस्तस्मात्तमेतं सेतुं धारकं सर्वेषां

लोकानां तीर्त्वा—प्राप्य पूर्वमन्धोऽपि सन्ननन्धो भवति विद्धोऽपि सन्नविद्धो भवति उपतापी सन्नपि अनुपतापी भवति । परज्योतिःसम्पत्तेः पूर्वमप्रक्षीणकर्मणो हि शरीरयोगात्तदुपाधिकान्ध्यवेधज्वराद्यभिमानयोगः । प्रक्षीणे तु कर्मणि परज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पन्नस्य क्व तद्योगः । किन्त्वनान्ध्यादिस्वाभाविकरूपाविर्भाव एवेति भावः । प्राकृतदेहापगमपूर्वकं प्राप्तदिव्यदेहस्यानन्धत्वादयो वा विवक्षिताः । यस्मादेतं सेतुमहोरात्रे न तरतः, तस्माद्वा एतं सेतुं तीर्त्वा—प्राप्य नक्तमप्यहरेव भवति, नाहोरात्रविभागो भवतीत्येतत् । सकृद्विभातो ह्येष ब्रह्मलोकः—सततैकरूपप्रकाशस्वरूपो ह्येष ब्रह्माख्यो लोकः । परं ज्योतिरिति च पूर्वमुक्तम् ॥२॥

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानु-
विन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां
सर्वेषु लोकेषु कामचारो भवति ॥३॥

अस्य ब्रह्मलोकस्य प्राप्तौ प्रधानमुपकरणमाह—तद्य एवैतं ब्रह्मलोकमिति । ये नाम एतं ब्रह्मलोकं ब्रह्मचर्येण—स्त्र्यादिविषयत्यागलक्षणेन ब्रह्मचर्येण अनुविन्दन्ति—अनु—आचार्योपदेशमनु विन्दन्ति—अवगच्छन्ति, उपासते, तेषामेवैष ब्रह्मलोकः सर्वेषु लोकेषु कामचारश्च, न ब्रह्मचर्यलक्षणप्रधानोपकरणरहितानां कामकामानाम्, नाप्युपदेशनिरपेक्षमुक्तेनाप्युपकरणेन यतमानानाम् ।

इत्यष्टमाध्याये चतुर्थः खण्डः ।

अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत् ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दते । अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत् ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ॥१॥

ब्रह्मलोकसाधने प्रधानोपकरणं प्रस्तुतं ब्रह्मचर्यं स्तौति—अथेति । यज्ञ इति यदाचक्षते साधनं ब्रह्मचर्यमेव तत् । तत्कथम् ?, आह—ब्रह्मचर्येणैव हि उपकरणेन यो ज्ञाता तं विन्दते, यज्ञसाध्यवेदनसाधनत्वाद्भवति ब्रह्मचर्यमेव यज्ञाख्यं साधनम् । अपि चास्ति यज्ञशब्दान्वयः । यो ज्ञातेत्यत्र यकारज्ञकारयोर्योगेन तदन्वयात् । अथ यदिष्टं साधनमाचक्षते तदपि ब्रह्मचर्यमेव । ब्रह्मचर्येण ह्येवेष्ट्वाऽत्मानमनुविन्दते । इष्टसाध्यं कार्यमप्यनेनैव सिद्ध्यतीति इष्टमपीदमेवेति भावः । इष्ट्वेत्यत्र इष्टशब्दान्वयात्—इष्टयोगो ब्रह्मचर्येऽस्तीत्यपि बोध्यम् ।

अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तत् ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते ॥२॥

अथ यत्सत्त्रायणमिति साधनं किञ्चिदाचक्षते ब्रह्मचर्यमेव तत्, कस्मात् ?, ब्रह्मचर्येणैव हि सत आत्मनः त्राणं संसारभयाद्विन्दते यस्मात् । शब्दयोगः पूर्ववत् । सत्त्रायणं नामानेकयजमानकर्तृको

यागविशेषः । आत्मानमनुविद्य—गुरोरनुविद्य मनुते—पश्चाद्ध्यायतीत्यर्थः । स्पष्टमितरत् ॥२॥

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तत् एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दतेऽथ यदारण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत् तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरम्मदीयं सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम् ॥३॥

अनशनप्रधानो व्रतविशेषः अनाशकायनम् । ब्रह्मचर्यमेव तत् । कथम् ? । एष ह्यात्मा न नश्यति । तदयमात्माऽनाशकः । यमेनमनाशकमात्मानं ब्रह्मचर्येण विन्दते, तद्ब्रह्मचर्यमेवानाशकायनमिति युक्तम् । अथ यदरण्यायनम्—अरण्यनिवासप्रधानस्तपोविशेषस्तद्ब्रह्मचर्यमेव । कस्मात् ? । अरण्यायनत्वसाम्यात् । तथाहि—अरश्च ह वै ण्यश्चार्णवौ—अर्णवाविव सरोवरावरण्यनामकौ ब्रह्मलोके स्तः । परस्य ब्रह्मणो लोकविशेषो ब्रह्मलोकः । स चेतस्तृतीयस्यां दिवि—ऊर्ध्वाधोविभागेन भिन्नात्प्राकृतादेशादुपरिष्टात् तृतीयस्यां दिवि, अप्राकृते द्युलोके । अपि च तत्—तत्र ऐरंमदीयं सरः—इरा—अमृतं तस्या इदमैरम्, अमृतमयम् । मदावहं च तत्रत्यानाम् । हर्षावहमित्येतत् । तदश्वत्थः सोमसवनः—सोमसवननामकोऽश्वत्थस्तत्र । तत्र अपरा-

जिता पूः—अपरैर्विषयसक्तैः प्राप्तुमशक्यत्वादपराजिता, निरवधिकातिशयतयाऽनपकृष्टत्वाद्वा अपराजिता। पूः—पुरी ब्रह्मणः परस्य। तत्र च प्रभुविमतम्—प्रभुणा सर्वेश्वरेण विशेषतो मतम्। सदा सर्वत्र सन्निहितेनापि आत्मीयदेशविशेषतया नित्यमुक्तोपसेव्यत्वेन मतम्। तच्च हिरण्मयम्—प्रकाशमयम् ॥३॥

तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥४॥

तत्र ब्रह्मलोके वर्तमानावरण्यावर्णवौ ब्रह्मचर्येणानुविन्दन्ति ये तेषामेवैष ब्रह्माख्यो लोकः, तेषां सर्वेषु लोकेषु कामचारश्च। तदरण्यायनत्वात्साम्याद्ब्रह्मचर्यमेवारण्यायनम्। तदेवं मुमुक्षोरन्तरङ्गोपकरणं विद्यानिष्पत्तौ स्तुतं भवति ॥४॥

इत्यष्टमाध्याये पञ्चमः खण्डः।

---

अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसावादित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ॥१॥

विदुषो मूर्धन्यया नाड्या निर्गमनं ब्रह्मलोकप्राप्तिसाधनं प्रतिपादयन्नाडीः प्रस्तौति—अथ या एता इति। अथेति वक्तव्यार्थान्त-

शरम्भे । या एता हृदयस्य नाड्यः—हृदयस्य संबन्धिन्यो नाड्यः, हृदयपुण्डरीकमभिसम्बद्धास्ततः परितः प्रसृताः, ता नाड्यः पिङ्गलस्याणिम्नस्तिष्ठन्ति, पिङ्गलैरणुभिः सूक्ष्मैरन्नरसैः परिपूर्णास्तिष्ठन्तीत्येतत् । तथा शुक्लस्याणिम्नः नीलस्याणिम्नः पीतस्याणिम्नः लोहितस्याणिम्नः । यद्यप्येते भुक्तान्नरसलक्षणाः, तथाप्येषां नानावर्णता तु आदित्यरश्मिसम्बन्धादेव, आदित्यस्य रश्मीनां नानारूपत्वं प्रसिद्धमित्यभिप्रेत्याह—असावादित्यः पिङ्गल इत्यादिना । चित्रभानुर्ह्ययम् । पिङ्गलादिविविधवर्णरश्मिमयो ह्ययमादित्य इति भावः ॥१॥

तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ॥२॥

स्यादादित्य ईदृशः, हृदयेन कोऽस्य रश्मीनां सम्बन्धः ? तदाह—तद्यथेत्यादिना । अध्यात्मं नाडीनामादित्यरश्मीनां चायं सम्बन्धः, यथा महापथो विस्तीर्णः कश्चित् इमं ग्रामं ग्रामान्तरं चाततो—व्याप्तः उभौ ग्रामौ गच्छतीमं च सन्निकृष्टममुं च विप्रकृष्टम् । एवमादित्यस्य रश्मयः उभौ लोकौ गच्छतः इमं च मानुषममुं चादित्यमण्डलम् । तदेव स्पष्टयति—अमुष्मादादित्यात्प्रतायन्ते प्रसारमुपयान्ति, ताश्चासु नाडीषु हृदयस्य सृप्ताः सम्बद्धा भवन्ति, आभ्यो नाडीभ्यः प्रतायन्ते ते संहताः अमुष्मिन्नादित्यमण्डले सृप्ता भवन्ति ॥२॥

**तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा संपन्नो भवति ॥३॥**

यत्र—यदा सुप्तो जीवः, कथम्भूतः सन्, समस्तः सन्—समुपहृतसकलकरणव्यापारः सन्, अतएव च संप्रसन्नः—बाह्यदेहाद्यभिमानौपयिकविज्ञानप्रसरणासम्भवेन वैषयिकसुखदुःखादिकलङ्करहितः स्वप्नं मानसमपि वासनाकृतं न विजानाति—नानुभवति, तदा आसु नाडीषु पिङ्गलादिरसपरिपूर्णासु सृप्तो भवति—प्रविष्टो भवति । ताभिः पुरीतति प्रविश्य तेजसि परमात्मनि सम्पद्यते इत्याशयः । श्रूयते चान्यत्र—'ताभिः प्रत्यवसृप्य पुरीतति शेते' इति । तं सुप्तं न कश्चन पाप्मा स्पृशति—नास्य तदा पाप्मनां सम्बन्ध आरम्भलक्षणो भोगलक्षणो वा । कस्मात्? तेजसा हि परमात्मना परेण ज्योतिषा सम्पन्नो भवति । बाह्याभिमानप्रयोजकराहित्यान्न तत्स्पर्शावकाश इति भावः ॥३॥

**अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥४॥**

यदैतदबलिमानं शरीरपातसन्निकृष्टसमयसम्भवं कार्श्यमुपनीतो भवति पुरुषस्तदा तमभित आसीना बन्धवो मां प्रत्यभिजानासि मां प्रत्यभिजानासीति वदन्ति । स पुरुषो यावदस्माच्छरीरादनुत्क्रान्तो भवति तावदुत्तरयति नाम जानामीति, शिरो वा चालयति ॥४॥

अथ यत्रैतस्माच्छरीरादुत्क्रामति अथ तैरेव रश्मिभिरूर्ध्वमाक्रामते । स ओमिति होद्वामीयते । स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति । एतद्वै खलु लोकद्वारम् । विदुषां प्रपदनं विरोधोऽविदुषाम् ॥५॥

प्रसक्तं परिसमाप्य प्रकृतमाह—अथेति । अथ यदा एतस्माच्छरीरादुत्क्रामति तदा तैरेव रश्मिभिर्नाडीषु सृप्तैर्मार्गभूतैरूर्ध्वमुत्क्रामते योऽसौ विद्वान् । अविदुषां हि 'विष्वङ्ङन्या उत्क्रमणे भवन्ती'ति गतिः श्रूयते । स हि विद्वान् अन्तिमसमये ओमित्यनुसरन् ह्युद्वामीयते मरणं प्राप्नोति । अत एवान्तिमस्मरणबलेनोर्ध्वमुत्क्रान्तः सपदि गच्छत्यादित्यमण्डलम् । क्षणेनेत्येतल्लक्ष्यते यावन्मनः क्षिप्येदिति । एतद्वै खलु लोकद्वारं लोकस्य ब्रह्मलोकस्य द्वारम्, अत एव प्रपदनं विदुषाम्—विदुषामेव लोकप्रापकमेतदादित्यमण्डलम्, अविदुषां तु निरोधः—लोकप्राप्तौ प्रतिबन्धकः । अविदुषां नैतन्मण्डलगमनसम्भव इति भावः ॥५॥

तदेष श्लोकः । शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥६॥

तस्मिन्नस्मिन्विषये एष वक्ष्यमाणः श्लोकः ऊर्ध्वगमनविवेचकः । तथाहि—हृदयकमलमभिसम्बद्धाः प्रधाननाड्यः शतं चैका च । तास्वेका मूर्धानमभिनिःसृता । तया मूर्धन्ययोर्ध्वमायन्—गच्छन्नादित्यमण्डल-

मनुप्राप्यामृतत्वमेति । अन्यास्तु विष्वगुत्क्रमणे साधनानि भवन्ति । अन्याभिर्निःसृतानां गतागतलक्षणसंसारगतिरेवेति भावः ॥६॥

इत्यष्टमाध्याये षष्ठः खण्डः ।

---

य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥१॥

'य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति पूर्वं परज्योतिःसम्पत्तौ स्वरूपाविर्भाव उक्तः । किं तत्सम्प्रसादस्य स्वं रूपम्, तत्स्पष्टं वक्तुमुपक्रमते । परज्योतिर्निष्ठस्य (दहरविद्यानिष्ठस्य) यथाक्रतुन्यायेन परज्योतिःसम्पत्तावपि अचिन्तितस्वरूपाविर्भावो वा कथमित्यत्र वक्तव्यमिदम्-यद्दहरविद्यानिष्ठो न स्वात्मस्वरूपचिन्तनरहितः । ब्रह्मविद्यायां प्रत्यगात्मवेदनमङ्गभूतं, तदनिष्पत्तौ तदनिष्पत्तेरिति । अतश्च दहरविद्याङ्गभूता प्रत्यगात्मविद्या इह निरूपणीया । तां निरूपयितुमुपक्रमते—य आत्माऽपहतपाप्मेत्यादिना । यतश्चाङ्गत्वं प्रत्यगात्मविद्यायास्तन्नास्याः पृथक्फलापादनसामर्थ्यम् । स्वेन रूपेणाभिनिष्पत्तिरप्यङ्गिफल एव त्वन्तर्भवति । इति ह प्रजापतिरुवाचेत्याख्यायिकाकथनमुखेनोपक्रमो विद्यास्तुतये । प्रत्यगात्मा हि स्वतोऽपह-

तपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः । सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । अङ्गमङ्गिफलेन स्तौति—स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य शास्त्रत उपदेशाद्विज्ञाय विजानाति—उपास्ते इति ॥ १ ॥

तद्धोभये देवासुरा अनुबुबुधिरे । तेहोचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानिति । इन्द्रो ह वै देवानामभिप्रवव्राज । विरोचनोऽसुराणाम् । तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥२॥

तदिदं प्रजापतेर्वचनं देवाश्च असुराश्च कर्णाकर्णिकया अनुबुबुधिरे—अशृण्वन् । श्रुत्वा च ते—देवाश्चासुराश्च स्वस्वसदसि ऊचुः—यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामांस्तमात्मानमन्विच्छामः—गुरोरुपदेशाद्विज्ञास्याम इति । एवमभिसम्मन्त्र्य सपदि देवानां मध्ये इन्द्रः प्रवव्राज—स्वभवनात्परित्यक्तसर्वोपकरणः स्वयमेकाकी प्रजापतिमभिप्रवव्राज । विरोचनश्चासुराणां मध्ये । ताविन्द्रविरोचनौ मिथोऽसंविदानावेव—परस्परमप्रज्ञापितस्वस्वाशयावेव समित्पाणी—शिष्यभावानुगुणमुपायनहस्तौ प्रजापतेः सकाशमाजग्मतुः ॥२॥

तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति । तौ होचतुर्य आत्माऽपहतपाप्मा विजरो वि-

मृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्य-स्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते तमिच्छन्तावर्वास्तमिति ॥३॥

तौ हेन्द्रविरोचनौ प्रजापतेरवसरप्रतीक्षौ द्वात्रिंशद्वर्षाणि ब्रह्मचर्य-मूषतुः । प्रजापतिस्तौ चिरादन्तेवासिनियमेन वर्तमानाविदमपृच्छत्—किमिच्छन्ताविहेयन्ति वर्षाण्यवास्तम्—उषितवन्ताविति । एवं पृष्टौ प्रजापतिना तावूचतुः । ये केचिन्महान्तो वेदयन्ते—जानन्ति नाम भगवतो वचनम्—अपहतपाप्मेत्यादि । तमात्मानं ज्ञातुमिच्छ-न्ताविहैतावन्ति वर्षाण्यवसरप्रतीक्षाववास्तम्—उषितवन्तौ । अत्र पुरु-षव्यत्ययश्छान्दसः ॥ ३ ॥

तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमेतदभ-यमेतद्ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति एष उ सर्वे-ष्वन्तेषु परिख्यायते इति होवाच ॥४॥

तौ ह प्रजापतिरिदमुवाच—य एषोऽक्षणि पुरुषो दृश्यते—अक्षणि हि पुरुषस्य स्थितिः परीक्ष्यते अक्षण्यविकृते पुरुषस्यास्तित्वं

विकृते च तदसत्त्वं निश्चीयते सोऽयमितरो देहात्करणाच्चेन्द्रियत एष आत्मेति एतदमृतमभयमेतद्ब्रह्म—असङ्कुचितज्ञानस्वाभाव्यात् ब्रह्मेति च । यद्वा—अक्षणीत्युपलक्षकं घ्राणादीनां । योऽसौ तत्त्वविवेचनसमर्थैश्चक्षुरादिषु कार्योन्मुखेषु (स्वस्वकार्यं प्रति प्रवृत्तेषु) सङ्घातरूपमेतच्चेतयन्नन्यः पुरुषोऽस्तीति दृश्यते—निश्चीयते यथा रथे प्रचलति सारथिरधिष्ठाताऽवधार्यते तथा । व्युल्लङ्घितजाग्रदाद्यवस्थं स्वस्वरूपेऽवस्थितं प्रत्यगात्मानमुपदेष्टुं प्रवृत्तो हि प्रजापतिः । अव्यवहिते पर्यायद्वये हि स्वप्नसुषुप्त्यवस्थयोरस्ति निरूपणम् । तदस्मिन्प्रथमे पर्याये जाग्रदवस्था तु प्रकृता । जाग्रदवस्थायां वा स्वप्नावस्थायां यश्चेतयिता स तु तत्तदवस्थोपलक्षितोऽपि चेतयितृत्वेनासाधारणेन स्वभावेन सम्पन्नस्तत्तदवस्थापादककरणादिभ्योऽत्यन्तभिन्नः स्वतोऽपहतपाप्मैवायं प्रत्यगात्मेति हि उपदेष्टुराशयः । श्रोतारौ त्वपरिशुद्धान्तःकरणाविन्द्रविरोचनौ प्रजापतेर्वचनं 'य एषोऽक्षणि पुरुषो दृश्यते' इत्येतदुपश्रुत्य सन्मुखमवस्थितैर्योऽक्षणि छायापुरुषो दृश्यते सोऽयमात्मेत्यवधार्य स्वावगतार्थदार्ढ्यायेदमूचतुः—योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे सोऽप्यक्षणीव सन्मुखं सता दृश्यते, तेष्वेषु स आत्मा कतमः ? । स्थानभेदेन छायात्मनामात्मत्वेऽस्ति भेदः, आहोस्वित् सर्वे एवैते आत्मान एकरूपाः, इति । प्रजापतिरनयोरन्यथाग्रहणमवगत्यापि सम्यगमृदितकषायाय विद्योपदिश्यमाना नार्थकरी स्यादित्यवधार्य तदवधारणप्रकारमप्रतिषिध्यैव तावनुमोदयन्निवेदमाह—'एष उ सर्वेष्वन्तेषु परिख्यायते' इति । आपाततः इदं वचनं दृढयतीवेन्द्रविरोचनयोरभिप्रायम् । उपदेष्टुः प्रजापते-

स्त्वन्तर्निगूढो वचनाशयस्त्वयम्—आपो वा स्युरादर्शो वा स्यात्, तेषु तेष्वन्तेषु स्थानेष्वर्थावभासकेषु जाग्रद्दशायां परिख्यायतेऽयमेवात्मा, नह्यचेतनसम्पत्तिमात्रेण परिख्यातिः, ख्यातिर्हि चेतनधर्मः, तत् यथा सर्वत्र दिगन्तेषु प्रसृतै रश्मिभिः प्रकाशते तेजस्वि किमपि मण्डलम् । तथा तत्तदुपकरणानि चेतयंस्तत्रतत्र विवेचकैः ख्यायतेऽयमात्मेति ॥४॥

इत्यष्टमाध्याये सप्तमः खण्डः ।

---

उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति । तौ होदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति ॥१॥

प्रजापतिरनुकम्पयाऽनयोर्विपरीतग्रहमपनुदन्निदमाह—उदशरावे उदकपरिपूर्णे शरावे आत्मानमवेक्ष्य यत्—यदि आत्मनो न विजानीथः—आत्मस्वरूपेऽनवधारणमवधृतांशे वाऽन्यथादृष्टिस्तर्हि मे प्रब्रूतमिति । एवं वदतोऽस्यायमभिप्रायः—अनेनोदशरावनिरीक्षणोपायेनानयोरयमन्यथाग्रह अपगच्छेदिति । यथानिर्देशं तावुदशरावेऽवेक्षाञ्चक्राते । गृहीतार्थे तु शङ्का कापि न समभूदनयोः । अतो निर्विशङ्कमवस्थितावेनौ पुनरनुकम्पया प्रजापतिरुवाच—किं पश्यथ इति ।

तौ होचतुः—सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्य आनखेभ्यः प्रतिरूपमिति ॥१॥

तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति । तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥२॥

प्रजापतिस्त्वनाशङ्कामनुवर्त्तमानामनयोः प्रतिरूपात्मबुद्धिमपनयन् पुनरादिदेश—साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति । आदेष्टुरयमाशयः—पुनरन्यथा प्रतिरूपदर्शने स्यादनयोर्विवेकः प्रतिरूपं न तात्त्विकम्, किन्तु सन्निहितरूपौपाधिकम्, तत्कथमयमात्मा स्यादितीति । तौ ह यथानिर्देशमलङ्कृतशरीरौ भूत्वोदशरावेऽवेक्षाञ्चक्राते ॥२॥

तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भवतः साध्वलङ्कृतौ सुवसनौ परिष्कृताविति एष आत्मेति होवाचैतदमृतमेतदभयमेतद्ब्रह्मेति । तौ ह शान्तहृदयौ प्रवव्रजतुः ॥३॥

अथाप्यनुपजाताशङ्कौ तौ प्रजापतिरुवाच—किं पश्यथ इति । तौ चानुद्भूताशङ्कौ यथाग्रहमूचतुः—यथैवेदमावां भगवः साध्वलङ्कृतौ एवमेवेमावपि प्रतिरूपात्मानौ साध्वलङ्कृताविति । अथ प्रजा-

पतिरपरिपक्कान्तःकरणकषायाविमौ कालेन शिक्षणीयाववधार्य गृहं समावर्तयन्नाहेदम्—एष आत्मा एतदमृतमेतदभयमेतद्ब्रह्मेति । प्रजापतिः स्वहार्दगतमेव एतच्छब्देन निर्दिशति गूढम् । तौ चात्महृदयानुगुणमेवावधृत्य प्रशान्तहृदयावेव स्वस्वभवनं प्रति प्रवव्रजतुः ॥३॥

तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति । स ह शान्तहृदय एव विरोचनोऽसुरान्जगाम तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ॥४॥

तौ शान्तहृदयौ व्रजन्ताविन्द्रविरोचनावन्वीक्ष्य स्वयमिदमुवाच—आत्मानं याथातथ्येनापरिज्ञाय अनुपासित्वा तावेतौ व्रजतः । ये नामैतदुपनिषदो भविष्यन्ति—इन्द्रेण वा विरोचनेन वा प्रतिबोधिता एतद्विज्ञाना भविष्यन्ति, अयमेवात्मेति शरीरे तत्प्रतिरूपे वा कृतात्मनिश्चया भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्ति अनर्थैः । तेषामनर्थ एव स्यादिति यावत् । स्वभवनं प्रस्थितयोस्तयोर्विरोचनः शान्तहृदय एवासुरान् जगाम । गत्वा तेभ्योऽसुरेभ्य इमामुपनिषदं प्रोवाच—काम् ?, आत्मैव वपुरात्मक इह महय्यः—पूजनीयः स एव तु परिचर्यः—परिचरणीयश्च, इह लोके आत्मानमेव शरीरलक्षणं मह-

यन्-पूजयन् परिचरन्नुभौ लोकाविमं चामुं चाप्नोतीति, शरीरान-तिरिक्तात्मविज्ञानलक्षणाममुपनिषदममुपदिदेश ॥४॥

तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहु-रासुरो बतेत्यसुराणां ह्येषोपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति संस्कुर्वन्ति । एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥५॥

तत आरभ्य विततो नाम लोके वैरोचनः सम्प्रदायो देहानति-रिक्तात्मोपासनोपदेशलक्षणः । तस्मादेवाद्यापि लोके अददानमश्रद्द-धानमयजमानमाहुरासुरोऽयमिति । देहात्माध्यासवान्हि पुरुषो भवत्य-ददानः अश्रद्दधानः अयजमानश्च । प्रेतस्य शरीरं भिक्षया वस्त्रान्नादि-लक्षणया; भिक्षित्वाऽपि प्रेतं संस्कुर्वन्तीत्येतत् । वसनेनालङ्कारेण च संस्कुर्वन्ति । अनेन प्रेतसंस्करणेन परं लोकं जेष्यन्तो मन्यन्ते । असुराणां ह्येषोपनिषत्-आत्मनिश्चयलक्षणा ।

इत्यष्टमाध्यायेऽष्टमः खण्डः ।

---

अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिन् शरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन् अन्धेऽन्धो भवति स्रामे स्रामः

परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥१॥

इन्द्रस्तु प्रकृत्या दैव्या सम्पदा सम्पन्नः पुनः पुनः पथि तमेवोदशरावे दृष्टं छायापुरुषमनुस्मरन् देवानप्राप्यैव स्वावधृतेऽर्थे भयमिदं ददर्श। हन्तातात्त्विके तात्त्विकदृष्टिर्हि मया कृता, अन्यथैवावधृतमर्थस्वरूपम्। नहि छायात्मा शरीरसत्तातिरिक्तसत्ताकः। शरीरे साध्वलङ्कृते भवत्ययं साध्वलङ्कृतः सुवसने सुवसनः सुसंस्कृते सुसंस्कृतः अन्धेऽन्धः स्रामे सदा स्रवन्नासाक्षिमलेऽयमपि स्रामः वृक्णे छिन्नहस्तपादेऽयमपि वृक्णः, तदस्यैव शरीरस्य नाशमनु एष छायापुरुषोऽपि नश्यति। तत् सकलदोषास्पदस्य विनाशिनः शरीरस्य सत्तातो यस्य नान्या सत्ता, कथं स्यादभयं तस्मात् छायापुरुषात् ॥१॥

स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच। मघवन्यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन् पुनरागम इति। स होवाच यथैव खल्वयं भगवोऽस्मिन् शरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृतः एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णः अस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥२॥

तदत्र छायापुरुषे नाहं भोग्यं पश्यामि, शरीरस्य सर्वदोषास्पदत्वे सति छायापुरुषे किंतु भोग्यं स्यात् इति स्वयमवधार्य स समित्पाणिः पुनरुपजगाम प्रजापतिम् । स तेन पुनरागमने कारणं पृष्टः प्रागवधृते 'नाहं भोग्यं पश्यामी'त्यात्मस्वरूपापरिज्ञानकृतमात्मनो निर्वेदं प्रजापतये न्यवेदयत् । न केवलमयमेव विशेषो विरोचनादिन्द्रे यदशान्तहृदयः पुनरात्मानं यथावदवगन्तुं प्रजापतेः समीपं समित्पाणिराजगामेति, किन्तु—अयमपि विशेषो योऽयमुपदेशादर्थप्रतिपत्तौ, अक्षणि पुरुषो दृश्यत इत्यस्मात्प्रजापतिवचनाद्विरोचनः प्रतिपेदे देहमेवात्मानम् । ततश्च प्रवृत्तो देहपरिचरण एव । अयं त्विन्द्रः प्रतिपेदे छायापुरुषमात्मानं दृश्यत इति कर्मण आत्मत्वोपदेशस्वारस्यमनुसृत्य । अत एव प्रतिपत्तेस्तस्मिन्नात्मत्वप्रतिपत्तिश्च सपदि विनिवृत्ता । अकार्यकरत्वाद्विशेषात् । तदेवमेकेनैव वचनेन प्रतिपत्तिभेदोऽप्यन्तःकरणगुणवैषम्यात् ॥२॥

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि । वसापराणि द्वात्रिंशतं वर्षाणीति । स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच ॥३॥**

प्रजापतिरिदमुवाच—हे मघवन्! य एष छायात्मा नात्मा भवितुमर्हतीत्याशङ्क्यते, एवमेवैषः—नात्मैषः । एतं त्वेवात्मानं भूयोऽनुव्याख्यास्यामि—मया प्राग्व्याख्यात एवात्मा त्वयाऽपरिशुद्धान्तःकरणेन न यथावत्प्रत्यपद्यत, व्याख्यातमेव तं प्रकारान्तरेणानुव्याख्यास्यामि ।

वसापराणि द्वात्रिंशतं वर्षाणि नियमेन । येन मृदितकषायस्त्वं विज्ञातुमर्हसि । स मघवा तथेत्युवास । तस्मै स प्रजापतिरुवाच ॥३॥

इत्यष्टमाध्याये नवमः खण्डः ।

---

य एष स्वप्ने महीयमानश्चरति एष आत्मेति हो-
वाचैतदमृतमेतदभयमेतद्ब्रह्मेति । सह शान्तहृ-
दयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श ।
तद्यद्यपीदं शरीरमन्धं भवति अनन्धः स भवति
यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति
॥१॥ न वधेनास्य हन्यते नास्य स्राम्येण स्रामो
घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्य-
पि रोदितीव नाहमत्र भोग्यं पश्यामीति ॥२॥

य एष स्वप्ने महीयमानः—पूज्यमानो भृत्यादिभी रथादिभिश्चरति एष स्वाप्नार्थानां द्रष्टा आत्मा, एतदमृतमेतदभयमेतद्ब्रह्मेत्युवाच । दृश्यादन्यं द्रष्टारं चेतनमात्मानं स्वतोऽपहतपाप्मानमागन्तुकेनाविद्यानिमित्तेन भोगेनोपलक्षितमुपदेष्टुं प्रवृत्तः प्रजापतिः प्रथमं जाग्रद्दशायां द्रष्टृत्वेनाभिमन्यमानात् देहादिन्द्रियाच्च विलक्षणमुपदिशन् यश्चक्षुषि दृश्यते—चाक्षुषादिजाग्रद्दशायां तत्र तत्र ज्ञानप्रभया सन्निधाय चेतयन्निव सङ्घातं जडं तत्त्वविवेचनकुशलैर्दृश्यते, सोऽयं

जाग्रदवस्थोपलक्षित आत्मेत्याशयेनोपदिदेश । अन्यथाऽवधृतश्चोपदेशार्थो मघोना । अथ दैव्या संपदा स्वावधृतौ दोषमनुचिन्त्य प्रत्यावृत्तायान्तेवासिने तस्मै स्वाप्नार्थानां द्रष्टारमागन्तुकतदवस्थोपलक्षितमात्मानमवगमयन् इदमुपदिदेश । अयं तु मघवाऽप्रक्षीणान्तःकरणकलङ्कतयाऽनवधृतोपदेशरहस्यः अवधार्य स्वाप्नमेव दृश्यानतिरिक्तमुपभोक्तारमात्मानं स्वाप्नोपभोगस्वभावमेव तं चैतन्यलक्षणं प्रशान्तहृदयः प्रवव्राज । अथ मध्येपथं तयैव दैव्या सम्पदा स्वगृहीतेऽर्थे भयमेतद्ददर्श—यद्यपि स्वप्ने यो भोक्तेव समुपलक्ष्यते स छायापुरुषवन्नैतद्दोषानुविधायिदोषः, अयमन्धोऽपि स्वप्नेऽनन्धो भवति इदं स्राममपि स न स्रामो भवति न वधेनास्य हन्यते सः । अथाप्यस्मिन्नस्ति भयम्, यदयं स्वाप्नो भोक्ता हन्यत इवायुधपाणिभिः, विच्छाद्यत इव, पुत्रमरणाद्यप्रियमनुभूयत इव तन्नात्र भोग्यं किमप्यस्तीति । घ्नन्त्येवेत्यत्र एवकार इवार्थो वोध्यः । उत्तरत्रेवशब्दश्रवणात् ॥१॥२॥

स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥३॥ न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रो-

द्वितीव नाहमत्र भोग्यं पश्यामीत्येवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणीति । स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै स होवाच ॥३–४॥

स्पष्टोऽर्थः ॥३॥४॥

इत्यष्टमाध्याये दशमः खण्डः ।

---

तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥१॥

यत्र–यदा स एष समस्तो भूत्वा–जाग्रत्स्वप्नयोः करणैर्व्यापृतैः परितोऽर्थान्व्याप्य विज्ञानरश्मिभिर्य एव वितत आसीत्स एष सुषुप्तिवेलायां समुपसंहृतकरणग्रामो व्यपगतविविधार्थदर्शनलक्षणविस्तारो भूत्वा अतएव सम्प्रसन्नश्च भूत्वा–व्यपगतदेवाद्यभिमानादिकलङ्को भूत्वा स्वप्नमपि न विजानाति, एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । जाग्रत्स्वप्नयोरधिष्ठाय करणमनुपश्यन्नुपलंक्षितो

विविधेन दर्शनेन, सुषुप्तावुपाध्यपगमेन तथाविधदर्शनरहितो विज्ञानस्वभावः स्वेन ज्योतिषा प्रकाशमान आत्मेत्युपदेष्टुराशयः । स मघवा प्रजापतेराशयं यथावदविदन् विज्ञानाभावलक्षणसुषुप्त्येकस्वभावमात्मानमुपदिष्टमवधृत्य जाग्रत्स्वप्नयोर्यो दोषः स्वेनावधृतस्तस्यायमनास्पद इत्यवधृतात्मस्वरूप इव प्रशान्तहृदयः प्रवव्राज । मध्येमार्गं पुनरुपदेशं तं विमृशन् गृहीतेऽर्थे दोषमिमं ददर्श—नैवं खल्वयं सुषुप्तः सम्प्रति जाग्रद्दशायां यथाऽयमहमस्मीत्यात्मानं जानाति तथाऽयमहमस्मीति जानाति, न वेमानि भूतानि, तदयमस्तविज्ञानो नाशमेवापीतः—विनष्ट इव, किमत्र भोग्यं स्यात्, चैतन्यस्यैवापाये किन्नु भोग्यं स्यात् । तन्नाहमत्र भोग्यं पश्यामीति ॥१॥

स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति स होवाच नाह खल्वयं भगवः एवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो वा इमानि भूतानि विनाशमेवापीतो भवतीति नाहमत्र भोग्यं पश्यामीति ॥२॥

स्पष्टम् ॥२॥

एवमेवैष मघवन्निति होवाच । एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रास्मात् वसापराणि

पञ्चवर्षाणीति सहापराणि पञ्च वर्षाण्युवास । तान्येकशतं सम्पेदुरेतत्तद्यदाहुरेकशतं ह वै वर्षाणि मघवा प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच ॥३॥

एवमेवैष मघवन्—यदात्थ त्वं—नाह खल्वात्मानं सम्प्रतीवायमहमस्मीति जानामि न वेमानि भूतानीति, एवमेवैतत् । किंतु नोपदेशार्थस्त्वयाऽवधृतः, नहि सुषुप्त्यवस्थमेवास्य स्वरूपं ग्राहयितुमुपदिष्टमस्माभिः । भूयोऽनुव्याख्यास्यामि । नचोपदिष्टादर्थान्तरभूतोऽपूर्व आत्मा । परमवधृतस्त्वयाऽन्यथाऽन्यथा । स एवायमनुव्याख्यायते येन ते सर्वोऽयमन्यथाग्रहो निवर्तेत । वसापराणि पञ्चवर्षाणीति । अतिरोहितार्थमितरत् ॥३॥

इत्यष्टमाध्याये एकादशः खण्डः ।

---

मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥१॥

हे मघवन् ! यास्ववस्थासु जाग्रत्स्वप्नसुषुप्तिषु दोषमनुपश्यसि, न ता आत्मनः स्वरूपानुबन्धिन्यः, किन्तु शरीरसंसर्गोपाधिकास्ताः तच्चेदं

शरीरं मर्त्यम्—विनाशि, आत्तं च मृत्युना—विनाशेन व्याप्तम्, शरीरस्वाभाव्यात् । तच्चेदं शरीरमात्मनो न नियतम्, किन्तु अमृतस्याशरीरस्यास्याधिष्ठानम्—अविनाशिनः स्वतोऽशरीरस्य (चैतन्यमिव नास्य शरीरसंश्लिष्टत्वं सहजम्, तत् स्वतोऽशरीरस्य) अनाद्यविद्यामूलकर्मफलभोगायाधिष्ठानमात्रमेतत् । यश्च प्रियाप्रियानुषङ्गः स तु शरीरयोगोपाधिकः । सशरीर एव हि इन्द्रियार्थानुबन्धिभ्यां प्रियाप्रियाभ्यामात्तो भवति । न ह वै सशरीरस्य कस्यापि प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा सन्तं न प्रियाप्रिये स्पृशतः, तदन्वयव्यतिरेकाभ्यां सुखदुःखान्वयलक्षणः सर्वो दोषः शरीरोपाधिकः । तदवस्थात्रयैरौपाधिकैरुपलक्षितः स्वेन ज्योतिषा प्रकाशमानश्चैतन्यैकलक्षणः प्रत्यगात्माऽपहतपाप्मा यथोपदिष्ट इति ॥१॥

अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते । एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ॥२॥

यथैतान्यशरीराणि शिरःपाण्यादिलक्षणशरीरविधुराणि वायुरभ्रं विद्युत्स्तनयित्नुरित्यादीनि अमुष्मादाकाशात्स्वास्पदादुत्थाय उपर्युपर्यूर्ध्वदेशं गत्वा परं ज्योतिः स्वस्वकारणलक्षणमुपसम्पद्य आवहप्रवहादिकार्यभावपरित्यागपूर्वकं स्वासाधारणवाय्वादिरूपेण निष्पद्यन्ते । एवमेवैष सम्प्रसादो जीवात्माऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुप-

सम्पद्य सर्वकारणं परं ब्रह्म देशविशेषे प्राप्य स्वेनैवापहतपाप्मत्वादिना रूपेणाभिनिष्पद्यते ॥२॥

**स उत्तमः पुरुषः स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिन् शरीरे प्राणो युक्तः ॥३॥**

यमभिसम्पद्यापहतपाप्मत्वादिना स्वेन रूपेणाभिनिष्पद्यते सोऽयमुत्तमः पुरुषः प्राप्तुः प्रत्यगात्मनोऽन्यः । स्मर्यते च–'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति । स च मुक्तस्तत्र परमात्मनि पर्येति–परितोऽनुभवति, सर्वतो ब्रह्मानुभवतीत्येतत् । तं परमात्मानं पर्येति–तं सर्वत्र सर्वदाऽनुवर्तते इति वा । तस्यास्य मुक्तस्य सत्यकामत्वमाह–जक्षदित्यादिना । ननु हन्त संसार्येवायम् ?, नेत्याह–नोपजनमित्यादिना। अयं हि मुक्तः सर्वमेव प्राकृतमप्राकृतं वा स्वतन्त्रतया स्वभोगोपकरणतया वा आत्मात्मीयभावेन न मन्यते, नापि तेन रूपेणानुभवति । स हि न स्मरति उपजनम्—जननसम्बद्धं किमपि, कर्मवश्यतायां देहात्माभिमानमूलकात्मात्मीयभावो ह्यासीत् । प्रक्षीणकर्मणस्तदसम्भवेन न संसारप्रसङ्गः, किन्तु सर्वमेव प्राकृतं वस्तु ब्रह्मात्मकमनुपश्यंस्तदीयलीलाविभूतित्वेन चानुभवतीति न काचित् क्षतिः । नन्वेवमशरीरत्वस्वभावस्याप्यस्य शरीरयोगः कथमित्यत्राह—स यथेति । यथा बलीवर्दो जन्मना शकटेनासम्बद्धोऽपि केनचिद्बलादाचरणे–शकटे नियोज्यते, एवमेवायं प्राणो जीवः

शरीरेऽस्मिन् युक्तः । तत्कर्मकृतः शरीरसम्बन्ध औपाधिक इति यावत् ॥३॥

**अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वाक् अथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥४॥**

यस्मादेष विज्ञानघनस्तत एवायमेव द्रष्टा घ्राता वक्ता श्रोता च भवत्यात्मा, चक्षुरादि तु जडमस्योपकरणभावमेवैति । तदेभ्यश्चक्षुरादिभ्योऽत्यन्तभिन्न आत्मा इति बोधयन्नाह—अथेति । यः पूर्वमक्षिणि दृश्यत इति मयोक्तः स न छायात्मा, किन्तु यत्र—यस्मिंश्चेतने अनुषक्तं सदेव चक्षुराकाशं भवति—(येनानुगतं सदेव प्रकाशकं भवति रूपादेः) सोऽयं चाक्षुषः पुरुषः—चक्षुषि सन्निहितो रथ इव तच्चेष्टया निश्चीयमानो रथी पुरुषः । चक्षुस्तु दर्शनाय करणं केवलम्, द्रष्टा तु चेतनोऽयमात्मा । एतेन न करणलक्षणं जडमिन्द्रियमात्मा, नापि ज्ञप्तिमात्रमात्मेति ज्ञापितं भवति । अथ यो वेदेदं जिघ्राणीत्यादि न तिरोहितार्थम् । यद्वा—दृश्यादिव दर्शनात्, (अर्थेभ्य इवेन्द्रियेभ्यो) भेदमात्मनः स्फुटमवगमयन्नात्मनः स्वरूपमाह—अथेत्यादिना । आ काश्यते प्रकाश्यत इत्याकाशः—शुक्लनीलादिरर्थे

उच्यते, यदेतन्नीलादि रूपमनु चक्षुर्विषण्णं भवति तदा स पुरुष आत्मा चाक्षुषो भवति—चक्षुषि सन्निधाय तस्याधिष्ठाता भवति । चक्षुषो जडस्यार्थमनुधावतः अधिष्ठात्रा हि चेतनेन भाव्यम् । नन्वर्थप्रकाशकत्वनिबन्धनचेष्टान्वयः स्यादात्मनः, स चाक्रियेऽनुपपन्नः, तत्राह—दर्शनाय चक्षुः । दृश्यते इदमिति दर्शनम्—नीलादिरूपम्, तस्मै तमभिसम्बद्धुं तु चक्षुः प्रधावत्यश्व इवाश्वारूढेनाभिनुन्नः । नापि कशाघातादिलक्षणचेष्टाविशेषसदृशं नोदनं चेतनेऽस्मिन्नव्यवहितकरणमिन्द्रियमपेक्ष्य भवति । किन्तु स्वसहजचैतन्यानुबन्धिसङ्कल्पविशेषलक्षणमेव तु तत् । अतएव च तेनाक्षेणानीयार्पितमर्थमनुभवति केवलं स्वदेश एव स्थितः सन्नहमिदं पश्यामीति । ज्ञानस्य चायं स्वभावः स्वेनैव प्रकाशमानता, सति त्विन्द्रियोपनीतार्थसम्बन्धे तदर्थोपग्रहपूर्वकं अहमिदं पश्यामीति भवति नाम प्रकाशः । तदविकृतस्यैवात्मन इन्द्रियाद्यधिष्ठानं तत्कृतार्थानुभवश्च युज्यते नाम । तद्युक्तं नाम द्रष्टृत्वादिभिरस्य स्वरूपनिरूपणम् । नाप्यत्र द्रष्टृत्वादि विशेषणविधया आत्मस्वरूपनिरूपकमुच्यते, किन्तु यत्र सारसः स देवदत्तकेदार इतिवदुपलक्षणतयैव । वाक्यशैली चैवञ्जातीया, यो वेदेदं जिघ्राणीति स आत्मेति । उत्तरवाक्यमनया दिशा व्याख्येयम् ॥४॥

**अथ यो वेदेदं मन्वानीति स आत्मा, मनोऽस्य दैवं चक्षुः, स वा एष एतेन दैवेन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके ॥५॥**

चक्षुरादिनिरपेक्षं इदमिदं मन्वानीति मन्यते यः स मन्ता आत्मा, मननाय तु मनो भवत्यस्योपकरणम्, तत्तु दैवं चक्षुः—इदं च सत्त्वातिशयेन विशुद्धं भवति देहात्मविवेचनक्षमं विविक्तदृष्टये च तद्दैवं चक्षुरुच्यते । इममेवास्यातिशयमुपपादयति । स वा एष दहरविद्यानिष्ठो ब्रह्माख्ये लोके ये कामाः सत्याः पूर्वमुक्ता अपहतपाप्मत्वादयस्तानेतेन दैवेन चक्षुषा मनसा पश्यन्रमते ॥५॥

तं वा एतं देवा आत्मानमुपासते तस्मात्तेषां सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥६॥

तमेतं अपहतपाप्मत्वादिगुणविशिष्टं प्रत्यगात्मनः स्वरूपं शुद्धमुपासते इन्द्रेण प्राप्तोपदेशा देवाः । अतश्च तथोपासीनानां तेषां सर्वे च लोका आत्ताः, सर्वे च कामाः—ये दहरविद्याफलतयोक्तास्ते कामाः सर्वे सम्पद्यन्ते । इदं हि प्रजापतिनोपदिष्टं दहरविद्याङ्गभूतम्, तदङ्गस्य नह्यङ्गिफलादन्यत्फलम् । अद्यापि यः कश्चित् तमात्मानमुपास्ते स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् । प्रजापतिर्हि एवमस्या विद्यायाः फलमाह ॥६॥

इत्यष्टमाध्याये द्वादशः खण्डः ।

---

श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मु-

**खात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यभिसम्भवामीति ॥१॥**

दहरविद्यानिष्ठेनानुसन्धेयो मन्त्रविशेष उच्यते—श्यामादिति । श्यामात्—दिव्यविग्रहयोगेनेदं श्यामत्वमभिप्रेतम् । ल्यब्लोपे पञ्चमी । श्यामं परमात्मानं दिव्याकारं साक्षात् प्रपद्य—ध्यात्वा शबलम्—मिश्रम्—चिदचिन्मिश्रम्—चिच्छरीरकमचिच्छरीरकं च प्रपद्ये ध्यायामि । शबलात्तस्मात्—तं ध्यात्वा पुनः श्यामं दिव्याकारं साक्षात्परमात्मानं प्रपद्ये—ध्यायामीति । अनेन यदुपासात्रैविध्यं विहितं तस्येदमनुस्मरणमुपदिष्टं भवति । अश्व इव रोमाणि पापं पुण्यापुण्यलक्षणं विधूय विद्याबलेन चन्द्र इव राहोर्मुखात्प्रकृतिबन्धाद्विमुच्य (स्वेनैव रूपेणेत्येतत्) धूत्वा शरीरमकृतमनित्यं प्राकृतमिदं कृतात्मा सन् ब्रह्मणः परस्य ब्रह्मणो लोकमभिसम्भवामीत्यभिसम्भवामीति । यद्वा—श्यामादिति दहराकाश उपलक्ष्यते, हृदयगुहानिगूढत्वेन गुहोदरान्तर्वर्त्याकाशसाम्येन तद्व्यनालोकमाकाशं श्याममिवालक्ष्यते । तस्मात्—तं प्रपद्य शबलं प्रपद्ये—शबलत्वेनोपलक्ष्यते प्रत्यगात्मा । स हि जाग्रदादिर्विचित्राभिरवस्थाभिः शबल इवेक्ष्यते । तं प्रत्यगात्मानमुपासे । दहराकाशोपसनाङ्गभूते प्रत्यगात्मोपासने प्रवृत्तोऽस्मीत्येतत् । शबलात् श्यामं प्रपद्ये । व्यक्तम् ॥१॥

इत्यष्टमाध्याये त्रयोदशः खण्डः ।

---

**आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा**

तद्ब्रह्म तदमृतं स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्येतमदत्कमदत्कं श्येतं लिन्दु माभिगां लिन्दु माभिगाम् ॥१॥

आकाशो ह वै नामरूपयोर्निर्वहिता—प्रसिद्धोऽयं श्रुतिष्वाकाशो नामरूपनिर्वाहकः। प्रसिद्धिश्च सा न भूताकाशे, नामरूपगोचरो हि सः, न स नामरूपयोर्निर्वाहकः। 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति सत आत्मनो हि सा प्रसिद्धिः। स हि स्वात्मकजीवानुप्रवेशेन सर्वेषां नामरूपे निर्वहति। न चायं नामरूपास्पदः। यदन्तरा ते—यत्तत् ब्रह्म विना ते नामरूपे। नामरूपाभ्यामस्पृष्ट इत्येतत्। नामरूपाभ्यां स्पर्शो नाम तत्तदभिमानकृतप्रियाद्यनुषङ्गः। तद्रहितोऽयम्। चिदचिदात्मकस्याप्यस्य न हि साक्षात् नामरूपान्वयः। सर्वान्तरात्मतया सद्वारकोऽन्वयस्त्वैश्वर्यविशेषलक्षण इति न मलान्वयप्रसङ्गः। तद्ब्रह्म तदमृतं स आत्मा। एवमुपास्यस्वरूपमुक्तम्, अथोपासकेनोपासनाङ्गतयाऽनुसन्धेयं प्रार्थनामन्त्रं श्रावयति—प्रजापतेरित्यादिना। प्रजापतेः—सकलजगन्नियामकस्य परस्य ब्रह्मणः सभां 'प्रभुविमित'मित्यादिना पूर्वोक्तं वेश्म तत्रत्यं प्रपद्ये। यशः—आत्मा, भवामि ब्राह्मणानाम्। यशो राज्ञां यशो विशाम्। इदमुपलक्षकं प्राणिमात्रस्य। सर्वेषामहमेवात्मा भवामि। कथमन्योऽ-

न्यस्यात्मा भवितुमर्हति । आह—स्वस्य विशेषम् । अहं हि यशोऽनुप्रापत्सि । यशः—आत्मानम्, असङ्कोचात् सर्वात्मानं परमात्मानं अनुप्रापत्सि—स्वेतरसमस्तप्रकारं परमात्मानमेवात्मतयाऽनुप्रविष्टोऽस्मि । देवमनुष्याद्यभिमानो व्यपगतो मे । यश्च स्वतन्त्रः कर्ता भोक्ता विज्ञानात्माऽहमस्मीति व्यामोहः सोऽपि व्यपगतो मे । अहमर्थं सर्वान्तरात्मानमात्मानमेव स्वशरीरतया साक्षात्कुर्वन् सर्वात्मनोऽन्यं नैव पश्यामि । तत् सोऽहमधुना यशसां यशो—जीवात्मानामप्यात्मभूतं परं ब्रह्मास्मि—एवंदृष्टिरहं गर्भवासादिक्लेशमितः परं माभिगामित्याह—श्वेतमित्यादि । लिन्दु—स्त्रीव्यञ्जनम्, गर्भवासमित्येत् । विशेषणं स्त्रीव्यञ्जनस्य—श्वेतमित्यादि । द्विरुक्तिरध्यायसमाप्तौ ॥१॥

इत्यष्टमाध्याये चतुर्दशः खण्डः ।

---

तद्धैतद्ब्रह्मा प्रजापतये प्रजापतिर्मनवे मनुः प्रजाभ्यः । आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते ॥१॥

आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकारणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु। ओं शान्तिः शान्तिः॥

उपनिषदः सम्प्रदायपरम्पराप्राप्तत्वमाह—तद्धैतदिति। तदिदं विज्ञानमोमित्येतदक्षरमित्यादिनोपदिष्टं ब्रह्मविषयं ब्रह्मा प्रजापतये कश्यपाय प्राह स मनवे मनुश्च प्रजाभ्यः। तदेवं प्रजासु सम्प्रदायतः प्रवर्तते ब्रह्मविद्येयम्। त्रयीविहितानां कर्मणां मुमुक्षून्प्रत्यानर्थक्यं परिहरन्नाह—आचार्येत्यादिना। प्राप्याचार्यकुलमाचार्यशुश्रूषणपरो भूत्वा आचार्यशुश्रूषणलक्षणकर्मणः समयादन्यस्मिन् समये यथाविधानमाचार्याद्वेदमधीत्य अभिसमावृत्य कुटुम्बे स्थित्वा (धर्मतो दारान् परिगृह्येत्येतत्) शुचौ देशे स्वाध्यायमधीयानः तत्प्रधानं गार्हस्थ्याङ्गं कर्म विहितं कुर्वन् पुत्रशिष्यांश्च धार्मिकान् धर्मैकपरान् विदधत् एवमनभिसंहितफलैः कृतैः कर्मभिरात्मन्यभिमुखेन मनसा सर्वेन्द्रियाणि तत्तदर्थेभ्यो विनिवृत्त्यात्मनि प्रतिष्ठाप्य भूतमात्रस्य पीडामकुर्वन् अन्यत्र तीर्थेभ्यः—शास्त्रविहितेभ्यो भगवदाराधनलक्षणेभ्यस्तुलस्याहरणादिभ्यः, स खल्वेवं यावदायुषम्—आप्रयाणात् वर्तयन् स्वाश्रमसमुचितकर्माङ्गे आत्मध्याने प्रवर्तयन्नात्मानं देहावसाने ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते। द्विरुक्तिरध्यायपरिसमाप्तौ ॥१॥

रूपस्थानादिभेदाद्भवति बहुविधा ब्रह्मविद्या, विकल्पान्मुक्तौ हेतुत्वमासामभिमतमथ या ब्रह्मदृष्टिः प्रतीके। नाना साऽर्थान्तराय प्रभवति, विविधोपासनाऽन्याऽन्यदृष्ट्या, छान्दोग्ये सर्वमेतच्छ्रुतमपि तु परब्रह्मविद्याऽत्र मुख्या ॥१॥ अन्तरादित्यविद्याद्या ब्रह्मविद्या हि याः श्रुताः। ताभिर्गम्यं परंब्रह्म प्रचकास्तु हृदन्तरे ॥२॥ आसीदग्रेऽद्वितीयं निखिलमपि जगत् यत्सदेकं यदेव प्रेक्ष्यैकोऽहं बहु स्यामिति समजनयत् तेज आपोऽन्नमेतत्। यत्तत्रानुप्रविश्य व्यतनुत सकलं नामरूपप्रभेदं जीवेन स्वात्मना स प्रदिशतु सकलस्यान्तरात्मा शिवं नः ॥३॥ यन्मूलं या प्रतिष्ठा विधृतिरपि च या यः स आत्मा प्रजानां यस्मिन्नैतदात्म्यं जगति चिदचितोरन्तरात्मा स एषः। सर्वज्ञः सर्वशक्तः सकलगुणनिधिः सन्निधत्तां सदा नः सद्विद्यावेद्यरूपः प्रकटितसहजानन्दरूपो हृदन्तः ॥४॥ यस्मिन् सर्वान्तरात्मन्यनवधिकमहानन्ददिव्यस्वरूपे दृष्टे दृश्येत नान्यत् श्रवणमुपगते नेतरच्चत्पदं स्यात्। तं भूमानं निरुद्धाखिलकरणचयं ध्यायतां नः समन्तात् सर्वात्मा सर्वरूपः स्फुरतु नच परं क्वापि पश्येम किञ्चित् ॥५॥ योऽसौ दहराकाशो यस्मिन् कामाः समाहिताः सर्वे। उभयमपि चिन्तयामः सहजानन्दैकदिव्यरूपेण ॥६॥

इत्यष्टमाध्याये पञ्चदशः खण्डः।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण–परमहंसवर्य–योगिराज–श्रीगोपालानन्दस्वामिविरचिते छान्दोग्योपनिषद्भाष्येऽष्टमोऽध्यायः ॥८॥

इति छान्दोग्योपनिषद्भाष्यं संपूर्णम्।



श्रीस्वामिनारायणो जयति ।

# बृहदारण्यकोपनिषत् ।

## गोपालानन्दस्वामिविरचितभाष्यसमेता ।



ॐ उषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्मा अश्वस्य मेध्यस्य । द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यम् । दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसानि । ऊवध्यं सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमानि उद्यन् पूर्वार्धो निम्लोचन् जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥१॥

---

दृष्टे श्रुते मते यस्मिन्सर्वं दृष्टं श्रुतं मतम् ।
अपरिच्छिन्नरूपाय तस्मै सर्वात्मने नमः ॥१॥

सत्यानामपि यत्सत्यं मूर्तामूर्ते च यत्तनू ।
अनन्तायाप्रमेयाय परस्मै ब्रह्मणे नमः ॥२॥

अध्ययनं हि संस्कारः श्रुतेः, अस्य त्वध्ययनमरण्ये इति विशेषः, तदारण्यकमुच्यते, इतरेभ्य आरण्यकेभ्यः परब्रह्मावबोधकत्वविशेषयोगाद्बृहदारण्यकमुच्यते। इतराभ्य उपनिषद्भ्यः स्वरूपविस्ताराद्वा। यद्यपीह तत्र तत्र कर्मानुबन्धिनामन्वयो दृश्यते, अथापि विद्यायामिति विद्यात्वसामान्यात् क्वचित् ब्रह्मदृष्ट्यन्वयात् विद्यायां प्रवर्तनमुखेनात्मविद्याविशेषे प्रवर्तनसौकर्याच्च षडध्याय्यामप्युपनिषदिति व्यपदेशो युक्तः। तात्पर्यं चास्याः कर्मणः केवलात्प्रचाल्यान्तत आत्मविद्यायां प्रवर्तन एव। कर्मणोऽप्यतिशयं विद्यायामवबोध्य सर्वतोऽप्यतिशयममृताधानलक्षणमात्मविद्यायां बोधयति नाम। तत्र कर्मसु प्रशस्तो योऽश्वमेधस्तस्य प्रधानमङ्गमश्वस्तस्योपासनं विधीयते—उषा वेति ।

मेध्यस्य—यज्ञसंबन्धिनोऽश्वस्य यच्छिरस्तत् उषा—अहर्मुखम् । एवमुत्तरत्रापि । उषःशिरसोः प्राधान्यं समानधर्मः । दिनावयवेषूषसः प्राधान्यं प्रसिद्धम् । मेध्यस्याश्वस्य यच्चक्षुः स सूर्यः, अहर्मुखे सन्निधानात् आलोकसाधनत्वगुणयोगात् अधिष्ठात्रधिष्ठेयभावाच्च । अश्वस्य मेध्यस्य यः प्राणः स वातः, वायुत्वसामान्यात् । यत्तस्य व्यात्तं—विवृतं मुखं स वैश्वानरोऽग्निः, अग्न्यधिष्ठितत्वात् । 'अग्निर्वाग्भूत्वा मुखं प्राविश'दिति हि श्रूयते । यत्तस्यात्मा—शरीरं स संवत्सरः, अनेकावयवसमुदायत्वसाम्यात् । मासाद्यनेकावयवसमुदायो ह्यवयवी संवत्सरः । तस्य पृष्ठं द्यौः, ऊर्ध्वत्वसाम्यात् । तस्योदरमन्तरिक्षम्, सुषिरत्वसाम्यात् । यत्तस्य पाजस्यं—उरः सा पृथिवी, अध-

स्त्वसाम्यात् । तस्य पार्श्वे दिशः । तस्य पर्शवः—पार्श्वास्थीनि अवान्तरदिशः । यान्यस्याङ्गानि तानि ऋतवः, अवयवत्वसाम्यात्, संवत्सरस्य ह्यवयवो ऋतुः । यान्यस्य पर्वाणि—सन्धयः ते मासाश्चार्धमासाश्च । या तस्य प्रतिष्ठा—पादः तान्यहोरात्राणि, अश्व इव पादेन अहोरात्रविभागेन हि कालस्तिष्ठति । यान्यस्यास्थीनि तानि नक्षत्राणि, शुभ्रत्वसाम्यात् । यान्यस्य मांसानि तन्नभः—नभःस्थो मेघ इत्येतत् । उदरमन्तरिक्षमुक्तम्, तदन्तःस्थत्वसाम्याद्युक्तमेतत् । ऊवध्यं—अर्धजीर्णमुदरस्थं ग्रासादि सिकताः, विश्लिष्टतासाम्यात् । तस्य गुदाः—अवयवबहुत्वाद्बहुवचनम्, नाड्यो वा, सिन्धवः । यकृच्च क्लोमानश्च—मांसपिण्डविशेषौ हृदयस्य दक्षिणोत्तरभागस्थौ पर्वताः । लोमान्योषधयो वनस्पतयश्च । यश्चास्य पूर्वार्धः कायस्य स उद्यन् सूर्यः । यश्चापरार्धः स तु निम्लोचन्—अस्तं गच्छन् सूर्यः । दिवसस्य पूर्वभागे ह्युद्गच्छति सूर्यः, अपरभागे चास्तम् । यद्विजम्भते तद्विद्योतते । यद्विधूनुते रोमाणि तत्स्तनयति । यन्मेहति तद्वर्षति । वागेवास्य वाक् । नात्र रूपणया कल्पना ॥ १ ॥

अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः संबभूवतुः । हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान् समुद्र एवास्य बन्धुः समुद्रो योनिः ॥२॥

अश्वावयवेषु कालादिदृष्टिर्विहिता। अथ तदनुबन्धिनि दृष्टिविशेषं विदधाति—अहर्वेत्यादिना। पुरस्तात्संज्ञपनात्पश्चाच्च सौवर्णराजतौ ग्रहौ—हवनीयाधारौ पात्रविशेषौ स्थाप्येते, तौ महिमाख्यौ, तयोर्यः पुरस्तादश्वमनु—अश्वं लक्षयित्वाऽजायत, तदहः, तस्मिन्नहस्त्वदृष्टिर्विधेया, दीप्तिसाम्यात्। इह—अनुर्लक्षणे। कर्मप्रवचनीययोगाद्द्वितीया। योनिरासादनस्थानम्, तस्य योनिः पूर्वे समुद्रे—तदासादनस्थाने पूर्वसमुद्रदृष्टिः कार्येत्येतत्। विभक्तिव्यत्ययश्छान्दसः। यः पश्चान्महिमा राजतः एनमश्वमन्वजायत, सा रात्रिः—तत्र रात्रिदृष्टिः कार्येत्येतत्। धावल्ययोगात्। रात्रिर्हि ज्योत्स्नाधवलिता भवति। तस्य योनिरासादनस्थानम्, अपरे समुद्रे—पश्चिमः समुद्रः। विभक्तिव्यत्ययः पूर्ववत्। एतौ वै सौवर्णराजतौ ग्रहौ अश्वविभूतित्वात्तस्य महिमानौ अभितः—पुरस्तात्पश्चाच्च संबभूवतुः। स्थापितावित्येतत्। अनेनाश्वः स्तुतो भवति। पुरस्तात्पश्चादिति पूर्वोत्तरदेशपरतया केचिद्व्याचक्षते। पुनः स्तौति—हयो भूत्वेत्यादि। हयादयो जातिभेदाः। देवादीनां वाहनमितिविशेषात्स्तुतिरियम्। अश्वो भूत्वा मनुष्यानवहदित्ययं कथमतिशयः? । खरोष्ट्रादिवद्भारवहनमस्य न स्वभावः, किन्तु पुरुषवहनमित्ययमतिशय एव। समुद्र एवास्य बन्धुः, कथं बन्धुः? यदस्य समुद्र एव योनिः—जन्मस्थानम्। 'अप्सु योनिर्वा अश्व' इति श्रुतेः। उच्चैःश्रवःप्रभृतीनां समुद्रादुत्पत्तेस्तज्जातीयत्वेन तथा स्तूयते वा। यत्समुद्र एव योनिः तत्समुद्रे एवास्य बन्धुः, कल्पशाखिप्रभृतयः सामुद्रा एवास्य बन्धव इति वा

स्तूयते । केचित् समुद्रे बन्धुदृष्टिर्योनिदृष्टिश्च विधीयत इत्याहुः । एषां 'एतौ वा' इत्यादिस्तावकवाक्येन व्यवधानमस्वारस्यम् ॥ २ ॥

इति प्रथमाध्याये प्रथमं ब्राह्मणम् ।

---

नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनायया ऽशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति । सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वम् । कꣳ ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥१॥

अश्वे दृष्टिर्विहिता, अथाग्नावश्वमेधाङ्गे तां विधास्यन् स्तुतये तस्योत्पत्तिं वक्तुमुपक्रमते—नैवेति । अग्रे—सृष्टेः प्राक् नैव किञ्चनासीत् । ननु तर्हि तदानीं शून्यवादः, नैतत्, न हि तदानीं किञ्चन नासीत्, अपि तु इह—कार्यप्रपञ्चे समुपलभ्यमाने नैकमप्यासीत् । तर्हि पूर्वमसत एव पश्चादुत्पत्तेरसत्कार्यवादः, नैतत्, इदमखिलं विभक्तनामरूपमधुना, पुरा तु न तथा, किन्तु मृत्युनैवेदमावृतमासीत् । यद्येवमावृतं यवनिकयेव गृहाभ्यन्तरं वाससेव कलशादि, व्याहतं तर्हि 'नैव किञ्चनाग्र आसी'दिति, नैतत्, मृत्युनैवेदमावृतमासीत्—येनेदमावृतं स हि मृत्युः—न यवनिकाया न वाससो वा सधर्मा, स कोऽसौ ?, अशनाया—सञ्जिहीर्षा, तयोपलक्षितो मृत्युर्लक्ष्यते । लोकतः प्रसिद्धमेतत् अशनाया मृत्युरिति । अत्तुमिच्छन् ग्रसति नाम, अद्यस्यायं संहर्ता भवति । हन्त तर्हि तेन समुच्छिन्नमात्यन्तिकम्,

नैतत्, आवृतम्, नह्यात्यन्तिकोच्छेदः सतो द्रव्यस्य घटेत । घटादि विनष्टमुपलभ्यते मृद्रूपेण, पुनश्च तदेव मृद्द्रव्यं कारकव्यापारयोगेनोपलभ्यते घटादिरूपेण, तदेकमेव द्रव्यमेकेन प्रकारेणोपलभ्यमानमपरेणानुपलभ्यमानं जातं नष्टमिति च व्यवह्रियते, तदेकमेव द्रव्यमवस्थाभेदमुखेन तिरोहितमाविर्भूतं च भवति, एकस्यैव द्रव्यस्यावस्थाभेदमात्रं भवतीत्येतत् । एतेन कूर्मकर्परादिव कूर्मावयवानां मृत्पिण्डात् घटादीनामभिव्यक्तिमात्रमुत्पत्तिरिति वदन्तः परास्ताः । इह वक्तव्यमुपरिष्टात् । इदमभिप्रेत्योच्यते—मृत्युनैवेदमावृतमासीदिति । मृत्युरयं नामरूपाद्यखिलभेदमस्य प्रविप्लाव्य स्वेन सूक्ष्मेण रूपेण सर्वमिदमावृत्य तिष्ठतीत्युक्तं भवति । एतेन मृत्योरस्य संहरणनिमित्ततामात्रव्यावृत्तिः । न ह्यावृतं भवति घटादि नाशकपुरुषेणोक्तदिशा । एवकारान्निमित्तान्तरव्यावृत्तिश्च ।

अत्रेदं विचार्यते—ये त्वभिव्यक्तिरेवोत्पत्तिरिति वदन्ति तान् पृच्छामः—क्व निलीनस्य केनाभिव्यक्तिरिति वक्तव्यम् । मृदि प्रकृतौ निलीनस्य कुलालादिकारकव्यापारविशेषेणेति चेत् । तुषान्तर्निलीनस्तण्डुलस्तुषापाकरणेन कारकव्यापारेणाभिव्यक्तिमापन्न इति मृदो घट इव तुषातस्तण्डुल उत्पन्नः स्यात् । ननु—उत्पन्नस्तण्डुल इत्यभिमतं नः, तुषात इति तु न घटेतापादनम्, प्रकृतौ निलीनस्येति ह्यसद्वचनम्, न प्रकृतिस्तुषा तण्डुलस्य, नहि मृदिव घटे तुषा तण्डुले स्वरूपेण सम्बद्धा स्वरूपभेदादिति चेत् । मृत्स्वरूप एव घटस्तत्रैव लीन इति तु न घटेत, नहि य एवायं तस्मिन्नेवायं भवेत्, भेदसापेक्षो ह्याधाराधेयभावः । किञ्च—तिले तैलवत् कूर्मकर्परे कूर्मवत् मृदि सतामेव घटशरावादी-

नामदर्शनलक्षणं निलयनं किमावरणकार्यम् ?, न मृण्मात्रमावरणम्, अविशेषात् । पिण्डाकृतियोगश्चेदावरणं घट इव शरावादिः सर्वोऽपि विकारो मृदि सन्निहितस्तेनैव तदानीमावृत इति अपाकृते तस्मिन्नावरणे सर्व एव विकाराः किमित्यविशेषेण न प्रकाशन्ते । ननु–घटलक्षणविकारविशेषाभिव्यक्त्यर्थमाहितेन कारकव्यापारविशेषेण न घटादन्यो विकारः शरावादिरभिव्यज्येत । नैतद्युक्तम् । यद्यभिव्यक्तिविशेषे साक्षात् कारकव्यापाराणामुपयोगः, स्यात्तदाऽयं नियमः, आवरणनिरसनद्वारा ह्युपयोग उच्यते, निरस्तं चावरणम्, सत्यां चक्षुरादिसामग्र्यां कुतोऽन्ये न प्रकाशेरन् । साक्षादेव चेत्तयोर्हेतुहेतुमद्भावः कल्प्येत, आवरणनिरसनायान्यत् कल्प्यं स्यात्, न ह्यनपनीते आवरणे आवृतं वस्तु प्रकाशेत । न चेयं कल्पना समुचिता—आवरणनिरसनं कुर्वंस्तन्मुखेन विकारविशेषाभिव्यक्तय एव भवतीति । प्रकृतौ सतामेव विकारान्तराणां विकारान्तरयोग (आकृत्यन्तरयोग) आवरणं भवतीत्येतदप्यनुपपन्नम्, आकृत्यन्तरोपमर्दननान्तरीयको ह्याकृत्यन्तरयोगः, यथा कटकाद्युपमर्देन यदा मुकुटमाधीयते मुकुटोपमर्देन कटकं वा तदा आकृत्यन्तरयोग आकृत्यन्तरमुपमृद्यैव हि भवति । एवं मृत्पिण्डघटादिष्वपि । ननु–आकृत्यन्तरोपमर्दाकृत्यन्तरयोगौ तिरोधानाभिव्यक्तिभ्यां नातिरिच्येते, विकारान्तराभिव्यक्तिर्विकारान्तरावरणमित्येतत्, तदावरणं नानुपपन्नमिति चेत् । स्यादेवम्–अथाप्यपनीते आवरणे विकारान्तराणां सपदि भानं स्यादित्यत्रानिस्तार एव । किञ्च–कारकव्यञ्जकविभेदो विलुप्येत, दीपालोकादिरिव कुलालादिरप्यावृतमेवाभिव्यनक्त्याव-

रणापनोदनेन । विभेदश्चायं प्रामाणिकः । अयं कारकः, अयं तु व्यञ्जक इति विभक्तो हि व्यवहारः । ननु—प्रकृतेरभिव्यक्तस्य यदावरणान्तरं बाह्यं तमस्तदपनोदकमालोकाद्यभिव्यञ्जकमिति व्यवह्रियते, अनभिव्यक्तपूर्वं प्रकृतावेव निलीनं येन कुलालादिव्यापारेणाभिव्यज्यते स कारक इति व्यवह्रियते । नैतन्न्याय्यम् । आवरणापनोदनादधिकमकुर्वतोऽपनोद्यावरणभेदमात्रेणान्यथा व्यवहार्यत्वकल्पनं कथं घटेत । ननु—अल्पेनापि निमित्तभेदेन व्यवहृतिभेदो भवेत्, न च व्यवहृतिमात्रेण तत्त्वनिश्चयो युक्तः, न हि स्वाप्नेन व्यवहारेण परमार्थसिद्धिः, विकारव्यवहारश्चायं सर्वस्तथाविध एव, न हि घटशरावादिः कश्चन मृदोऽर्थान्तरम्, नाममात्रं ह्यन्यान्यत्, तदेवं स्थिते कस्तत्रार्थ उत्पद्यते नश्यति वा, अभिव्यक्तिभेदमात्रमेव निरूप्यमाणे सिद्ध्यति । हन्त सत्कार्यवादः सुरक्षितः, पूर्वं पश्चाच्च यन्नास्ति तदेव स्वाप्नवदध्यासेनाभिव्यक्तः, कस्तत्र ते सत्कार्यवादः, ननु—सतोऽन्यत्कार्यं नास्तीति नः सत्कार्यवाद इति चेत् । कार्यमात्रं प्रतिषेधतस्ते कः सत्कार्यवादः । ननु सत्येवाध्यस्तमिति । तर्ह्यध्यासवाद एव, क्व सत्कार्यवादप्रसङ्गः । ननु कार्यमध्यस्तमिति च वस्तुतो नार्थान्तरम्, सति च सर्वमध्यस्तमिति सत्कार्यवादो नः । हन्त सत्येवं कपाले घटोऽपूर्वो जायते इति वदन्तोऽपि सत्कार्यवादिन एव । कार्यशब्दश्चैषां मुख्यार्थ इति त्वत्तो विशेषः । सदेवान्यथाऽन्यथाऽभिव्यज्यत इति सत्कार्यवाद इति चेत् । अन्ततः काल्पनिकेनैवासता रूपेणाभासत इति कीदृशोऽयं सत्कार्यवादः ।

कश्चिदाह—सतोऽपि घटस्य नावरणादन्तर्द्धिः, नवा तदपनय-

नेनाभिव्यक्तिः, अपि तु सौक्ष्म्यादनुपलब्धिः, कारकव्यापारेण स्थौल्ययोगादभिव्यक्तिः, कनके कटकमुकुटाद्यप्येवमेव, तदुपलम्भानुपलम्भविशेषावेवोत्पादविनाशौ, विशेषग्रहणादावरणतदपनोदकृतयोस्तयोर्व्यावृत्तिः, स्थौल्याधानमुखेनाभिव्यञ्जकत्वात्तु कारकत्वव्यवहारो व्यवस्थित इति । इदमत्र विमृश्यते—किं तत्सूक्ष्मं रूपं येन कटकमुकुटादि सुवर्णपिण्डे सन्निहितमुच्यते, न तावदनपेतस्वसंस्थानं सङ्कोचातिशयतः सूक्ष्मतापन्नं तदेव कटकमुकुटादिरूपम् । न हि कश्चित्प्रामाणिक इमां कल्पनां स्वीकुर्यात् । उपमृदिततत्तत्संस्थानं किमपि तस्यैव सूक्ष्मं रूपमस्तीति तु दुर्वचम् । संस्थानोपमर्दे कटकादेरपगमात्तस्यैव सूक्ष्मं रूपं तदेव च स्वेन सूक्ष्मेण रूपेण कारणे सन्निहितमित्यस्य च दुर्वचत्वात् । आकृत्यपगमेऽपि कटकमुकुटादिव्यवहारास्पदस्य सुवर्णस्य द्रव्यस्यानपायात् कटकमुकुटादि सन्निहितं सूक्ष्मेण रूपेणेति चेत् । हन्त तर्हि सुवर्णस्यैव या कटकमुकुटाद्यवस्था या च पिण्डावस्था ते एव कटकादिकार्यविशेषापेक्षया स्थूलसूक्ष्मे पर्यवस्यतः, यदेव सूक्ष्मं तदेव स्थूलात्मना भवतीत्यवस्थाविशेषाभ्यामेकस्यैवोपादानोपादेयभावः प्राप्नोति, तथा च सिद्धं मृद एव घटाद्याकृतियोगेन घट उत्पन्न इति व्यवहारगोचरत्वं तद्विरोधिचूर्णाकारयोगेन च नष्टो घट इति व्यवहारगोचरत्वं चेति । एवं चावस्थाविशेषावेवोत्पादविनाशाविति सिद्धम् । अवस्थाभेदाहितावुपलम्भतदभावावेवोत्पादविनाशावित्यतोऽवस्थाभेदावेव ताविति युक्तम्, लाघवात् । अयमेवौपनिषदः सत्कार्यवादक्रमः ।

यः सर्वस्यास्य प्रकृतिः स एव सञ्जिहीर्षालक्षितया कारणावस्थया

मृत्युरुच्यते । सञ्जिहीर्षामनस्कारयोः पूर्वमुत्तरत्र चाभिधानात् चेतन इति च गम्यते । एतेन जडस्य तथात्वं व्यावृत्तम् । स चायं सर्वान्तरात्मा । कारणावस्था चास्य तमःशरीरता । इयमपि मृत्युशब्दादेवावगम्यते । श्रूयते च तमसि मृत्युशब्दः—'यस्य मृत्युः शरीर'मिति । 'यस्याक्षरं शरीरं' 'यस्याव्यक्तं शरीर'मिति तु पूर्वपूर्ववाक्यम्, अक्षरस्याप्यव्यवहितपूर्वावस्थं हि तमः, 'अक्षरं तमसि लीयते' इति च श्रूयते । तन्मनोऽकुरुत–तदिति लिङ्गव्यत्ययश्छान्दसः । स मृत्युः मनः अकुरुत–ससर्ज । कुतः ? । आत्मन्वी स्यामिति–आत्मवान् स्यामिति । आत्मानं–मनो लीलोपकरणमिच्छन्निति यावत् । इदमुपलक्षकं महदहङ्कारयोः । भोगसाधनेषु प्राधान्यान्मनसो ग्रहणम् । स्वयमभोक्ताऽपि भोक्तृभोग्यशरीरस्तद्भोगवैलक्षण्यलक्षणलीलारसमात्रमनुभवति । तदयं विहर्तुमिच्छन् मनः ससर्ज । सोऽर्चन्नचरत्—स मृत्युः अर्चन्–प्रीणयन्नात्मानं लीलारसेन पुनरचरत् । अपर्याप्तं मनो लीलोपकरणमिति भोग्यस्य भूतसङ्घस्य सिसृक्षया अचरदित्येतत् । इदं मे लीलोपकरणं साधु सम्पन्नमिति तन्मनोऽर्चन्–अभिनन्दन् तेन वा स्वयमर्चन् हृष्ट इति वा । मनसैव हि भोगवैचित्र्यं क्षेत्रज्ञानाम्, लीलारसवैचित्र्यं चास्य ततः । तदस्य प्राधान्यात्तथा । तस्य–मृत्योरर्चतः–लीलारसेनात्मानं प्रीणयितुं प्रवृत्तस्य आपोऽजायन्त । आपश्च सञ्जाता अवलोक्य स्वयममन्यत मृत्युः । किमित्यमन्यत ? अर्चतो वै मे कमभूदिति—मे मह्यम्, ममैव लीलारसाधानायेत्येतत्, चतुर्थी तादर्थ्ये वा, अतश्चापां शेषत्वं मृत्योश्च शेषित्वं गम्यते । कम्–उदकम् । यदेवममन्यत

अर्चतो वै मे कमभूदिति, तत एवायमर्क इति नाम्नोच्यते । तदेवार्कस्यार्कत्वम्—अर्कपदप्रवृत्तिनिमित्तम् । नामनिर्वचनमेतत् । 'अर्को वाजसन' इति च नाम्नां सहस्रे स्मर्यते । य एवमेतदर्कस्यार्कत्वं वेद, कं ह वाऽस्मै भवति । कमुदकम्, उदकसमृद्धिः फलमुक्तं नामनिर्वचनविज्ञानस्य ॥ १ ॥

आपो वा अर्कस्तद्यदपाꣳ शर आसीत्समहन्यत सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्ततास्निः ॥२॥

आपो वा अर्कः—यदर्कस्य सङ्कल्पैकमूला अर्कस्य शरीरतया शेषभूताश्च तदर्कात्मकतया आपोऽप्यर्क एव । एतेन ब्रह्मात्मकता कार्ये प्रदर्शिता । यद्वा—कोऽसावर्कः?, यस्यार्कनामनिर्वचनं क्रियते एतदेवार्कस्यार्कत्वमितीत्यत्राह—आपो वा अर्क इति । यदर्चनाशेषभूतं कमुदकमभूत्, तदर्क इत्युच्यते इति नामनिर्वचनं बोध्यम् । तद्यदपां भूतान्तरसंसृष्टानां शर आसीत्—दध्न इव मण्डांशः आसीत्, तत्समहन्यत—घनीभूय सङ्घातभावमापद्यत । सा पृथिव्यभवत् । इदमुपलक्षकमण्डस्य । तस्यां पृथिव्यामश्राम्यत्—सृष्ट्यायासेनेव स मृत्युर्विराडात्मनाऽश्राम्यत् । तस्य श्रान्तस्य तप्तस्य—सन्तप्तस्य शरीरात्तेजो रसो निरवर्तत—निर्गतोऽभवत् । सोऽयमग्निः समपद्यत । व्यासार्यास्तु—श्रान्तशब्दः करणलक्षणया यत्नपरः, कृतसङ्कल्पस्येत्यर्थः । तप्तस्य—तप आलोचने, सृज्यवर्गपर्यालोचनवत इत्यर्थ इत्याहुः । सेयमण्डानन्तरभाविनी सृष्टिः सद्वारिका परमात्मनः । अद्वारिका च पूर्वतनीति विभागो बोध्यः ॥२॥

**स त्रेधाऽऽत्मानं व्यकुरुताऽऽदित्यं तृतीयं वायुं तृतीयꣳस एष प्राणस्त्रेधा विहितः । तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मावथास्य प्रतीची दिक् पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥३॥**

स त्रेधाऽऽत्मानं व्यकुरुत—यः पृथिव्यामश्राम्यत् यस्य श्रान्तस्य तेजो रसोऽग्निरभूत् स प्रजापतिर्विराट् आत्मानं त्रेधा व्यकुरुत—व्यभजत् अग्निरादित्यो वायुरिति । तत्र प्रथममुक्तोऽग्निः, द्वौ तु वक्तव्यौ, तावाह—आदित्यं तृतीयं वायुं तृतीयमिति । ननु—आदित्यं द्वितीयं वायुं तृतीयमिति वक्तव्यं, कथमविशेषेणोभयत्र । नैतत्, अग्निवाय्वपेक्षयाऽऽदित्यस्य तृतीयत्वमग्न्यादित्यापेक्षया वायोस्तृतीयत्वं वाय्वादित्यापेक्षयाऽग्नेस्तृतीयत्वं चाविशिष्टमिति तथोक्तम् । त्रिष्वन्यतमो हि त्रित्वसङ्ख्यां पूरयति । एतेनास्य कार्यवर्गस्य कारणात्मतोक्ता, परमात्मा हि सर्वस्य मूलम् । स इत्यग्निरेव वा । अध्यात्मकः प्रजापतिरादित्यवाय्वात्मनाऽभूदिति भावः । तस्मात्—स एष प्राणः परमात्मा त्रेधा विहितः । एवं प्रकृतस्याग्नेरतिशयो निरूपित उत्पत्तिनिरूपणेन । अथास्य दृष्टिविशेष उच्यते—तस्येति । तस्यास्याग्नेर्यच्छिरः सा दिक् प्राची, असौ चासौ च—ऐशाग्नेयौ ईर्मौ—बाहू । अथास्य पुच्छं प्रतीची दिक्, अस्य सक्थ्यौ असौ चासौ च—वायव्यनैर्ऋतौ, अस्य पार्श्वे दक्षि-

१ मूलता च सूक्ष्मचिदचिद्विशिष्टवेषेण ।

णा चोदीची च, पृष्ठं द्यौः, उदरमन्तरिक्षम्, उरः इयम्-पृथिवी । इत्ययं चित्याग्नेर्दृष्टिविशेषः । स एषोऽग्निरप्सु प्रतिष्ठितः-एतन्मूलत्वात् । अथ दृष्टिफलमुच्यते-य एवं विद्वान् स यत्र क्वचैति तत्-तत्र प्रतितिष्ठत्येव प्रतिष्ठां लभत एव ॥३॥

सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनꣳ समभवदशनाया मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवत् । न ह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभः । यावान् संवत्सरस्तमेतावतः कालस्य परस्तादसृजत । तं जातमभिव्याददात्स भाणमकरोत्सैव वागभवत् ॥४॥

अथाश्वमेधाङ्गे संवत्सरे दृष्टिविशेषं विधातुमुपक्रमते—स इति । स मृत्युरकामयत-द्वितीयो मे आत्मा जायेतेति—अग्नेरपर आत्मा शरीरं मे जायेतेति, रूपान्तरं स्यादित्यमन्यतेत्येतत् । मे-मह्यमिति वा, स्वार्थे रूपान्तरमैच्छदित्येतत् । योऽशनायया-सञ्जिहीर्षयोपलक्षितो मृत्युः स मनसा वाचं त्रयीं मिथुनं समभवत्-सम्पन्नमिथुनभावमकरोत् । द्वितीयमात्मानं सृजंस्त्रयीं मनसा प्राविशदित्येतत् । स्मर्यते हि—'नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः ।' इति । तत्-तदानीं यद्रेत आसीत्-रेतो बीजम्, प्रजापतेः स्रक्ष्यमाणस्य रूपमभिव्यक्तमासीत्, त्रयीं पर्यालोचयतः सिसृक्षोः स्रक्ष्यमाणेनैवंप्रकारेण भाव्यमिति

प्रकारविशेषः ज्ञानकर्मवासनाशेषतालक्षणः स बुद्धावभिव्यक्तोऽभूदिति यावत् । स संवत्सरोऽभवत्—यथाज्ञानकर्मवासनं संवत्सराख्यः कश्चित् प्रजापतिरभूदिति यावत् । न हि ततो रेतःसमभिव्यक्तेः पुरा संवत्सर आस, न च रेतःसम्पत्तेरनुक्षणमेव संवत्सरः समपद्यत, किन्तु तम्—संवत्सरम्, एतावन्तं कालम्—यावानस्मिन् व्यवहारे संवत्सरस्य समयस्तावन्तं कालं रेतोरूपेणैव अबिभः—बिभृतवानयं मृत्युः । एतावतः कालस्य परस्तात्तं संवत्सराख्यं प्रजापतिमसृजत् । संवत्सरलक्षणकालविभागनिर्वाहकत्वेनायं प्रजापतिः संवत्सर उच्यते, निर्वाह्यनिर्वाहकयोरभेदोपचारात्, अश्वमेधाङ्गभूतसंवत्सरलक्षणकालविभागप्रकरणेन नासङ्गतिः । तं जातम्—संवत्सरम्, अभि—अभिलक्ष्य स मृत्युर्मुखं व्याददात् अशिशिषास्वाभाव्यात् । स संवत्सरो भीतो भाणम्—भाणितिशब्दं अकरोत् । सैव वागभवत्—जगति शब्दरूपेणाभवत् ॥ ४ ॥

स ऐक्षत यदि वा इममभिमꣳस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदꣳ सर्वमसृजत यदिदं किञ्चर्चो यजूꣳषि सामानि छन्दाꣳसि यज्ञान् प्रजाः पशून् । स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वꣳ सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥५॥

स-मृत्युः ऐक्षत-पुनर्विचारमकरोत्, यदीममभिमंस्ये-हनिष्यामि, अभिपूर्वो मन्यतिर्हिंसार्थः । कनीयोऽन्नं करिष्ये-बीजस्योपघातेनेतोऽधिकस्यान्नस्यासम्भवेन मेऽन्नं कनीय एव-अल्पमेव स्यादिति । तदेवं विचार्य ततो निवृत्य तत्संहारात् तया वाचा-संवत्सरात्मप्रजापतिनिसृष्टया भूरादिव्याहृतिलक्षणया वाचा ( यद्वाणमकरोत् सैव वाग्व्याहृतिलक्षणाऽभवत् ) तेनात्मना-तेन संवत्सरेणात्मना तच्छरीरकः सन्नित्येतत् । इदं सर्वमसृजत यदिदं किञ्च—ऋचो यजूंषि सामानि छन्दांसि यज्ञान् प्रजाः पशून् । स मृत्युर्यद्यदेवासृजत तत्तदत्तुमध्रियत मनः, अशिशिषा हि मृत्योः स्वभावः, सृष्टिस्थितिलया विहरणमस्येति गुण एव । तदयं मृत्युरदितिरप्युच्यते । सर्वं वा अत्तीति तददितेरस्यादितित्वम्-अदितिशब्दवाच्यत्वम् । य एवमस्यादितेरदितित्वं वेद स सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं च भवति । इदमदितित्ववेदनफलम् । ननु—सर्वस्यात्तुर्मृत्योर्यददितित्वं तद्धि सर्वसंहरणम्, तद्वेदनफलं सर्वस्यात्तृत्वमपि तदेव भवितुमर्हति, न ह्यन्यद्वेद्यमन्यत्फलं भवेत् । सर्वमस्योपभोग्यं भवति सर्वमसावुपभुङ्क्ते इति त्वर्थवादः समुचितः, नतु संहरणवादः । नैतत् । लोके रूपादि दृश्यमानं सदुपभोगाय भवति किञ्चित् श्रूयमाणं सत् किञ्चित्स्पृश्यमानं सत्, अन्नं त्वद्यमानं सत्, अत एव संहार्यमाणं सत् भोगाय भवति । मृत्युरशिशिषातिशयतः सर्वमत्ति, स चायमस्योपभोगप्रकारः । यश्चायमस्यादितित्वं वेद स सर्वस्यान्नस्य लौकिकस्यात्ता भवति, अस्यालभ्यमन्नं न किञ्चिदित्ययमर्थवादः समुचितो नाम ।

यद्वा-तं जातं संवत्सरमभिव्याददात्-वीत्युपसर्गोऽधिकोऽनर्थकः,

पुत्रोऽयमिति प्रेम्णा गृहीतवान्। स बालभावेन भाणमकरोत्, सैव वागभवत्। स ऐक्षत यदीममभिमंस्ये—अयमेकः पर्याप्त इतीममभिलक्ष्याभिमानवान्स्याम्, तदा मे अन्नम्—भोग्यं—लीलोपभोगार्हं कनीयः—अल्पं स्यादिति। तदेवं विचार्य यदिदं सर्वमसृजत। सृष्ट्वा च सर्वमत्तुम्—अनुभवितुं अध्रियत, तत्तदनुप्रविश्य तत्तद्रूपो भूत्वा तत्तद्भोक्तृजीवद्वारा तत्तदुपभोगलक्षणलीलारसोपभोगाय मनोऽध्रियत। 'काठिन्यवान्यो बिभर्ती'तिवत्परमात्मनः स्वतः कर्मकृतभोगरहितस्यापि भोक्तृजीवद्वारा भोक्तृत्वसम्बन्धो लीलारसवैचित्र्यमेवेति न दोषः। तदयमदितिरित्युच्यते। अन्यत्र 'अदितिर्देवतामयी' इति यः श्रुतस्तस्यान्तर्यामितया तद्रूपमापन्न इत्यदितिश्च। तस्यास्यादितित्वं यो वेद सोऽप्यत्ता—भोक्ता सर्वस्य भवतीति न काऽपि क्षतिः ॥५॥

सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशोवीर्यमुदक्रामत् प्राणा वै यशोवीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ॥६॥

अथाश्वमेधनामनिर्वचनार्थमारभ्यते—सोऽकामयतेत्यादिना। स प्रजापतिः—यः सर्गस्य प्रथमः, येन द्वारभूतेन परमात्मा स्रष्टा व्यष्टेर्भवति, अकामयत। किमिति? भूयसा महता यज्ञेन भूयो यजेयेति—भूयो भूयो यजेयेति। सोऽश्राम्यत्—यज्ञसामग्रीसम्पादनचिन्तयाऽश्राम्यदिव। स तपोऽतप्यत यज्ञसामग्रीसम्पादनाय। तस्य श्रान्तस्य तप्तस्य

यशोवीर्यमुदक्रामत्, शरीरात्। किं तद्यशोवीर्यमुच्यते ?, आह–प्राणा वै–प्राणा एव यशोवीर्यमुच्यते, यशोवीर्ययोः प्राणाधीनत्वेन साधने साध्योपचारः। प्राणेषूत्क्रान्तेषु तच्छरीरं श्वयितुमध्रियत–उच्छूनभावमगमदित्येतत्। तस्य प्रजापतेस्तस्मिन्नेवामेध्यभावं गत एव मन आसीत्–तच्छरीरमपहायान्यत्र गन्तुं मनो नाभूत् ॥६॥

सोऽकामयत मेध्यं म इद्ँ स्यादात्मन्व्यनेन स्यामिति ततोऽश्वः समभवद्यदश्वयत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्। एष ह वा अश्वमेधं वेद य एनमेवं वेद। तमनवरुध्यैवामन्यत त्ँ संवत्सरस्य परस्तादात्मन आलभत पशून्देवताभ्यः प्रत्यौहत् तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त। एष वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ। सो पुनरेकैव देवता भवति मृत्युरेवापपुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवत्येतासां देवतानामेको भवति ॥७॥

सोऽकामयत–इदमुत्क्रान्तप्राणममेध्यमधुना वर्तते, माभूदेवमेतत्, इदं शरीरं मेध्यं स्यात्, अनेनाहमात्मन्वी स्यामिति। एवं मत्वा पुनरंशतस्तस्मिन्प्रविवेश। ततस्तेनानुप्रविष्टात् स्थूलाच्छरीरादश्वः

समभवत्। यस्मादुत्क्रान्तप्राणं प्रजापतेः शरीरमश्वयत्तत्पुनरनुप्रवेशेन मेध्यं चाभवत्। तत्–तस्मादेवाश्वमेधस्य यागस्याश्वमेधत्वम्–अश्वमेध इति व्यवहारगोचरता। यद्यप्यश्वमेध इति यथानिर्वचनं द्रव्यनाम भवितुमर्हति। अथापि तद्द्रव्यकयागे तदभेदाध्यवसायेन तथा व्यवहारः प्रवर्तत इति भावः। य एनं पशुमश्वं प्रजापतिमेवमुक्तनामनिर्वचनगुणयोगविशिष्टं वेद एष ह वा अश्वमेधं वेद। तमश्वं पशुमनवरुध्यैव–अप्रतिरुध्यैव अमन्यत, अनेन यक्ष्य इति। तमनवरुद्धमेव चरन्तं संवत्सरस्य परस्तात्–पश्चात् आत्मन आलभत–प्राजापत्योऽयं पशुरिति। पशून्–अन्यान् देवताभ्यः–अग्न्यादिभ्यः प्रत्यौहत्–प्रविभज्य प्रादादित्येतत्। यस्मादेवं तस्मादद्युनाऽपि याज्ञिकाः प्राजापत्यं प्रजापतिदेवताकमत एव सर्वदेवतासमष्टिभूतप्रजापतिदेवताकत्वेन सर्वदेवताकमश्वमालभन्त। अथाश्वमेधे दृष्टिविशेष उच्यते—एष ह वा अश्वमेधः य एष तपति–अश्वमेधमादित्यं पश्येदित्येतत्। क्रतुफलत्वात्साधने तद्दृष्टिः समुचिता नाम। तस्यादित्यस्य संवत्सर आत्मा–स हि तन्निर्वर्त्यः। यश्चायं चित्याग्निः सोऽर्कः–अर्कशब्देन निरुक्तः परमात्मा। तस्यार्कस्येमे लोकाः। तथा च पूर्वं व्याख्यातं 'तस्य प्राची दिगि'त्यादिना। तावेतावर्काश्वमेधौ–योऽर्कश्चित्याग्निर्यश्चाश्वमेध आदित्यः तावेतौ, सा पुनरेकैव देवता भवति–एकस्या एव देवताया अंशभूताविति तथोच्यते। का सा?, मृत्युरेव यः पूर्वमुक्तः सर्वस्य संहर्ता सृष्टये प्रवृत्तः, प्रवृत्तश्च स्वात्मनैव तद्रूपोऽभूत्, सोऽयं सर्वान्तर्यामी परमात्मा एकैव देवता, तत्प्रीणनमस्यैव प्रीणनं वस्तुतो भवतीति यावत्। य एवं वेत्ति स जय-

त्यपमृत्युं नैनं मृत्युराप्नोति—जननमरणे न स्त इत्येतत् । कुत एतत्?, मृत्युर्यस्मादेवंविद आत्मा भवति—अयं हि परमात्मात्मकं स्वात्मानं पश्यतीत्येतत् । एतासामग्न्यादिदेवतानामेकोऽन्यतमो भवति । इदं देवतासायुज्यमवान्तरफलमुच्यते ।

इति प्रथमाध्याये द्वितीयं ब्राह्मणम् ।

---

**द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥१॥**

अथ आख्यायिकामुखेनारभ्यतेऽपरा कर्माङ्गावलम्बिनी विद्या । यस्य दृष्टिं कर्माङ्गे विधास्यति स प्राणः स्तोतव्य इत्यारम्भे आख्यायिकायाः प्रवृत्तिः । स्तुत्या च तस्य श्रैष्ठ्यं ज्ञापितं स्यात् । द्वयाः—द्विविधाः प्राजापत्याः—प्रजापतेः पुत्राः देवाश्चासुराश्च । ततः कनीयसा एव देवा ज्यायसा असुराः—तेष्वल्पीयांसो देवाः असुराश्च बहवः । त एषु लोकेष्वस्पर्धन्त—वयमिमान् लोकान्भोक्ष्यामो वयमेवेमान् लोकान्भोक्ष्याम इति । ते ह देवा मिथ ऊचुः, ज्यायसो ह्यसुरा अस्मानासुरेण बलेनाभिभवन्ति, तानेतान्वयं यज्ञे उद्गीथेनात्ययाम—जयेमेति । यज्ञाङ्गभूतमुद्गीथं समग्रमुद्गातृमुखेनावलम्ब्य जयेम, यः समग्रस्योद्गीथस्योद्गाता तमुपास्य जयेमेत्येतत् । त्वं न उद्गायेत्युद्गातारं ह्यवलम्बते, अतिक्रम्य वागादीन्प्राण उद्गाता समाश्रीयते, तदुद्गातरि प्राणदृष्टिरिह विधीयते । छान्दोग्ये तूद्गीथावयवे

प्राणदृष्टिरिति ततोऽस्या विद्याया भेदः। एतेनाख्यायिकैक्यमुद्गीथे- नात्ययामेत्येतच्च विद्यैक्यप्रत्यभिज्ञापकमित्यपास्तम्। किञ्च—उत्तर- त्रोद्गायेत्युद्गानकर्तुर्बहुशः श्रवणादुद्गात्राऽत्येष्यन्तीति श्रवणाच्चोद्गा- तरि प्राणदृष्टिरिह प्रतीयत इति च विद्याभेदः। उद्गातरि प्राणदृ- ष्टिरप्युद्गीथमुखेनेत्यविरोधः ॥१॥

**ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुद- गायत् यो वाचि भोगस्तं देवेभ्य आगायत् यत् क- ल्याणं वदति तदात्मने। ते विदुरनेन वै न उद्गा- त्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥२॥**

ते देवा वाचमूचुः—त्वं नः श्रेयसे उद्गायेति। उद्गातरि उद्गी- थेन मुखेन वाग्दृष्टिं कृतवन्त इत्येतत्। तथेति तेभ्यो वागुदगायत्। वाक्—वागभिमानिनी देवता। कमुदगायत्?, आह—यो वाचि भोगः वागिन्द्रियसाध्यो भोगः तं देवेभ्योऽगायत्। यद्यत् कल्याणं वदति तदात्मने—कल्याणैकवदनव्रतं च स्वस्मै अगायत्। ते विदुरसुराः— देवा अनेनैवोपास्यमानेनोद्गात्राऽत्येष्यन्ति—जेष्यन्ति। इति ज्ञात्वा तमभ्यस्तवागिन्द्रियमुद्गातारमविध्यन्पाप्मना। यद्दृष्ट्योपास्यतयाऽस्य वीर्यं तद्वागिन्द्रियं पाप्मनाऽनृतवदनादिस्वाभाव्यलक्षणेनादूषयन्। आसुरो ह्ययं दोषः। पापमेव विशदयति—स यः पाप्मा अप्रतिरूपम्— असदृशं अनुचितमित्येतत्, अश्लीलमनृतं पैशुन्यमेवमादि यद्वदति स एवोक्तः पाप्मा। श्रुतौ नाम्रेडितं दोषः ॥ २ ॥

अथ ह घ्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य आगायत् यत् कल्याणं जिघ्रति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ॥३॥

अथेति । प्राणोऽत्र घ्राणः । घ्राणमित्येव क्वचित्पाठः । देवा विज्ञाय दूषणमसुरैः कृतं परित्यज्य वाचं घ्राणमूचुस्त्वं न उद्गायेति । उद्गातरि घ्राणदृष्टिमकुर्वन् । घ्राणमुद्गातारमुपासाञ्चक्रिरे इत्येतत् । स्पष्टमितरत् ॥३॥

अथ ह चक्षुरूचुस्त्वं न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायत् । यच्चक्षुषि भोगस्तं देवेभ्य आगायद्यत्कल्याणं पश्यति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ॥४॥ अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं देवेभ्य आगायद्यत्कल्याणँ शृणोति तदात्मने ते विदुरनेन वै न

उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपꣳ शृणोति स एव स पाप्मा ॥५॥ अथ ह मन ऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तं देवेभ्य आगायद्यत् कल्याणꣳ सङ्कल्पयति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपꣳ सङ्कल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन् ॥ ६ ॥

चक्षुरित्यादि पूर्ववत् । उक्तमेवार्थमुपसंहृत्याह—एवमु खल्वित्यादिना ॥४—६॥

अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविव्यत्स्यन्स यथाऽश्मानमृत्वा लोष्टो विध्वꣳसेतैवꣳ हैव विध्वꣳसमाना विष्वञ्चो विनेशुस्ततो देवा अभवन् पराऽसुरा भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद ॥७॥

अथ दूषिते तत्तदाश्रये अस्तशरणास्ते देवा इममासन्यं प्राणमा-

स्यान्तरवर्तिनं प्राणं मुख्यमूचुः, त्वं न उद्गायेति । तेभ्य एष प्राण उदगायत् । प्राणमुद्गातारमुपासाञ्चक्रिरे इति यावत् । प्राणेनोद्गात्राऽस्मान् जेष्यन्तीति ते विज्ञाय तमभिद्रुत्य पाप्मनाऽविव्यत्सन्–वेद्धुमिच्छामकुर्वन् । वागादिषु दृष्टस्ववीर्या अविज्ञातमुख्यप्राणबला अभिपातमात्रेण प्राणमपि दूषयाम इति तमभ्यद्रवन् । किन्तु लोष्टो–मृत्पिण्डो यथाऽश्मानमृत्वा प्राप्य विध्वंसते तथा ते तं मुख्यं प्राणं प्राप्य विध्वंसमाना विष्वग्गतयो विशीर्य परितः पतन्तो विनेशुः । अलेपो ह्ययं प्राणः । रागाद्युपलेपो हि वागादिषु प्रभवति । ततो देवा अभवन्–द्योतमाना अभवन् । जितवन्त इत्येतत् । असुरास्तु पराभवन्–पराभूता अभवन् । य एवं वेद–उपास्ते, अस्य द्विष्यन्–द्वेषं कुर्वन् भ्रातृव्य आत्मना पराभवति–स्वयमेव नश्यति ॥७॥

ते होचुः क्व नु सोऽभूद् यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः ॥८॥

प्राणस्य महिमानं ख्यापयन्नाह—ते हेत्यादि । ते ह देवा ऊचुः–यो न इत्थमसक्त–इत्थं जयेन नः संयोजितवान्स क्वन्वभूत् । अस्य प्रतिष्ठास्थानं किमिति विचारितवन्तः । विचार्योचुः—अयमास्येऽन्तरिति । आस्यस्यान्तराकाशेऽलेपे स्थाने, इति हेतोः सोऽयास्यनामा भवति । परिभाषेयं श्रौती । न केवलमयास्यः, आङ्गिरसश्च । कुतः?, अङ्गानां ह्यसौ रसः–रसवत्प्राधान्यात्पोषकत्वात् । अङ्गरस एवायमाङ्गिरस इति च परिभाष्यते ॥८॥

सा वा एषा देवता दूर्नाम दूरꣳ ह्यस्या मृत्युर्दूरꣳ ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥९॥

सा वा एषा देवता मुख्यप्राणाख्या दूर्नाम । नामेति प्रसिद्धौ । तत्र हेतुः—मृत्युर्ह्यस्या दूरम् । मृत्युरत्र पाप्मोच्यते । तस्मादयं दूश्च भवति । य एवं वेद, अस्मादपि मृत्युर्दूरे भवति । अपापो भवतीत्येतत् ॥९॥

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तद्गमयाञ्चकार तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति ॥१०॥

सैषा देवता मुख्यप्राणलक्षणा एतासां वागादिदेवतानां दुःखाधायकत्वेन मृत्युशब्दवाच्यं पाप्मानमपहत्य—विनाश्य तत्—किमपि स्थानं गमयाञ्चकार । किं तत् स्थानम् ?, यत्रासां दिशामन्तः, तत्, दिगन्तानित्येतत् । यस्माद्वागादीनां पाप्मनो विन्यदधात्, तत्—तस्मात् तत्र दिगन्तदेशे न जनम्—जननं इयात् नान्तम्—मरणमियात् । वागादिदोषलक्षणपापैकनिधानस्थानभूते दिगन्तदेशे जननमरणे पापावहे, दूरं परिहरणीयः स देश इति भावः । नेत् पाप्मानं मृत्युमन्ववायानीति—एवार्थ इत्शब्दः, नेत्—नैव, पापलक्षणं मृत्युं अन्ववायानीति नितान्तं भीत्या तत्र देशे जननमरणे न प्राप्नुयादिति पूर्वेणान्वयः १०

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैना मृत्युमत्यवहत् ॥११॥

सा वा एषा देवता मुख्यप्राणलक्षणा एतासां वागादिदेवतानां पाप्मानं मृत्युमपहत्य—नाशयित्वा एनाः पूर्वं मृत्युग्रस्ता मृत्युमत्यवहत्—अतिलङ्घितमृत्यूरकरोत् ॥११॥

स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते॥१२॥

स वै मुख्यः प्राणो वाचमेव प्रथमामत्यवहत्—अतिलङ्घितमृत्युमकरोत्। सा वाक् यदा मृत्युमत्यमुच्यत—अतिलङ्घितवती, मृत्युमिति विभक्तिव्यत्ययश्छान्दसो वा, मृत्योरत्यमुच्यतेत्यर्थः। तदैव सः अतिक्रान्तमृत्युरग्निरभवत्। अग्निना हि देवेनाधिष्ठिता वाक्, तदुच्यते सोऽग्निरभवदिति। यद्यपि वागधिष्ठितैव सदैवाग्निना, तत् क्को विशेषः पापातिलङ्घनानन्तरमग्निरभवदिति। सत्यम्। अधिष्ठितैवाग्निना पूर्वमपि, सन्नप्ययमधिष्ठाता स्वाधिष्ठानं परेण पाप्मना दूष्यमाणमीक्षमाण एव दुर्बल इवासीदन्यथाकर्तुमसमर्थः, तत्तदाऽसत्कल्पतां मत्वा उच्यते—स यदा मृत्युमत्यमुच्यत सोऽग्निरभवदिति। सोऽयमग्निर्मृत्युमतिक्रान्तः परेण—परस्तात् दीप्यते, विशेषेण दीप्यते इति वा॥ १२॥

अथ ह प्राणमत्यवहत्स यदा मृत्युमत्यमुच्यत स वायुरभवत्सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥१३॥ अथ चक्षुरत्यवहत् तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत्सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥१४॥ अथ श्रोत्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवꣳस्ता इमा दिशः

परेण मृत्युमतिक्रान्ताः ॥१५॥ अथ मनोऽत्यवहत्तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवꣳ ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥१६॥

व्याख्यातप्रायम् ॥१३॥१४॥१५॥१६॥

अथात्मनेऽन्नाद्यमागायद्यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति ॥१७॥

एतेनोपदिष्टः प्राणस्य वागाद्यतिवहनलक्षणगुणविशेषः, अथ वागादिसंतर्पकत्वलक्षणगुणान्तरं विधास्यन्नाह—आत्मन इति । यथा वागादिरात्मने कल्याणादिकमगायत्, तथाऽयं प्राण आत्मनेऽन्नाद्यमगायत्—अन्नपानीयम्, अन्नमाद्यं यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । यच्चेदमस्यार्थस्य गमकमव्यवहितं वाक्यं 'यद्धि किञ्चनान्नमद्यते' इति, तदुपलक्षकं यच्च पीयत इत्यस्य । यद्वा—आद्यमदनार्हमन्नमिति विशेष्यविशेषणभावो वा, पार्थिवमात्रे प्रवर्तमानमन्नपदं व्यावर्त्यतेऽनेन विशेषणेन । तथाऽभक्ष्याच्च । यद्वा—अन्नमाद्यं यस्येति बहुव्रीहिरेव वा, अन्नपदमोदने रूढं बोध्यम् । आदिशब्दात्फलस्य ग्रहणं बोध्यम् । यजमानगामिफलादधिकमात्मगामिफलमगायत् । ननु फलमिदमन्नं प्राणासाधारणमिति कथमवगम्यते, तत्राह—प्रत्यक्षसिद्धमेतत्, यद्धि किञ्चन लोकेऽद्यते तदनेन प्राणेनैवाद्यते । ननु सङ्घातेऽस्मिन्प्राणेनैवाद्यत इत्येतत्कथम्?, इह प्रतितिष्ठति—इहान्न एव

हि प्राणः प्रतितिष्ठति, अन्नबलादेव हि प्राणः प्रतिष्ठां लभते । यद्वा—यद्धि किञ्चनाद्यते तदनेनैवाद्यते, तदन्नं प्राणायैवेति विज्ञायते । इतश्च तथा विज्ञायते, रसभावमापन्नेनान्नेनोपचिते शरीरे एवायं प्रतितिष्ठति, तत्प्रतितिष्ठति इहैवान्न एव । तदेतत्स्थित्यर्थमन्नाद्यम् ॥१७॥

ते देवा अब्रुवन्नेतावद्वा इदꣳ सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते वै माभिसंविशतेति तथेति तꣳ समन्तं परिण्यविशन्त तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवꣳ ह वा एनꣳ स्वा अभिसंविशन्ति भर्ता स्वानाꣳ श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य उहैवं विदꣳस्वेषु प्रतिप्रतिबुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनुभवति यो वै तमनुभार्यान् बुभूर्षति स हैवालं भार्येभ्यो भवति ॥१८॥

प्राणद्वारेणैव वागादीनामन्नजनितमाप्यायनमित्येतदुपपादयन्नाह—ते देवा इति । ते वागादयो देवा अब्रुवन्—यदिदमन्नमेतावत्सर्वं तदात्मने त्वमगासीः, अनु—तवैव भोगमनु अस्मानप्याभजस्वास्मिन्नन्ने । अन्नमाभाजयस्व नः । विनाऽन्नं स्थातुं वयमसमर्थाः । त्वामनुभजतोऽस्मांस्त्वदीयेनैवान्नेन तवैव भोगमनु भोजयस्व । अथ प्राणः प्रत्यवदत्—ते-बुभुक्षिता यूयं मां भुञ्जन्तमभिसंविशतेति । तथेत्युक्त्वा ते वागादयस्तं समन्तात्परितो न्यविशन् । तस्मादनेन प्राणे-

न यदन्नमत्ति कश्चित् प्राणी तेनैवान्नेनैता वागादयस्तृप्यन्ति । तच्चक्षुरुपजीव्यतृप्तयो भवन्तीति यावत् । अनेनात्तीति कारकभेदनिर्देशात्कर्तुः पुरुषस्य जीवस्य करणमात्रं प्राण इति प्राणादन्यो जीवो गम्यते । उक्तं प्राणगुणविशेषं जानतः फलमुच्यते—य एवं वेद तमेनमेवं हि—प्राणमिव वागादयः अभिसंविशन्ति, स्वानां च भर्ता भरणसमर्थश्च भवति, श्रेष्ठः सन् पुर एता—अग्रतो गन्ता स्वानां भवति, अन्नादो भवति—अन्नादनशक्तो भवति, अधिपतिश्च भवति स्वानाम् । यस्त्वेवंविदं स्वेषु मध्ये कश्चित् प्रति—प्रतिकूलः सन् प्रतिबुभूषति—पराभवितुमिच्छति स भार्येभ्यः—भरणीयेभ्यः—पुत्रकलत्रादीन् भर्तव्यान् भर्तुम् नालं भवति—असमर्थो भवति । यस्त्वेतं प्राणगुणविदमनु—अनुसृत्य भवति—अनुकूलो भवति यो वैतमनुसृत्यैव भार्यान् भर्तव्यान् भर्तुमिच्छति स एव भार्येभ्यो—भर्तव्येभ्योऽलं भवति—भरणे समर्थो भवति । अनेन विद्या स्तुता भवति ॥१८॥

सोऽयास्य आङ्गिरसोऽङ्गाना९ँ हि रसः प्राणो वा अङ्गाना९ँ रसः प्राणो हि वा अङ्गाना९ँ रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गाना९ँ रसः ॥१९॥

उक्तमाङ्गिरसत्वमनुवदति तत्रोपपत्तिं निरूपयन्—सोऽयास्यः प्राण आङ्गिरसः—कस्मात् ?, अङ्गानां ह्येष रसः । कथमयमङ्गानां रसः ?, उच्यते, यस्मात् कस्माचिदङ्गाद्धस्तात्पादाद्वा प्राण उत्क्रामति तदङ्गं तदैव शुष्यति, तस्मादेष एव हि अङ्गानां रसः । प्राणयोगान्वय-

व्यतिरेकानुविधायिशक्त्यशक्तिकत्वादङ्गानां प्राणानामङ्गरसत्वमुपपन्नमिति भावः ॥१९॥

एष उ एव बृहस्पतिर्वाग् वै बृहती
तस्या एष पतिस्तस्मादु बृहस्पतिः ॥२०॥

स्तूयते प्राण उपास्यः। एष एव बृहस्पतिः, कथम्?, वाग्वै बृहती—षट्त्रिंशदक्षरच्छन्दस्का ऋक्। 'वाग्वा अनुष्टुप्' इत्यन्यत्र श्रूयते, सा च बृहत्यामन्तर्भवति। शते पञ्चाशन्न्यायात्। तथाच ऋक् वागित्युक्तं भवति। तस्या एष पतिः। वाचः प्राणायत्तप्रवृत्तित्वात्। तस्मादेव बृहस्पतिः। ऋचां पतिः प्राण इत्युक्तं भवति ॥२०॥

एष उ एव ब्रह्मणस्पतिर्वाग् वै ब्रह्म तस्या
एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥२१॥

एष एव ब्रह्मणस्पतिः, कस्मात्?, वाग्वै ब्रह्म—ब्रह्मात्र यजुः, सामान्यशब्दस्य विशेषे प्रवृत्तेः, ब्रह्मशब्दश्च वेदे प्रसिद्धः। वाङ्निर्वर्त्यत्वात् वाग्वै ब्रह्मेति। तस्या यजुरात्मकाया वाच एष पतिस्तत् ब्रह्मणस्पतिः ॥२१॥

एष उ एव साम वाग् वै सामैष सा चामश्चेति तत्साम्नः सामत्वं यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यँ सलोकतां जयति य एवमेतत्साम वेद ॥२२॥

एष एव साम, कस्मात् ?, वाग्वै सा, स्त्रीलिङ्गोऽयं तच्छब्दः पूर्वं बृहतीत्यनेनोपलक्षितां ऋचं परामृशति । अम एष प्राणः । ततः किम् ?, आह—सा चामश्चेति तत्साम्नः सामत्वम्—सा चामश्चेत्यनयोः संश्लेषादेव हि साम्नः सामत्वम् । यद्यपि द्वन्द्वात्प्राधान्यमुभयोर्गम्यते । तथाप्येष एवेति निर्देशात्प्राणबलनिर्वर्त्यगीतिप्राधान्याच्च वागुपसर्जितः प्राण एव सामेत्युक्तं भवति । प्रकारान्तरेण सामत्वं प्राणस्योपपादयति—यद्वेवेत्यादिना । यद्वा—इति पदच्छेदः, इवशब्द एवार्थः । यत्—उ—एवेति वा पदच्छेदः,—उकारो वार्थः । प्राणो ह्येष प्लुषिणा पुत्तिकाशरीरेण व्याप्येन समः, मशकेन—मशकशरीरेण व्याप्येन समो, नागेन—हस्तिशरीरेण व्याप्येन समः, सम एभिस्त्रिभिर्लोकैः समष्टिजीवभूतब्रह्मशरीरभूतैर्व्याप्यैः, किं बहुना—समोऽनेन सर्वेण देवमनुष्यादिशरीरेण तेन तेन व्याप्येन । पञ्चवृत्तिरयं प्राणस्तत्तच्छरीरमन्यान्यपरिणामं प्रविष्टो व्याप्यतत्तच्छरीरानुरूपवृत्तिप्रसरणेन दीप इव घटोदरगृहोदरादिकमुपगतः प्रभाप्रसरणेन व्याप्यतत्तदनुगुणपरिणाहतया समो भवतीति यावत् । एतेन प्राणस्याणुत्वं सूत्रकृता समर्थितं कथं सङ्गच्छत इति शङ्का परास्ता । हिरण्यगर्भप्राणादन्यत्र प्राणेऽणुत्वमिति केचित् । तस्मादेव साम—समत्वादेव सामेत्युच्यते इति नाम्नो निर्वचनम् । य एवमेतत्साम वेद—निर्वचनमुखेन वेद, उक्तनिर्वचनगम्यगुणकं प्राणमुपास्ते इति यावत् । अश्नुते साम्नः प्राणस्य सायुज्यं, सलोकतां च जयते ॥२२॥

**एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदꣳ सर्वमुत्तब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः ॥२३॥**

एष उ वा उद्गीथः—एष वागुपसर्जनः प्राण एव मुख्य उद्गीथः, कथम् ?, प्राणो वा उत्, प्राणेन हीदमुत्तब्धम्, वागेव गीथा, उच्च गीथा चेति उद्गीथः। सर्वमपि सुरनरादि प्राणेन हि उत्तब्धम्—अवधृतम्, अत उदिति निर्देशः प्राणे वर्तते, वागेव च गीथा वाचा हि गीयते, उच्च गीथा चेति द्वन्द्वेनोद्गीथ इति वाक्संसृष्टः प्राण उक्तो भवति । पूर्ववत्प्राधान्याद्वागुपसर्जनः प्राण उद्गीथ इत्युक्तं भवति २३

तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन चोदगायदिति ॥२४॥

उद्गातर्यध्यस्योपास्यमाना देवता मुख्यप्राण एवेतीममर्थमाख्यायिकया द्रढयन्नाह—तद्धापीति । तदपि—तत्रापि—हेति प्रसिद्धौ, आख्यायिकेति शेषः। चिकितानस्यापत्यं चैकितानिस्तस्यापत्यं युवा चैकितानेयः, नाम्ना ब्रह्मदत्तः राजानं—सोमं भक्षयन् इदमुवाच । अयं भक्ष्यमाणः सोमः—यत्—यदि कश्चित् इतोऽयास्य आङ्गिरसः—इतोऽयास्याङ्गिरसात्, मुख्यप्राणात्, छान्दसः सुः, अन्येन उदगायत्—विनैतत्प्राणदेवताकत्वदृष्टिं दृष्ट्यन्तरेण वोदगायत्, तदा त्यस्य—तस्य मूर्धानं विपातयतात्—विपातयतु । अन्यस्यायं राजेति पाठे—य उदगायत् तस्यान्यस्येत्यर्थः । अहं तु प्राणदृष्ट्यैवोपासे, न मम तदाग इत्याशयः । इतिशब्दो ब्रह्मदत्तवाक्यपरिसमाप्तौ । श्रुतिराह—ब्रह्मदत्तोऽयं तु वाचा च प्राणेन चैवोदगायत्—वागुपसर्जनमुख्यप्राणदृष्ट्यैवोदगायत् ॥२४॥

तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचि स्वरमिच्छेत तया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एवाऽथो यस्य स्वं भवति भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥२५॥

अथ साम्नः प्राणस्य गुणविशेषांस्तद्विज्ञानानि स्तुवन्विदधाति—तस्येत्यादिना। तस्य हैतस्य साम्नः प्राणस्य यः स्वं वेद तस्यास्य भवति स्वम्–धनम्। इति गुणविज्ञानं स्तुतं भवति। एवं गुणविज्ञानं स्तुत्वा किं तत् स्वं साम्नो यत् स्तूयते, तदाह—तस्य वै स्वर एव स्वम्–स्वरः–कण्ठमाधुर्यम्। तस्मात्–आर्त्विज्यमौद्गात्रं करिष्यन् वाचि स्वरमिच्छेत्–कण्ठमाधुर्यमिच्छेत्। तदुपायं सेवेतेत्येतत्। तया–उपायसेवनेन संस्कृतयाऽत एव स्वरसम्पन्नया वाचा आर्त्विज्यमौद्गात्रादि कुर्यात्। अथो यस्य स्वं भवति–धनं सिद्ध्यति, तं धनिकं सर्वे एव द्रष्टुमिच्छन्ति, तस्माद्यद्यपि यज्ञे स्वरवन्तं–स्वराख्यधनसम्पन्नं सर्वे दिदृक्षन्ते। य एवमेतत्साम्नः स्वमुक्तलक्षणं वेद, भवति हास्य धनम्, इति स्तुत्योपसंहारः ॥२५॥

तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥२६॥

उक्तात्स्वराख्याद्गुणादान्तरमुच्चारणसौष्ठवलक्षणसुवर्णाख्यं गुण-

विशेषं तद्विज्ञानस्तुतिपूर्वकं विधत्ते—तस्येति। तस्य हैतस्य साम्नः प्राणस्य सुवर्णं वेद—शोभनं वर्णं वर्णसौष्ठवं तालव्योऽयं दन्त्योऽयमित्यादिविवेकपूर्वकमुच्चारणं यो वेद, भवति हास्य सुवर्णम्—प्रसिद्धं सुवर्णम्। किं तत्सुवर्णं यत्स्तूयते तदाह—तस्य वै स्वर एव सुवर्णम्—स्वरः कण्ठ्यतालव्यादिविवेकपूर्वकोच्चारणलक्षणः ॥२६॥

तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ॥२७॥

अथ प्रतिष्ठाख्यं गुणं तद्विज्ञानं स्तुवन्विधत्ते—तस्येति। का साम्नः प्राणस्य प्रतिष्ठा या स्तूयते तामाह—तस्य वै वागेव प्रतिष्ठा—प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठा, वागिह जिह्वामूलीयादिस्थानविशेषः, तत्र प्रतिष्ठितो हि प्राणः प्रेरितस्तत्तद्वर्णोद्भावनतस्तत्तद्वर्णात्मना भाव्यमानो गीयते। इममेवार्थमाह—वाचि खल्वेष प्राणः प्रतिष्ठितो गीयते। तत् प्रतिष्ठा वागिति युक्तमिति यावत्। पक्षान्तरमाह—अन्न इत्यु हैक इति। पूर्वम्—'यद्धि किञ्चनाद्यतेऽनेनैव तदद्यते, इह प्रतितिष्ठती'ति प्राणस्यान्नप्रतिष्ठत्वं श्रुतम्, तं पक्षमभिप्रेत्यैक इति ॥२७॥

अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेदसतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा

असत्सदमृतं मृत्योर्मामृतं गमयामृतं मा कुर्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्मामृतं गमयामृतं मा कुर्वित्येवैतदाह मृत्योर्मामृतं गमयेति नात्र तिरोहितमिवास्ति अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत तꣳ स एष एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत् साम वेद ॥२८॥

उपदिष्टोद्गातृप्राणविद्या, अथ तदनुबन्धिजपविशेषविधित्सया प्रवर्तते—अथात इत्यादि। उद्गातुः प्राणविद आगानेन यजमानेप्सितफलसम्पादकत्वसामर्थ्यात्तथाविधमुद्गातारं प्रति यजमानप्रार्थनारूपत्वाज्जप्यमन्त्रस्य प्राणविद्यानुबन्धो जपविशेषस्यास्य। अथात अभ्यारोहः—ब्रह्मलोकारोहणसाधनत्वाज्जप्यो मन्त्रविशेष अभ्यारोह उच्यते, श्रावयिष्यमाणोऽभ्यारोहः पवमानानामेव—बहिष्पवमानमाध्यन्दिनपवमानार्भपवमानानां त्रयाणामेव भवति, त्रयाणामेव कालेऽभ्यारोहजपः कार्यो नान्येषूद्गानमात्रसमयेष्विति यावत्। उद्गीथप्रकरणादविशेषेणोद्गानसमयसामान्यप्राप्तौ कालविशेष एतेन नियमितो भवति। अविशेषेण पवमानकाले प्राप्ते तत्र विशेषमाह—स वै इति। स प्रस्तोता साम प्रस्तौति खलु, (प्रस्तौतीत्येतत् प्रसिद्धम्)

यत्र–यस्मिन् समये स साम प्रस्तुयात् तदैतानि यजूंषि जपेत्। कानि तानि यजूंषि ? आह–असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति। यजुषामेषां कोऽर्थः ?, श्रुतिः स्वयमेवाह। तत्र प्रथमं यजुर्व्याचष्टे—स यदाहेत्यनेन। इति यदाह तस्यायमर्थ इति यावत्। पदार्थमाह, मृत्युर्वाऽसत्–असत्पदेन विवक्षितो मृत्युरित्यर्थः। सदमृतम्, सत्पदेन विवक्षितममृतमित्यर्थः। प्रकृतिं व्याख्याय प्रत्ययान्तं व्याचष्टे–मृत्योर्मा अमृतं गमयेति। मृत्युरत्राधोगतिहेतुभूतं देहात्माभिमानादि,अमृतं–मरणरहितं,अविनाशीत्येतत्। देहात्माभिमानात्तत्कृताच्च स्वेच्छाचरणान्मामुत्थाप्य देहात्मविवेकपूर्वकसदाचरणापादनेन शरीरजनिनाशानुविधायिजनिनाशरहितं गमयेत्यर्थः। गमयेत्यत्र धात्वर्थाविवक्षामभिप्रेत्य भावमाह–अमृतं मा कुर्वित्येवैतदाहेति। मा–माम्। मृत्योः संसारात् समुद्धृत्य मामृतमपुनर्भवं गमयेति वाऽर्थः। द्वितीयं यजुर्व्याचष्टे—तमसो मा ज्योतिर्गमयेतीत्यनेन। तृतीये यजुषि न व्याख्येयं किमप्यस्ति स्फुटार्थत्वादित्याह—मृत्योर्माऽमृतं गमयेति नात्र तिरोहितमिवास्तीति। एवं प्रार्थितो यजमानेनोद्गाता तस्मिन् समये यजमानायैवाऽऽगायेत्। अथेतराणि यानि स्तोत्राणि–पवमानत्रयव्यतिरिक्तानि नव स्तोत्राणि, तेषु आत्मनेऽन्नाद्यमागायेत्। आत्मगामिफलमुद्दिश्यागायेत्। यस्मादयमुद्गाता प्राणविद्यजमानायात्मने चागानेन कामं सम्पादयितुं समर्थस्तस्माद्यजमानो यं यं कामं कामयेत तं तं तेषु स्तोत्रेषु वरं वृणीत। स्तोत्रेषु नवसु स्वात्मने यजमानाय च फलमागानेन सम्पादयेदुद्गातेत्युक्तं भवति। स एष एवंविदुद्गाता

यजमानायात्मने वा यं यं कामयते तं तमागानेन सम्पादयति। तदेतत्प्राणवेदनं लोकजिदेव, ब्रह्मलोकप्राप्तिपर्यन्तफलसाधनत्वात्। इममेवार्थं द्रढयति—न हैवेति। य एवमेतत्साम वेद—आङ्गिर-सत्वादिगुणविशिष्टमेतत्साम प्राणमुपास्ते सहि अलोक्यतया—लोक-वैधुर्यस्य ब्रह्मलोकप्राप्त्यनर्हत्वलक्षणक्षुद्रफलाय नाशास्ति, न ह्याशंसनं कुरुते। तदेतद्विज्ञानं लोकजिदेव ॥२८॥

इति प्रथमाध्याये तृतीयं ब्राह्मणम्।

---

आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य ना-न्यदात्मनोऽपश्यत् सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहं-नामाभवत् तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वो-ऽस्मात्सर्वस्मात्सर्वान्पाप्मन ओषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद ॥१॥

इदमखिलं चराचरं अग्रे प्रलयावस्थायां आत्मैवासीत्, पुरुषविध इति चात्मनो विशेषणम्, अनेन—तैत्तिरीये आनन्दवल्ल्यां आकाशा-दिकारणतया श्रुत आत्मा प्रत्यभिज्ञाप्यते, सहि पुरुषविधत्वेन तत्र विशेषितः। तत्र हि मन्त्रवर्णेन लिलक्षयिषितं परं ब्रह्म आकाशादिस-कलविकारोपादानभूतः कश्चिदात्मेति प्रतिपाद्य तमात्मानं निरूपयितुं प्रवृत्ता श्रुतिः स्थूलारुन्धतीन्यायेन सुखेनावगमयन्ती तत्र तत्रान्नम-

यादिषु आत्मदृष्टिमापादयन्ती प्रतिपर्यायं 'पुरुषविध' इति आत्मानं पुरुषत्वेन बोधयन्ती आनन्दमये आत्मदृष्टिमारोहयति। कारणवाक्यसामान्याच्च तत्प्रत्यभिज्ञापकत्वमुचितम्। अतश्च शरीरप्राणमनोजीवेभ्योऽत्यन्तभिन्नः परमात्मा सर्वस्योपादानभूत आनन्दमय इहात्मशब्देन विवक्षित इत्यवधार्यते। पुरुषस्य विधेव विधा यस्य, सा च प्रियशिरस्त्वादिलक्षणा। आनन्दमात्रकरपादमुखोदरादिः। आनन्दमय आत्मेत्येतत्। सोऽन्वीक्ष्य नान्यदात्मनोऽपश्यत्—सोऽयमानन्दमयः परमात्मा तदा परितोऽन्वीक्ष्य नात्मनोऽन्यद्विभक्तं प्रपञ्चं पुरेवापश्यत्। अथान्यं विभक्तमुत्पादयन्निदमग्रे व्याहरत्—सोऽहमस्मीति। सोऽहं स्यामिति व्याहरत्, लकारव्यत्ययश्छान्दसः, अहमिति तु हिरण्यगर्भस्य नाम, हिरण्यगर्भः स्यामिति सङ्कल्पमकरोदित्येतत्। एवं सङ्कल्प्य सपदि सः अहंनामाऽभवत्—हिरण्यगर्भात्मनाऽभवत्। यद्वा—इदमग्रे आत्मैवासीत्, स चाग्रे पुरुषविध आसीत्—व्यष्टिसृष्टिद्वारभूतपुरुषविशेषप्रकार आसीत्, यः सूक्ष्मचिदचिच्छरीरकः परमात्मा स व्यष्टिद्वारभूतहिरण्यगर्भशरीरक आसीदिति यावत्। सोऽयं पुरुषविधोऽन्वीक्ष्य—पुरुषविधतामनु विलोक्य परितः किमप्यात्मनोऽन्यन्नापश्यत्, अनुपलभ्य किमपीदं व्याहरदग्रे अहमस्मीति। अतएवायमहंनामाऽभवत्, इति। तस्मादेवाद्याप्यामन्त्रितः पुरुषोऽहमयमित्येवाग्रे उक्त्वा यत्स्यादात्मनोऽन्यदसाधारणं नाम तद्ब्रूते। सर्वकारणे परमात्मनि पुरुषपदप्रवृत्तिं निर्वचनपूर्वकमाह—स यदिति। योऽयमानन्दमयः यो वा हिरण्यगर्भस्याप्यात्मतया तत्प्रकारः सोऽयं यस्मात्पूर्वोऽस्मात्सर्वस्मात् सर्वान् पाप्मन औषत्—अदहत्, हेय-

प्रत्यनीक इत्येतत् । तस्मादयं पुरुष इत्युच्यते । पुरुषनिर्वचनविज्ञान-फलमाह—ओषति हेति । य एवं पुरुषपदप्रवृत्तिनिमित्तं वेद स ओ-षति—दहति तम् ,कम् ?, योऽस्मात्पुरुषपदप्रवृत्तिनिमित्तचिन्तकात्स्वयं पूर्वो बुभूषति प्रथमो भवितुमिच्छति अभिभवितुमिच्छति तम् ॥१॥

**सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षाञ्चक्रे य-न्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयं भवति ॥२॥**

सोऽहंनामा हिरण्यगर्भः यदा नान्यमपश्यत् तदाऽबिभेत्—अबि-भ्यत् । तस्मादद्यापि बिभेत्येकाकी पुरुषः । सोऽयं पुनरेवमीक्षाञ्च-क्रे—पर्यालोचितवान् । मदन्यन्नास्ति कस्मान्नु बिभेमीति—भीतिरिय-मस्थाने मे, नहि मत्तोऽन्यदिह किञ्चिदस्तीति । एवं विचारयतोऽस्य तत एव विचाराद्धेतोर्भयं वीयाय—व्यपगतम् । उपपन्नमेतदित्याह—कस्मादिति । कस्माद्ध्यभेष्यत्—कस्मादिति प्रतिक्षेपे, भये निमित्तं ने-त्येतत् । द्वितीयाद्वै भयं भवति—अनुकूलप्रतिकूलविभागदृष्टिकृतो विभेदः, आत्मनो द्वितीयदृष्टौ ह्यनुकूलप्रतिकूलविभागदृष्टिः, द्वि-तीयस्तु न दृश्यत इति यावत् ॥२॥

**स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमै-च्छत् स हैतावानास यथा स्त्रीपुमांसौ सम्परिष्व-क्तौ स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह**

स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव ताꣳसमभवत्ततो मनुष्या अजायन्त ॥३॥

यद्यपि भयं वीयाय, रतिस्तु नाभूत् इत्याह–स वै न रेमे इति। भयस्येव प्रीतेरपि प्रियाप्रियविभागदृष्टिमूलद्वितीयदृष्ट्यायत्तत्वादित्याशयं लोकगत्या ज्ञापयति—तस्मादेकाकी न रमते इति। सोऽयं रतिकामो द्वितीयमैच्छत्। एवमिच्छन्नयं सपदि एतावानास–एवंप्रकारो बभूव, यथा स्त्रीपुमांसौ सम्परिष्वक्तौ स्याताम्। एवमिच्छत एवास्य शरीरं संपरिष्वक्तमिथुनशरीराकारमभूदिति यावत्। स इममेवात्मानम्–एवमाकारं स्वशरीरं द्वेधाऽपातयत्। ततश्च–पतनगुणयोगात् पतिश्च पत्नी चाभवताम्। तस्मात्–एकशरीरद्वैधीभावमूलकत्वात्पतिपत्नीविभागस्य विवाहतः पूर्वं स्वः–स्वस्य इदं शरीरं अर्धबृगलमिव–शुक्तिकासंपुटस्य दलद्वयोपेतस्य विभक्तमर्धात्मकं बृगलं विदलमिव। इति याज्ञवल्क्य आह। तस्मादयमाकाशः–दारसङ्ग्रहणतः प्रागाकाशवदवस्थितो विदलस्य दारसङ्ग्रहतः स्त्रिया सम्पूर्यत एव। तां स्त्रियमितरः पुरुषः समभवत्–मिथुनधर्मेणोपभुक्तवानित्येतत्। सेयं शतरूपा सच स्वायम्भुवो मनुरुच्यते। ततः सम्भोगान्मनुष्या उत्पन्नाः ॥३॥

सा हेयमीक्षाञ्चक्रे कथं नु मात्मन एव जनयित्वा सम्भवति हन्त तिरोऽसानीति सा गौरभवदृषभ इतरस्ताꣳसमेवाभवत्ततो गावोऽजायन्त वडवेतराभवदश्ववृष इतरो गर्दभीतरा गर्दभ

इतरस्ता सँ समेवाभवत्तत एकशफमजायताऽजेतराभवद्बस्त इतरोऽविरितरा मेष इतरस्ता सँ समेवाभवत्ततोऽजावयोऽजायन्तैव मेव यदिदं किञ्च मिथुनमापिपीलिकाभ्यस्तत् सर्वमसृजत ॥४॥

सेयं शतरूपा ईक्षाञ्चक्रे—मनस्यचिन्तयत् । कथमयमात्मन एवैकस्मादंशाज्जनयित्वा मां दुहितृस्थानापन्नां स्वयमेकेनांशेन सम्भवति, अनुचितं ह्येतदात्मजामुपगच्छतीति । तदेवं विचार्य तिरोऽसानि—अदर्शनं यानीत्यवधार्य सा गौरभवत्, इतरो ऋषभो भूत्वा तां गोरूपधारिणीं समभवत्, ततो गावोऽजायन्त । वडवेत्यादि स्पष्टम् । एवमेव यदिदमापिपीलिकाभ्यो मिथुनं तत्सर्वमसृजत ॥४॥

सोऽवेदहं वाव सृष्टिरस्म्यह सँ हीद सँ सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्या सँ हास्यैतस्यां भवति य एवं वेद ॥५॥

एवं सृष्ट्वा स हिरण्यगर्भ एवमवेत्—एवममन्यत, किमिति ?, अहं वाव सृष्टिरस्मि—सृज्यत इति सृष्टिः—सर्वमिदं गवादिलक्षणं सृष्टमहमेवास्मि, कस्मात्, अहं हीदं सर्वमसृक्षि—स्वावयवादेव स्त्रीपुंभावविभागमापादितात्सम्पादितसन्तानमेतदिति यावत् । अत एवाहमेवेदं सृज्यजातमित्यमन्यतेति भावः । ततो हेतोः स हिरण्यगर्भः सृष्टिशब्दवाच्योऽभवत् । य एवं प्रजापतिवाचिनः सृष्टिशब्दस्य नामनिर्वचनमुक्तं वेद, स सृष्ट्यामेतस्यां भवति—प्रभवति, समर्थो भवति ॥५॥

अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवा अथ यत्किञ्चेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदꣳ सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिः यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्याꣳहास्यैतस्यां भवति य एवं वेद ॥ ६ ॥

अथेत्यर्थान्तरोपक्रमे—मानवी सृष्टिरुक्ता, अथाग्नेः सृष्टिरुपदिश्यते। इत्यभ्यमन्थत्—इतिशब्दः प्रकारवाची, वक्ष्यमाणप्रकारेणाभ्यमन्थत्, मन्थनमकरोत्। केन प्रकारेण ?,स च गम्यते—मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजतेत्युत्तरेण वाक्येन, मुखे हस्तौ निक्षिप्याभ्यमन्थदिति भावः। स मुखाच्च योनेर्हस्ताभ्यां च—योनेरिति पदं वचनविपरिणामेनोत्तरत्रापि सम्बध्यते। एवमभिमन्थ्य मुखाद्योनेरुत्पत्त्यवच्छेदकप्रदेशात् हस्ताभ्यां च तथाभूताभ्यामग्निमसृजत। यस्मादग्नेरभिव्यक्त्यवच्छेदकमेतन्मुखहस्तमुभयं तस्मादेवालोमकमन्तरतः—अन्तःप्रदेशे। अतएव योनित्वसाम्याद्योनिरप्यन्तरतो लोमरहिता प्रसिद्धा। एवं यज्ञस्य मुख्यं साधनं ब्राह्मणानामनुग्राहकं सकलश्रेयोद्वारमग्निं ससर्जेत्युक्त्वा इज्यान् देवानिन्द्रादीनपि तत्सृष्टानाह—तद्यदिदमाहुरिति।

तद्यदिदमाहुरमुं यजामुं यजेति—एकैकमिन्द्रादिदेवं, ये इन्द्रादयो याज्ञिकैः प्रत्येकमिज्यतया कीर्त्यन्ते, तेषां च सृष्टिरेतस्यैव, एतस्यैव सा विसृष्टिः—एतस्यैव हिरण्यगर्भस्य सा विविधा सृष्टिः। मानवसृष्टेर्देवसृष्टिरियं विशिष्टेति वा विसृष्टिरुच्यते। यस्मादेतत्स्रष्टाः, तस्मात्ते सर्वे देवा एष एव, स्रष्टृसृज्ययोरभेद उपचर्यते। अग्नेरिवान्येषामप्येतदवयवत एवाभिव्यक्तिमभिप्रेत्य वा अभेदोपचारः। उक्तो मानवः सर्गः, यस्मिन्भवन्त्यधिकारिणः कर्मसु यागादिलक्षणेषु, उक्तश्चाग्नेः सर्गो येन मुखेनाग्निहोत्रादिकर्मसम्पत्तिः, उक्तश्च दैवः सर्गो ये कर्मभिर्यागादिलक्षणैरिज्यन्ते, अथाग्नावाहुतिसम्पत्तिसाधनस्यान्नस्य सृष्टिरुच्यते—अथेत्यादिना। अथ यत्किञ्चेदमार्द्रं द्रवलक्षणं तत्सर्वं प्रजापतिः स्वरेतसोऽसृजत, तदु सोम एव, ओषधिविशेषः, अद्भ्योऽन्नमन्नादोषधयः। अन्नान्नादलक्षणेऽस्मिन्प्रपञ्चे अग्नीषोमदृष्टिं विदधाति—एतावदित्यनेन। एतावद्वा इदं सर्वमन्नमन्नादश्च—यदिदमन्नान्नादोभयलक्षणं कार्यं एतावद्वा—नोक्तादपरम्, कस्मात्?, सोम एवान्नम्—यदिदमन्नं व्रीहियवादिलक्षणं सोम एवैतत्, अग्निरन्नादः—अग्निना हि पच्यते, तदिदमग्नीषोमात्मकम्। प्राधान्याच्छ्रैष्ठ्याच्चैवोक्तिः। सृष्टिर्मानवी उक्ता, विसृष्टिश्च दैवी उक्ता, अथातिसृष्टिरतिक्रान्तप्रेयःपथा श्रेयःपथैकप्रवृत्ता प्रोच्यते—सैषेत्यादिना। सैषा—वक्ष्यमाणलक्षणा ब्रह्मणः—स्रष्टुः प्रजापतेः अतिसृष्टिः—सृज्यानितरानतिक्रम्य स्रष्टारं चातिक्रम्य वर्तते ह्येषां सृष्टिः, तस्मादतिसृष्टिः। कथमेतत्?। उच्यते—यच्छ्रेयसो देवानसृजत अथ यन्मर्त्यः सन्नमृतानसृजत—ये हीन्द्रादयो देवास्ते हि प्रेयःपथे इन्द्रियारामतादिलक्षणे

जननमरणचक्रवाहिनि प्रवृत्ताः, एते तु सनकसनन्दनादयो देवाः समतिलङ्घितश्रेयःपथाः समाहृतात्मारामतालक्षणश्रेयःपथाः, तानेतान् श्रेयसो देवानसृजत, स्वयं मर्त्यः सन्नपि—जननमरणस्वभावोऽपि अपुनर्भवापादकात्मनिष्ठारहितोऽपि, अमृतान्—अपुनर्भवैकान्तात्मनिष्ठावतस्तानेतानसृजत, तस्मादतिसृष्टिः । य एवमतिसृष्टिं वेद—उपास्ते सोऽप्यपरस्मिन्कल्पे एतस्यामतिसृष्टौ भवति ॥६॥

तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिदꣳरूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिदꣳरूप इति स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाये तं न पश्यन्त्यकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति वदन् वाक्पश्यꣳश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवं कीर्तिꣳ श्लोकं विन्दते य एवं वेद ॥७॥

ननु विप्रतिषिद्धमिदं श्रूयते—'इदमग्रे आसीत्× × ततो मनुष्या अजायन्त× × ततोऽजावयोऽजायन्तैवमेव यदिदं किञ्च मिथुनमापिपीलिकाभ्य' इति, विप्रतिषिद्धं हि प्राक्सत्त्वं पश्चादुत्पत्तिश्च। 'आत्मैवेदमग्र आसी'दिति चानुपपन्नम्, न हि मिथुनात्मनाऽनेनैक्यमात्मन उपपन्नम्। तामिमां शङ्कामपनेतुं प्रवर्तते—तद्धेदं तर्हीत्यादिना। इदं यन्मिथुनात्मकमन्यप्रकारं वा यद्दृश्यते तत्पूर्वमव्याकृतमासीत्—नामरूपविभागरहितमासीत्। तदनुपदं सृष्टिसमये नामरूपाभ्यामेव व्याक्रियते। एतन्नामाऽयमेतद्रूप इति। एवकारान्नोत्पत्तिर्नाम नामरूपविभागसम्पत्तेरन्या प्रागसतः पश्चात्सद्भावलक्षणेति व्यावर्त्यते। एतेनासतः कथमुत्पादः, उत्पत्स्यमानस्य वा कथं सत्त्वेत्याशङ्काऽपास्ता। सत एवोत्पत्तिं नामरूपविभागापत्तिलक्षणां प्रत्यक्षतोऽवगमयति—तदिदमप्येतर्हीति। एतर्ह्यपि—इदानीमपि तदिदं—कार्यं मृदादि, नामरूपाभ्यामेव घटः शराव इति नामभेदेन घटादिरूपभेदेनैव व्याक्रियते; नापूर्वं वस्तूत्पद्यते। ननु युक्तं नामेदमग्रे आसीदिति, आत्मैवेदमिति तु कथम्? भेदात्, तत्रोच्यते—स एष इह प्रविष्ट इति। स आत्मा हि सर्वान्तरः, स एष परमात्मा इह प्रविष्ट आनखाग्रेभ्यः। देवमानुषादीनां कार्यप्रपञ्चे निर्देशादानखाग्रेभ्य इति निर्देशः। इदमुपलक्षणं सर्वस्य कार्यस्य। प्रवेशे उदाहरणद्वयमुच्यते—यथेति। अनेन भ्रमाधिष्ठानतालक्षणा व्याप्तिः पराभिमता व्यावृत्ता। क्षुरः—असिः, क्षुरधानम्—असेः कोशः। अनेन दृष्टान्तेन प्रतिव्याप्यं व्यापकस्य परमात्मनः परिसमाप्य व्याप्तिर्व्यज्यते। यथा वा विश्वंभरोऽग्निर्विश्वंभरकुलाये दारुणि तथाऽयं व्याप्तः। अनेन दृष्टा-

न्तेन व्याप्याख्यापकस्यात्यन्तवैलक्षण्यं व्यज्यते। यः पुनरेनं सर्वान्तरमात्मानं न पश्यति अकृत्स्नो हि सः–अपरिपूर्णो हि सः । असत्कल्प इत्येतत् । तदेवं सर्वान्तरत्वात्सर्वशरीरस्य व्याप्यगुणक्रियादिभिस्तत्तद्गुणक्रियानामान्वयः सम्भवतीत्याह—प्राणन्नेवेत्यादिना । प्राणन्नेव–प्राणनव्यापारं कुर्वन्नेव प्राणो नाम भवति, प्राणनव्यापारस्य प्राणगतस्याप्यन्तर्याम्यधीनतया यदिदं प्राण इति क्रिया नाम तत्तस्यैवान्तर्यास्यात्मनो भवति । एवमुत्तरत्रापि । तान्येतानि कर्मनामान्यस्यैव । एवकारात्प्रधानार्थत्वमन्यस्य व्यावर्त्यते । प्रकारवाचिशब्दानां प्रकारिण्येव मुख्यवृत्तेः । इदमभिहितं भवति–अविदुषां हि तत्त्वभेददृष्टिः, यत्सर्वान्तरः परमात्मा स्वेतरसमस्तशरीरतया स्वेतरसकलप्रकार एक एवावस्थित इति तत्त्वमेकमेव विशिष्टवेषम्, तस्यैव स्वशरीरभूतचेतनाचेतनद्वारेण नामरूपभेदभाक्त्वमपीति युज्यते नाम 'आत्मैवेदमग्र आसी'दितीति भावः । तदेवमद्वितीये चेतनाचेतनशरीरे आत्मतत्त्वेऽवस्थिते यो नाम अतो विशिष्टादात्मनः एकैकमुपास्ते–विशेष्यं विशेषणं वा उपास्ते, अविज्ञाय परमात्मस्वरूपमीदृशं, केवलं प्रकारप्रकारिभावरहितमुपास्ते उपास्ते वा इन्द्रादीन् स्वतन्त्रान् स न वेद तत्त्वविज्ञानविधुरः । अकृत्स्नो ह्येष अत एकैकेन–अतो विशिष्टात्तत्त्वादेकैकेन एष उपास्यमानः अकृत्स्नः–अपरिपूर्णो हि भवति। तदयमुपासकस्तत्त्वं न यथावद्वेद । तर्हि कथमुपासीत–आत्मेत्येवोपासीत, सर्वस्येत्यर्थात्सम्बद्ध्यते। आत्मेत्युपासीनस्य कृत्स्नवित्त्वे हेतुमुपपादयति—अत्र ह्येत इति । अत्र ह्यात्मत्वेनोपास्यमाने विशिष्टे सर्वमेकं भवति, अतदात्मकं वस्तु पश्यतां हि अ-

न्यान्यप्रतिपत्तिविषयतयाऽनेकतत्त्वप्रतिपत्तिः, सर्वस्यात्मानं सर्वप्रकारं विशिष्टमेव तत्त्वं यथाऽवस्थितं पश्यतां कथं नानात्वप्रतिपत्तिः स्यात्, अत्रैव ह्युपास्ये विशिष्टे आत्मतत्त्वे सर्वं विशेषणमेकं भवति पृथक्प्रतिपत्त्यविषयतयैकीभावमुपैति, तदयमुपासकः कृत्स्नवित्। सर्वस्यास्य प्रतिष्ठापदमेतदेवेत्याह—तदेतत्पदनीयमित्यादिना। अनेन प्रपञ्चस्यात्मापेक्षया तत्त्वान्तरता प्रतिक्षिप्यते। आत्मन इव प्रपञ्चस्य चेत्प्रतिष्ठा स्वनिष्ठतालक्षणा, स्यात्ततस्तत्त्वान्तरता। तदेतत् अन्तर्यामितत्त्वं सर्वस्यास्य पदनीयम्—गमनीयम्, स्थितिस्थानमित्येतत्। विविधं चेष्टमानस्यास्य प्रतिष्ठापदं तदेवेति यावत्। कुत एतत्?, आह—यदयमात्मा—अयं ह्यात्माऽस्य सर्वस्य, शरीरं हि आत्मनैवाधिष्ठितं विविधं चेष्टते, तच्चेष्टमानस्यास्य प्रतिष्ठास्थानं सर्वान्तरात्मैव। यथा जातिगुणादीनामाधेयतैकस्वभावानां व्यक्त्यादयः पदनीयं गमनीयं प्रतिष्ठापदं भवति तथाऽस्य सर्वस्यायमात्मेति भावः। किञ्च—अनेन ह्यात्मना विज्ञातेन एतत्सर्वं वेद। सर्वात्मभूतस्याऽतएव स्वेतरसमस्तवस्तुप्रकारस्यास्य विज्ञाने सर्वमेव विशेषणतया विषयीभवतीति न किञ्चिदितोऽतिरिक्तमस्तीति भावः। ननु दृश्यते शिरःपाण्यादिलक्षणं विविधं वस्तुजातम्, कथमेकोऽद्वितीय आत्माऽवगम्येत, कथं वा तस्मिन् दृष्टे सर्वमिदं दृष्टं भवति, तत्र दृष्टान्त उच्यते—यथा ह वै पदेनेति। यथाह वै पदेनानुविन्देदेवम्—यथा पदानि रेखारूपाणि पांसुले पथि प्रचलितानि पश्यन् तत्प्रतिष्ठामुपलब्धुं प्रवृत्तस्तत्पदगतिमनुगच्छन् विंदते पुरुषम्, दृष्ट्वा च तं सर्वाणि तानि पदान्यनेकानि तत्र तत्र दृष्टानि पुरुषस्यास्यैवेति तदीयानीत्येव वेद, तथा

शिरःपाण्यादिलक्षणान्यान्यानि चेष्टमानानि पश्यन् पदानामिव पांसौ सतां स्वतो गत्यनुपपत्तेस्तदधिष्ठातारं मनसाऽनुधावन् जीवे कर्मपरवशे स्वेच्छानुगुणं नियमनासमर्थे तत्प्रतिष्ठापदमलभमानः पुनरनुगच्छन् परमात्मानं सर्वस्यास्यैकमनुविन्दते विन्दते च तानीमानि तदीयान्येवेति, तद्विज्ञानेन सर्वस्यास्य विज्ञानमिति भावः। य एवं वेद—आत्मन एव नामरूपविभागेन कार्यभावं तदभावतः कारणभावं चोक्तेन प्रकारेण वेद स कीर्तिं लभते पुण्यश्लोकतां च लभते ॥७॥

तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियꣳ रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥८॥

एवम्भूतस्यैवात्मन उपासनं कार्यमिति सोपपत्तिकं ज्ञापयति। प्रियं ह्युपास्यम्, न च प्रियमितोऽन्यदधिकं लोके, यदिदमेवात्मतत्त्वं लौकिकात्पुत्रवित्तादिलक्षणादन्यस्मात्सर्वस्मात्प्रेयः, इदमेव ह्यान्तरतरम्, न हि बाह्यं प्रियं भवितुमर्हति, यदयमान्तर आत्मा स एवायं सर्वस्मात्प्रियतरः। स यः—आत्मानमेव प्रियतमं मन्यमानो यो नात्मनोऽन्यं प्रियं ब्रुवाणं प्रति प्रियं ते रोत्स्यति नंक्ष्यतीति ब्रूयात्तथैव स्यात्, स हीश्वरः—समर्थः। तस्मादात्मानमेव प्रियमुपासीत। स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं नश्वरं भवति ८

**तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्माऽवेद्यस्मात्तत्सर्वमभवदिति ॥९॥**

तदाहुः—तत्—'आत्मानमेव प्रियमुपासीते'ति प्रस्तुतमात्मोपासनमधिकृत्याहुरिमं विशेषं प्रश्नप्रतिवचनमुखेन । स्वस्मादनन्यत्वेनात्मोपास्य इत्ययं विशेषो वक्ष्यमाणः । तत्रायं प्रश्नः—यद्ब्रह्मविद्ययेत्यादि । ननु मनुष्याः खलु ब्रह्मविद्यया सर्वं भविष्यन्तो मन्यन्ते—ब्रह्मविद्यया निष्पन्नया स्वेषां सर्वभावाविर्भावं मन्यन्ते, कथमिदं स्यात्, सर्वमिदमन्यान्यत् ब्रह्म चान्यत् वेत्ता चायमन्यः, यदि विद्यया तद्भावो घटेत, किमु तद्ब्रह्मावेत्—जानीयात्, यस्माद्वेदनात् तत् ब्रह्म सर्वमभवत्, तस्य सर्वभावे सति हि तद्विद्यानिष्ठस्य सर्वभाव उपपद्येत । इतिशब्दः प्रश्नप्रकारपरः ॥९॥

**ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत् सर्वमभवत् तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवꣳसूर्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा**

---

१ यन्मन्यन्त किमु तदित्यन्वयमभिप्रेत्य व्याचष्टे—कथमिदमिति । किमु तदित्यस्यावृत्त्या किमु तद्ब्रह्मावेदित्यन्वयमभिप्रेत्य व्याचष्टे—यदि विद्ययेति ।

ह्येषाꣳ स भवति। अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवꣳ स देवानां यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥१०॥

इदमत्र प्रतिवचनम्—ब्रह्म वेत्यादि। नासर्वात्मनः सर्वात्मभवनमिहोपदिश्यते, किन्तु सर्वात्मना सत एव ब्रह्मणः सर्वभावः, स्वतः सत्यपि तस्मिन् दृष्टिविशेषायत्ततद्भावाभिव्यक्तिलक्षणं सर्वात्मना भवनमुपदिश्यते येन ब्रह्मविद्यानिष्ठस्य विद्यया तत्सम्पत्तिः सिद्ध्येत्, तथाहि—ब्रह्म वा इदमग्रे आसीत्—सृष्टेः प्रागिदं नेति तु न, आसीदेव, किन्त्विदानीमिव न नामरूपविभागविशिष्टं, नामरूपरहितमविभक्तं ब्रह्मैव—सूक्ष्मरूपं ब्रह्मैव सूक्ष्मचिदचिदात्मकं ब्रह्मैवासीत्, अत एव तदा ब्रह्म सत्यप्यस्मिंश्चिदचित्सङ्घाते इदंग्रहेणेदमनवलम्ब्यात्मानमेवावेदहं ब्रह्मास्मीति। सर्वस्य स्वात्मस्वरूपादपृथक्स्थित्या नान्यदवेत् किन्तु आत्मानमेव स्वेतरसकलप्रकारं 'अहं ब्रह्मास्मीत्यवेत्' तस्मादेव वेदनात् तत्सर्वमभवत्—इदमहं सृजेयमिति नास्य सङ्कल्पः, किन्तु—अहं बहु स्यामित्येव, यथासङ्कल्पं स्वयमेव तु बहु भवति सच्च त्यच्च विज्ञानं चाविज्ञानं च सर्वम्, तत्—सर्वमभवत् तदाप्यात्मानमेवावेत् सर्वमहं ब्रह्मास्मीति, यस्मात् पूर्वं पश्चाच्च स्वेतरसकल-

प्रकारं स्वात्मानमेवावगतवत् अतएव सदाऽभिव्यक्तसर्वभवनं ब्रह्म भवति । तस्मास्य ब्रह्मणो यथावस्थितस्वरूपसाक्षात्कारलक्षणब्रह्मविद्यया मनुष्योऽप्यपगताविद्योऽभिव्यक्तसर्वभावो भवति । अविद्यया ह्ययं जीवो दैहिकेन मानुषत्वादिनाऽहमयमस्मीति पश्यति, पश्यति कश्चिदहं स्वतन्त्रः कर्ता भोक्ता चेति, यथावस्थितमन्तर्याम्यात्मतत्त्वं पश्यतो हि भवत्यहंग्रहः परमात्मन्येव, अतएव च दृष्टिविशेषादस्याहं सर्वमस्मीति भवति सर्वभावाभिव्यक्तिः । इयांस्तु विशेषः—सर्वप्रकारे ब्रह्मण्येकस्मिन्नेव परमतत्त्वे स्थितेऽपि हेयप्रत्यनीकस्य परमात्मन इव न भवति सदा सर्वभावाविर्भावोऽस्य, अविद्यावृतत्वात्, ब्रह्मविद्यया तु तदाविर्भाव इति । व्यासार्यैरस्य वाक्यस्य भावो यस्तु निदर्शितः । स एव माननीयः स्यात् साम्प्रदायिकसङ्गतेः ॥ न केवलं मनुष्याणामयं लाभः, किन्तु ये ये ब्रह्मविद्याधिकारिणस्तेषां सर्वेषामेष सर्वभावाविर्भावोऽविशिष्ट इत्याह—तद्यो यो देवानामित्यादिना । प्रत्यबुध्यतेति निर्देशादबोधकृतः सर्वभावानाविर्भावः, बोधे तु सर्वभावः प्रादुर्भवतीति तात्त्विकमेव सर्वभवनमिति व्यज्यते । तत्त्वदर्शिनोऽनुभवमत्र संवादयति—तद्धैतत्पश्यन्निति । तद्धैतत्—स्वेतरसमस्तवस्तुप्रकारं ब्रह्म पश्यन् ऋषिर्वामदेवः प्रतिपेदे । किमिति?, अहं मनुरभवं सूर्यश्चेति । अहमिति स्वस्यान्तर्यामिणं परामृश्य मन्वादिशरीरतया तत्प्रकारत्वेन तद्रूपमनुभवत्ययं वामदेवः । तत्त्वदृष्ट्या चैतत् ।

अप्येतर्हि—इदानीमपि तदिदं परं ब्रह्म य एवं वेद 'अहं ब्रह्मास्मी'ति स इदं सर्वं भवति—आविर्भूतसर्वभावो भवति, स्वतन्त्रात्मभ्रमापगमेन परमात्मानमेव सर्वात्मकं पश्यतः स्वप्रकारे ब्रह्मणि सर्वप्रकारदृष्ट्या

आविर्भूतसर्वभावो भवतीति यावत्। तस्य—अहंग्रहेण परमात्मानं पश्यतो देवा अपि नाभूत्यै नानैश्वर्याय, ईशते। देवा अपि तस्य सामर्थ्यप्रतिरोधेऽसमर्था इति भावः। तत्र हेतुमाह—आत्मा ह्येषां स भवति—स ह्यात्मनस्तत्त्वतो द्रष्टा तया दृष्ट्या तेषां देवानामप्यात्मा भवति। एतावता—अहं ब्रह्मास्मीत्येवंरूपभावनयैवोपासनेन भाव्यमित्युक्तं भवति। यस्त्वेवं नोपास्ते तस्यानात्मदृष्टेरनर्थमाह—अथेत्यादिना। तदेवं सर्वस्याप्यात्मभूतेऽत एव सर्वप्रकारेऽत एव च सर्वशब्दवाच्ये सर्वबुद्धिबोध्ये च परब्रह्मण्यवस्थिते, यः पुनरिमं सर्वात्मभावमजानन् स्वस्वरूपं कथञ्चिदपि ब्रह्मस्वरूपानन्तर्गतं ज्ञातारं कर्तारं भोक्तारं स्वतन्त्रं तत्त्वान्तरं पश्यन् उपास्यां परब्रह्मलक्षणां देवतामहंग्रहपर्यवसानभूमिमपि तथाऽपश्यन्, अन्यामुपास्ते—अन्यत्वेन स्वस्मादत्यन्तभिन्नतयोपास्ते। उपासनप्रकार उच्यते—अन्योऽसावन्योऽहमस्मीति। अयमुपास्यः परमात्मा मत्तोऽत्यन्तभिन्नः, अहमपि तस्मादत्यन्तभिन्नः, न तदात्मकः। प्रकारप्रकारिभावमनापन्ने स्वनिष्ठे द्वे तत्त्वे इति बुद्ध्या य उपास्ते इति यावत्। सोऽयमनात्मवित्। यथा पशुरेवं स देवानाम्। यथा पशुः पराधीनो वाहनदोहनादिना परैकार्थः, तथाऽयमज्ञो देवानां प्रीणनैकार्थो भवति। प्रसिद्धात्पशोरयं विशेषः—धेनुर्दोहनेन बलीवर्दो वहनेनैवमेकैकः पशुः स्वामिने एकैकमर्थं साधयति, अयं त्वनात्मवित् बहुपशुस्थानीयः, बहुभिः पशुभिः साध्यं कर्म प्रीणनं देवानामेष विधत्ते, तत्—यथा बहवः पशवः सम्भूयैकं पुरुषं दोहवाहादिक्रियाभिः भुञ्ज्युः—परिपालयेयुः, प्रीणयेयुरित्येतत्, तथाऽनात्मविदेको बहून् देवान् भुन-

क्ति,—एकोऽपि बहुपशुसाध्यं विविधं कर्म देवाय तनुते, न त्वेकस्मै, अग्नये इन्द्राय वरुणायान्येभ्यश्च ऋषिभ्यः। तेनानात्मविदः प्रसिद्धात्पशोरत्यन्ताधमा स्थितिरुक्ता। यस्मादनात्मविद्देवानां पशुस्तस्मादेव देवा आत्मवेदनं नेच्छन्ति मनुष्याणाम्, लोकेऽपि दृष्टमेतत्, यदेकस्मिन्पशावादीयमाने—आच्छिद्यमाने अप्रियं भवति पशुस्वामिनः, किमु बहुषु, बहुपशुस्थानीयो ह्ययमनात्मविद्देवानाम्। तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥१०॥

ब्रह्म वा इदमग्र आसीदेकमेव तदेकꣳ सन्न व्यभवत् तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति तस्मात् क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति स पापीयान् भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ॥११॥

'मुखाच्च योनेर्हस्ताभ्यां चे'ति पूर्वमग्निसृष्टिरभिहिता, इन्द्रादीनां सृष्टिप्रकारो वक्तव्य आरभ्यते। अग्निश्च भवति ब्राह्मणवर्णस्याधिष्ठाता, (अभिमानी) देवेषु ब्राह्मणो वर्ण अग्निरिति चोत्तरत्र स्पष्टीकरिष्यति, तत्प्रकरणात् ब्रह्मशब्दोऽत्राग्निशरीरकपरमात्मपर

इति तु न विरुद्धम्। तथाच—अग्रे देवक्षत्रादिसृष्टेः प्राक् इदं ब्रह्मैवासीत्—अभ्याख्यब्राह्मणशारीरकमेवासीत्। देवेषु यो ब्राह्मो वर्णोऽग्निस्तदेकशरीरकं परमात्मतत्त्वमभूत्। 'आत्मैवेदमग्र आसी'दित्यादिनोक्तमेव प्रपञ्चस्य ब्रह्मोपादानत्वं शिष्यावधानाय पुनः स्मारयति—ब्रह्म वेति। नचाग्निसृष्ट्यनन्तरं ब्रह्मणः कथमेकत्वोक्तिरिति वाच्यम्, तदविवक्षयैकत्वोपपत्तेरिति पूर्वाचार्या व्याचक्षते। सच प्रकारः सर्वव्याख्यानाधिकरणे व्यासार्यैः सुसमर्थितः। तत एवात्रगन्तव्यः। तदेकं सन्न व्यभवत्—न प्राभवत्। अग्निना केवलेन ब्राह्मवर्णेन रूपेण वर्तमानं कर्मणे नालमभवत्। तच्छ्रेयोरूपमत्यजसृत क्षत्रम्—तत्—ब्रह्म क्षत्रं वर्णं श्रेयोरूपं—क्षतात्त्राणात्सर्वकर्मनिर्वहणलक्षणसामर्थ्याच्छ्रेष्ठं अत्यसृजत—अतिशयेनासृजत। क्षतात्त्राणं हि सर्वोपकारकोऽतिशयः। इतरेष्वसम्भवाच्चायमतिक्रम्य वर्तते वर्णः। के ते? तान्व्यक्तितो निर्दिशति—यान्येतानि देवत्रा क्षत्राणीति। देवत्रा—देवेषु, इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति यान्येतानि देवेषु क्षत्राणि तान्येतान्यत्यसृजतेत्यन्वयः। श्रूयते चान्यत्र—'ब्रह्म बृहस्पतिः क्षत्रमिन्द्रो मरुतो वै देवानां विश' इति। तस्मात्—अतिशययोगात् क्षत्रात्परं नास्ति, तस्मात् क्षत्रात्—अतिशयितत्वेन सृष्टात्क्षत्रात् इति विशेष्यविशेषणभावो वा। यदन्ये वर्णाः क्षतात्त्राणमलभमाना यं प्राप्य क्षतात्त्राताः स्वे स्वे कर्मणि प्रभवन्ति, तत् क्षत्रात्परं नास्ति। तस्मात् ब्राह्मणो राजसूये क्षत्रियमधस्तादुपास्ते—क्षत्रियमुपरि स्थितं ब्राह्मणः स्वयमधः स्थित्वैवोपास्ते। अपि च—राजसूये सोऽयं ब्राह्मणो यशश आत्मीयं ब्राह्मं तत् क्षत्र

एव दधाति, राज्ञा ब्रह्मन्नित्यामन्त्रितो ब्राह्मणः प्राह राजानं 'त्वं राजन् ब्रह्मासी'ति । एवं प्रकृष्टस्याप्यस्य क्षत्रस्य सैषा योनिर्यद्ब्रह्म ब्राह्मणो वर्णः । ननु कथमेतत् ? । ब्रह्म ह्यभवत्क्षत्रम् । कुत एतत् ?, तदेकं सन्न व्यभवत्—क्षत्रादिविभागरहितं केवलमग्निना शरीरेण ब्राह्मणवर्णतां गतमात्मतत्त्वं न व्यभवत् । अतो हि क्षत्रमात्मानमसृजतेन्द्राद्यात्मना । तत् युक्तं क्षत्रस्य ब्राह्मणो योनिरिति । अध्यापनादिनाऽतिशयं क्षत्रियस्य ब्राह्मण एवाऽर्हतीति क्षत्रस्य योनिर्ब्राह्मण इति तु सम्प्रदायः । तस्माद्यद्यपि राजा समयविशेषे ( राजसूये ) परमताम्—उच्चासनस्थितियशःप्राप्तिलक्षणां गच्छति, अथापि ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम्—कर्मणोऽवसाने स्वस्य कारणभूतं ब्राह्मणमेवोपसेवते । य उ एनं प्रमादात् हिनस्ति—तिरस्करोति स हि क्षत्रियः स्वामेव योनिं ऋच्छति, छिनत्तीत्येतत् । स पापीयान् भवति । यथा लोके कश्चित् श्रेयांसं श्रेष्ठं हिंसित्वा पापीयान्भवति तथा ॥११॥

स नैव व्यभवत् स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥१२॥ स नैव व्यभवत् स शौद्रं वर्णमसृजत पूषणमियं वै पूषेय ँ हीद ँ सर्वं पुष्यति यदिदं किञ्च ॥१३॥

स सृष्ट्वाऽपि क्षत्रं न व्यभवत्—न प्राभवत्कर्मणे । तदुपयोगिद्रव्यार्जनासामर्थ्यात् । स तदर्थं विशमसृजत । के ते विशः ?, आह—वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति गणश आख्या-

यन्ते, वसुगणो रुद्रगण इत्येवं गणत्वेन ख्याताः, तान्येतानि देवजातानि देवेषु विश इत्येतत् । स सृष्ट्वाऽपि विशो नैव व्यभवत्—न प्राभवत्कर्मणे, कर्मस्वपेक्षितानां परिचारकाणामलाभात् । तदर्थं स शौद्रं वर्णमसृजत । कोऽसौ शूद्रः ? आह—पूषणम्, पूषन्शब्दं व्याचष्टे—इयं वै पूषेति । इयम्—पृथिवी पूषा । कथमस्या इदं नाम ?, सर्वं पुष्यति यदिदं किञ्च—सर्वमिदमन्नं पुष्णाति पुष्णाति चान्नपरिणतिलक्षणभूतजातं च । तदेवं देवेषु क्षत्रादिसृष्टिरुक्ता । ननु प्रसिद्धो वर्णभेदो मानुषेषु, कथं देवेष्वयं विभागः । विभाजकोपाधितौल्यान्मानुषवर्णभेदाभिमानित्वाच्चायं विभाग एष्टव्यः । नहि देवा गुणविभागमतिलङ्घ्य भवन्ति । गुणभेदनिबन्धनश्च वर्णभेदः ॥ १२-१३ ॥

स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत् क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान् बलीयाꣳसमाशꣳसते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात् सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तꣳ सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥१४॥

स सृष्ट्वाऽपि क्षत्रादिभेदं नैव व्यभवत्—उत्पथात्कर्मणोऽनर्थकरान्निवारयितुर्नियन्तुरभावात् । नन्वस्ति क्षात्रं नियन्तृ, तद्ध्यनङ्कुशं तेजसा सर्वातिशायि, सर्वानर्थमूलं स्यात् । तत् सर्वस्य श्रेयोरूपं धर्ममसृजत, यदेतद्धर्म इति तद्धि क्षत्रस्यापि क्षत्रम् । नियन्तुरपि

नियामकम् । धर्मेण नियन्त्रितो हि क्षत्रियो नोत्पथे कर्मणि प्रसर्पति । किं पुनरन्ये त्रयः । तद्धर्मात्परं नास्ति श्रेयः । अबलीयानपि बलीयांसमभिभवितुमाशंसते धर्मेण राज्ञाऽवलम्बेन दुर्बल इव बलीयांसम्, अतश्च धर्मात्परं नास्ति । यो वै स धर्मः सत्यं वैतत्—यतः परं नास्ति श्रेयः यत्क्षत्रस्यापि क्षत्रं स धर्मः सत्यं वै तत् । स धर्मः सत्यलक्षण इत्येतत् । अयं भावः—अलौकिकं हि चक्षुः शास्त्रं श्रुतिलक्षणम्, तच्चक्षुश्चोदनया यमर्थं ग्राहयति स धर्मः, तन्निर्दोषदृष्टिसिद्धत्वाद्यथादृष्टं भूतहितमिति सत्यम् । वचनस्य सत्यता तथाभूतार्थग्राहकतयैवेति । लोकव्यवहारतोऽपि धर्मस्य सत्यलक्षणतां ग्राहयति—तस्मादित्यादिना । एतद्धैव—सत्यं वा धर्मस्वरूपं वा उभयं सत्यधर्मोभयशब्दवाच्यं भवति ॥ १४ ॥

तदेतद्ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्याꣳ हि रूपाभ्यां ब्रह्माभवत् । अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतं यदिह वा अप्यनैवंविद् महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मान-

मेव लोकमुपासीत स य आत्मानमेव लोक-
मुपास्ते न हास्य कर्म क्षीयते अस्माद्ध्ये-
वात्मनो यद्यत्कामयते तत्तत्सृजते ॥१५॥

अथ मनुष्येषु वर्णसृष्टिं वक्ष्यन्नुपसंहरति देवेषु वर्णसृष्टिम्—तदेतदिति । तदेतत् ब्रह्म क्षत्रं विट् शूद्रो देवेषु । ननु 'यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुण' इत्यादिना क्षत्रादिसृष्टिरेवोक्ता, न ब्राह्मणसृष्टिरित्यत्राह—अग्निनैव देवेषु ब्रह्माभवत् । अग्निनेतीत्थंभावे तृतीया । योऽयमग्निभावं प्राप्तः स एव ब्राह्मणो वर्णः, देवेष्वग्निरेव ब्राह्मण इत्येतत् । अथ मनुष्येषु वर्णसृष्टिरुच्यते—ब्राह्मणो मनुष्येष्वित्यादि । ब्राह्मणो मनुष्येषु अभवदित्यव्यवहितेन सम्बन्धः । क्षत्रियसृष्टेः प्रथमं ब्राह्मणो वर्ण एक एव सृष्ट इत्येतत् । ननु देवेषु अग्निना सृष्टेन ब्राह्मणो वर्णः सृष्टः प्रदर्शितः, इह केन सृष्टेन ब्राह्मणो वर्णः सृष्टो भवति ?, वक्ष्यति व्यक्तमुत्तरत्र क्षत्रियेणेत्यादिना, तदत्रापि तेनैव क्रमेण ब्राह्मणेनेति बोध्यम् । इदमभिहितं भवति–देवेषु कतिपयेन्द्रादिव्यक्तिसृष्ट्या वर्णसृष्टिनिर्वहणवन्न मनुष्येषु व्यक्तिविशेषावधारणेन चातुर्वर्ण्यसृष्टिनिर्वहणं सुकरं, किन्तु जातिनिर्देशेनोच्यते, प्रसिद्धे मुखबाहूरुपादेभ्योऽभिसृष्टे ब्राह्मणेन–ब्राह्मणजातेन ब्राह्मणो वर्णः क्षत्रियजातेन क्षत्रियो वर्णः वैश्यजातेन वैश्यो वर्णः शूद्रजातेन शूद्रो वर्णः समभवत् । तद्वर्णविभेदः समभवदित्येतत् । यद्वा–तदेतत्–तस्मादेतस्मात्, इन्द्रवरुणवसुरुद्रादिभावात् ब्रह्म यदेकमग्रे आसीत्तदेव त्रिवर्णमासीत्क्षत्राद्यात्मना ।

ब्राह्मणात्मनाऽवस्थितमेव परमात्मतत्त्वं क्रमात् क्षत्राद्यात्माऽभूदिति यावत् । ननु प्रथमं केन ब्राह्मणोऽभवत्? तदाह—तदिति । तत्परमात्मतत्त्वं अग्निनैव सृष्टेन ब्रह्माभवत् । देवेष्वग्निं ब्राह्मणं सृष्ट्वा तमनुप्रविश्य तदात्मकः सन् स्वयं तेन द्वारेण ब्राह्मणोऽभवदिति यावत् । अथ मनुष्येषु तद्भाव उच्यते—ब्राह्मण इत्यादिना । तदभवदित्यनुषज्यते, तत् परमात्मतत्त्वं मनुष्येषु प्रथमं सृष्टेन ब्राह्मणेन वर्णेन द्वारेण ब्राह्मणोऽभवत् । उत्तरसन्दर्भानुगुण्यात् ब्राह्मणेनेति तृतीयान्तस्येहाध्याहारः । क्षत्रियेण क्षत्रिय इत्याद्य-प्येवमेव व्याख्येयम् । परे त्वग्निनाऽधिष्ठितो मनुष्येषु ब्राह्मणोऽभवत्, क्षत्रियेण देवजातीयेनेन्द्रादिनाऽधिष्ठितो मनुष्येषु क्षत्रियोऽभवत्, एवं देवेषु यो वैश्यस्तेनाधिष्ठितो मनुष्येषु वैश्यः शूद्रेणाधिष्ठितः शूद्रोऽभवदिति व्याचक्षते । सोऽपि प्रकारोऽविरुद्धः । तस्मात्—प्राथम्यलक्षणप्राशस्त्यात् देवेषु मध्येऽग्नावेव लोकं—कर्मफलमिच्छन्ति मनुष्येषु मध्ये ब्राह्मणे । देवैः कर्मफलसिद्धिं काङ्क्षमाणा अग्निं द्वारीकृत्य (अग्नौ हुत्वेत्येतत्) तामिच्छन्ति, मनुष्यैः कर्मफलसिद्धिं काङ्क्षमाणाः (अग्निमद्वारीकृत्य मनुष्यावलम्बमात्रेण कर्मसिद्धिं काङ्क्षमाणा इत्येतत्) ब्राह्मणं द्वारीकृत्य (ब्राह्मणेभ्यो दत्त्वेत्येतत्) तामिच्छन्ति । अग्निब्राह्मणौ कर्मफलसमृद्धिद्वारभूतावित्येतत् । इत-रेभ्योऽनयोर्यो विशेषस्तमाह—एताभ्यामिति । एताभ्यां ह्यग्नि-ब्राह्मणरूपाभ्यामविकृताभ्यां (क्षत्राद्यात्मनाऽविकृताभ्यां) ब्रह्म-ब्राह्मणवर्णौ देवेषु मनुष्येषु चाभवत् । योऽयमग्निर्यं च वर्णाः यश्च

---

१ ब्राह्मणशरीरकत्वेन ।

प्रतिनियतैतदुभयानुबन्धो धर्मः, तत्सर्वमिदमात्मन एवासीदित्यु-क्तम्, सर्वस्यास्य यन्मूलभूतमात्मतत्त्वं तद्यथावदविजानतो महदपि धर्मलक्षणं कर्म प्रक्षीयत एव, विदुषस्तु न तथेत्याह—अथ यो ह वेत्यादिना । केवलाद्धर्मादात्मोपासने प्रवर्तयितुमेतत् । योऽस्मा-ल्लोकात्प्रैत्य दृष्ट्वैव स्वं लोकम्—आब्रह्मभुवनाल्लोका ये न तेष्वेकोऽपि स्वो लोकः, ते हि सर्वे कर्मिणां लोकाः । जीवश्चायं स्वतोऽपहत-पाप्मा ज्ञानमयः, अविद्यामूलकप्रकृतिसंसर्गकृतकेवलवर्णाश्रमाद्य-भिमानौपाधिकर्मभेदगतिलक्षणो लोकः कथमस्य स्वो लोकः स्यात्, यत्रायं स्वेन रूपेणाभिनिष्पद्यते स हि स्वो लोकः, परं ज्योतिरुप-सम्पद्य स्वेन रूपेणाभिनिष्पद्यते, तद्यत् परं ज्योतिः परमात्मतत्त्वं स एव स्वो लोकः, देवाद्यभिमानवतामुपभोगाय भवतीति हि देवादिलोकः प्रथते, यस्त्वपगतदेवाद्यभिमानो ब्रह्मात्मकस्वात्मदर्शी तत्त्वदृष्टिस्तस्य देवादिलोकः कथं स्वो लोकः स्यात्, अपगतदेवात्मा-भिमानस्य तत्त्वदर्शिन उपभोगाय त्वानन्दमयं परात्मतत्त्वमेव प्रभ-वति, तत् तत्त्वदर्शिनः स्वो लोकस्तु परमात्मैव । तदिमं लोकमदृष्ट्वा अनुपास्य योऽस्माल्लोकात्प्रैति तमेनं कर्मैकगतिकं स परमात्मा स्व-भूतोऽपि न भुनक्ति—नानुभवति, न रक्षतीत्येतत् । कस्मात् ?, यस्मा-दयमविदितः—अनुपासितः । नहि परमात्मत्वसामान्येन सर्वस्यायं रक्षकः स्यात् किन्तु ज्ञातः सन्नेव, नहि वेदः स्वरूपतः साधारणो-ऽप्यनधीत उपकारको भवति न वा कर्माकृतमुपकारकं भवितुमर्हति । अनेवंवित्—स्वलोकभूतपरमात्मस्वरूपपरिज्ञानरहितो यद्यपि बहु पुण्यं करोति सर्वं तदस्यान्ततः फलभोगावसाने क्षीयत एव । तस्मात्

आत्मानमेव स्वं लोकं ( परमात्मानम् ) उपासीत । स य आत्मानमेव लोकमुपास्ते न ह्यस्य कर्म क्षीयते—स्वस्याप्यात्मभूतमत एव स्वं लोकं परमात्मानं यथावदवगम्य तद्विज्ञानपूर्वकं 'ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्' इति दृष्ट्या यः कर्म करोति तस्य कर्म न क्षीयते—अङ्गिभूतोपासननिष्पादनद्वाराऽमृतत्वाय भवतीति न क्षीयते । यदि कामोपहतिः स्यात्स्यात्तदा प्रक्षयाशङ्का, नच कामोपहतिः, अस्माद्ध्येवात्मयाथात्म्यवेदनात्साक्षात्कारपर्यन्तादात्मनो यद्यत्कामयते तत्तत्सृजते । सङ्कल्पादेवास्य सर्वे कामाः समुत्तिष्ठन्ति । भूयो व्याख्यायते—अथ यो ह वाऽस्मात्स्वं लोकमित्यादि । स्वं लोकमविदित्वा ह्यन्यान्यमुपधावति, यस्मिन्नेव जन्म यस्मिन्नेव स्थितिर्यस्मिन्नेव लयस्तं स्वं लोकमविदित्वाऽनादौ भवपथे भ्रमन् अयं लोकः असौ लोक इत्युपधावति मानुषाद्दैवं दैवान्मानुषम्, न कश्चिदस्यैष स्वो लोकः, पथि पथि परिभ्रमतस्तत्र तत्र वृक्षमूले निवसतः को वा स्वो लोकः, तत्त्वदृष्ट्या तु परमात्मैव स्वो लोकः, न हि ततोऽन्यत्रास्य स्थितिः, उद्भवति च तदा तदा तत एव, लीयते च तदा तदा तत्रैव, तदयमेवास्य स्वो लोकः, अपरिमितभोगास्पदत्वाच्चायमेव मुख्यो लोकः, यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम् । अनवधिकानन्दो ह्ययम्, यस्मादिदं न वेत्ति अतएवैनमितः प्रेतं नैष परमात्मा स्वैकास्पदमपि स्वस्वरूपाविष्करणेन भुनक्ति, नानुभावयति स्वस्वरूपमित्येतत्, प्रयोजककर्तृत्वविवक्षया भुनक्तीति निर्देशः, अविद्यापिहितदृष्टेरेषोऽनवरतनिवासास्पदभूतोऽपि न गोचरीभवतीत्येतत् । व्याख्यातो वाक्यशेषः ॥ १५ ॥

अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितॄणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाꣳस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथाह वै स्वाय लोकायारिष्टिमिच्छेदेवꣳ हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमाꣳसितम् ॥१६॥

यः पुनरेवं स्वं लोकं परमात्मानं ज्ञात्वा आत्मानमेव लोकमुपास्ते न चास्य कर्म क्षीयते यद्यत्कामयते तत्सृजति, यस्तु मनुष्यो न तद्वेद कामयते च लोकमन्यान्यत्सुखास्पदं स्वर्गादि, तेन तु प्रथममहमस्मि लोको भूतानामिति वेदितव्यम्, अपरिज्ञाय भूतलोकतां स्वस्य केवलं कामयमानस्य नार्थः सिध्येत्, किन्तु अनर्थ एव, तथा ह्ययमात्मा योऽयं मानुषे लोके संसरन् जीवात्मा स सर्वेषां भूतानां लोकः, लोक इव लोकः, यज्जुहोति यद्यजते तेन देवानां लोकः, होमयागादिभिरेष पुरुषो नस्तर्पयिष्यतीति मानुषान् प्रतीक्षन्ते देवाः, तत् देवोपजीव्यत्वाद्भवति देवानामेष लोकः। अथ यदनुब्रूते-

स्वाध्यायमधीते तेन ऋषीणाम्, तेन हि ऋषयस्तृप्यन्ति । अथ यत्पितृभ्यो निपृणाति—पिण्डतिलोदकादि प्रयच्छति, यत्प्रजां चान्वयलक्षणामिच्छति दारेषु, तदेतदुभयेन पितृणाम् । अथ यन्मनुष्यान्वासयते—अतिथ्यभ्यागतानासनशयनावकाशप्रदानादिना स्वगृहे वासयति, यच्चैतेभ्योऽशनं ददाति तेन मनुष्याणाम्, अथ यत्पशुभ्यस्तृणोदकं विन्दति प्रापयति तेन पशूनाम् । अथ यदस्य गृहेषु श्वापदाः वयांसि आपिपीलिकाभ्य उपजीवन्ति—श्वापदादयः पिपीलिकान्ताः प्राणिनः कणबलिभुक्तोच्छिष्टाद्युपजीवन्ति, तेन तेषामेष लोको भवति । एवंविदे—भूतानामेवमहं लोकोऽस्मीति जानते देवर्षिपितृमनुष्याद्युपजीवनशेषतया स्वभोगे प्रवर्तमानाय धार्मिकाय सर्वाण्येतानि भूतानि अरिष्टमक्षयमिच्छन्ति, यथा स्वाय लोकायारिष्टमिच्छेत् सर्वः । तद्वा एतद्विदितम्—श्रेयस्कामेन स्वस्य भूतलोकत्वं निःश्रेयसकामेन च परमात्मनः स्वलोकत्वं ज्ञातव्यमित्येतदुभयं विदितं शास्त्रतः, मीमांसितम्—विचारपूर्वकमवधारितं च । नायमर्थ आशङ्कनीय इत्येतत् ॥ १६ ॥

आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान् वै कामो नेच्छꣳश्चनातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स

यावद्प्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता मन एवास्यात्मा वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवꣳ श्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्मात्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदꣳ सर्वं यदिदं किञ्च तदिदꣳ सर्वमाप्नोति य एवं वेद ॥१७॥

ननु ज्ञानैकघनोऽप्ययं जीवात्मा स्वं लोकं परमात्मानं कुतो न पश्यति, कुतश्चास्य ज्ञानघनस्यापि भूतलोकता, येनायं देवादिपिपीलिकान्तानां भूतानामर्थे कर्मभिर्नियन्त्रितो भवति महायज्ञलक्षणैः, इत्याशङ्कापरिहाराय प्रवर्तते—आत्मैवेत्यादि । यदिदं जायापुत्रादिभेदजातं अग्रे—प्राक् जायापुत्रादिभावतः प्रागात्मैवासीत्, जायापुत्रादियोगरहितः केवल आत्मैवासीत् । नैसर्गिकोऽस्य जायापुत्रादियोगो नासीदित्येतत् । इयं जाया अहं पतिः अयं पुत्रः अहं पिता इत्यादि विविधाभिमानपरिपूर्णमिदं जीवजातं पूर्वं तथाविधाभिमानरहितोऽनपेततथाविधाभिमानबीजभूताविद्याशक्तिरात्माऽऽसीत् । किंरूपः?, एक एव—स चायमात्मा प्रथममेक एव यथाबीजशक्ति पुरुषरूप आसीत् । (मनुरासीदित्येतत्) सोऽकामयत वासनया यथासमयं समुद्भूतया जाया मे स्यादिति । अथ जातायामस्यामहं प्रजायेयेति । अथ वित्तं पशुधान्यधनलक्षणं मे स्यादिति । अथाधि-

कार्यहं कर्तेदं कर्म ज्योतिष्टोमादिलक्षणं कुर्यामिति । चेतनोऽयं ज्ञानघनोऽप्यनादिवासनासमुद्भूतेषणावशान्न पश्यति स्वं लोकम्, पश्यंश्चान्यान्यं लोकं तत्तल्लोकैषणया तदनुबन्धिन्या जायाद्येषणया नियन्त्रितः सन् देवादिपिपीलिकान्तभूतलोकतां प्राप्य कर्मभिर्नियन्त्रितो भवति । तदीषणामूलः केवलकर्ममार्गः, यत्र भूतलोकत्वमात्मनो भवति । ईषणात्यागमूलो वेदनमार्गः, यत्र स्वलोकविज्ञानसम्पत्तिर्निःश्रेयसैकान्ता । तदेवं व्यवस्थिताधिकारावुभौ मार्गावित्यविरोध इति भावः । ननु विविधा ईषणा भवन्ति, कथं चतस्र एवैषणाः ?, तत्राह—एतावान्वै कामः, इच्छंश्चन—इच्छन्नपि नातोऽधिकं विन्दते—विविधफलसाधनेषणा हि कर्मैषणा—सा च सामान्यतः सङ्क्षेपोक्तैव 'कर्म कुर्वीये'ति, कर्मार्था चेषणा जाया मे स्यादित्यादिनोक्ता, साधनेषणातः फलेषणा हि पार्थक्यं न लभते, तदुच्यते एतावान् कामो नेच्छंश्चनातो भूयो विन्देदिति । यस्मादेकः सन् ( मनुः ) पूर्वमकामयत, तदद्याप्येकाकी कामयते 'जाया मे स्यात् अथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीये'ति । सोऽयमधिकारी अविद्वान् । यावदेष्वेषु जायापुत्रवित्तादिषु एकैकं न प्राप्नोत्यथात्मानमकृत्स्नमपरिपूर्णमेव मन्यते । यो नाम जायाद्यलाभेनात्मनोऽकृत्स्नतामवगत्य खिद्यतीव तस्य कृत्स्नतायामयमुपायः प्रदर्श्यते । तस्याप्येवं वक्ष्यमाणप्रकारेण भावयतः कृत्स्नता भवत्येव । तस्य—उ—कृत्स्नतेति पदच्छेदः, उकारोऽप्यर्थः , तथाहि—अस्य मन एवात्मा, प्राधान्यात् । वाक् जाया—मनोनुकूलवृत्तित्वात् । पत्यनुकूलवृत्तिर्हि जाया । मनुते ततो वदति । प्राणः प्रजा—प्रजेव प्रजा, वाङ्मनसाभ्यां प्राणः प्रसू-

यत इव । द्वेधा भवति वित्तम्—मानुषं दैवं चेति । तत्र यन्मानुषं वित्तं पश्वादिलक्षणं तदस्य चक्षुरेव, चक्षुषा तन्मानुषं विन्दति, चक्षुर्गम्यत्वात्तस्य चक्षुषि तद्भावारोपः । यद्दैवं वित्तं तत्त्वस्य श्रोत्रमेव । नहि चक्षुषा मानुषमिव दैवं गम्यते । श्रोत्रेणैव शास्त्रश्रवणेन गम्यते । तत् श्रोत्रं दैवं वित्तमुच्यते । आत्मैव—शरीरमेवास्य कर्म, कायेन कर्मारम्भात् । स एष पाङ्क्तो यज्ञः—मनआदिष्वात्मजायादिदर्शनलक्षणः स एष पाङ्क्तो यज्ञः, आत्मजायापुत्रवित्तकर्मभिः पञ्चभिर्निर्वर्त्यत्वात् पाङ्क्तो यज्ञ उच्यते । पञ्चत्वसङ्ख्यायोगमात्रेण कथमस्य दृष्टिविशेषलक्षणस्य यज्ञतोच्यत इत्यत्राह—पाङ्क्तः पशुरिति । पाङ्क्तः पशुः पाङ्क्तः पुरुषः—यस्तु बाह्ययज्ञस्य निर्वर्तकः पशुः पुरुषश्च तावपि पाङ्क्तावेव मनःप्रभृतिपञ्चकनिर्वर्त्यत्वात् भूतपञ्चकसमुदायात्मत्वाद्वा । न केवलं यज्ञसाधनः पशुः पुरुषश्च पाङ्क्तः, किन्तु यज्ञफलभूतं यदिदं दैवं मानुषं वा भोग्यं तदिदं सर्वं पाङ्क्तमेव, भूतपञ्चकात्मत्वात् । तत् यज्ञानुबन्धिनः सर्वस्य पश्वादेः पाङ्क्तत्वात् स एष पाङ्क्तो यज्ञ इति उक्तदृष्टिविशेषे पाङ्क्तयज्ञत्वरूपणं युक्तमिति भावः । य एवं वेद अकृत्स्नतामपनुदन्नात्मनो य एवमुक्तेन प्रकारेण मनःप्रभृतिभिर्जायापुत्रादिसम्पत्तिं वेद—स तदिदं सर्वमाप्नोति जायादिसम्पत्तिं तत्साध्यं कर्म, कर्मफलं च यदिदं किञ्च तदिदं सर्वमाप्नोति ॥ १७ ॥

इति प्रथमाध्याये चतुर्थं ब्राह्मणम् ।

---

यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता एकमस्य साधारणं द्वे देवानभाजयत्त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत्तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन स देवानपि गच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥१॥

पिताऽस्य सर्वस्य—सकलकारणभूतः सर्वेश्वरः मेधया तपसा—आलोचनात्मकया मेधया, सङ्कल्पात्मकेन ज्ञानेन यत् सप्तान्नानि—यानि सप्तसङ्ख्याकान्यन्नानि व्याख्यास्यमानान्यजनयत्, तेष्वेकमस्य मनुष्यस्य साधारणमकरोत् । द्वे देवानभाजयत्—प्रापयत्, त्रीण्यात्मने—जीवात्मने, विना योनिविशेषनियमं मानुषदेवपशुसाधारण्येन सर्वेभ्यो जीवेभ्योऽकुरुत । पशुभ्य एकं प्रायच्छत् । यच्च प्राणितीत्यादि, स्पष्टीभविष्यति चेदमुपरिष्टात् श्रौतेन विवरणेन ॥ १ ॥

यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति मेधया हि तपसाऽजनयत्पितैकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रँ ह्येतत् द्वे देवानभाजयदिति हुतं च प्रहुतं च तद्देवेभ्यो जुह्वति च प्रजुह्वत्यथो आहुर्दर्शपूर्णमासाविति तस्मान्ने-

ष्टियाजुकः स्यात्पशुभ्य एकं प्रायच्छदिति तत् पयः पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात् कुमारं जातं घृतं वै वाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्त्यथ वत्सं जातमाहुरतृणाद इति तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदꣳ सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न तद्यदिदमाहुः संवत्सरं पयसा जुह्वदपपुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान् सर्वꣳ हि देवेभ्योऽन्नाद्यं प्रयच्छति। कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति पुरुषो वा अक्षितिः स हीदमन्नं पुनः पुनर्जनयते यो वै तामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धियाधिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतत्स देवानपि गच्छति स ऊर्जमुपजीवतीति प्रशꣳसा ॥२॥

यत्सप्तान्नानीत्यादिवाक्यं श्रुतिरेव व्याचष्टे—यत्सप्तान्नानीत्यादिना। यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेत्यन्तं व्याख्येयप्रतीकग्रहणम्। नात्र व्याख्येयं तिरोहितार्थमस्ति, प्रसिद्धं ह्येतदित्याशये-

नाह—मेधया हि तपसाऽजनयत्पिता । परमात्मा सर्वमिदं मेधया तपसा सङ्कल्पलक्षणज्ञानेनासृजदिति प्रसिद्धं हि । कानि तान्यन्नानि ?, उत्तरवाक्यव्याख्यानेन व्यक्तीभविष्यतीति न पृथग्व्याख्यानमपेक्ष्यते । एकमस्य साधारणमिति व्याख्येयप्रतीकग्रहणम् । इदमेवास्य तत्साधारणमन्नं यदिदमद्यते इति तद्व्याख्यानम् । यदिदमद्यते व्रीहियवमाषादि प्रसिद्धमन्नं इदमेवास्य मनुष्यस्यान्नं तच्च साधारणं देवपितृप्राणिनाम् । देवान् पितॄन् प्राणिनश्चान्यानतिथ्यादींस्तर्पयित्वा तच्छेषभूतमेव मनुष्येण सेव्यमिति यावत् । यस्तु—एवं साधारणमन्नं स्वयमुपास्ते—देवादिभ्योऽप्रदाय स्वयं भुङ्क्ते स्तेन एव सः, तस्मात् स पाप्मनो न व्यवर्तते । मिश्रं ह्येतदन्नम्—साधारणं ह्येतद्देवादीनाम् । द्वे देवानभाजयदितीति प्रतीकग्रहणम् । हुतं च प्रहुतं चेत्यादि व्याख्यानम् । इमे ते द्वे अन्ने हुतं च प्रहुतं च—अग्नौ हवनं बलिहरणं च । हुतमौपासनं प्रहुतमग्निहोत्रं वा । यस्मादिदं द्वयं देवेभ्य एव, तस्मादेवाद्यापि देवेभ्य एव जुह्वति प्रजुह्वति चाधिकारिणः । पक्षान्तरेण व्याचष्टे—अथो इति । परे तु ते द्वे अन्ने दर्शपूर्णमासावित्याहुः । दर्शपूर्णमासयोर्देवैकभोग्यत्वेन तेभ्यस्ताववश्यानुष्ठेयौ इति यावत् । दर्शपूर्णमासापेक्षया काम्येष्टीनामप्राशस्त्यं गमयन्नाह—तस्मादिति । यस्माद्दर्शपूर्णमासौ देवैकभोग्यौ तस्मात्तदेकपरेण भाव्यं श्रेयोऽर्थिना, न काम्येष्टिशीलेनेत्याशयः । इष्टियाजकः—इष्टिः—काम्येष्टिः, याजकः—ताच्छील्ये—उकञ् । अव्यवहितमपि वाक्यं व्याख्येयांशभूयस्तया पश्चाद्व्याख्यास्यन् व्याख्येयलाघवाद्व्यवहितमपि पशुभ्य एकं प्रायच्छदिति व्याचष्टे—पशुभ्य इति । पशुभ्यो

यदेकमन्नमुक्तं तत्पयः। पयसः पश्वन्नत्वे हेतुमाह—पयो ह्येवाग्रे इति। अग्रे—आदौ—जातमात्रा इत्येतत्। मनुष्याः पशवश्च जातमात्राः पयो ह्युपजीवन्ति। ननु पशुभ्य इत्युक्तम्, उपपादने च मनुष्याश्चोपजीवन्तीति, कथमेतत्। मनुष्येषु जातमात्रेषु न विशेषः पशुभ्यः। अनभिज्ञा मनुष्या द्विपात्पशव एव। तस्मात् कुमारं जातं घृतं वै वाग्रे प्रतिलेहयन्ति। पयोविकार एव हि घृतम्। स्तनं वाऽनुधापयन्ति। वाकारश्चार्थः। वत्सं जातमत एव दुग्धैकोपजीव्यत्वेनातृणाद इति जनाः कथयन्ति। तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति प्रतीकग्रहणम्। किं बहुना यत्प्राणिति पश्वादिकं यच्च न प्राणिति तर्वादिकं सर्वमेतत्पयसि प्रतिष्ठितम्। पयो जलं दुग्धं च। तद्यदिमाहुः—यः पयसीदं सर्वं प्रतिष्ठितमिति सर्वप्रतिष्ठात्वं पयसो भावयन् संवत्सरं यावत्पयसा जुहुयात् सोऽपमृत्युं जयतीति, न तथा विद्यात्, किन्तु—तथाविद्वान्यदहरेव जुहोति तदहरेवापमृत्युं जयति न यावद्वत्सरं तदभ्यासोऽपेक्ष्यते, स हि विद्वान् देवेभ्य एव अन्नाद्यम्—पयःप्रभृत्यन्नं सर्वं प्रयच्छति। पयोविकारत्वात्सर्वस्यान्नस्य पयो देवेभ्यो जुह्वता सर्वमेवान्नं देवेभ्य एव हुतं भवति। तदिदं विद्वान् जुहोति तदहरेव सोऽपमृत्युं जयति। कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति प्रतीकग्रहणम्। प्रश्नरूपमिदं वाक्यं प्रतिवचनपूरणेन व्याचष्टे—पुरुषो वा वेति। यः स्रष्टा पितेव पिता पूर्वमुक्तः सहीदमन्नं पुनः पुनः सृजति, तेनाद्यमानान्यपि न क्षीयन्ते। पुरुषस्तु सोऽक्षितिः—अक्षयः। यो वैतामक्षितिं वेदेति व्याख्येयांशग्रहणम्। व्याचष्टे—पुरुषो वेति। स हि पुरुषः अक्षितिः, सही-

दमन्नं धिया धिया तत्तत्स्रष्टव्यवस्तुविषयपर्यालोचनात्मिकया तया तया धिया भोक्तुर्जीववर्गस्य कर्मभिश्च जनयते, यदि स न कुर्याद-न्वहं न जनयेत्क्षीयेत हीदम् । तस्माद्द्यमानान्यप्यक्षयाणीव भवन्ति । तदन्नाक्षयाधायकतया स्वयमक्षयतया चास्य पुरुषस्याक्षितिं गुणं वेद सोऽन्नमत्ति प्रतीकेन । सोऽन्नमत्ति प्रतीकेनेत्येतद्व्याचष्टे—सोऽन्नम-त्ति प्रतीकेनेतीति । प्रतीकशब्दार्थमाह—मुखं प्रतीकमिति । विभक्त्यन्तार्थमाह—मुखेनेत्येतदिति । मुखशब्दश्चात्र मुख्यपरः । प्राधान्येनात्तीति यावत् । किं तददने प्राधान्यं तत्स्फुटयति—स देवानपीति । स देवभावं प्राप्य देवभोग्यममृतमुपजीवति । देव-भावात् भोक्तृप्राधान्यं अमृतलाभाद्भोग्यप्राधान्यमपि । इति प्रशं-सा—फलकीर्तनम् ॥ २ ॥

त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्म-नेऽकुरुतान्यत्रमना अभूवं नादर्शमन्यत्रमना अभू-वं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणो-ति कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृति-रधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्च शब्दो वागेव सैषा ह्यन्तमायत्तैषा हि न, प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥३॥

त्रीण्यात्मनेऽकुरुतेति व्याख्येयांशनिर्देशः । यैरुपकरणैः सम्पन्नस्य पूर्वोक्तान्यन्नानि चत्वारि, तान्येतानि त्रीणि मनो वाक् प्राण इति, तान्येतानि त्रीण्यन्नान्यात्मने—जीवात्मने भोक्त्रे भोगोपकरणतयाऽकुरुत। उपकरणान्येतानि कथमन्नशब्दनिर्देशमर्हन्ति?, अद्यतेऽनेन साधनेनेत्यन्नम् । भोक्तृभोग्यप्रेरयित्रात्मकतत्त्वत्रये भोक्तुः प्रेरयितुश्चेतरदखिलं भोग्यमिति भोग्यवर्गसमावेशाद्वाऽन्नशब्दनिर्देशः। एतैस्त्रिभिरात्मन उपकरणप्राचुर्यमुपपादयति—अन्यत्रेत्यादिना। मन एवास्य दर्शनादौ प्रधानं साधनम्, अतएवायमेवं वदति—अन्यत्रमना अभूवं नादर्शमिति अन्यत्रमना अभूवं नाश्रौषमिति च, तन्मनसैव प्रधानेन साधनेन पश्यति शृणोति च। यदास्वादयति यज्जिघ्रति यत्स्पृशति तत्सर्वं मनसैव । ये च कामसङ्कल्पादयः सर्वे ज्ञानप्रभेदा मनसैवेति मन एवैतत्सर्वम्। तस्मादपि पृष्ठत उपस्पृष्टो मनसैव प्रधानेन तं स्पर्शं विजानाति—अस्यायं स्पर्शोऽस्यायं स्पर्श इति । चक्षुरादयोऽपि न स्वयं रूपादिप्रकाशने प्रभवन्ति, किन्त्वर्थं रूपादि मनसे उपहरन्ति सन्ति प्रकाशने द्वाराणि भवन्ति, प्रभवति तु मन एव प्रकाशने इति मनसः प्राधान्यम्। अथ कर्मेन्द्रिये वाचः प्राधान्येनोपकरणभावमुपपादयति—यः कश्च शब्द इत्यादिना। प्रवृत्तिनिवृत्तिफलकस्य सर्वस्य व्यवहारस्य तत्तदभिधेयार्थप्रतिनियतस्याभिधा हि प्रकाशमाना मूलम्, अभिव्यक्तिस्तु तस्या वाचैव, यः कश्चन शब्दो—वर्णात्मकस्ताल्वादिस्थानो वागेव—वागेकसाध्यः। वाचैव मिथो बोध्यमानाः प्राप्य संशयान्तं प्रवर्तन्ते निवर्तन्ते च। सैषा हि वाक् अन्तम्—अभिधेयार्थप्रकाशनलक्षणं संश-

१ शब्दाभिव्यञ्जनद्वारा ।

यान्तमायत्ता—अनुगता । वाक् स्तूयते—एषा हि नेति । एषा वाक् तु स्वयं परैरन्तं प्रकाशनलक्षणं नानुगता, अपरप्रकाश्या स्वयमेव प्रकाशते । तद्वाचो व्यवहारे प्राधान्येनोपकरणभाव इति यावत् । शरीरधारणलक्षणमुपकरणवैशिष्ट्यं पञ्चवृत्तिप्राणे बोधयन्नाह—प्राणोऽपान इत्यादिना । योऽयमनः—पञ्चवृत्तेर्वायुविशेषस्येदं सामान्यं नाम, प्राणादिवृत्तिविशेषैः कार्यविशेषाधायकैः शरीरमनुक्षणं रक्षन् धत्ते, तत्र प्राणो मुखनासाभ्यन्तरसञ्चारी, अपानोऽधोवृत्तिर्मूत्रपुरीषादेरधोनयनाधायकः, व्यानः—व्यायमनात् प्राणापानयोर्नियमनाद्व्यानः, उदानः—ऊर्ध्वगमनात् शरीरस्य पुष्टिलक्षणोत्कर्षाधानात् उदानः, समानः—अशितपीतयोः समं नयनात् समानः, सोऽयं वृत्तिभेदेन शरीरधारणैकहेतुना उपकुर्वन् प्राण एव । तस्मात् एतन्मयो वा—एतदुपकरणप्रचुरो वाऽयमात्मा यः संसरति भवपथे । इममेवार्थं विविच्याह—वाङ्मयो मनोमयः प्राणमय इति ॥ ३ ॥

त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥४॥ त्रयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥५॥ देवाः पितरो मनुष्या एत एव वागेव देवा मनः पितरः प्राणो मनुष्याः ॥६॥ पिता माता प्रजैत एव मन एव पिता वाङ्माता प्राणः प्रजा ॥७॥

वाङ्मनःप्राणान् स्तौति—त्रय इत्यादिना । त्रयो लोका एत एव

त्रयो वेदा एत एव देवाः पितरो मनुष्या एत एव पिता माता प्रजा एत एव। तत्र वागेवायं लोकः मनोऽन्तरिक्षलोकः प्राणोऽसौ स्वर्गो लोकः। त्रिष्वपि लोकेषु वागादिप्राचुर्यसाम्येऽपि एकैकप्राधान्यविवक्षया तत्र तत्तदभेदोपचारः स्तुतये प्रवर्तते। वागेव ऋक् मनो यजुः प्राणः सामवेदः। वागेव देवा मनः पितरः प्राणो मनुष्याः। मन एव पिता वाङ् माता प्राणः प्रजा ॥४-७॥

विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत् किञ्च विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वाऽवति ॥८॥ यत्किञ्च विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वाऽवति ॥९॥ यत्किञ्चाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वाऽवति ॥१०॥

यद्विज्ञातं यद्विजिज्ञास्यं यदविज्ञातमिदं त्रयमेत एव। तत्र यत् किञ्च विज्ञातं वाचस्तद्रूपम्, कस्मात्?, वाग्घि विज्ञाता-विज्ञातार्थप्रकाशने प्रभवति नाविज्ञाते वाक् न वा विजिज्ञास्ये, तत् भवति सा विज्ञातैव[1]। वागेनं तद्भूत्वा-प्रकाश्यं विज्ञातं भूत्वाऽवति। अभेदोपचारः। ज्ञातार्थप्रकाशकतयोपकरोतीत्येतत्। यत्किञ्च विजिज्ञास्यं मनसस्तद्रूपम्, कस्मात्?, मनो हि विजिज्ञास्यं-मनसा हि जिज्ञास्यमर्थं विचार्यावधारयति, तन्मनो भवति विजिज्ञास्यम्। मन एनं

---

१ यो हि वाचमुच्चारयति स स्वयमर्थं ज्ञात्वैवोच्चारयति, तत् ज्ञात एवार्थे वाक् प्रभवतीति यावत्।

तत् भूत्वा—जिज्ञासावधारणैकान्ततया जिज्ञास्यं भूत्वाऽवति । अभेदोपचारः । अवधारकतयोपकरोतीत्येतत् । यत्किञ्चाविज्ञातं—विज्ञातादन्यत् सत्तयैवोपकारकं, तत्प्राण एव, प्राणो ह्यविज्ञातः—प्राणो हि नार्थप्रकाशको वागादिरिव नवा चक्षुरादिना प्रकाश्यः, तद्विज्ञातादन्यः सत्तयैवोपकारकः, तद्युक्तं प्राणस्य तद्रूपमिति । अभेदोपचारोऽयम् । प्राण एनं तत्—अविज्ञातं भूत्वाऽवति ॥८-१०॥

तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निस्तद्यावत्येव वाक्तावती पृथिवी तावानयमग्निः ॥११॥ अथैतस्य मनसो द्यौः शरीरं ज्योती रूपमसावादित्यस्तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ मिथुनꣳ समैतां ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ॥१२॥

अथ वाङ्मनःप्राणानामधिष्ठातृदेवताविशेषकृतमतिशयमाह—तस्यै वाच इति । तस्या वाच इत्यर्थः, विभक्तिव्यत्ययश्छान्दसः । ज्योती रूपमयमग्निः—अग्निना हि ज्योतिषाऽधिष्ठिता वाक्प्रकाशते, तत्तस्या ज्योतीरूपमग्निः । यत इयमग्न्यधिष्ठिताऽग्निरूपेयं वाक्, अत एवास्याः शरीरं—शरीरमिव शरीरमाश्रयप्रदेशः पृथिवी—पृथिवीमाश्रित्य ह्यग्निः समिन्धे । तदेवमधिष्ठातृदेवतामहिम्नाऽऽश्रयोऽपि स्तूयते । तस्मात् यावत्येव वाक् तावती पृथिवी वाचामाश्रयः प्रदेशः सर्वो-

ऽपि पृथिवी । तावानयमग्निः—सर्वाऽपि वाक् अग्न्यधिष्ठितेत्येतत् । अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यः—मनो ह्यादित्येन ज्योतिषाऽधिष्ठितं तदादित्यात्मकस्यास्य मनसः शरीरम्—आश्रय-प्रदेशो द्यौः—द्युलोके ह्यादित्यः प्रकाशते, तन्मनस आश्रयप्रदेशो द्युलोक एव । यावदेव मनस्तावदेव द्यौः—मनस आश्रयः सर्वः प्रदेशो द्यौरेवेत्येतत् । तावानसावादित्यः—सर्वं मन आदित्याधिष्ठितमित्येतत् । तावग्न्यादित्यौ वाङ्मनोलक्षणौ मिथुनं समेयाताम्—मिथः संयुक्तौ, ततः प्राणोऽजायत—तदुभयवृत्त्यधीना प्रवृत्तिनिवृत्तिलक्षणा प्राणवृत्तिरित्येतत् । स इन्द्रः—ईश्वरः, कस्मात्?, यदेषोऽसपत्नः—शत्रुरहितः, द्वितीयो वै सपत्नो भवति, नास्य कश्चित् द्वितीयः, एतदुपजीव्ये हि वाङ्मनसी, य एवमस्यासपत्नतां वेद नास्य सपत्नो भवति ॥११–१२॥

अथैतस्य प्राणस्यापः शरीरं ज्योती रूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्त एते सर्व एव समाः सर्वेऽनन्ताः स यो हैतानन्तवत उपास्तेऽन्तवन्तꣳ स लोकं जयत्यथ यो हैताननन्तानुपास्तेऽनन्तꣳ स लोकं जयति ॥१३॥

अथैतस्य प्राणस्य ज्योती रूपमसौ चन्द्रः ज्योतिषा चन्द्रेण ह्यधिष्ठितः प्राणः, चन्द्रश्च जलमयः, तदस्य चन्द्रात्मकस्य प्राणस्यापः शरीरम्, 'प्राणा वा आपः' इति श्रुतेर्वा प्राणस्यापः शरीरमाश्रयः । तद्यावानेव प्राणस्तावत्य आपः, सर्वोऽपि प्राणः अबाश्रयः । तावानसौ चन्द्रः—सर्वोऽपि प्राणश्चन्द्राधिष्ठित इत्येतत् । तस्यै वाच इत्यादेरेवं वा

भावः—त एते त्रयो लोकास्त्रयो वेदा इत्यादिवत् त एते त्रयो ज्योतींषीति स्तूयते, यथा राजोपजीव्योऽपि पुरोहितो राजाऽयमिति तथा अग्न्याद्युपजीव्या अप्यग्न्यादयोऽमी वागादय इति, तत्र वागेवाग्निर्मन एवादित्यः प्राण एव चन्द्र इति स्तूयते । अन्यद्यथाव्याख्यातम् । त एते सर्व एव समाः—अन्यूनानधिकसङ्ख्याकाः, जीवानामुपकरणिनामानन्त्यात् । तदेतद्विशदयति—सर्वे एवानन्ता इति । यद्वा—सर्व एव समाः स्वयमणवोऽपि व्याप्य शरीरे हस्तिमशकादौ सर्वत्र स्वस्वकार्ये व्यापृत्यां समाः, अनन्ताः—आप्रलयमनुवृत्तेः चिरावस्थायिनः । तदेतान्योऽनन्तानुपास्ते स उपासकोऽनन्तांश्चिरकालस्थायिनो लोकान् जयति—प्राप्नोति, यस्त्वन्तवत उपास्ते स त्वन्तवत एव—अल्पाल्पकालानेव लोकान् प्राप्नुयात् । तदनन्तत्वेनैवोपासीतेत्येतत् ॥१३॥

स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदशकला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवा च पूर्यतेऽप च क्षीयते सोऽमावास्याꣳ रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेताꣳ रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥१४॥

योऽसौ प्राणानामधिष्ठातोक्तः स एष चन्द्रः कलोपचयापचयभेदेन तिथिनिर्वाहकतया मासाद्यवयवसम्पत्त्या संवत्सरनिर्वाहकः ।

अतएव संवत्सरात्मा सर्वप्राणभृतामायुर्व्यवस्थोपयुक्तकालचक्रनिर्वाहकतया प्रजापतिः । सोऽयं षोडशकलः । कास्ताः?, रात्रय एव पञ्चदश कलाः यासु कलानामेकैकश उपचयोऽपचयश्च, प्रतिपदादयस्तिथय इति यावत् । या त्वस्य षोडशी कला ध्रुवैव सा तया कलयोपलक्षितः स रात्रिभिरेव च क्रमादापूर्यतेऽपक्षीयते च । कथमिदमवगम्यते एकया कलयाऽवशिष्यत इति?, स ह्यमावास्यायां रात्रौ एतया षोडश्या कलया सर्वं प्राणिजातमुपभुक्तौषध्यादिरसात्मनाऽनुप्रविश्य पुष्णन् परेद्युः प्रातः प्रतिपदि प्राप्तैककलोपचयो जायते, तस्मादेवैतां रात्रिं प्राणभृतः कस्यापि पापिष्ठतरस्य कृकलासादेरपि प्राणं न विच्छिन्द्यात् एतस्या अनुप्रविश्य कलया रक्षन्त्या देवतायाः पूजायै । सामान्यतो निषिद्धेयं हिंसा प्रत्यवायावहा अमावास्यायां देवताविशेषनिग्रहावहाऽपीत्यानर्थक्याधिक्यमुक्तं भवति ॥ १४ ॥

**यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित्पुरुषस्तस्य वित्तमेव पञ्चदशकला आत्मैवास्य षोडशी कला स वित्तेनैवा च पूर्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनागादित्येवाहुः ॥१५॥**

षोडशकलसंवत्सरप्रजापतिविज्ञानफलमाह—यो वा इति । योऽसौ संवत्सरः प्रजापतिः षोडशकल उक्तः सोऽयमेव—अयमेव स भवति, योऽयमेवंवित्पुरुषः । कथमयं षोडशकलः?, उच्यते, गोभूहिरण्यादिलक्षणं वित्तमेवास्य पञ्चदशकलाः—कलात्वे सामान्यधर्म उप-

चयापचयलक्षणः, स चानुपदं व्याख्यास्यते । सङ्ख्यया साम्यमविवक्षितम्। आत्मैवास्य शरीरमेवास्य षोडशी कला। स ह्यात्मा वित्तेनैव गवादिलक्षणेनापूर्यते कदाचिदपक्षीयते च कदाचित् । तद्भवति षोडशकलोऽयम् । तदेतन्नभ्यं यदयमात्मा—सोऽयमात्मा ध्रुवकलास्थानीयो रथचक्रस्य नाभिस्थानमर्हति, नाभिस्थानीय इति यावत्। प्राधान्याद्ध्रौव्यात् । यत्तूपचयापचयशालिकलास्थानीयं वित्तं तत्तु प्रधिःअरादिः, अरनेमिस्थानीयमिति यावत् । तस्मात्—आहुरित्यनेन सम्बद्ध्यते। यद्यप्येवंविदयं सर्वज्यानिं जीयते—सर्वस्वहरणं यथा स्यात्तथा हीयते, सर्वस्वे प्रक्षीणेऽपीति यावत् । आत्मना चेज्जीवति—शरीरेण चेन्न हीयते । तदा प्रधिनाऽगादित्येवाहुः—नाभिस्थानीयाया ध्रुवायाः कलाया आत्मनः सुरक्षिततया नात्यन्तं हानिः, प्रधिना तु केवलमगात् सा चोपचयशीला, अपचये उपचयावश्यंभावनियमेन पुनरुपचयमेष्यति, तन्न हानिरित्याहुः ॥ १५ ॥

**अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकाना॑ँ श्रेष्ठस्तस्माद्विद्यां प्रश॑ँसन्ति ॥१६॥**

वित्तेनापूर्यमाण आत्मा प्रस्तुतः, तस्यास्य वित्तविशेषसम्पाद्या लोकाः प्रस्तूयन्ते—अथेति । वित्तविशेष एव पुत्रादिकम्, कर्म च जायापश्वादिसम्पत्तिसाध्यं वित्तमेव, विद्याऽपि विशिष्टं वित्तम् । त्रयो वाव लोकाः—मनुष्यलोकः पितृलोको देवलोक इति । तत्र सोऽयं

मनुष्यलोकः पुत्रेणैव जय्यः । एवकारार्थमाह—नान्येन कर्मणेति । कर्मणा केवलेन पितृलोकः । विद्यया देवलोको हैरण्यगर्भान्तः । विद्या चेयमनात्मावलम्बिनी तत्तद्देवताविज्ञानलक्षणाऽपरा, प्रकरणात् । देवलोको वै लोकानां त्रयाणामेषां मध्ये श्रेष्ठः । तस्मात् त्रयाणां साधनानां वित्तानां मध्ये विद्यालक्षणं वित्तं प्रशंसन्ति विवेकिनः ॥१६॥

अथातः सम्प्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति यद्वै किञ्चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता ये वै के च यज्ञास्तेषाँ सर्वेषां यज्ञ इत्येकता ये वै के च लोकास्तेषाँ सर्वेषां लोक इत्येकतैतावद्वा इदँ सर्वमेतन्मा सर्वँ सन्नयमितोऽभुनजदिति तस्मात् पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति स यदेवंविदस्माल्लोकात्प्रैति अथैभिरेव प्राणैः सह पुत्रमाविशति स यद्यनेन किञ्चिदक्ष्णयाऽकृतं भवति तस्मादेनं सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिंल्लोके प्रतितिष्ठति अथैनमेते देवाः प्राणा अमृता आविशन्ति ॥१७॥

तत्र कथं मनुष्यलोकः पुत्रेण जय्यः, तदिदमुपपादयितुमिदमारभ्यते—अथात इति । सम्प्रत्तिः—सम्प्रदानम्, सम्प्रदीयते ह्यनेन

कर्मणा स्वीयकार्यभारशेषः पुत्रे । तमेव सम्प्रदानप्रकारमाह—यदेति । यदा पिता प्रेष्यन् मन्यते—शरीराद्विश्लिष्यमाणमात्मानं मन्यते, तदा पुत्रमाह—त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति । स पुत्रः प्रत्याह—अहं ब्रह्म अहं यज्ञः अहं लोक इति । त्वं ब्रह्मेत्यादिवाक्यं श्रुतिरेव व्याचष्टे—यद्वै इत्यादिना । यद्वै किञ्चानूक्तं—अधीतमनधीतं तस्य सर्वस्य ब्रह्मेत्येकता—सामान्योक्तिः, एतावन्तं कालमधीतं ब्रह्म मया, इतः परं त्वमसि ब्रह्म—कर्तव्यमध्ययनं त्वदायत्तमिति यावत्। अध्ययनलक्षणो भारशेषः पुत्रेऽनेन समर्पितो वोध्यः। त्वं यज्ञ इत्यत्र यज्ञ इत्यनेन निर्देशेन सर्वेषामेव कृतानामकृतानां यज्ञानामेकता—सामान्योक्तिः। इतःपरं यज्ञाचरणलक्षणो भारस्त्वदायत्त इति यावत्। ये वै के च लोकाः साध्याः कर्मभिः, तेषां सर्वेषामेकता—सामान्येन निर्देशो लोक इति । इतः परं कर्मसाध्या लोकास्त्वदधीना इति भावः। मनुष्यलोके यः कर्तव्यावशेषस्तदाचरणमेव मनुष्यलोकजयः, स च पित्रा पुत्रेण सम्पाद्यते इति मनुष्यलोकः पुत्रेणैव जय्य इत्युक्तमनेन व्याख्यातम्। एतावद्वा इदं सर्वम्—यत्कर्तव्यं गृहस्थेन तदेतावदेव यज्ञाध्ययनलोकेभ्यो नापरम्। इतः परमयं पुत्र एव सर्वमेतत्सन्—अध्ययनादिकर्तव्यशेषो भूत्वा कर्तव्यभारवाही भूत्वा मामभुनजत्—मां मोक्ष्यति मामितः कर्तव्यभरान्मोचयित्वा पालयिष्यति। लकारव्यत्ययश्छान्दसः । तस्मात् पुत्रमनुशिष्टमेवं प्रत्यवबोधितं लोक्यम्—लोकसाधनमाहुः । तस्मादेनं पुत्रं पितरोऽनुशासति । सः—सम्प्रत्तेरनुष्ठाता, एवंवित्—सप्तान्नवित्, संवत्सरप्रजापतिविद्वा, सोऽयं यदाऽस्माल्लोकात्प्रैति अथ एभिरेव प्राणैः सह ये प्राणाः

यज्ञाध्ययनलोकशेषा आसन् स्वस्य, एतत्स्वभावैरेव प्राणैः सह पुत्रमाविशति। आवेशश्चात्र न मुख्यः, अनुपपत्तेः, किन्त्वौपचारिकः, पुत्रो हि पितुरंश उच्यते, यज्ञादिलक्षणैकार्थत्वेन एकदेवताधिष्ठितत्वेन चैभिरेव प्राणैः सह विवेशेत्युपचारः। स पुत्रः यदि जीवता पित्रा यत्किञ्चिदक्षणया कोणच्छिद्रेण प्रमादाल्लेशतोऽकृतं भवति तस्मात्सर्वस्मादकरणादेनं मुञ्चति–मोचयति। तस्मादेव पूरणात्त्रक्षणाद्धेतोः पुत्र इत्याचक्षते। स पितैव पुत्रो भूत्वा यज्ञाद्याचरति मनुष्यलोके, तत्पुत्रेणैवास्मिन् लोके प्रतितिष्ठति। तदयं मनुष्यलोकप्रतिष्ठितिलक्षणो मनुष्यलोकजयः पुत्रेण भवति। अथैनं कर्मणो विद्याया वा फलाय देवलोकं प्राप्तं एते देवा अमृताः प्राणाः–अमानुष्यभोगोपकरणत्वाच्चिरजीवनहेतुत्वाच्च देवा अमृताः प्राणा आविशन्ति। वाङ्मनसोरप्युपलक्षकमेतत् ॥१७॥

पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति ॥१८॥ दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति ॥१९॥ अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः सञ्चरꣳश्चासञ्चरꣳश्च न व्यथतेऽथो न रिष्यति स एवंवित्सर्वेषां भूतानामात्मा भवति यथैषा देवतैवꣳ स यथैतां देवताꣳ सर्वाणि भूता-

न्यवन्त्येव॑ँ हैवंविद॑ँ सर्वाणि भूतान्यवन्ति यदु किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद्भवति पुण्यमेवामुं गच्छति न है वै देवान् पापं गच्छति ॥२०॥

वाङ्मनःप्राणानां मानुषाद्दैवेऽतिशयविशेषं गमयन्त्यावेशप्रकारमाह—पृथिव्यै इत्यादिना। आश्रयात् पृथिव्या आश्रिताच्चाग्नेरधिष्ठातुर्वाग्दैवी भूत्वैनमाविशत्। दैवे ह्येतावन्मात्रं मानुषाद्विशेषः। स एव ह्याश्रय अधिष्ठाता च। दैवीत्वं व्याचष्टे—सा वै इति। सा वै दैवी वाक् यया यद्यदेव वदति तत्तद्भवति। शापानुग्रहसामर्थ्यलक्षणं वाचि वीर्यं विशेषः। दिवश्चादित्याच्चैनं दैवं मन आविशति। किं तद्दैवं मनः?, येनानन्द्येव भवति न शोचति। अद्भ्यश्चैनं चन्द्रमसश्चैनं दैवः प्राण आविशति। कथमयं प्राणो दैवः?, यः सञ्चरंश्चासञ्चरंश्च न व्यथते न क्षीयते च। आनन्दप्राचुर्यं मनसो वीर्यमपरिश्रमलक्षणं प्राणे वीर्यमिति तदिदं मनःप्राणयोर्विशेषः। वाङ्मनःप्राणानादाय सहैव लोकमनुसञ्चरति, नापूर्वस्तत्प्रवेशः, किन्तु तत्तदधिष्ठातारोऽग्न्यादयो देवा मरणसमये उपरताधिष्ठानलक्षणव्यापारा भूत्वा पुनर्लोकान्तरे तत्तल्लोकासाधारणस्थूलदेहमधिगच्छतो जीवस्य वागादीन् तत्तल्लोकानुगुणातिशययोगाधानेन व्यापारयन्तः पुनः प्रक्रान्ताधिष्ठानलक्षणव्यापारा भवन्ति। अयमेवात्र प्रवेशशब्देनोपचर्यते। स एवंवित्—वाङ्मनःप्राणं साश्रयं साधिष्ठातृ सोत्कर्षं चोक्तेन प्रकारेण यो वेद, स सर्वेषां भूतानामात्मा भवति यथैषा देवता—एषा देवताऽग्न्यादित्यचन्द्रलक्षणा वागाद्यधिष्ठात्री सर्वेषां भूतानां तत्तदर्थप्रकाशकतया आत्मा भवति तथाऽयमप्युपासकः परेषां

तत्तदर्थप्रकाशनसमर्थतया आत्मा भवति। तत्तदर्थप्रकाशनसामर्थ्यमेवेहात्मत्वं विवक्षितम्। यथा सर्वाणि भूतान्युपकार्याणि प्राधान्येनोपकारिकां देवतामेतामुक्तामवन्ति पूजयन्ति तथा सर्वाणि भूतान्येवंविदं अवन्ति–पूजयन्ति। ननु भूतानां चेदेवंविदात्मा, एतदधीनज्ञानतया भूतानां पापैरयमुपलिप्तः स्यात्, इत्यत्राह—यदु किञ्चेति। इमाः प्रजाः यदि शोचन्ति तदासाममैव–आसां सहैव आभिः सहैव भवति। ता एव प्रजास्तेन शोकेनोपलिप्यन्ते, नैवंविद्यमात्मभूतः। असौ ह्यर्थप्रकाशनेनोपकरोति, उपक्रियमाणस्तु विपरीतेन देहाद्यभिमानेन शोकमूलेनोपलिप्त उपलिप्यते शोकादिना। तत् पुण्यमेवामुं गच्छति, ये चात्र निदर्शनतया प्रोक्ता वागादिदेवास्तेऽपि पापं न गच्छन्ति, अर्थप्रकाशनेनोपकुर्वन्ति केवलमतः पुण्यमात्रभाजः ॥१८–२०॥

अथातो व्रतमीमाꣳसा प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्यन्योन्येनास्पर्धन्त वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म तानि मृत्युः श्रमो भूत्वोपयेमे तान्याप्नोत्तान्याप्त्वा मृत्युरवारुन्धत्तस्माच्छ्राम्यत्येव वाक् श्राम्यति चक्षुः श्राम्यति श्रोत्रमथेममेव नाप्नोद्योऽयं मध्यमः प्राणस्तानि ज्ञातुं दध्रिरे अयं वै नः श्रेष्ठो यः सञ्चरꣳश्चासञ्चरꣳश्च न

व्यथतेऽथो न रिष्यति हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवँस्तस्मादेत एतेनाख्यायन्ते प्राणा इति तेन हवाव तत्कुलमाचक्षते यस्मिन्कुले भवति य एवं वेद य उहैवंविदा स्पर्धतेऽनुशुष्यत्यनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥२१॥

वाङ्मनःप्राणवेदनं प्रस्तुतम्, तत्रोपास्यत्वे प्राणस्येतरेभ्योऽविशेषे प्राप्ते प्राणस्येतरेभ्यः श्रेष्ठत्वेनोपास्यत्वं ज्ञापयितुं प्राणश्रैष्ठ्यमाख्यायिकया ज्ञापयितुं प्रवर्तते—अथात इति। अथात इति वृत्तवर्तिष्यमाणयोः सङ्गतिर्ध्वन्यते । सा च व्याख्याता । व्रतमीमांसा—व्रतम्—अविच्छेदेन कर्तव्यतयाऽवधृतं कर्म, तेषां मीमांसा विचारः, तत्र वागादिभिर्यानि धृतानि व्रतानि तेषां कीदृशी स्थितिरिति विचार्यते, यद्विचारणेन प्राणश्रैष्ठ्यं स्पष्टं विज्ञायेत । प्रजापतिर्हि कर्माणि—इन्द्रियाणि ससृजे। तानि सृष्टान्यन्योन्यमस्पर्धन्त स्वे स्वे व्रते, तत्र वाक् दध्रे वदिष्याम्येवाहमिति—वागिदं व्रतं दध्रे अहं वदिष्याम्येवेति । वदनलक्षणं कर्म ममैव, अहमिदं वदनलक्षणं कर्म कुर्यां यावदसीति । द्रक्ष्याम्यहमिति चक्षुः, श्रोष्याम्यहमिति श्रोत्रम्, एवमन्यान्यपि प्राणादीनि यथासम्भवं व्रतं धृतवन्तिः । एवं स्पर्धोद्धतानि तानि मृत्युरुपघातकः श्रमो भूत्वोपयेमे—उपगतवान् । समीपं प्राप्तवानित्येत् । ततस्तान्याप्नोत्—सम्यग्व्याप्तवान् । तान्यभिव्याप्य स मृत्युरवारुन्धत्—तत्तद्व्रतेभ्यः प्राच्यावयदित्येतत् । तस्मात्स्वकार्यात् जातु श्राम्यति वाक् श्राम्यति चक्षुः श्राम्यति श्रोत्रम् ।

परमयं मृत्युः श्रमो नाप्नोदिममेव, योऽयं मध्यमः प्राण उच्छ्वासनिःश्वासव्यापारव्रतः शरीरमध्यगो मुख्यः प्राणः । तान्येवं भग्नव्रतानि को नः श्रेष्ठ इति ज्ञातुं दध्रिरे—ज्ञातुं प्रवृत्तानि । अथैवं निश्चितवन्तः—अयं वै नः श्रेष्ठः, योऽयं मुख्यः प्राणोऽन्वहमनवरतं सञ्चरंश्च न व्यथते, असञ्चरत इव संचरतोऽप्यस्य न परिश्रम इति ज्ञापनाय सञ्चरंश्चासञ्चरंश्चेति निर्देशः । न रिष्यति च, तदस्यैव सर्वे वयं रूपमसामेति—नास्मासु स्वतो वीर्यम्, एतदाहितशक्तिका एव वयं कार्यकरणसमर्था भवामः, तद्वयमस्यैव रूपमंशभूता भवामेति । एवमवधृत्य ते वागादय एतस्यैव रूपमभवन्—परित्यज्य वयमेव वदिष्याम इत्याद्यभिमानमेतस्यैव मुख्यप्राणस्येदमखिलं वदनादिव्रतमित्यवधार्य तदीयरूपान्तरभावेनाभवन् । तस्मादेव प्राणा इत्येतेन नाम्नाऽऽख्यायन्ते । एवम्भूतप्राणवेदनफलमुच्यते—तेन हवेति । य एवं वेद स यस्मिन्कुले भवति, तेन हवा पुरुषेण तत्कुलं प्राप्य प्रसिद्धं व्यवहारपदं भवति तदीयेन नाम्ना यदुकुलं रघुकुलमितिवत् तत्कुलमिति । य एवंविदा प्राणविदा स्पर्धते सोऽन्वहं क्रमादनुशुष्य—कार्श्यं प्राप्यान्ततो म्रियते च । इत्यध्यात्मं—प्राणोपासनमुक्तम् ॥२१॥

अथाधिदैवतं ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादैवतꣳ स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्निम्लोचन्ति ह्यन्या देवता न वायुः सैषानस्तमिता देवता यद्वायुः ॥२२॥

अथाधिदैवतं—देवतासु व्रतमीमांसामुखेनोपासनमुच्यते—अथाधिदैवतमिति। प्राणो हि न वायोस्तत्त्वान्तरम्। वृत्तिविशेषेण जीवोपकरणभावमुपगतो वायुविशेष एव तु सः। इतश्चात्राधिदैवमुपासननिरूपणस्य प्रसङ्गः। ज्वलिष्याम्येवाहमित्यग्निर्दध्रे—ममैवेदं कर्म यज्ज्वलनम्, तदहं कुर्यामिति ज्वलनव्रतमात्मीयत्वेन धृतवानग्निः। तप्स्याम्यहमित्यादित्यः, भास्याम्यहमिति चन्द्रमाः, एवमन्या देवता विद्युत्प्रभृतयो यथादैवतम्—यथादेवताभावम्, यथास्वभावमित्येतत्। यथाऽध्यात्मं प्राणानां वागादीनामेषां मध्यमः प्राणो मुख्यः प्राणः श्रेष्ठ इति विनिश्चितः, एवमेतासामग्न्यादीनां देवतानां वायुः श्रेष्ठः। कथमिदम्? । उच्यते—निम्लोचन्ति ह्यन्या देवताः—अग्न्यादयो हि वागादय इवोपरतस्वव्यापारा अदर्शनं यान्ति। न वायुः, वायुस्तु न निम्लोचति, सततगतिरप्रच्युतस्वव्रतः सदोदित एव। अतएव सैषाऽनस्तमिता देवता यो वायुः ॥२२॥

अथैष श्लोको भवति। यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मँ स एवाद्य स उ श्व इति यद्वा एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवदिति यद्युच्चरेत्समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्यँ सलोकतां जयति ॥२३॥

अथास्मिन्प्राणे वायावेष वक्ष्यमाणः श्लोको—मन्त्रो भवति, तस्यायं प्रथमोऽर्धः—यतश्चोदेति सूर्यः अस्तं यत्र च गच्छति इति । एतस्यै-वार्धस्य यच्छब्दार्थविशदीकरणेन विवेचनं क्रियते ब्राह्मणेन प्राणा-द्वेत्यनेन । अत्र प्राणशब्दो वायौ तदनन्ये वृत्तिविशेषविशिष्टे प्राण-वायौ च वर्तते । सूर्यशब्दश्च प्रसिद्धे आदित्ये आदित्याधिष्ठितत-योपचारतश्चक्षुषि च वर्तते । वायुनैव बलेनायमन्तरिक्षेऽवध्रियमाणः उदेत्यस्तं गच्छति च, वाय्वधीनोदयास्तमयः सूर्यः । सूर्याधिष्ठितं चक्षुश्चान्वहं प्राणवृत्त्याहितसामर्थ्यं जाग्रत्स्वापयोरुदयास्तमयभाग्भ-वति । इदमुपलक्षकमध्यात्ममधिदैवं चान्येषां देवानामुदयास्तमय-योर्वाय्वधीनत्वे । मन्त्रस्योत्तरार्धः—तं देवा इत्यादिः । तं प्राणं देवाः—अध्यात्ममिन्द्रियलक्षणाः अधिदैवं सूर्यादिलक्षणाश्च धर्मं चक्रिरे—श्रेयःसाधनत्वेन निश्चितवन्तः । स एवाद्य स उ श्वः—यो दैवैरवधृतो धर्मत्वेन स एवाद्यापि धर्मः श्वोऽपि धर्मः, तस्य धर्म-त्वमनपायम् । धर्मता च तस्याप्रच्युतोच्छ्वासनिःश्वासलक्षणप्रकम्पन-व्रततया रूपप्रकाशनादिलक्षणचक्षुरादिव्रताधायकतया च श्रैष्ठ्यात् । सचायं स्वभावो नागन्तुकोऽस्य, तदयमद्यापि तादृशस्वभाव एव श्वोऽपि तादृशस्वभाव एव । एवंगुणक उपास्यमानः प्राणो वाय्वात्मा श्रेयःसाधनतया धर्मो भवतीत्येतत् । प्राणोपासकस्य व्रतविशेषम-ङ्गमवगमयन्नाह—यद्वा इत्यादिना । यद्वै एते वागादयोऽग्न्यादयश्च अमुर्हि—अमुष्मिन्समयेऽध्रियन्त—अप्रस्खलितप्राणनादिव्रतोऽयमेव प्राण इति तद्व्रतमेव स्वस्वव्रतापेक्षया श्रेष्ठं वदनादिसकलव्रताधायक-तया चासाधारणममन्यन्त, तदेव व्रतमद्यापि कुर्वन्ति—अनुवर्तन्ते ।

न तत्र विपरिवृत्तिः । तस्मात्–उक्तगुणकप्राणोपासकेनोपासनाङ्गतया वक्ष्यमाणमेकमेव व्रतमनुष्ठेयम् । प्राण्याच्चापान्याच्च–प्राणापानौ कुर्यात् । ननु कथमिदं, सर्वप्राणिसाधारणमेतत् । मैवम् । नात्र पशुसाधारणोच्छ्वासनिःश्वासयोर्विधानम् । तत्र विध्यनन्वयात् । किन्तु प्राणायामपरायणतालक्षणो व्रतविशेषो विधीयते । व्रतमिदमवश्यमनुष्ठेयम्, यद्यहं व्रतात्प्रच्युतः स्यां मा–मां पाप्मा मृत्युः–अनर्थकरः पापः आप्नुवत् आप्नुयात्, तस्मात् मां पाप्मा नैवाप्नुयादित्यभिसन्धायावश्यमुक्तप्राणापानलक्षणव्रतविशेषोऽवश्यानुष्ठेयः । न इदिति पदच्छेदो बोध्यः, नैवेत्यर्थः । यद्युचरेत्–इदं प्राणोपासनं प्रारभेत, समापिपयिषेत्–मध्ये विच्छिन्नं न कुर्यात् । तेनानुष्ठितेन प्राणोपासनेनैव एतस्यै देवतायै एतस्याः प्राणदेवतायाः सायुज्यं सलोकतां च जयति ॥२३॥

इति प्रथमाध्याये पञ्चमं ब्राह्मणम् ।

---

त्रयं वा इदं नामरूपं कर्म तेषां नाम्नां वागित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्त्येतदेषाꣳ सामैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति ॥१॥ अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषाꣳ सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि

रूपाणि बिभर्ति ॥२॥ अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषाꣳ सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति। तदेतत्त्रयꣳ सदेकमयमात्माऽऽत्मो एकः सन्नेतत्त्रयं तदेतदमृतꣳ सत्येन छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ॥३॥

ये लोकाः फलं ये च तत्रोपायाः कर्मोपासनलक्षणाः सर्वमिदमविदुषां भवति, विदुषस्तु इतोऽन्यदेवेति ज्ञापयन्प्रवर्तत इदं ब्राह्मणम्। यदिदं जगत् विविधमसङ्ख्यातभेदमिवालक्ष्यते तच्चेद्विचार्यते त्रयमेव कृतविमर्शानां निष्पन्नं भवति नाम रूपं कर्मेति, गुणमयस्यैकस्यैव द्रव्यस्य नामरूपकर्मभेदमात्रकृतः सर्वोऽप्ययं प्रपञ्चभेदः। देवो मनुष्यो देवदत्तो यज्ञदत्त इति नामभेदस्तत्तद्रूपभेदश्चेति द्वयं साध्यं अस्य मूलभूतं कर्म साधनम्। इत्थं साध्यसाधनलक्षणमिदं त्रयमेवेदमखिलं जगत्। नाम्नां रूपाणां कर्मणां बाहुल्येऽप्येषां मूलं चेद्विचार्येत, अस्यैवायं विस्तार इति सङ्गृह्य विज्ञातं भवति, तद्यथा-नाम्नामेषां वागित्येतत् उक्थम्-मूलरूपम्, वागिति शब्दस्वरूपमुच्यते, अतो हि शब्दान्मूलरूपात्सर्वाणि नामान्युत्तिष्ठन्ति। एतत्-शब्दलक्षणं स्वरूपम्, एषां नामभेदानां साम, कस्मात्? एतद्धि सर्वैर्नामभिः समम्-शब्दत्वेनानुगतेन रूपेण समं हि, अतएव सामेत्युच्यते सममेतदेषां ब्रह्म,-कथम्?, एतद्धि शब्दस्वरूपं सर्वाणि नामानि स्वविस्ताररूपाण्यनुप्रविश्य बिभर्ति। अथ रूपाणां चक्षुरित्ये-

त्येतदेषामुक्थम्—चक्षुरिति चाक्षुषं रूपसामान्यं लक्ष्यते । अन्यद्व्याख्यातप्रायम् । अथ कर्मणामेषां कायिकवाचिकमानसिकलक्षणानामात्मेत्येतदुक्थम्—आत्मा-बुद्धिः, उक्थम्—मूलम्, बुद्ध्या हि कर्मवैषम्यम् । अध्यवसाय एव च कर्मणोऽव्यवहितं साधनम् । व्याख्यातप्रायमन्यत् । तदेवं सर्वेऽप्यस्मिन्प्रपञ्चवैषम्ये नामादित्रयमात्रनिष्पन्ने गुणमयैकविश्रान्तेऽप्यनभिज्ञाः पुरुषमस्पृष्टमेतैर्भेदैर्मन्यन्ते एतत्त्रयात्मकम् । तद्विदुषां तदेतत्त्रयं सदप्येकं भवति, किं तदेकं भवति ?, योऽयमात्मा—पुरुषः, पिण्डविशेषमेव नामादित्रयात्मकं पुरुषं पश्यतोऽयं देवदत्तः अस्येयमाकृतिः अस्येदं कर्मेति त्र्यात्मकमेकमेव मन्यन्तेऽगृहीतविशेषाः । आत्मा त्वयं कर्मभिर्गुणमयमनुप्रविष्टोऽप्येक एव—अविषम एव । तथाभूतः सन्नप्यविवेकेन एतत्त्रितयं भवति—त्र्यात्मकतया व्यवह्रियते । ननु कुतोऽयमविवेकः, कस्मान्न स्पष्टं भेदेन गृह्यते ? आह—तदेतदमृतं सत्येन च्छन्नम् । किं तदमृतं केन सत्येन च्छन्नम् ? उच्यते—प्राणो वा अमृतं—प्राणो जीवः स ह्यमृतम्—'न जायते म्रियते वा विपश्चित्' 'न हन्यते हन्यमाने शरीरे' । नामरूपे सत्यम्—कर्मणः फलत्वेनावश्यम्भावित्वात् । ताभ्यां कर्मफलभूताभ्यां नामरूपाभ्यां प्राणो जीवात्मा च्छन्नः—तिरोहितः । कर्ममूलनामरूपवासनयाऽऽवृतोऽयं न विविच्य गृह्यते स्वेनासाधारणेन रूपेण । तदयमात्मा यथावद्वेदितव्यः, हातव्यश्च नामरूपकर्मत्रयमात्रसमुद्भूतः फलभेदोऽज्ञानकृत इति यावत् ॥१॥२॥३॥

इति प्रथमाध्याये षष्ठं ब्राह्मणम् ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण-परमहंसवर्य-योगिराज-श्रीगोपालानन्दस्वामिविरचिते बृहदारण्यकोपनिषद्भाष्ये प्रथमोऽध्यायः ।

---

## अथ द्वितीयोऽध्यायः

ॐ दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥१॥

अध्यायान्ते अमृताः प्राणाः जीवाः प्रस्तुताः, ते च सत्याभ्यां नामरूपाभ्यां छन्ना इति च । तदिदं नामरूपावरणं तेषां यस्योपासनेन प्रणश्येत् तस्य तेभ्यो वैलक्षण्यं निरूपयंस्तस्यैव ध्येयतां वक्तुमुपक्रमते बालाक्यजातशत्रुसंवादरूपं ब्राह्मणमिदम् । सुखप्रतिपत्तये च संवादरूपता । आदिपुरुषप्रभृतिशारीरपर्यन्तेषु क्रमादवतरन्तीं ब्रह्मबुद्धिं निरस्य सुषुप्ताधारस्य परस्यात्मनो ब्रह्मभावमुपास्यत्वं च सुखेन ग्राहयति संवादोऽयम् । बलाकाया अपत्यं पुमान् बालाकिः, सोऽयं ब्रह्मस्वरूपं यथावन्न वेद, अथैवमकृत्स्नविदपि ब्रह्मोपदेष्टुं प्रवर्तते, अतोऽयं दृप्तः—अहमस्मि ब्रह्मविदिति गर्वितः । अनूचानश्च—साङ्गाध्यायी, अनुवचनसमर्थो वा । गार्ग्यः—गर्गस्य गोत्रापत्यम् । आस क्वचिद्देशे । स हाजातशत्रुं काश्यं राजानमेत्योवाच ब्रह्म ते ब्रवाणीति । धार्मिकोऽयं विनीतः श्रद्धावान्विद्यायाः पात्रमित्यभ्येत्योवाच । अजातशत्रुरिति चास्यान्वर्थं नाम । ब्रह्मदर्शिनो हि न प्रसङ्गः शत्रोः । अब्रह्मात्मकं पश्यतां हि मित्रामित्रविभागः । वचनमिदं बालाकेरुपश्रुत्याजातशत्रुः प्रहृष्ट इदमुवाच—एतस्यां वाचि—ब्रह्म ते ब्रवाणीत्यस्यां वाचि, एतद्वचनमात्रे निमित्ते, गवां

सहस्रं वितरामो वयमिति । वचनमात्रमिदं कथं वितरणे निमित्तं तत्स्पष्टयति—जनको जनक इति हि जना धावन्ति—ब्रह्मविदः सर्वे एव जनको वै शुश्रूषुर्दाता चेति जनकमेवाभिधावन्ति, नान्यम्। भवांस्तु जनकेन सममवधृत्य मामभ्यागत्येदं वचनमवोचस्तेनास्मि प्रहृष्टः प्रयच्छामि गवां सहस्रमिति । जनाः—प्रवक्तारः, श्रोतारः प्रतिग्रहीतारो वा सर्वे एव जना इति वार्थः ॥१॥

स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ॥२॥

अथास्य प्रहर्षपरिपूर्णं वचः श्रुत्वा गार्ग्यः प्राह—य एवायमादित्ये पुरुषः—आदित्यमण्डलस्याधिष्ठाता पुरुषः, तमहं ब्रह्मोपासे—अयमेव पुरुषो ब्रह्म तमहमुपासे, त्वमप्येनमेव पुरुषं ब्रह्मोपास्स्वेत्यर्थः । तदिदं गार्ग्यस्य वचनं श्रुत्वा अजातशत्रुरुवाच-मामैतस्मिन् संवदिष्ठाः—मा-मां एतस्मिन्नादित्यपुरुषे, मा संवदिष्ठाः, संवादं मया सहास्मिन्विषये मा कुर्वित्येतत् । मामेत्यभ्यासो वा प्रतिक्षेपदार्ढ्ये । जानाम्यहमादित्यपुरुषं तदुपासनाप्रकारं च, तव तु अब्रह्मणि ब्रह्मदृष्टिरेषा । एष पुरुषो हि अतिष्ठाः—अतिक्रम्येतरांस्तिष्ठतीत्यतिष्ठाः, सर्वेषां भूतानां मूर्धा श्रैष्ठ्यात्, राजा प्रकाशाधिक्यात्। तदेतैर्विशेषैरहमेनमुपासे। य एवमुपास्ते स तत्क्रतुन्यायेन अतिष्ठाः सर्वेषां मूर्धा राजा भवति ॥२॥

स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा बृहत्पाण्डरवासाः सोमो राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥३॥

एवमजातशत्रुणा प्रतिक्षिप्ते पक्षे पक्षान्तरमुद्भावयति—स हेति। गार्ग्यसंवादव्याजेन श्रुतिः पूर्वपक्षसिद्धान्तनिरूपणमुखेन परं ब्रह्म ज्ञापयितुं हि प्रवृत्ता। चन्द्रे पुरुषः—चन्द्रमण्डलस्याधिष्ठाता एतमेव ब्रह्मोपासे। पूर्ववदर्थः। पक्षोऽयं प्रतिक्षिप्यते—मा मैतस्मिन्नित्यादिना। पाण्डरवासाः—पाण्डरं वासो यस्य, अंशवो ह्यस्य पाण्डरं वासः, वेष्टनसामान्यात्। प्राणस्याभिमानी चन्द्रः प्राणगुणेन पाण्डरवासस्त्वेन वा विशेष्यते। प्राणानां ह्यब्वासस्त्वं प्रसिद्धम्। सोमो राजा—नाम्ना चन्द्रः सोमः प्रसिद्धः, राजा च रञ्जनगुणयोगात्, यो यज्ञे साधनभूतः प्रसिद्धो राजशब्दवाच्यस्तदधिष्ठातृत्वाद्वा सोमो राजेत्युपचर्यते। तमेवंगुणविशिष्टमुपासे इति। उपासनफलमाह—य एवमुपास्ते सोऽयमहरहः सुतो भवति—कर्तरि क्तः, अस्य सोमः सुतो भवतीति वा—सोमो यज्ञेऽभिषुतो भवति, प्रसुतश्च भवति—प्रकर्षेण सुतश्च भवति विकृतौ। प्रकृतिविकृत्यात्मकर्मद्वयनिष्पत्तिरस्य भवति। नास्यान्नं क्षीयते ॥३॥

स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजात-

शत्रुर्मा मैतस्मिन्संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ॥४॥

पक्षान्तरमाश्रित्य प्रत्यवतिष्ठते गार्ग्यः। स होवाच गार्ग्यः—य एवासौ विद्युति पुरुषः—विद्युदभिमानी तमेवाहं ब्रह्मोपासे इति। इमं पक्षं प्रतिक्षिपत्यजातशत्रुः—स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः, तेजस्वीति वा अहमेतमुपासे—तेजः प्रकाशः, तच्छाली। उपासनफलमाह—स य एतमेवमुपास्ते तेजस्वी स्वयं भवति प्रजा चास्य तेजस्विनी भवति ॥४॥

स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ॥५॥

पुनराह गार्ग्यः—स हेति। आकाशे पुरुषः—आकाशाभिमानीत्येतत्। पूर्णमप्रवर्तीति वा अहमुपासे—आकाशं हि सर्वत्र पूर्णं अप्रवर्ति चाक्रियत्वात्। पूर्णत्वाप्रवर्तित्वगुणविशिष्टोपासनफलं पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते—प्रैतीति ॥५॥

स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मै-

तस्मिन्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते जिष्णुर्हाऽपराजिष्णुर्भवत्यन्यतस्त्यजायी ॥६॥

इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपासे–इन्द्रः–परमेश्वरः, वायोर्ह्यैश्वर्यं परमम्, तदिन्द्र उच्यते, वैकुण्ठोऽप्रतिहतगतिः, अपराजिता सेनेव सेना, एतद्गुणत्रयविशिष्टमेतमहमुपासे । य एतमेवमुपास्ते जिष्णुर्ह जयशीलो हि भवति, अपराजिष्णुश्च–परैरजितशीलश्च भवति, अन्यतस्त्यजायी च–अन्यतो जाताः सपत्नाः, तान् जेतुं शीलमस्य सोऽन्यतस्त्यजायी ॥६॥

स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ॥७॥

विषासहिरिति वा अहमेतमुपासे–विशेषेण सहते इति विषासहिः, अग्निर्हि प्रक्षिप्तमखिलं सहते, सपदि भस्मीकरोति, तदयं विशेषेण सहते । य एतमेवमुपास्ते स विषासहिर्भवति, प्रजा चास्य विषासहिर्भवति–विशेषेण सहनशीला भवति । परकृताधिक्षेपादेर्मर्षयिता भवतीत्येवत् ॥७॥

स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपँ हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥८॥

प्रतिरूप इति वा अहमेतमुपासे–प्रतिरूपः–अनुरूपः, अनुकूलः, आनुकूल्यं चापां सर्वप्राण्यपेक्षया, श्रुतिस्मृत्यपेक्षया वा । यद्वा–प्रतिरूपः–सदृशः, सदृशप्रतिबिम्बापादकत्वात्प्रतिरूप इत्युच्यते । य एतमेवमुपास्ते प्रतिरूपं ह वैनमुपगच्छति–सदृशमेव पुत्रकलत्रादिकमेनमुपगच्छति, नाप्रतिरूपम्, अस्माद्यज्जायते तत्सर्वं प्रतिरूपमेव जायते नाप्रतिरूपम् ॥८॥

स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः सन्निगच्छति सर्वाँस्तानतिरोचते ॥९॥

रोचिष्णुरिति वाऽहमुपासे–रोचिष्णुः–प्रदीप्यमानः, आदर्शो हि स्वच्छः प्रभास्वर इव प्रकाशयति, तदादर्शपुरुषे रोचिष्णुत्वमुपास्यगुण उच्यते । एवं य उपास्ते स रोचिष्णुर्भवति प्रजा चास्य रोचि-

ष्णुर्भवति । किञ्च–यैरयं सन्निगच्छति–संगतिं प्राप्नोति सर्वांस्ताननतिक्रम्य रोचते ॥९॥

स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा असुरिति वा अहमेतमुपास इति य एतमेवमुपास्ते सर्वँ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालात् प्राणो जहाति ॥१०॥

यन्तं–गच्छन्तं पश्चात्–पृष्ठतः शब्दोऽनूदेति, पुरुषे पुरतो गच्छति पृष्ठतो गन्त्रा कश्चिच्छब्दः पुरतो गच्छतोऽनुभूयते तं शब्दमिति यावत् । असुरिति वा अहमेतमुपासे–प्राणबलकार्यत्वात्तस्य शब्दस्यासुत्वेनोपासनम् । सर्वं हैवास्मिन् लोक आयुरेति–यावदायुर्मानुषे लोके पूर्णं तावदाप्नोति, न पुरा कालात्प्राणो जहाति–अपमृत्युर्न भवतीत्येतत् ॥१०॥

स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीयवान् ह भवति नास्माद्गणश्छिद्यते ॥११॥

द्वितीयोऽनपग इति वा अहमुपासे–द्वितीयः–सद्वितीय इत्येतत्,

दिशो देवता ह्यश्विनौ, तयोर्युग्मरूपत्वेन दिक्पुरुषे द्वितीयत्वमुपास्यगुण उच्यते । अनपगः-अविच्छिन्नः, तयोस्तथात्वं प्रसिद्धम्, दिशामप्येतदस्ति, पूर्वा हि कोणे दक्षिणयोत्तरया वा संबद्धैव । य एवमुपास्ते स द्वितीयवान्-सहायवान् भवति, अस्मात्-उपासकात् गणो-बन्धुवर्गो न छिद्यते ॥११॥

स होवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वꣳ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥१२॥

छायामयः पुरुषः-छायालक्षणः छायाभिमानी वा । मृत्युरिति वा अहमुपासे-नीलत्वभयङ्करत्वसाम्यादित्येके । यद्यपि सर्वं हैवास्मिन्लोके आयुरेति नैनं पुरा कालान्मृत्युरागच्छतीति फलश्रुतिः पूर्वतोऽविशिष्टा । अथापि रोगाद्युपद्रवाभावो विशेष इह व्यज्यमानो बोध्यः १२

स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते आत्मन्वीह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥१३॥

आत्मनि पुरुषः—आत्मनि बुद्धौ शरीरे वा यः पुरुषोऽधिष्ठाता। जीवसामान्यनिर्देशोऽयम्। आत्मन्वीति वाऽहमेतमुपासे—आत्मन्वी वश्य आत्मा यस्य सः, प्रशस्तात्मा वा। य एवमेतमुपास्ते, स आत्मन्वी—वश्यात्मा प्रशस्तात्मा वा भवति, प्रजा चास्यात्मन्विनी भवति ॥१३॥

स होवाचाजातशत्रुरेतावन्नू इत्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उपत्वायानीति॥१४॥

स होवाचाजातशत्रुरेतावन्नू इति—तूष्णींभूतं गार्ग्यमिदमाहैतावदेवाधिगतं खलु त्वयेति, किञ्चाह—नैतावता वेदितव्यं विदितं भवति, यत्ते वेदनप्रकारोऽयमखिलो न साक्षाद्ब्रह्मणो वेदनम्, अब्रह्मण्येव तु ब्रह्मवेदनम्, स च प्रकारोऽपि न कार्त्स्न्येन त्वया विदित इति। स च गार्ग्यः स्वस्यावेदनमधिगत्य सपदि निर्विण्णः प्राह—त्वा—त्वाम्, उपयानि—विद्याग्रहणाय शिष्यभावेन सेवे इति ॥१४॥

स होवाचाजातशत्रुः प्रतिलोमं चैतद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुषँ सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयाञ्चक्रे बृहन् पाण्डरवासः सोमराजन्निति स नोत्तस्थौ तं पाणिनाऽऽपेषं बोधयाञ्चकार स होत्तस्थौ ॥१५॥

स होवाचाजातशत्रुः—प्रतिलोमं चैतत्—विपरीतं नामैतत्, यत्

ब्राह्मणः प्रथमो वर्णानामवरं क्षत्रियं 'ब्रह्म मे वक्ष्यती'ति शिष्यभावेनोपगच्छेदिति, प्रथमो हि वर्ण आचार्यपदमर्हति, तत् त्वां केवलं प्रणयेन विज्ञापयिष्याम्येव—नोपदेशकर्तृत्वार्होऽहम्, किन्तु विज्ञापनकर्तृत्वार्हो विज्ञापयिष्यामि यथा ब्रह्म विदितं स्यात्। एवमुक्त्वा तं गार्ग्यं पाणावादाय—हस्ते गृहीत्वा उत्तस्थौ ब्रह्म बोधयन्। उत्थाय ततः सुप्तं कमपि पुरुषं प्रत्याजग्मतुः। आगत्य तं सुप्तमेतैर्नामभिरामन्त्रयाञ्चक्रेऽजातशत्रुः—बृहन् पाण्डरवासः सोमराजन्निति—इमानि सम्बोधनानि प्राणस्य भवन्ति, प्राणस्य हि नामान्येतानि। प्राणस्येतरेभ्यो वागादिभ्यः श्रैष्ठ्यं ज्यैष्ठ्यं च प्रसिद्धम्, तत् बृहत्त्वेन गुणेन सम्बोध्यते प्राणः, अपां प्राणवासस्त्वात् पाण्डरवासस्त्वं च तस्य गुणः, ज्योतीरूपमसौ चन्द्र इति चन्द्रसम्बन्धश्रवणात् चन्द्रनाम्ना सोमेति सम्बोधनम्, 'प्राणो वै सम्राडि'ति श्रुते राजन्निति च। एवं सम्बोधितोऽपि स नोत्तस्थौ। अनेन व्यज्यते प्राणादन्यो यः प्रसुप्तः, अन्यथा ह्युच्छ्वासनिश्वासलक्षणेन व्यापारेण व्याप्रियमाणस्य जाग्रतः स्वनामभिरामन्त्रणेऽप्यनुत्थानं हि न घटेत। तं पाणिनाऽऽपेषम्—हस्तेनापेष्य बोधयाञ्चकार। स पश्चादुदतिष्ठत्। प्राणादन्यो जीवोऽवबोधितः ॥१५॥

स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागादिति तदु ह न मेने गार्ग्यः ॥१६॥

जीवादन्यं परमात्मानमवगमयन्निदमुवाचाजातशत्रुः—यत्र—यदा

एष एतत्समये सुप्तोऽभूत् एतत्प्रकारं सुप्तोऽभूदिति वा । कोऽसौ सुप्तोऽभूत्तमाह—य एष विज्ञानमयः पुरुषः प्रबोधनात्परतो विविधविज्ञानप्रचुरश्चेतनः पुरुषो लक्ष्यते स एष तदा स्वपनसमये क्वाभूत्, एतत्—एतस्मिन् प्रबोधसमये कुत आगात्, अपि तं सुषुप्त्यवस्थजीवाश्रयं त्वं वेत्सीति पप्रच्छ । तदुह न मेने गार्ग्यः ॥१६॥

स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतꣳ श्रोत्रं गृहीतं मनः ॥१७॥

स्वयमेव प्रतिवदन्निदमुवाचाजातशत्रुः—य एष पुरुषो विज्ञानमयो यदा सुप्तोऽभूत्तदा एषां प्राणानां चक्षुरादीनां विज्ञानेन सह विज्ञानम्—चक्षुरादिविज्ञानानां प्रधानोपकरणं मनश्च आदाय य एषोऽन्तर्हृदये आकाशः—परमात्मा तस्मिन् शेते । उपरतमनःपर्यन्तसर्वेन्द्रियः परमात्मनि शेते इति यावत् । जाग्रद्दशायां हि मुख्येन मनसा करणेनोपकरणैश्च चक्षुरादिभिर्विविधान्विषयाननुसेवमानो विविधाभिमानपरिपूर्णः स एष विज्ञानमयः पुरुषः सुषुप्तावुपरतमनःपर्यन्तसर्वकरणो व्यपगतदेवादिविविधाभिमानः परमात्मन्यविभागं गच्छति, अविभागापत्तिरेव च शयनम्, अपहतपाप्मत्वादिभिः परमात्मना

समानस्यास्य देवाद्यभिमान एव तु विभागापत्तिः, तद्राहित्या-च्चाविभागापत्तेस्तस्मिन्शेत इत्युक्तिः। इममेवाविभागमुपपादयन्नाह—तानीति। यदा परितः प्रसृतानि चक्षुरादीनि गृह्णाति विषयेभ्यः प्रत्यावर्तयति न व्यापारयति तदा पुरुषः स्वपिति नाम, घ्राणादि-मनःपर्यन्तमुपरतव्यापारं भवति, तदस्मिन् समये देवाद्यभिमानौ-पयिकमनःप्रभृतिद्वारोपरोधादस्ताभिमानस्यासाधारणज्ञानैकघनस्वरू-पमात्रस्फुरणेन परमात्मनाऽविभागलक्षणः स्वाप्ययो युक्त एवेति भावः। प्राणोऽत्र घ्राणः ॥ १७ ॥

स यत्रैतत्स्वप्न्यया चरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्ततैवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥१८॥

सुषुप्तेर्जाग्रद्वैलक्षण्यमेवं ज्ञापितम्, अथ स्वप्नावस्थातो वैषम्यं ज्ञापयन्नाह—स यत्रैतदिति । स यस्मिन् समये स्वप्न्यया स्वप्ना-वस्थया चरति, तस्मिन् समये ते हास्य लोकाः—अनुभाव्यविशेषाः, जाग्रल्लोकविलक्षणाः प्रसिद्धाः सर्वप्राणिभिरनुभूयमानाः, तमेवोप-पादयति—तदुतेवेति । तस्मिन् समये जातु महाराज इव भवति जातु महाब्राह्मण इव भवति जातु उच्चावचम्—उच्चनीचभावं गच्छति। ननु कथमेतत् ? गृहीता वाक् गृहीतं चक्षुः गृहीतं श्रोत्रम्, सत्यम्,

अथापि भवत्येवमित्येतन्निदर्शनमुखेनावगमयति—यथेति । यथा महाराजो जानपदान्—अन्यान्येषु जनपदेषु करोपहरणाय नियुक्तानुपहृतकरान् गृहीत्वा—उपरुद्ध्य ततः कार्यात् स्वे जनपदे यथाकामम्—यथेच्छं परिवर्तते अतत्सहायः, एवमेवैष जीवः एतत्प्राणान्—रूपादिषु बाह्येष्वन्यान्यदेशेष्वर्थाहरणाय नियुक्तान्वागादीन् गृहीततत्तदर्थान् गृहीत्वा—उपरुद्ध्य स्वे शरीरे विनिवर्त्य बाह्यव्यापृतेः यथाकामं परिवर्तते अतत्सहायः, गृहीता वाक् गृहीतं चक्षुः गृहीतं श्रोत्रं मनस्तु न गृहीतम्, मनो हि कामः, काम्यते ह्यनेन, वासनामयं मनः कामोऽत्रोच्यते । पूर्वाचार्यास्तु—प्राणिनः पुण्यपापानुगुणं स्वप्ने परमात्मना सृज्यमानमपूर्वं शरीरं स्वं शरीरमेव, तत्तत्र तत्र यथाकामं परिवर्तते इति व्याचक्षते । वस्तुतस्त्वेऽस्मिन्नविरोध एव ॥ १८ ॥

अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते ॥१९॥

अथ सुषुप्तिस्थानमाह—अथेति । यदा सुषुप्तो भवति—अस्यैव विवेचनं यदा न कस्यचन वेदेति । यदा न किञ्चिदपि वेद, स्वाप्नावभासोऽपि न भवतीत्येतत् । तदाऽयं जीवः पुरीतति शेते,

अत्र पुरीतच्छब्देन हृदयपुण्डरीकवेष्टनमुच्यते, पुरीतति शयने द्वारमुच्यते—'या हिता नाम नाड्यस्ताभिः प्रत्यवसृप्य शेते' इति, एतेन प्रत्यवसर्पणमार्गता हितासु नाडीषूक्ता, ननु कुत एष प्रत्यावर्त्य पुरीतति शेते, यत्रायं पुरा व्यापृतस्ततः, पुरा च स्वाप्ने व्यापृतिः श्रुता, ततः स्वाप्नस्थानात् प्रत्यवसृप्येत्यर्थसिद्धम्, स्वप्नवहननाडीभ्यः प्रत्यवसृप्येति यावत् । याभिरेष स्वप्नवहनाडीभ्यः पुरीततं प्रत्यवसर्पति तासां स्वरूपं सङ्ख्यया नाम्ना देशतश्च निरूप्यते—'हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते' इति । पुरीततमभि-पुरीततमभितः प्रतिष्ठन्ते । हृदयात्प्रसृता नाम बह्व्यः शाखोपशाखतया नाड्यः, तासु हिता नामातिसूक्ष्मतमा नाड्यो हृदयमध्यगतलोहितापूर्णमांसपिण्डपुण्डरीकपरिवेष्टनभूतपुरीततमभितः प्रतिष्ठिताः, ताभिरेष स्वप्नवहननाडीभ्यः प्रत्यवसृप्य पुरीतति शेते । एतेन हृदयकमलस्य प्रत्यवसर्पणावधित्वभ्रमो व्युदस्तः । स्वप्नवहननाड्यश्चान्यत्र श्रुताः, तथाहि सुबालोपनिषदि—'हृदयस्य मध्ये लोहितं मांसपिण्डं यस्मिंस्तद्दहरं पुण्डरीकं कुमुदमिवानेकधा विकसितं हृदयस्य दश च्छिद्राणि भवन्ति येषु प्राणाः प्रतिष्ठिताः स यदा प्राणेन संयुज्यते तदा पश्यति नद्यो नगराणि बहूनि विविधानि च यदा व्यानेन सह संयुज्यते तदा पश्यति देवांश्च'त्यादिना । तत्रैवानुपदं शाखोपशाखाऽवान्तरशाखाभेदस्थानीया नाडीभेदाश्च श्रूयन्ते 'अथेमा दश दश नाड्यो भवन्ति तासामेकैकस्या द्वासप्ततिर्द्वासप्ततिः शाखानाडीसहस्राणि भवन्ति······यथा केशः सहस्रधा भिन्नस्तथा हिता नाम नाड्यो भवन्ति' इति । प्रत्यवसर्पणं चास्य धर्मभूतज्ञान-

द्वारा बोध्यम् । सुषुप्तिसमये आनन्दस्याधिक्यं निदर्शनमुखेन बोधयति—स यथेति । यथा कुमारो वा महाराजो वा महाब्राह्मणो वा अतिघ्नीम्—अतिशयेन दुःखोच्छेदकरीमानन्दस्य काष्ठां गत्वा शय्यायां[1] शयीतैवमेवैष एतस्मिन् (पुरीतति) शेते । ननु पूर्वं 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति ब्रह्मणो हि सुषुप्त्याधारत्वं श्रुतम्, विरुद्धं तस्येदं पुरीतति शयनं श्रूयते । नैतत् । प्रासादपर्यङ्कन्यायेन प्राकारप्रासादन्यायेन वा तदुपपत्तेः । केचित्तु पुरीतत्पदस्य हृदयकमलान्तःस्थपिण्डविशेषपरतां स्वीकृत्य व्याचक्षते ॥ १९ ॥

स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥२०॥

'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते' इति सुषुप्त्याधारतया य हार्दाकाशः पूर्वं प्रस्तुतः तस्य परमात्मनः सर्वाविर्भावकारणत्वं विशेषान्तरं चाह—स यथेत्यादिना । क्वैष तदाऽभूदित्यस्योत्तरमुक्तम्, अथ कुत एतदागादित्यस्योत्तरमुच्यते इत्यवतरणं तु न हृदयंगमम्, सुषुप्त्याधारनिरूपणेनैव प्रबोधसमये ततो निर्गमनस्य स्फुटं प्रतिपत्तेः । प्रबोधकालिके च व्युच्चरणे सर्वलोकसर्वदेवसर्वभूतानाम-

---

१ शय्याधिश्रयणं दृष्टान्तः, न तु स्वापः, तथा सति दृष्टान्तदार्ष्टान्तिकयोर्भेदानुपपत्तेरित्यभिप्रेत्य शय्यायां शयीतेति व्याख्यातम् ।

न्वयश्च नातीव युज्यते। यथोर्णनाभिः—लूताख्यः कीटविशेषः स्वा-
विभक्तेन तन्तुना स्वेच्छया जातु प्राकट्यं नीतेन व्युच्चरेत् तथाऽयं
परमात्मा स्वाविभक्तेनानेन प्राणादिना प्राकट्यं नीतेन व्युच्चरेत्,
सृष्ट्याख्यलीलारसनिर्वर्तनपरो भवतीत्येतत्। यद्वा—व्युच्चरणमिह व्यु-
द्गमनम्, स्वाविभक्तं तन्तुं स्वशरीरान्निर्गमय्य तेन द्वारभूतेनोर्णना-
भिर्व्युद्गमनाश्रयो भवति, तथा परमात्मैव स्वाविभक्तं स्वशरीरैकदेशं
स्वस्मिन्प्रलीनं स्वयं व्युद्गमय्य तेन द्वारभूतेन स्वयं व्युद्गतिं प्राप्नोति।
एतेन परस्यैवात्मनश्चेतनाचेतनशरीरस्य शरीरसङ्कोचविकासाभ्यामु-
त्पादलययोगो ज्ञापितो भवति। यथाऽग्नेः क्षुद्रा विस्फुलिङ्गाः—अने-
नोपादानोपादेययोरेकद्रव्यता ज्ञाप्यते। परमात्मनः स्वेतरसकलचे-
तनाचेतनशरीरकस्यैकस्य नामरूपविभागापन्नचेतनाचेतनात्मकतया
व्युद्गमनान्निदर्शनमिदं सुघटम्। सर्वे प्राणाः—अत्र प्राणशब्दवाच्या
जीवाः। तथा सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि च व्युच्चरन्ति।
तस्योपनिषत्—तस्य परमात्मन उपनिषत्—रहस्यं नाम। किं तत्?
सत्यस्य सत्यमिति। सत्याः प्राणाः—जीवात्मानः, तेषामप्येष सत्यम्,
सत्यताधायकत्वात्, तत्सत्ताप्येतत्सत्ताधीना हि। यद्वा—क्वैष तदाऽ-
भूदित्यस्योत्तरमुक्तम्, अथ कुत एतदागादित्यस्योत्तरमुच्यते—स
यथेत्यादिना। भावः पूर्ववत्। दैनन्दिनलयो हि स्वापः, जाग्रद्दशा
च तथाभूता सृष्टिः ॥२०॥

इति द्वितीयाध्याये प्रथमं ब्राह्मणम्।

---

यो ह वै शिशुँ साधानँ सप्रत्याधानँ सस्थूणँ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्ध्ययं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाधानमिदं प्रत्याधानं प्राणः स्थूणान्नं दाम ॥१॥

वक्ष्यमाणे वेदने प्रवर्तनाय प्रथमं फलवादः प्रवर्तते—यो ह वै इति । आधीयतेऽस्मिन्नित्याधानम् । प्रत्याधीयते पुनःपुनर्यस्मिंस्तत्प्रत्याधानम् । यः साधानं सप्रत्याधानं सस्थूणं सदामं वेद—उपास्ते, स सप्त द्विषतो भ्रातृव्यान्—द्वेषं कुर्वतः सप्त शत्रून् स्थानसङ्ख्यया सप्तसङ्ख्यकान् विषयाभिषङ्गापादकतयाऽनर्थहेतुत्वेन शत्रून् ज्ञानेन्द्रियलक्षणान् अवरुणद्धि—जितेन्द्रियो भवतीत्येतत् । श्रोत्रद्वयं नेत्रद्वयं नासारन्ध्रद्वयं आस्यं चेति स्थानसप्तकम् । मनोबुद्धिभ्यां सहितानि पञ्चज्ञानेन्द्रियाणि वा सप्तभ्रातृव्याः । एवं फलवादेन प्रवृत्तिमापाद्य वेदनप्रकारं शिश्वादिरूपणेन बोधयति—अयं वाव शिशुरित्यादिना । अयं वाव शिशुः योऽयं मध्यमः प्राणः—मध्ये शरीरं सञ्चरति पञ्चवृत्तिः प्राणः । यः कर्ता जीवः यानि करणानि चक्षुरादीनि तयोः कर्तृकरणभावापादकतया माध्यस्थ्यमभिप्रेत्य वा मध्यम इत्युक्तिः । अपगतप्राणो ह्येष मुक्तः करणनिरपेक्षः, प्राणवृत्त्यनाप्यायितानि च चक्षुरादीनि न करणभावं प्राप्नुवन्ति । प्राणो ह्येष चेष्टामात्रव्यापारः स्वयमसमर्थोऽन्यत्रेति शिशुरिति रूप्यते । तस्येदमेवाधानं—यदिदं प्रसिद्धं भूतसूक्ष्ममयं लिङ्गशरीरम् । इदं प्रत्याधानम्—यदिदं स्थूलशरीरं तत्प्रत्याधानम्, प्रत्याधीयते

ह्यस्मिन् योनिभेदभिन्ने पुनः पुनः। प्राणः स्थूणा—प्राणो जीवः, स्थूणेव वत्सस्य बन्धनस्थानमिति स्थूणोच्यते, जीवो ह्यवष्टम्भः प्राणानाम्। अन्नं दाम—अन्नं भोग्यं बन्धनरज्जुः, कर्मणः फलेन भोग्येन हि जीवे निबद्धाः प्राणाः। प्रक्षीणे कर्मपरिपाके नास्य भवति प्राणावष्टम्भता। विमुच्यते ह्येषः। प्राणस्तु यथास्वं लयमेति ॥१॥

तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन् लोहिन्यो राजयस्ताभिरेन<sup></sup>ँ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनिका तयाऽऽदित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तन्या पृथिव्यान्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥२॥

तमिमं शिशुं प्राणं एताः—निर्देश्यमानाः सप्ताक्षितयः—क्षितिः क्षयस्तद्रहिता उपतिष्ठन्ते। आपेक्षिकक्षयत्वमिह बोध्यम्। अन्नाक्षयहेतुत्वाद्वा अक्षितयः। कास्ता देवताः? तदाह—तद्या इत्यादिना। प्राणमेनं चक्षुषि वृत्त्या सन्निहितं रुद्रादय उपतिष्ठन्ते, तत्र या इमा अक्षन्—अक्षिणि लोहिन्यो राजयः रेखाः ताभिरेनं रुद्रोऽन्वायत्तः—उपस्थित इत्येतत्। अथ या अक्षिणि आपस्ताभिर्द्वारभूताभिरेनं पर्जन्यः, या कनीनिका तया आदित्यः, यत् कृष्णं रूपं तेनाग्निः, यच्छुक्लं रूपं तेनेन्द्रः, अधरया वर्तन्या—पक्ष्मणा पृथिवी, उत्तरया वर्तन्या द्यौः—स्वर्गो लोकः। य एवं वेद—उपास्ते न तस्यान्नं क्षीयते। भोग्यसमृद्धिर्भवतीति यावत् ॥२॥

तदेष श्लोको भवति अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्त-स्मिन्यशो निहितं विश्वरूपं तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेत्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्त-स्मिन्यशो निहितं विश्वरूपमिति प्राणा वै यशो नि-हितं विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ते ॥३॥

तस्मिन्नस्मिन्नेत्रस्थे प्राणे एष वक्ष्यमाणः श्लोको भवति । अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः, तस्मिन् यशो निहितं विश्वरूपम्, तस्यासते ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेत्येषः श्लोकः। श्लोकं स्वयमेव व्याचष्टे श्रुतिः—अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिरः, तथा ह्येष शिरोलक्षणश्चमसो भवत्यर्वाग्बिल ऊर्ध्वबुध्नश्च, आस्यं हि बिलमधः, बुध्नाकारो मस्तको ह्यूर्ध्वम्। चमस इव सोमोऽस्मिंश्चमस-विशेषे यशो विश्वरूपं निहितम्, यशश्चात्र प्राणा एव, एतान् प्राणानभिप्रेत्यैव यश इत्याह, प्राणा हि शिरसि चक्षुरादीन्द्रिया-प्यायनाय वृत्त्या सन्निहिताः, शब्दादिनानार्थप्रकाशकत्वाद्विश्व-रूपता च प्राणलक्षणयशसः। प्राणापानादिवृत्तिभेदाद्वा विश्वरूपता। प्राणाश्चक्षुरादिषु वृत्तिविशेषेण सन्निहिता ऋषय उच्यन्ते, द्वे चक्षुषी द्वे श्रोत्रे द्वौ नासारन्ध्रौ आस्यं चेति स्थानसप्तकसम्बन्धात्ते च सप्त।

वागष्टमी—एषामपेक्षया भवति वागष्टमी, साऽपि जिह्वासंश्रया शब्दोच्चारणकरणत्वेन भवत्यष्टमी । सा च ब्रह्मणा वेदेन संविदाना संवादं गच्छन्ती; उच्चारयितृत्वलक्षणोऽत्र संवादः । आस्येनान्नमद्यते वाचा तु तदाश्रयया शब्द उच्चार्यते, तत्स्थानैक्येऽपि कार्यभेदाद्भवत्यष्टमी वागित्याह—ब्रह्मणा हि संवित्ते इति ॥ ३ ॥

इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवं वेद ॥४॥

तानेव ऋषीन्प्रत्येकं निर्दिशति—इमावेवेति । इमावेव कर्णौ गोतमभरद्वाजौ, तत्रायमेव दक्षिणः कर्णो गोतमः, अयमेव वामः कर्णो भरद्वाजः । इमावेव विश्वामित्रजमदग्नी, चक्षुषी अधिकृत्यैतत्, तत्रायमेव विश्वामित्रोऽयं जमदग्निः । नासिके अधिकृत्योच्यते—इमावेव वसिष्ठकश्यपौ—तत्रायमेव वसिष्ठः, अयमेव कश्यपः । वागेवात्रिः—वागित्यास्यमुच्यते, वाचा ह्यन्नमद्यते, तदत्तिरत्रिरुच्यते, य एवं वेद स सर्वस्यात्ता भवति, सर्वं चास्यान्नं भवति । समृद्धान्नो भवतीत्येतत् । यद्वा—एवंविदुपासको न कस्यचिदन्नं भोग्यं भवति, किं तु सर्वमस्य भोग्यं भवति, स्वयं तु सर्वस्य भोक्ता भवति, पशुवत्कस्यचिन्न भोग्य-

भूतो भवेत्, किन्तु बहूनामेष भोक्ता स्वतन्त्रो भवतीति समृद्ध्यतिशयः फलमुच्यते ॥४॥

इति द्वितीयाध्याये द्वितीयं ब्राह्मणम् ।

---

द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यच्च ॥१॥

द्वे वाव ब्रह्मणो रूपे—परस्य ब्रह्मणः प्रपञ्चेऽस्मिन् द्वे शरीरे भवतः । तयोरेकं मूर्तं मर्त्यं स्थितं सच्च भवति, अपरममूर्तममृतं यत् त्यच्च भवति । मूर्ताद्यात्मना अमूर्ताद्यात्मना च द्वेधा भवति शरीरविभाग इति यावत् ॥१॥

तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः ॥२॥ अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यत्तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रस इत्यधिदैवतम् ॥३॥

तत्र किं मूर्ताद्यात्मकं किममूर्ताद्यात्मकं तदाह—तदेतदित्यादिना । वायोश्चान्तरिक्षाच्च यदन्यत्, पृथिवी जलं तेजश्चेत्येतत्,

मूर्तं—मूर्च्छितावयवं घनं कठिनम्, मर्त्यं—मरणधर्मकं नश्वरम्, स्थितं—अव्यापकं परिच्छिन्नम्, सत्—स्थूलत्वात्प्रत्यक्षोपलभ्यम्। य एष तपति भास्वान्मण्डलात्मा स मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एतस्य—मूर्तत्वादिगुणचतुष्टयविशिष्टस्य पृथिव्यप्तेजःसमुदायस्यैष रसः—सारः। हि यस्मादेष सतो रसः—प्रत्यक्षेण तेजःप्रभृतेः सारः। अथामूर्तं वायुश्चान्तरिक्षं च, सूक्ष्मं ह्येतत्, एतदमृतम्—इतरापेक्षया चिरस्थायित्वात्, एतत् यत्—याति गच्छतीति यत्—पुरः पुरो यातीव नान्तमेति, व्यापकमित्येतत्। त्यत्—सतोऽन्यत्, अचाक्षुषमित्येतत्। य एष एतस्मिन्मण्डले पुरुषः—परमात्मा सन्निहितः स एतस्यामूर्तस्य एतस्यामृतस्य एतस्य यत एतस्य त्यस्य रसः, हि यस्मात् एष त्यस्य अप्रत्यक्षस्य रसः प्रधानः। आदित्यमण्डले मूर्तत्वादिगुणचतुष्टयविशिष्टपृथिव्यादिसारदृष्टिः, मण्डलस्थे पुरुषे अमूर्तत्वादिगुणविशिष्टवाय्वन्तरिक्षसारदृष्टिश्च विधेयेत्येतत्। इत्यधिदैवतम्—देवतासु मध्ये दृष्टिविशेष उक्तः ॥२॥३॥

अथाध्यात्ममिदमेव मूर्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश एतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥४॥ अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतत्त्यं तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन् पुरुषस्त्यस्य ह्येष रसः ॥५॥

अथाध्यात्मम्—शरीरान्तर्दृष्टिविशेष उच्यते । अन्तरात्मन्—अन्तःशरीरे योऽयं प्राणो यश्चायमाकाशः आभ्यामन्यदेतन्मूर्तम्, एतन्मर्त्यम्, एतत् स्थितम्, एतत् सत्, तस्यैतस्य मूर्तस्य मर्त्यस्य स्थितस्य सत एष रसः, यच्चक्षुः । पूर्ववद्दृष्टिविधौ तात्पर्यम् । अथामूर्तं प्राणो योऽयमन्तःशरीरे आकाशः, एतदमृतमेतद्यदेतत्त्यम्—पूर्ववत् । एतस्यामूर्तस्य एतस्यामर्त्यस्य एतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षिणि पुरुषः परमात्मा । पूर्ववद्दृष्टिविशेषविधिः ॥४॥५॥

तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत सकृद्विद्युतेव ह वा अस्य श्रीर्भवति य एवं वेदाथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेय सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥६॥

तस्य हैतस्य—आदित्यमण्डलमध्यगतस्य दक्षिणाक्षिस्थस्य परमपुरुषस्य रूपं दिव्यं विविधवर्णं भवति, तस्येमानि निदर्शनानि भवन्ति, यथा—महारजनं वासः—हरिद्रया सम्यग्रञ्जितमिव वासः, यथा पाण्डु आविकं—अवेरिदमाविकम्—ऊर्णादि, यथेन्द्रगोपः—कीटविशेषः, यथाऽग्न्यर्चिः—अग्नेरर्चिर्भास्वरम्, यथा पुण्डरीकम्, यथा सकृद्विद्युतम्—सकृद्विद्युद्विद्योतनम्, सर्वतः प्रकाशकम्, ईदृशमस्य रूपं भवति । य एवं वेद—उपास्ते तस्य सकृद्विद्युतेव श्रीर्भवति—

विद्युदिव परितः प्रकाशमाना श्रीर्भवति । अथात इति वाक्यान्तरोपक्रमे, आदेशः—उपदेशः, मूर्तामूर्तोभयशरीरकतया पूर्वं प्रस्तुतस्य परस्यैव ब्रह्मणः पुनरवश्यमुपदेष्टव्यांश उपदिश्यते, मूर्तामूर्तोभयात्मतोक्त्या परिच्छिन्नत्वभ्रमो ह्यापतति, स च व्यावर्तनीयः, तदर्थमपरिच्छिन्नत्वोपदेशः क्रियते—नेति नेति । मूर्तरूपतया अमूर्तरूपतया या इयत्ता साऽत्र निषिध्यते, इतिशब्दः प्रसक्तेयत्ताज्ञापकप्रकारवाची, ब्रह्म एतावन्मात्रं नेति यावत् । इदं ब्रह्म ह्यपरिच्छिन्नम्, नहि इति नेति—इयन्मात्रं नेति निर्दिष्टादस्माद्ब्रह्मणः परम्—उत्कृष्टमन्यदस्ति । अथास्यापरिच्छिन्नत्वानुगुणं नामाप्यैश्वर्यातिशयज्ञापकमिदमस्ति—सत्यस्य सत्यमिति । प्राणाः-जीवाः सत्यम्—स्वरूपतोऽविकृतत्वात्, तेषामेष सत्यम्—सम्बन्धसामान्ये षष्ठी, तेभ्योऽप्येष सत्यम्-स्वरूपतः स्वभावतोऽविकृतत्वात् । यद्वा प्राणानां सत्यताप्येतत्सङ्कल्पायत्तेति तेषामेष सत्यम् ॥६॥

इति द्वितीयाध्याये तृतीयं ब्राह्मणम् ।

---

मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥१॥ सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितꣳ स्यादमृतत्वस्य तु

नाशास्ति वित्तेनेति ॥२॥ सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥३॥ स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥४॥

आख्यायिकामुखेनेषणात्यागस्य विद्यायां प्रधानोपकारकत्वं ज्ञापयदिदं ब्राह्मणं ब्रह्मविद्यामुपदेष्टुमारभते—मैत्रेयीति । याज्ञवल्क्यः स्वभार्यां नाम्ना हे मैत्रेयि इति सम्बोध्येदमुवाच—अरे अहमस्मात्स्थानादाश्रमाद्गार्हस्थ्यादुद्यास्यन्—उद्गमिष्यन्नस्मि, हन्त ते अनया कात्यायन्या मय्युद्गते अर्थमधिकृत्य विवादो जातु भवेत्, तदहमुद्गमनात्प्रागद्यैवानया सह अन्तं—विवादस्यार्थिकस्यान्तं निर्णयं करवाणि, इति । श्रुत्वा भर्तुर्वचनं सा मैत्रेय्युवाच—भगोः—भगवन् वित्तेन पूर्णा इयं पृथिवी सर्वा मे जातु स्यात्, किं तेनाहममृता—मरणभयरहिता स्याम्, जननमरणभीताया मम किं धनेनेति भावः । एवं पृष्टो याज्ञवल्क्य आह—वित्तेन नामृता स्याः, किन्तु यथैवोपकरणवतां—क्षेत्रारामपशुभृत्याद्युपकरणवतां जीवितमक्लेशं तथैव ते जीवितं वित्तेन स्यात्, अमृतत्वस्य तु नाशाऽस्ति । वित्तं नामृतत्वाय प्रभवेदिति यावत् । आह मैत्रेयी—येनाहं नामृता स्यां किं तेनाहं कुर्याम्, यदेव साधनममृतत्वस्य भगवान्वेद तदेव मे ब्रूहीति । ब्रह्मविद्यायामस्याः श्रद्धातिशयमवगत्य प्रहृष्टः प्राह याज्ञवल्क्यः—बतेति हर्षे, प्रिया नः सती प्रियं भाषसे । विदुषो

हि विद्यार्थी प्रियः। एहि आस्स्व ते व्याख्यास्यामि, व्याचक्षाणस्य मे वचनानि निदिध्यासस्व—अर्थतोऽवधारयेत्येतत् । अवधानपरा भवेति नियम्यते ॥४॥

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वा अरे सर्व-

स्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वं विदितम् ॥५॥

इदं प्रियमिदं प्रियमित्यनुधावन्ति जनाः, ते ह्यविदितात्मयाथात्म्याः, कस्यचित् क्वचित् प्रीतिर्भवति कस्मै इति तु विचार्यम्, कामाय—काम्यते इति कामः फलं तस्मै, तदप्यात्मन इत्येव, न हि परस्येदं फलमनेनेति जानन् कश्चित् तत्र प्रीतिं कुर्यात्, तत् आत्मनस्तु कामाय तत्तत्प्रियं भवति, प्रसिद्धमेतत्—यथा न ह्यरे जायायाः पतिः प्रियो भवति पत्युरर्थाय, अपि तु आत्मनोऽर्थाय, न वाऽरे जायायाः कामाय जाया पत्युः प्रिया भवति, किन्त्वात्मनः कामाय, एवं पुत्र-वित्त-ब्रह्म-क्षत्र-लोक-देव-भूतानि न पुत्रादीनामर्थाय प्रियाणि भवन्ति किन्त्वात्मनः कामाय। किं बहुना तस्य तस्य तत्तत्प्रियं भवति तत्सर्वं न तत्तदर्थाय किंतु आत्मनस्तु कामाय अहमहमिति प्रतीयमानस्य आत्मनस्तु कामाय। इत्थं च सति अहंग्रहास्पद आत्मा क इति तु विचार्यम्। आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। अविदिताहंप्रत्ययप्रधानार्थात्मतत्त्वा हि पामराः प्रियं प्रियमिति धावन्ति। विदिते तु तस्मिन् न तान्यनुधावेयुः। जातमात्राः पशव इव केचन शरीरमेवाहमर्थं मन्यन्ते केचित्तु प्राणं केचित्तु मनः केचित्तु जीवम्, जीवपर्यन्तं सर्वमेव हि शरीरमात्रम्, यो हीदं सर्वमाविश्य नियमयति स

ह्यात्मा, अहंग्रहस्य प्रधानभूमिः परमात्मा, अहङ्कहे प्रसरति निमित्तमात्रमितराणि। तं चेद्यथावस्थितस्वरूपं जानीयुः कथमर्थबुद्धिरन्यत्र प्रियबुद्धिर्वा। स हि सर्वशरीरी सर्वोपादानभूतः। हे मैत्रेयि, आत्मनो हि तस्य सर्वोपादानस्य श्रवणेन मत्या विज्ञानेन दर्शनेन सर्वमिदं विदितं भवति, न ह्युपादानोपादेययोर्भेदः। श्रीभाष्यकाराभिमतो भावस्त्वयम्–प्रियं प्रियमित्यनुधावन्ति पामराः, न हि वस्तुनि प्रीत्यप्रीतिनियतः स्वभावानुबन्धी धर्मोऽस्ति, यदेवैकस्य प्रियं तदेवापरस्याप्रियम्, तदेव तस्य समयभेदेनाप्रियं च भवति, तत् सर्वमात्मनः–परमात्मनः स्वतोऽनवधिकानन्दस्य कामाय–स्वाराधकप्रियप्रतिलम्भनरूपेष्टनिर्वृत्तये यः सङ्कल्पस्तस्मै, सङ्कल्पविशेषं सफलीकर्तुं तस्य तस्य तत्तत्तदा तदा प्रियं भवति, न पत्यादीनां कामाय–सङ्कल्पाय (अहमस्याः प्रियः स्यामिति सङ्कल्पाय) प्रियं भवति। तत् यस्य सङ्कल्पेन प्रियत्वं वस्तूनां स एवानवधिकानन्दः परमात्मा श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति। अयमेव तु सम्प्रदायपरिशुद्धः। आनन्दतीर्थास्त्विमामेव सरणिमनुसरन्ति। श्रीकण्ठभाष्यटीकायामप्पय्यदीक्षितैर्वाक्यान्वयाधिकरणे "भोगप्रीतियुक्तस्य जीवस्यानुवादेन परमेश्वरप्रतिपादनादविरोध" इति भाष्यं व्याचक्षाणैरस्य वाक्यस्येत्थं भावो निदर्शितः–"पतिजायादिवाक्ये भोगप्रीतियुक्ततया जीवस्यानुवादः, उत्तरवाक्येषु मुमुक्षुद्रष्टव्यत्वादिना परमेश्वरस्य प्रतिपादनमिति सङ्गत्युपपत्तेः। जीवानुवादस्य परमेश्वरप्रतिपादनस्य च कथमेकवाक्यता घटत इति चेत्, इत्थम्, यस्मात्पतिजायादयः पतिजायादिप्रयोजनाय प्रिया न भवन्ति, किन्तु स्वप्र-

योजनायैव । तस्माद्यस्यामृतस्वरूपस्य प्रयोजनस्य पतिजायादिविषयो रागः प्रतिकूलस्तस्य सिद्धिमपेक्षमाणेन पतिजायादिभ्यो विरज्य परमेश्वर एव द्रष्टव्य इती"ति । अस्मिन्व्याख्याने आत्मशब्दस्यार्थभेदाश्रयणवैगुण्यम् । अयं च पक्षो भगवता श्रीभाष्यकारेणानेनैवार्थवैरूप्येणानादृतः श्रीकण्ठाचार्येण परिगृहीतः ॥५॥

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदँ सर्वं यदयमात्मा ॥६॥

ननु—ब्रह्मक्षत्रादिभेदभिन्नस्यास्य जगतः कथमात्मैक उपादानं भवितुमर्हति, कथं वा तस्मिन् श्रुते सर्वमिदं श्रुतं भवेदित्यत्राह—ब्रह्मेति । योऽन्यत्रात्मनः—परमात्मनो ब्रह्म—ब्राह्मणं वर्णं वेद, आत्मनः प्रविभक्तं स्वतन्त्रं धर्म्यन्तरं वेद, तमयथावद्वेदिनमयथावद्गृह्यमाणो ब्राह्मणो वर्णः परादात्—पराकुर्यात्—अनर्थाय भवेदित्येतत्, अयथावद्गृह्यमाणो ह्यनर्थाय भवति, अनर्थश्चेह संसारः । एवमेव क्षत्र-लोक-देव-भूतान्यन्यानीव स्वतन्त्रधर्म्यन्तराणीवापाततः प्रतीयमानानि वस्तुतः सर्वात्मनः परस्य ब्रह्मणः शरीरतयाऽपृथक्सिद्धप्रका-

रतामापन्नानि वस्त्वन्तरभावानर्हाणि धर्म्यन्तरतया गृह्यमाणान्यनर्थावहान्येव भवेयुः, तस्माद्यथावद्वेद चेत्तस्य तत्त्वदृष्टेस्तु दृष्ट्या इदं ब्रह्म इदं क्षत्रमिमे लोका इमे देवा इमानि भूतानि इदं सर्वमयमात्मैव, सर्वप्रकारः स एव परमात्मा तत्त्वम्। तदेवं सति स एव सर्वतनुः स्वतनुगतसौक्ष्म्यस्थौल्यभेदेन कारणकार्यभावमापन्न इति कारणे तस्मिन्विदिते सर्वं विदितं भवतीति ॥६॥

स यथा दुन्दुभेर्हन्यमानस्य न बाह्यांश्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥७॥ स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥८॥ स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥९॥

आत्मनो वाऽरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं भवतीत्यस्मिन्नर्थे निदर्शनमाह–स यथेति। सूर्ये गृहीते तत्प्रतिबिम्बं यथा गृहीतं भवति, आकाशे गृहीते घटाकाशो यथा गृहीतस्तथेति भ्रमो व्यावर्त्यतेऽनेन निदर्शनेन। सः–आत्मवेदनेन सर्ववेदनप्रकारो यथा–दुन्दुभेर्हन्यमानस्य ये बाह्याः–बहिः प्रसर्पन्तः शब्दा विविधास्तारतारतरतारतमादिवैचित्र्यमापन्ना वीररसादिव्यञ्जकनादवैचित्र्यमापन्नाः, तान् शब्दभेदान् न तेष्वन्यतमग्रहणेन गृहीतुं शक्नुयात्,

दुन्दुभेर्हन्यमानस्य दुन्दुभेराघातस्य–हननलक्षणक्रियाविशेषस्य वा ग्रहणेन वेदनेन स विविधोऽपि शब्दो गृहीतः स्यात्। अयं भावः–दुन्दुभिध्वनिरिति सामान्यं रूपं घटस्येव मृत्स्वरूपं कारणलक्षणम्, तारादिवैचित्र्यापन्नास्तु तस्यैव विभेदा मृद इव घटशरावादयः, तत्रानादृत्य सामान्यं दुन्दुभिध्वनिलक्षणं कारणरूपं तद्विशेषान्यतमवेदने न तद्विशेषाः सर्वेऽवगता भवन्ति घटवेदने शरावादिवत्, दृष्टे हन्यमाने दुन्दुभौ दुन्दुभिहननक्रियायां वा दृष्टायां दुन्दुभिध्वनिरयमिति सामान्यरूपेणावगमात्तद्विभेदाः सर्व एव विभेदानुगतेन तेन सामान्येन कारणात्मनाऽवगता भवन्ति, तथा सर्वात्मनि सर्वकार्यानुगते विदिते सर्वमेवेदं तेनात्मना विदितं भवति। सूक्ष्मचिदचिदात्मा स एव हि स्थूलचिदचिदात्मा भवति। स यथा शङ्खस्येत्यादि पूर्ववत्। वीणायै इति चतुर्थी षष्ठ्यर्थे, विभक्तिव्यत्ययश्छान्दसः। परे तु–अनेन निदर्शनेन विज्ञानलक्षणात्मातिरिक्तवस्त्वसत्यत्वं गम्यते, तथाहि–यद्धि यतः पृथक् नोपलभ्यते न तत्ततो भिन्नम्, न च किमप्यर्थजातं स्फुरणलक्षणाद्विज्ञानात्मनः पृथगुपलभ्यते, तत्किं स्याद्वस्तु विज्ञानातिरिक्तम्, इति। अयं च पन्था बौद्धैकदेशिभिर्विज्ञानवादिभिराश्रितः, नित्यविज्ञानवादिभिः परैरप्ययमेव पन्था अनुसृतः। अयं तु न रमणीयः। न च पृथगनुपलम्भमात्रं वस्त्वन्तरत्वप्रतिरोधकम्, जपाकुसुमाद्युपलभ्यमानं न हि लोहितादिरूपात्पृथगुपलभ्यते, न च पृथगनुपलम्भतः कुसुमद्रव्यापलापो युज्यते, पृथक्स्थितौ एकेन्द्रियाग्राह्यस्वभावत्वे वा भवति पृथगुपलम्भः, अतथात्वे अतथात्वम्, 'सहोपलम्भनियमादभेदो

नीलतद्धियो'रिति यदेतद्बौद्धैकदेशिवचनं तदपि बाह्यार्थास्तित्ववादिना सौगतैकदेशिना 'सहशब्दश्च लोके स्यान्नैवान्येन विना क्वचित्। विरुद्धोऽयं ततो हेतुर्यद्यस्ति सहवेदनम्' 'नान्योऽस्ति ग्राहको ज्ञानाच्चाक्षुषैर्विषयैर्विना। अतश्च सह संवित्तिर्नाभेदान्नीलतद्धियो'रिति च वदता परास्तम्। न च निदर्शनानुरूप्यम्, न हि दुन्दुभिशब्दे एकस्मिंस्तारादिभेदाः शुक्ताविव रजतमध्यस्ताः। श्रीभाष्ये तु—वाक्यमिदं इन्द्रियनियमनलक्षणोपायांशनिदर्शनपरतया विवृतम्। श्रुतप्रकाशिकायां वाक्यार्थश्च भाष्यानुगुणो निरूपितः, रङ्गरामानुजमुनिना उपनिषत्प्रकाशिकायां स एवार्थ आदृतः, स च सम्प्रदायपरिशुद्धस्ततोऽवगन्तव्यः ॥७॥८॥९॥

स यथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥१०॥

सुखदुःखविशरणादिस्वभावमिदं जगत् आनन्दमयाद्धेयप्रत्यनीकात्परमात्मनो विसदृशम्, कथमस्य तत उद्भवः, अत्राह निदर्शनम्—यथार्द्रेन्धनाग्नेरभ्याहितात्प्रज्वालितात्पृथग्धूमाः—विसदृशा धूमा विनिश्चरन्ति, तथा प्रकाशमयादानन्दघनाच्चिदचिद्विशिष्टाद्भवति विसदृशानामुत्पादः, निदर्शनमपि सङ्घातात्मकम्, जलपार्थिवतेजःसमुदायो ह्यार्द्रेन्धनोऽग्निः, एवं वाऽरेऽस्य महतो भूतस्यैतन्निःश्वसितमनायासनि-

ष्पाद्यं कार्यजातं ऋग्वेद इत्यादि। इदमुपलक्षकं कार्यवर्गस्य ॥१०॥

स यथा सर्वासामपाꣳ समुद्र एकायनमेवꣳ सर्वेषाꣳ स्पर्शानां त्वगेकायनमेवꣳ सर्वेषाꣳ रसानां जिह्वैकायनमेवꣳ सर्वेषां गन्धानां नासिके एकायनमेवꣳ सर्वेषाꣳ रूपाणां चक्षुरेकायनमेवꣳ सर्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्वेषाꣳ सङ्कल्पानां मन एकायनमेवꣳ सर्वासां विद्यानाꣳ हृदयमेकायनमेवꣳ सर्वेषां कर्मणाꣳ हस्तावेकायनमेवꣳ सर्वेषामानन्दानामुपस्थ एकायनमेवꣳ सर्वेषाꣳ विसर्गाणां पायुरेकायनमेवꣳ सर्वेषामध्वनां पादावेकायनमेवꣳ सर्वेषां वेदानां वागेकायनम् ॥११॥

उक्तं परस्यात्मनः सर्वोपादानत्वं सनिदर्शनम्, अथ तस्य सर्वायनत्वं सनिदर्शनमुच्यते—यथा सर्वासामपां समुद्र एकायनं एवं सः—परमात्मा सर्वेषामेकायनम्, नदीनदादिलक्षणाः सर्वा एवापस्ततस्ततः प्रवहन्त्योऽन्ततः समुद्रमेव प्रविश्य तदाश्रया भवन्ति, तथा सर्वमेवेदं ततस्ततः सञ्चरदपि परमात्मैकाश्रयं भवतीति भावः। निदर्शनान्तराण्याह—सर्वेषां स्पर्शानामिति। यथा सर्वेषां स्पर्शानां त्वगेकायनमेवं सः, यथा सर्वेषां रसानां जिह्वैकायनमेवं स इत्यन्व-

१ एवमित्यस्य स इत्यनेन पूर्वेणान्वयमभिप्रेत्य व्याचष्टे—एवं स इति।

यस्तत्रतत्र बोध्यः । स्पर्शादयो हि सन्तोऽपि तत्र तत्र त्वगादिसंश्रया एवाभिव्यक्तिमुपलभन्ते तथा सर्वमेवेदं परमात्मसंश्रयमेव स्वाभिव्यक्तिमुपलभते । पूर्वनिदर्शनेन सत्ताधारत्वमुक्तम्, एभिस्तु अभिव्यक्त्याधारत्वमुच्यते । यद्वा—स यथा—परमात्मनः सर्वायनत्वप्रकारो यथा, अथ निदर्शनैरेतदवबोध्यते—सर्वासामपामित्यादिना । एवमिति निदर्शनान्तरे, यथा सर्वासामपां समुद्र एकायनम्, एवं यथा सर्वेषां स्पर्शानां त्वगेकायनमित्यन्वयो बोध्यः । भावस्तु पूर्ववत् । श्रीभाष्यकारास्तु—पूर्वप्रस्तुतेन्द्रियनिग्रहप्रपञ्चनपरमिति व्याचक्षते, अयमेव तु साम्प्रदायिकः पन्थाः, योजनाप्रकारस्तु प्रकाशिकायां व्यक्तः ॥११॥

**स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायैव स्याद्यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१२॥**

जीवानां मोक्षलक्षणात्यन्तिकविलयास्पदत्वमस्य परमात्मनो निरूपयन् स्वतनुभूतजीवात्मना सर्वभूतोत्पादविनाशानुविधाय्युत्पादविनाशयोगं निरूपयति—स यथेति । यथा सिन्धोः प्रविभक्तः सैन्धवखिल्यो लवणखण्डः स्वप्रादुर्भावस्थाने उदके—उदन्वतः सलिले प्रास्तः उदकमनु विलीयते—अस्तनामरूपो भवति, नास्य तदा सैन्धवखिल्य इति नाम, न वा तद्घनीभूतं रूपम्, न ह्यस्योद्ग्रहणं घटेत,

तत उद्धृत्य पूर्ववन्न गृह्येत, यतो यत आददीत लवणमेव, एवं वारे जीवो ब्रह्मणि प्रविष्टो नोद्ग्रहणाय स्यात्–देवो मनुष्य इति यदिदानीमुद्ग्रहणं तस्य न गोचरः स्यात्, विज्ञानघन एव, न देवादिनामरूपभेदोपश्लिष्टः। ननु कथमिदं निदर्शनम्, न हि सैन्धवखिल्यः सिन्धोरिव जीवः प्रविभक्तो ब्रह्मणः, अन्यो ह्ययमन्यश्च परमात्मा, सत्यम्, अथापि न तदत्यन्तविभक्तं ततः, किन्तु–यदिदं महद्भूतमनन्तमपारं परं ब्रह्म सर्वात्मकं तदेव विज्ञानघनो भूत्वा–जीवशरीरको भूत्वा एतेभ्यो दृश्यमानेभ्यो जायमानेभ्यो भूतेभ्यः समुत्थाय–भूतोत्पादमनूत्पादवद्भूत्वा, तान्येव विनश्यमानान्यनु विनश्यति, भूतनाशानुविधायिनाशवद्भवति, स्वतनुभूतजीवद्वारा भूतानुबन्धिजनिविनाशयोगवद्भवति, तथा च–जीवो नात्यन्तभिन्नो ब्रह्मणः, तथा भूतयोगनिबन्धनो देवादिनामभेदश्चास्यैव, प्रेत्य ततो भूतात्कार्यकारणलक्षणात् गुणमयात् न संज्ञा–देवोऽहं मनुष्योऽहमित्यादिज्ञानविशेषोऽस्ति, अपगच्छति संज्ञा तन्मूलनामरूपभेदश्च,ततश्चायमुद्ग्रहणाय न भवति, जीवशरीरकः परमात्मा भूतसंयोगतो नामरूपोत्पादविनाशव्यवहारगोचरो भवति,भूतविश्लेषे केवलं विज्ञानघन इत्येव व्यवहारगोचरो भवतीति यावत्। हे मैत्रेयि, अत एवाहं ब्रवीमि प्रेत्य–गुणमयाद्विश्लेषं प्राप्य संज्ञा–गुणमयेन देवाद्याकृतिना पिण्डविशेषेण सहैकीकृत्य यत् ज्ञानं देवोऽहं मनुष्योऽहमिति, तन्नास्तीति ॥१२॥

सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति स होवाच याज्ञवल्क्यो न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥१३॥

इदं वचनं भर्तुरुपश्रुत्य मैत्रेयी आह—न प्रेत्य संज्ञाऽस्तीति यद्भवानाह, अत्रैव मां अमूमुहत्—मोहमापादितवान् । देवादिनामरूपाद्यभिमतिलक्षणाः प्रज्ञा न सन्तीत्युक्तमर्थमपरिज्ञाय ज्ञानस्यैव मोक्षे आत्यन्तिकोच्छेद इत्यवधृत्य विज्ञानघनस्य कथमिदं घटेतेत्यसम्भवाशङ्कयाऽऽहामूमुहदिति । स ह याज्ञवल्क्य आह—न वा अरे मोहं—मोहकं वाक्यं ब्रवीमि, मुक्तावप्ययं विज्ञानघनो विज्ञानायालम्—समर्थः, नास्य ज्ञानस्वभावोच्छेदः, किंतु अचित्संसर्गकृतदेहाद्यभिमानादयो न सन्तीत्येवाहं ब्रवीमीति ॥१३॥

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरँ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्वमात्मैवाभूत्तत् केन कं पश्येत्तत् केन कं जिघ्रेत्तत् केन कँ शृणुयात्तत् केन कमभिवदेत्तत् केन कं मन्वीत तत् केन कं विजानीयाद्येनेदँ सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥१४॥

तदेवं स्वात्मना विज्ञानघनात्मना च भूतभौतिकेषु व्याप्तस्य अत एव च सर्वप्रकारस्याचित्संसृष्टजीवद्वारा विविधसंज्ञास्पदस्यात एवाद्वितीयस्य यो हि न वेत्ति तत्त्वं, स हि सर्वान्तरात्मभूतात्मतत्त्वानभिज्ञोऽद्वितीयात्मज्ञानाभावादात्मानमेव स्वतन्त्रं पश्यन् अहमयमेषोऽन्य इति द्वैतभ्रमादनर्थे संसारे परिभ्रमति, तद्यत्र—यस्मिन्

समग्रे भूतभौतिकाकारेण स्वातन्त्र्येण वा स्वात्मदर्शनलक्षणभ्रमसमये द्वैतमिव भवति स्वतन्त्रवस्त्वन्तरमिव भवति तत्—तदा इतर इतरं पश्यति—स्वतन्त्रः कश्चित् स्वतन्त्रमन्यं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत्—परमात्मैव चिदचिदात्मना सर्वप्रकारेणावस्थितं परमं तत्त्वमभूत्, स्वेतरसमस्तचिदचित्प्रकारं परमात्मानमद्वितीयं यदा पश्यतीत्येतत्, तदा केन स्वतन्त्रेण साधनेन कं स्वतन्त्रं कर्म पश्येत्। करणं कर्म कर्ता च सर्वप्रकारः स एव हि तदानीं भवति। स परमात्मात्मकसर्वदृक् अहमिदंग्रहैः परमात्मानमेव पश्यति। इतर इतरं जिघ्रति इतर इतरं शृणोतीत्यादि व्याख्यातमेतेन ॥१४॥

इति द्वितीयाध्याये चतुर्थं ब्राह्मणम्।

---

इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥१॥ इमा आपः सर्वेषां भूतानां मध्वासामपाꣳ सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥२॥

पूर्वं यः परमात्मा 'आत्मा वाऽरे द्रष्टव्य' इति प्रस्तुतस्तस्यैवाखिलात्मनः परस्य ब्रह्मणः स्वरूपमन्तर्यामितालक्षणं निरूपयितुमिदं ब्राह्मणं प्रवर्तते—इयं पृथिवीति । सर्वेषां भूतानां—प्राणिनां मधु—मधुवत् भोग्यम् । तत्तत्प्राणिकर्मनिष्पाद्यान्नपरिणतिलक्षणा हि पृथिवी । पृथिव्यै सर्वाणि भूतानि मधु—पार्थिवपरिपाकसारत्वात् । प्राणिनां शरीरं हि अन्नपरिपाकः, तदेवं मिथो मधुत्वेन स्थितयोर्योऽसावन्तर्यामी स एव पूर्वोक्त आत्मेत्याह—यश्चायमस्यामित्यादिना । तेजोमयः—प्रकाशमयः स्वयंप्रकाशः, अमृतमयः—आनन्दमयः, अमृतमिति भोग्यं वा लक्ष्यते, सर्वकल्याणगुणपरिपूर्ण इत्येतत् । अध्यात्मम्—शरीरे तेजोमयोऽमृतमयः पुरुषः । अयमेव सः—पृथिव्यामन्तर्यामी शरीरे चान्तर्यामी अयमेव,—यः पूर्वं श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्युक्त आत्मा अयमेव सः, इदममृतमिदं ब्रह्म इदं सर्वम्—निरतिशयभोग्यत्वादमृतम्, स्वरूपतो गुणतश्च बृहत्त्वात् ब्रह्म, सर्वात्मत्वादिदं सर्वम् ॥ १ ॥ इमा आपः सर्वेषां भूतानां मधु आसां सर्वाणि भूतानि मधु—व्याख्यातप्रायम् । यश्चायमप्सु अन्तर्यामी स्वयम्प्रकाश आनन्दमयः स एवाध्यात्मं रेतसोऽन्तर्यामी रैतसः, स एवायं पूर्वोक्त आत्मा इदममृतमिदं ब्रह्मेदं सर्वमिति; सर्वात्मकत्वात् ॥२॥

**अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽय-**

मेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ३ ॥
अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ४ ॥
अयमादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम्
॥ ५ ॥ इमा दिशः सर्वेषां भूतानां मध्वासां दिशाꣳ सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ६ ॥ अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिꣳश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स

योऽयमात्मेदममृतमिदं ब्रह्मेद सर्वम् ॥७॥ इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेद सर्वम् ॥८॥

अयमग्निरित्यादि । अग्न्यादेः प्राणिनां च मिथ उपकार्योपकारकभावान्मिथो मधुत्वरूपणम् । अग्नेरध्यात्मं वागभिमानितयाऽवस्थितेरग्निवाचोः साहित्येन ग्रहणम् । ( अग्नेः स्थाने वाग् गृहीता ) वायुप्राणयोश्चैकजातीयत्वं प्रसिद्धम् । आदित्याधिष्ठितं चक्षुरतो बाह्यमादित्यस्याध्यात्मं चक्षुषो ग्रहणम् । दिक्श्रोत्रयोरेकाभिमानिकत्वादिशो बहिरध्यात्मं श्रोत्रस्य ग्रहणम् । चन्द्राधिष्ठितत्वादध्यात्मं चन्द्रस्य स्थाने मनसो ग्रहणम् । तैजस इति । तेजश्चात्र कौक्षेयम् । विद्युत्कौक्षेययोरेकजातियोगादध्यात्मं तैजसस्य ग्रहणम् ॥३–८॥

अय स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मि स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्म शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेद सर्वम् ॥९॥ अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु

यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥१०॥

स्तनयित्नोः स्थानेऽध्यात्मं शब्दः सौवरो गृह्यते । स्तनयित्नुः स्तनितलक्षणशब्दविशेषाभिनिष्पादकः, अध्यात्ममुच्चार्यमाणशब्दाभिनिष्पादकः, स्वरे प्रणवलक्षणे विशेषतो महितः सौवरः शब्दोऽभिमानी । स्वरे भवः सौवरः । अयमाकाशः–प्रसिद्धो बाह्यः । अध्यात्मं हृद्याकाशः–हृदयाकाशः । स्पष्टमितरत् ॥९॥१०॥

अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥११॥ इदꣳ सत्यꣳ सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतयः पुरुषो यश्चायमध्यात्मꣳ सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥१२॥

अयं धर्मः–बाह्यः श्रौतः स्मार्तः क्रियालक्षणः । अध्यात्मं धर्मः अद्वेषमैत्र्यादिलक्षणः, तन्निर्वाहको धार्मः । इदं सत्यम्–बाह्यं सत्य-

वदनलक्षणम्, अध्यात्मं सत्यम्—तदध्यवसायलक्षणं, तत्प्रयोजकः सात्यः ॥११॥१२॥

इदं मानुषꣳ सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥१३॥ अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥१४॥

इदं मानुषम्—मानुषजातिलक्षणं, इदं च परनिर्देशेन, यश्चाध्यात्मं मानुषः—स्वापेक्षयाऽध्यात्ममित्युच्यते । एकमेव तु मानुषं स्वपरविभागेनाध्यात्मं बहिश्चोच्यते । उक्तमेतावता प्रपञ्चेनाचेतनान्तर्यामित्वम्, अथ चेतनान्तर्यामित्वमाह—अयमात्मेति । यश्चायमस्मिन्प्रत्यगात्मनि तेजोमयोऽमृतमयः पुरुषः परमात्मा, यश्चायमात्मा तत्र तत्रान्तर्यामी तेजोमयोऽमृतमयः पुरुष उक्तः, अयमेव सः, योऽयमत्राऽऽत्मा वारे द्रष्टव्य इति प्रस्तुतः परमात्मा, इदममृतमिदं ब्रह्मेदं सर्वम् ॥१३-१४॥

स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानाꣳ राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥१५॥

एवं चेतनाचेतनान्तर्यामित्वं निरूप्य सर्वाधिपत्यसर्वाधारत्वनिरूपणेनोपसंहरति—स वेति। स सर्वान्तरात्मा सर्वेषां भूतानामधिपतिः—शेषी। सर्वेषां भूतानां राजा—नियन्ता। यथा रथनाभौ रथनेमौ च अराः समर्पिताः, एवमस्मिन् परमात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एव प्रत्यगात्मानः समर्पिताः ॥१५॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्तद्वां नरा सनये दꣳस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिं। दध्यङ्ङाथर्वणो ह वामश्वस्य शीर्ष्णा प्रयदीमुवाचेति ॥१६॥

समाप्ता प्रक्रान्ता ब्रह्मविद्या। अथेयं स्तूयते आख्यायिकया। आख्यायिकायाः सारांशस्त्वयम्, इन्द्रेण देवेभ्योऽपि रक्षिता सेयं विद्या प्राणसंशयेनापि श्रद्धया गुरोरधिगतेति। इदं वै तन्मधु—ब्रह्मविद्यात्मकम्, दध्यङ्नामा अथर्वणो गोत्रापत्यमाथर्वणः इन्द्रप्रसा-

दात्प्राप्तपरमरहस्यभूतैतद्विद्यः, अश्विभ्यां–देवभिषग्भ्यां श्रद्धया प्रार्थयमानाभ्यामतिरहस्यमप्युवाच । तदेतत्–महता क्लेशेन विद्याग्रहणप्रवृत्तिलक्षणमश्विनोरार्षदृष्ट्या कश्चिदृषिरवलोक्येदमवोचत् । हे नरा–हे नरौ, अश्विनोः सम्बोधनमेतत् । सनये–लाभाय वां तदिदमुग्रं दंसः–कर्म तन्यतुर्वृष्टिं न–पर्जन्यो वृष्टिमिव (नञ् इवार्थः) आविष्कृणोमि–प्रकाशयामि । किं तदुग्रं कर्म ?, उच्यते–असावाथर्वणो युवाभ्यां च्छिन्नस्वशिराः प्रतिसंहिताश्वशिरास्तेनाश्वस्य शिरसा प्रोवाच विद्यामिति यदिदमुग्रं कर्म । रहस्यप्रकाशने इन्द्रो गुरुर्मे शिरश्छेत्स्यतीति भीते आथर्वणे तव शिरश्छित्त्वा तद्रक्षावः, अश्वस्य शिरो योजयावः, तेन शिरसोपदिश विद्याम्, कुपितेन तच्छिरसि छिन्ने निजं शिरो योजयाव इति प्रतिबोधित आथर्वणस्तथाऽकरोत् । तदिदमुद्भाव्यते ऋषिणा, 'अश्वस्य शीर्ष्णा उवाचे'ति । प्र-यत् ईम्-इति पदच्छेदः । ईमित्यनर्थो निपातः ॥१६॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचदाथर्वणायाश्विना दधीचेऽश्व्यꣳ शिरः प्रत्यैरयतं । स वां मधु प्रवोचहतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥१७॥

अपरं चेदमवोचदिति मन्त्रान्तरप्रकाशनाय पुनः श्राव्यते–इदं वै तदिति । आथर्वणायेत्यार्षं मन्त्रान्तरम् । हे अश्विनौ दधीचे आथर्वणाय अश्व्यं शिरः प्रत्यैरयतम्–युवां योजितवन्तौ, स आथ-

र्वणः वां मधु त्वाष्ट्रं—त्वष्टुः संबन्धि यज्ञस्य शिरश्छेदनप्रतिसन्धानदर्शनलक्षणं प्रवर्ग्यकर्माङ्गभूतं प्रोवाच, इदं च कक्ष्यं रहस्यं मधु वां प्रोवाच, कुतः?, ऋतायन् सन्—सत्यवचनो भवन् सन्। तेन हि प्रतिज्ञातमपनोदितेन्द्रभयोऽहमुपदेक्ष्यामीति॥ १७॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरुष आविशादिति स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्॥१८॥

किं तद्रहस्यं मधु प्रोवाच, तत् श्रावयितुं पुनः श्राव्यते—इदं वै तदित्यादिना। इदं वै तदित्यादि अवोचदित्यन्तं पूर्ववत्। स परमात्मा द्विपदः पुरः—मानुषसंस्थानलक्षणानि पुराणि चक्रे—ससर्ज, तथा—चतुष्पदः पुरः—पशुसंस्थानलक्षणानि पुराणि चक्रे—ससर्ज, मानुषपशुप्रभृतीनि शरीराणि सृष्ट्वा स्वयं पक्षी भूत्वा जीवात्मको भूत्वा ताः पुरः—तानि पुराणि शरीरलक्षणानि पुरुषोऽयं प्राविशत्। सोऽयमकर्मवश्योऽपि जीवो भूत्वा सर्वासु पूर्षु प्राविशत्, अत एव पुरुष उच्यते, पुरि शेते पुरिशयो ह्ययम्। (स्वशरीरभूतजीवद्वारा प्रविष्टोऽप्येष न कर्मफलमत्ति, किन्तु पुरि शेते केवलं स एष पुरुषः) अनेन पुरुषेणान्तर्बहिश्चाव्याप्तं न किमपि जगति वस्तु। द्विपदः पुरश्चक्रे चतुष्पदः पुरश्चक्रे। स पक्षी भूत्वा प्राविशदित्यस्यो-

पदेशस्य सारस्यमेवावगन्तव्यः—नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतमिति, न तु पक्षी भूत्वा कर्मफलमत्तीति । अनेन परमात्मना अनावृतम्—अन्तरव्याप्तं न किञ्चन, असंवृतं—बहिश्चाव्याप्तं न किञ्चन, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । अन्तर्बहिश्च व्याप्त्या सर्वत्र परिपूर्णत्वाच्च पुरुष उच्यते । तेनेदं पूर्णं पुरुषेण सर्वम् ॥ १८ ॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् । रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेति । अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतत् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥१९॥

मन्त्रान्तरावतरणाय तदेव पुनरनूद्यते—इदं वै तदिति । पूर्ववत् । स परमात्मा रूपं रूपं—प्रतिरूपं प्रतिसृज्यवस्तु प्रतिरूपः—तत्तदनुरूपरूपो बभूव, तत्तदनुप्रविश्यान्तर्यामितया तत्तदनुरूप एव बभूव । स्वयं सर्वेभ्यस्तेभ्योऽत्यन्तविलक्षणोऽपि तत्तदनुप्रविश्य तत्तन्नामरूपभाक्[1] तत्तदनुगुणज्ञानक्रियानिर्वाहक एव बभूवेति यावत् । कस्मै

1 एतेन नामरूपभाक्त्वं न जीवस्येवेति व्यावर्त्यते ।

प्रयोजनाय ? । तदस्य रूपं प्रतिचक्षणाय—अस्येदं सृज्यवस्त्वनुप्रवेशानुगुणं तत्तद्रूपभाक्त्वं व्यवहाराय, अन्यथा हि व्यवहार एव न सिद्ध्येत् । नामरूपव्याकरणेन हि व्यवहारः, स चैतत्प्रवेशाधीनः । 'अनुप्रविश्य नामरूपे व्याकरवाणी'ति च श्रूयते । 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इति च । यद्यपि जीवः कर्मणा तत्तद्देवादिरूपं प्राप्य तत्तद्रूपमनु प्रतिरूपो भवति, अथाप्ययं न तथा पुरुरूपो भवति, असौ हीन्द्रः—परमेश्वरः, जीवस्त्वनीशः मायया निबद्धश्च, स एष परमात्मा परमेश्वरः सर्वज्ञः सत्यसङ्कल्पः स्वमाययैव विचित्रकार्यनिर्वहणसमर्थविचित्रशक्तित एव यथासङ्कल्पं पुरुरूप ईयते। ननु—जीवः स्वोपकरणैः प्राणैरिन्द्रियैश्च तांस्तानर्थान् स्वार्थं हरन् नानारूपाण्यनुप्रविशन् बहुरूपस्तैः प्राणादिभिर्हरणसाधनैर्भवति, तत् कथमन्यरूपेणायं प्रतिरूपो भवति । नैतत् । शरीरे युक्ताः—योजिताः हरणसाधनभूता हरणकर्तारो वा हरयः—इन्द्रियाणि प्राणा जीवा वा अस्यैव हि—अस्यैव रूपं हि, श्रूयते ह्यन्तर्यामिब्राह्मणे—'यस्य प्राणः शरीरं यस्य चक्षुः शरीरं, यस्य विज्ञानं शरीरं' 'यस्यात्मा शरीरम्' इति । तत् सर्वात्मत्वात्—अयं वै हरयः दश च सहस्राणि बहूनि चानन्तानि च । तदेवं सर्वात्मकमपरिच्छिन्नमनाद्यनन्तं देशतः कालतो वा न कस्माच्चित्पूर्वोत्तरपरिच्छेदसहितमन्तर्बहिर्विभागसहितम्, सर्वात्मत्वादयमेव मुख्य आत्मा ब्रह्म—सर्वतो बृहत् । सर्वानुभूः—सर्वं सृज्यमनु यस्माद्भवति तस्मात् सर्वानुभूः । सर्वज्ञत्वाद्वा सर्वानुभूः । प्रकाशिकायां तु—एक एव हरिः आब्रह्मस्तम्बपर्यन्तस्यान्तर्यामितया परिगृहीततत्तदनुगुणदिव्याकारः सन्निधत्ते तेषामन्त-

रित्याशयेन हरिरेक एव असङ्ख्याता हरयो भवन्ति, इति व्याख्यातम्। अस्यां व्याख्यायामवतारविशेषो गम्यते इति विशेषः। अत्र केचिदेवं व्याचक्षते–ननु गुणमयमिदं रूपमनुप्रविष्टो रूपं रूपं प्रतिरूपो भवन्निन्द्रोऽपि गुणेनोपलिप्येतैव, पङ्कमनुप्रविष्टः पङ्केनेव। तत्रोच्यते। युक्ता ह्यस्य हरयः शता दशेति। अस्य सृज्यमनुप्रविशतो हरयो रश्मयो ह्यनन्ताः, आदित्यो रश्मिभिरनुप्रविष्टोऽपि व्याप्येन पङ्केन यथा नोपलिप्यते, तथाऽयं ज्ञानैकस्वरूपः स्वरश्मिभिर्ज्ञानैरनुप्रविष्टो न गुणमयेन व्याप्येनोपलिप्यते। ननु सूर्यस्येव मूर्तता, रश्मिभिरनुविष्टस्य सूर्यस्येव साक्षादननुप्रवेशश्चेति स्यात्। अत्रोच्यते–अयं वै हरय इति। रश्मय इति तु अलेपज्ञापनायोक्तम्, य इह हरयो रश्मय उक्तास्ते ज्ञानैकस्वरूपात्तस्मात् न भिद्यन्ते, अयं वै हरयः, सूर्यमण्डलतत्किरणयोरिव प्रभाप्रभावद्रूपो भेदो न बोध्यः, व्याप्यबहुत्वमभिप्रेत्य बहुवचननिर्देशः, इति। इत्यनुशासनं परस्य ब्रह्मणः।

इति द्वितीयाध्याये पञ्चमं ब्राह्मणम्।

---

अथ वंशः–पौतिमाष्यो गौपवनात् गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात् कौशिकः कौण्डिन्यात् कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥१॥ अग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभि-

म्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्यां सैतवप्राचीनयोग्यौ पाराशर्यात् पाराशर्यो भारद्वाजाद्भारद्वाजो भारद्वाजाद्गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजः पाराशर्यात्पाराशर्यो वैजवापायनात् वैजवापायनः कौशिकायनेः कौशिकायनिः ॥२॥ घृतकौशिकात् घृतकौशिकः पाराशर्यायणात् पाराशर्यायणः पाराशर्यात् पाराशर्यो जातूकर्ण्यात् जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजात् भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद् बाभ्रवः पथःसौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्य-

ङ्ङाथर्वणोऽथर्वणो दैवादथर्वादैवो मृत्योः प्राध्वꣳ-सनान्मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥३॥

अस्या विद्याया आचार्यपरम्परा निरूप्यते विद्यास्तुतये । वंशः—आचार्याणां निरूप्यते । अयमस्मात्प्रापेमां विद्यामसौ चास्मात्, इति पूर्वपूर्वाचार्यपरम्परा निरूप्यते । परमेष्ठी—ब्रह्मा, स परमेष्ठी ब्रह्मणः—परब्रह्मणः, तच्च ब्रह्म स्वयंभु स्वतः सर्वज्ञतया स्वयमेव प्रज्ञातसर्वविद्यः ॥१–३॥

इति द्वितीयाध्याये षष्ठं ब्राह्मणम् ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण-परमहंसवर्य-योगिराज-श्रीगोपालानन्दस्वामिविरचिते छान्दोग्योपनिषद्भाष्ये द्वितीयोऽध्यायः ।

---

## अथ तृतीयोऽध्यायः

जनको वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणानामनूचानतम इति स ह गवाꣳ सहस्रमवरुरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ॥१॥

मधुब्राह्मणे निरूपितं ब्रह्मणोऽन्तर्यामित्वं मुखभेदेन निरूप्यते, आख्यायिका विद्यास्तुतये, अनया चाख्यायिकया विद्याभिवृद्धिकामो विद्वज्जनसमवायं सेवेतेति, आढ्येन च समधिकधनवितरणेनोपसेव्यो विद्याप्रद इति च गम्यते। वैदेहो जनको बहुदक्षिणेन–बह्व्यो दक्षिणा यस्मिंस्तेन यज्ञेन ईजे। तत्र यज्ञे राज्ञा आमन्त्रिता यागदिदृक्षया समागता वा कुरुदेशनिवासाः पाञ्चालदेशनिवासाश्च ब्राह्मणा अभिसमेता बभूवुः। प्रायः पण्डितास्तद्देशीया इति प्रसिद्धम्। राजा च तानिमान् पण्डितान् समवेतानवलोक्य कः स्विदेषां ब्राह्मणानां मध्ये अनूचानतमः–ब्रह्मविद्यानुवचनेऽत्यन्तं कुशलः स्यादिति ज्ञातुकामोऽभवत्। अथ तदवधारणाय समुचितमुपायं मनसा विचिन्त्य–स वैदेहो जनको गवां सहस्रमेकत्रावरुरोध, एकैकस्या गोः शृङ्गयोः सुवर्णस्य दश दश पादाः–पलचतुर्थांशाः आबद्धा बभूवुः ॥१॥

**तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सौम्योदज सामश्रवा ३ इति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रुवीतेत्यथ ह जनकस्य वैदेहस्य होताश्वलो बभूव सहैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसि ३ इति। स हो-**

वाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म इति। तं ह तत एव प्रष्टुं दध्रे होताऽऽश्वलः ॥२॥

एवमेकत्रावरुध्य गास्तानुवाच—सर्वे यूयं ब्राह्मणाः—वेदार्थविदः, भगवन्तः—पूज्याः, युष्माकं मध्ये यो ब्रह्मिष्ठः—अतिशयेन ब्रह्मवित् स एता गा उद्जताम्—स्वगृहं प्रति नयतु इति। अथ ते ब्राह्मणा न दधृषुः—धृष्टा नाभवन्, तदा तेषु नैकस्यापि गवां नयने धैर्यं समभूत्। अथ तदा याज्ञवल्क्यः स्वमात्मीयमन्तेवासिनं ब्रह्मचारिणमिदमाह—हे सौम्य सामश्रवा एता गाः उद्ज—अस्मद्गृहान् प्रति नय, इति। एवं गुरुणोक्तो ब्रह्मचारी यथानिर्देशं गा उदाचकार—आचार्यगृहान् प्रत्युदकालयत्। तदस्य कर्मावलोक्य सर्वे ते ब्राह्मणाश्चुक्रुधुः—कथं नः—अनादृत्यास्मान् अनादरे षष्ठी, अहमतिशयेन ब्रह्मविदस्मीति ब्रुवीत। सर्वे वयं ब्रह्मविदः, नास्मासु कोऽपि इतरेभ्योऽहमस्म्यतिशयेन ब्रह्मविदित्यभिमन्यते, एवंभूतानस्मान् सर्वाननादृत्याहमस्मि ब्रह्मिष्ठ इत्यभिमतिपूर्वकं कर्मेदं कर्तुं कथं प्रभवेत्, इति। तदिदमसहमानो जनकस्य होता आश्वल एनं याज्ञवल्क्यमुच्चैः स्वरेण पप्रच्छ—याज्ञवल्क्य त्वमेव खल्वस्मासु ब्रह्मिष्ठोऽसि, भर्त्सयन्नाह—ब्रह्मिष्ठोऽसीति प्लुतेन। वैदेहस्यायं होता, सम्राडाश्रयादस्यैतद्धार्ष्ट्यम्। यद्याज्ञवल्क्यमपि ब्रह्मविदग्रेसरं सभर्त्सनं पप्रच्छ। याज्ञवल्क्यस्तदुपश्रुत्य पाण्डित्यमनाविष्कुर्वन्नाह—नाहमात्मानं ब्रह्मिष्ठं मन्ये, यो वा स्यात् ब्रह्मिष्ठस्तस्मै नमस्कुर्मः, वयं तु गोकामाः केवलम्। 'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति श्रुत्यर्थः

स्मार्यते । उपहासगर्भं प्राह—नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स इतीति वा । अथ तद्वचनमुपश्रुत्याश्वलोऽतत्पाण्डित्यवित् तत एव क्रोधवेगात् तं विजिगीषुः प्रष्टुं मनो दध्रे ॥२॥

याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्युनाऽऽप्तं सर्वं मृत्युनाऽभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यते इति होत्रर्त्विजाऽग्निना वाचा वाग्वै यज्ञस्य होता तद्येयं वाक्सोऽयमग्निः स होता स मुक्तिः साऽतिमुक्तिः ॥३॥

याज्ञवल्क्येति सावधीरणं संबोध्येदमुवाच—यदिदं कर्म सर्वं मृत्युनाऽऽप्तम्—व्याप्तम्, न केवलं मृत्युना व्याप्तम्, किन्तु तेनाभिपन्नं च, न किमपि कर्म मृत्युनाऽनभिभूतम्, ऋत्विग्द्रव्यादिनिष्पाद्यं सर्वमेव कर्म फलं साधयत् मृत्युनाऽनभिभूतं फलं साधयितुं न प्रभवति, नहि कर्मभिरिह वाऽमुत्र वा स्थिरां स्थितिं लभेत, मृत्युना ग्रस्यते एव । अमुत्र च फलमल्पकालमुपभुज्य पुनः पतत्येवात्र । तस्मात् नायं यजमानो मर्त्यभावमत्येति । तदेवं स्थिते यजमानः केनोपायेन मृत्योराप्तिमतिमुच्यते । इति पृष्टो याज्ञवल्क्य आह—होत्रर्त्विजाऽग्निना वाचा—अधियज्ञं यो होता ऋत्विक् अध्यात्मं च या वाक् अधिदैवं यश्चाग्निः, तैरेतैरुपासितैर्मृत्युमत्येति, कथमेते उपास्याः ( किं पृथक्पृथक् ) तद्व्याचष्टे—वाग्वै यज्ञस्य होता तद्येयं वाक् सेयमग्निः स होता—नैषामन्यान्यतया दृष्टिः कार्या, किन्त्वनन्यतया, तथाहि—यज्ञस्य यो होता यज्ञसंबन्धी योऽयं

होता स वाक्, वागभिन्नत्वेन स द्रष्टव्यः, अधियज्ञं यो होता ऋत्विक् तस्मिन्नध्यात्मं या वाक् तद्दृष्टिरनेन विहिता । येयं वाक् सोऽयमग्निः—यज्ञानुबन्धिनि होतर्यध्यस्यमाना वाक् अधिदैवमग्निः, सेयं वागग्न्यभिन्ना द्रष्टव्या, तथाच सः—अग्निः होता, उक्तदृष्टिक्रमेण योऽयमधियज्ञं होता सोऽग्निरिति विभाव्य इति सिद्धम् । स मुक्तिः— मुच्यतेऽनेनेति मुक्तिः, सः—होतरि विभाव्यमानोऽग्निः अग्नित्वेन विभाव्यमानो होता वा मुक्तिः—मुच्यतेऽनेनेति मुक्तिः, मृत्योः सपदि सन्निहितान्मोचयत्येनम्, होतरि वाग्द्वारा क्रियमाणादग्निदर्शनात् ( अग्नित्वेन होतुरुपासनात् ) इह चिरं जीवति । न केवलं मुक्तिः, किन्तु अतिमुक्तिश्च अतिशयेन मृत्योर्मुच्यते चानेन, अध्यात्मनोपासनाद्देवतासायुज्यं प्राप्य मर्त्यभावात् पुनः पुनर्जननमरणलक्षणान्मुक्तोऽमर्त्यभावं प्राप्य चिरममुत्र यावद्देवतासंविभागं तिष्ठति । विधेयप्राधान्यात् सेति स्त्रीलिङ्गनिर्देशः । सेयं मृत्योरतिमुक्तिरमर्त्यभावप्राप्तिलक्षणा, न तु सर्वथा जननमरणान्मुक्तिर्येयमपुनर्भवरूपा मुख्या । उपनिषत्प्रकाशिकायां तु विद्याद्वारा मोक्षसाधनपरतयैव व्याख्यातम् । सुश्लिष्टं नाम संप्रदायतः ॥३॥

याज्ञवल्क्येति होवाच यदिदं सर्वमहोरात्राभ्यां व्याप्तं सर्वमहोरात्राभ्यामभिसम्पन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यते इत्यध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन चक्षुर्वै यज्ञस्याध्वर्युस्तद्यदिदं चक्षुः सोऽसावादित्यः सोऽध्वर्युः स मुक्तिः सातिमुक्तिः ॥४॥

मृत्योरतिमुक्तिरुक्ता, अथ कालादतिमुक्तिरुच्यते । कालः पचति प्राणिनम्, मृत्युस्तं ग्रसति । तत्र तत्र कालः खल्वहोरात्रविभागमापन्नः पचति सस्यमिव मर्त्यम्, तदहोरात्रविभागान्मुक्तिरुच्यते । याज्ञवल्क्येति संबोध्येदमुवाचाश्वलः । यदिदं सर्वमहोरात्राभ्यां व्याप्तमभिसंपन्नं च न किमपि ताभ्यामनभिभूयमानम्, सर्वमेवाहोरात्राभ्यां परिवर्तमानाभ्यामुपचीयतेऽपचीयते च । तत् अयं यजमानः केनोपायेनाहोरात्रयोराप्तिमतिमुच्यते । एवं पृष्टो याज्ञवल्क्य आह—अध्वर्युणर्त्विजा चक्षुषेत्यादि । पूर्ववत् ॥४॥

याज्ञवल्क्येति होवाच यदिदं सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तं सर्वं पूर्वपक्षापरपक्षाभ्यामभिसंपन्नं केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यते इत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै यज्ञस्योद्गाता तद्योऽयं प्राणः स वायुः स उद्गाता स मुक्तिः साऽतिमुक्तिः ॥५॥

अहोरात्रविभागाभ्यामिव पूर्वपक्षापरपक्षविभागाभ्यामपि कालः पचति मर्त्यम्, अतश्चायं जीर्यते । अतस्ताभ्यामतिमुक्तिसाधनं निरूप्यते । अहोरात्रविभागः सूर्यगत्यधीनः, तिथिविभागश्चन्द्रगत्यधीनः, तिथिविभागमूलकश्चायं पक्षभेदः, तदाहोरात्रविभागादतिरिच्यते तिथिविभाग इति, ततो मुक्तिः पृथक् निरूप्यते । शब्दार्थः पूर्ववत् ॥५॥

याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारम्बण-मिव केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति, ब्रह्मणर्त्विजा मनसा चन्द्रेण, मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा, स मुक्तिः साऽतिमुक्तिः इत्यतिमोक्षाः, अथ सम्पदः ॥६॥

अन्तरिक्षम्—आकाशम्, अनारम्बणम्—अनालम्बनमिव—न लक्ष्यते किमप्यालम्बनमन्तरिक्षे, अथ यजमानः केनाक्रमेण—केनावलम्बेन स्वर्गं लोकमाक्रमते—प्राप्नोति, यं स्वर्गलोकमेष प्राप्य प्राप्यामर्त्य-भावं मृत्योरतिमुक्तः स्यात् । एवं पृष्टो याज्ञवल्क्य आह—ब्रह्म-णर्त्विजा मनसा चन्द्रेणेत्यादि । शब्दार्थः पूर्ववत् । अधियज्ञं यो ब्रह्मा तस्मिन्नध्यात्मं यन्मनस्तद्दृष्टिः, तस्मिन्नस्मिन्मनसि अधिदैवं यश्चन्द्रस्तद्दृष्टिः, तदेवंप्रकारेण चन्द्रात्मब्रह्मदर्शनेन यजमानः स्व-र्गमाक्रमते, तस्मात् तथोपास्यमानः स मुक्तिः सैवातिमुक्तिरिति भावः । उपसंह्रियते मृत्योर्मुक्तिप्रकारः—इत्यतिमोक्षा इति । एवंप्रकारेण मृत्योरतिमोक्षाः प्रश्नप्रतिवचनाभ्यां निरूपिताः । अथ सम्पदः—निरूप्यन्ते, सम्पद्यते फलविशेषसाधनभावो याभिस्ताः सम्पद उच्यन्ते, अनिष्टविशेषनिरसनप्रकार उक्तः । अथेष्टविशेषसम्पादनप्र-कारो निरूप्यत इति भावः ॥६॥

याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भिर्होतास्मि-न्यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्र

इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया किं ताभिर्जयतीति यत्किञ्चेदं प्राणभृदिति ॥७॥

अथाश्वलो याज्ञवल्क्येति संबोधयन्निदमुवाच–होताऽस्मिन्यज्ञेऽद्य कतिभिः ऋग्भिः करिष्यति ( हौत्रं कर्म )। याज्ञवल्क्य आह— तिसृभिरिति। कास्तास्तिस्रः ?। आह–पुरोनुवाक्या च याज्या च शस्यैव तृतीया—यागकालाद्याः प्राक्प्रयुज्यन्ते ताः पुरोनुवाक्याः, यागसाधनतया याः प्रयुज्यन्ते ता याज्याः, शस्यार्था ऋचः शस्या उच्यन्ते, तदेताभिस्त्रिविधाभिः किं जयति ?, आह–यत्किञ्चेदं प्राणभृत्–यज्जरायुजमण्डजमुद्भिज्जं वा यत्किञ्च प्रणिजातम्, तत्सर्वं जयति। त्रित्वसङ्ख्यासामान्यात्। होत्रा अनया सामान्यधर्मभावनया त्रिविधप्राणिभृज्जयसाधनतया प्रयुज्यमानास्त्रिविधा ऋचः प्राणभृज्जयसम्पादका भवन्तीति सम्पन्निरूपिता ॥७॥

याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्युरस्मिन्यज्ञ आहुतीर्होष्यतीति तिस्र इति कतमास्तास्तिस्र इति या हुता उज्ज्वलन्ति या हुता अतिनेदन्ते या हुता अधिशेरते किं ताभिर्जयतीति या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति दीप्यत इव हि देवलोको या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयत्यतीव हि पितृलोको या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयत्यध इव हि मनुष्यलोकः ॥८॥

पुनरप्याहाश्वलो याज्ञवल्क्यं याज्ञवल्क्येति संबोध्य । अद्यास्मिन् यज्ञेऽध्वर्युरयं कत्याहुतीर्होष्यतीति । याज्ञवल्क्य आह—तिस्र इति, पुनरितरः पप्रच्छ—कतमास्तास्तिस्र इति । याज्ञवल्क्य आह—या हुता उज्ज्वलन्ति समिदाद्या आहुतयस्ता एको वर्गः, या हुता अतिनेदन्ते—अधिकं कुत्सितं शब्दं कुर्वन्ति मांसाद्या आहुतयः, अयमपरो वर्गः, या हुता अधिशेरते—नोज्ज्वलन्ति न नेदन्ते अधो गत्वा भूमावधिशेरते पयःसोमप्रभृतय आहुतयस्तृतीयो वर्गः । तदेवं त्रिविधा आहुतयः । इतरः पप्रच्छ—किं ताभिस्त्रिविधाभिः सम्पादिताभिराहुतिभिर्जयतीति । याज्ञवल्क्य आह—या हुता उज्ज्वलन्ति ताभिर्देवलोकं जयति, कुतः ?, उज्ज्वलत्वसाम्यात्, दीप्यत इव हि द्युलोकः—उज्ज्वल इत्येतत् । समिदाज्याद्याहुतयो निर्वर्त्यमाना उज्ज्वलस्वाभाव्ययोगात् उज्ज्वलस्वर्गसम्पादका भवन्तीति भावनया प्रयुज्यमानाः स्वर्गसाधनभावं यान्तीति सम्पदेषा । या हुता अतिनेदन्ते ताभिः पितृलोकं जयति, कुतः ? अतीव हि नेदते कुत्सितशब्दं कुरुते, पितृलोकः—पितृलोकसम्बद्धा हि संयमिनी, तस्यां च पीड्यमानानां पापकर्मणां भवति कुत्सितो ध्वनिः, कुत्सितध्वनिवैशिष्ट्यसाम्याद्भवति पितृलोकजयः । या हुता अधिशेरते ताभिर्मनुष्यलोकं जयति । कस्मात्सामान्यात् ?, अध इव हि मनुष्यलोकः, इवशब्द एवार्थः, अध एव हि मनुष्यलोकः, उपरितनान् द्युलोकादीनपेक्ष्याधःसम्बन्धादधःस्थत्वसाम्यान्मनुष्यलोकजय इति भावः ॥८॥

याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति कतमा

सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वे-
देवा अनन्तमेव स तेन लोकं जयति ॥९॥

आश्वलः पुनरपरमिदं पप्रच्छ—दक्षिणतो ब्रह्मासने समुपविष्टोऽयं ब्रह्मा कतिभिर्देवताभिर्यज्ञं गोपायति, इति। एकयैवेति जानन्नपि याज्ञवल्क्यं विमोहयितुं कतिभिरिति बहुवचनान्तनिर्देशेन पृच्छति। याज्ञवल्क्य आह—एकयेति। कतमा सैकेति पृष्ट आह—मन एवेति। ब्रह्मा हि ध्यानेन केवलेन यज्ञे व्याप्रियमाणो यज्ञं गोपायति प्रमादात् 'तस्य यज्ञस्य मनश्च वाक् च वर्तिनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा' इति च श्रूयते। किं तेन जयतीति प्रश्नमालक्ष्याह—अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयतीति। मनसा तेनानन्तं लोकं जयति, आपेक्षिकमिदमानन्त्यम्, नन्वेका नाम देवता मनः, कथमेकयाऽनन्तलोकजयः, उच्यते, अनन्तं वै मनः—वृत्तिप्राचुर्यात्, तद्वृत्त्यधिष्ठातृभूताश्च देवा अनन्ताः। चक्षुरादयः सर्वे देवाः—इन्द्रियाणि अनन्ताः, यैर्मनो व्यापृत्य विविधवृत्तिकं सदनन्तमिव भवति इति वा। तदानन्त्यसाम्यात्तथोपास्यमानेन मनसाऽनन्तलोकजयः ॥९॥

याज्ञवल्क्येति होवाच कत्ययमद्योद्गाताऽस्मिन्यज्ञे स्तो-
त्रिया स्तोष्यतीति तिस्र इति कतमास्तास्तिस्र इति
पुरोनुवाक्या च याज्या च शस्यैव तृतीया कतमास्ता
या अध्यात्ममिति प्राण एव पुरोनुवाक्याऽपानो

याज्या व्यानः शस्या किं ताभिर्जयतीति पृथिवी-
लोकमेव पुरोनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया
द्युलोकꣳ शस्यया ततो ह होताश्वल उपरराम ॥१०॥

पुनराश्वलः पृच्छति—अयमुद्गाताऽस्मिन् यज्ञेऽद्य कति स्तोत्रियाः—स्तोत्रानुबन्धिन्यः स्तोष्यति, इति । याज्ञवल्क्य आह—तिस्र इति । कतमास्तास्तिस्र इति पृष्ट आह—पुरोनुवाक्या च याज्या च शस्यैव तृतीयेति । व्याख्यातमेतत् । पुनस्तास्वध्यात्मविशेषदृष्टिं पृच्छति—कतमास्ता या अध्यात्ममिति । अध्यात्मं ताः कतमाः? तासु पुरोनुवाक्यादिष्वध्यात्मं कस्य दृष्टिः कार्येति यावत् । आह—प्राण एवेति । पुरोनुवाक्यायां प्राणदृष्टिः याज्यायामपानदृष्टिः शस्यायां व्यानदृष्टिः कार्येति भावः । किं ताभिः—प्राणत्वादिना दृष्टाभिः पुरोनुवाक्यादिभिर्जयतीति पृष्ट आह—पृथिवीलोकमित्यादि । एवं तत्र तत्र प्रश्ने दत्तोत्तरोऽयं प्रष्टव्यमतःपरमजानन्नुपररामाश्वलः ॥ १० ॥

इति तृतीयाध्याये प्रथमं ब्राह्मणम् ।

---

अथ हैनं जारत्कारव आर्तभागः पप्रच्छ
याज्ञवल्क्येति होवाच कति ग्रहाः कत्यति-
ग्रहा इत्यष्टौ ग्रहा अष्टावतिग्रहा इति ये ते-
ऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ॥१॥

अथ तूष्णीम्भूते आश्वले जरत्कारोर्गोत्रापत्यमृतभागस्यापत्यं सोऽयं याज्ञवल्क्यं पप्रच्छ, मुक्त्यतिमुक्तिप्रसङ्गाद्ग्रहातिग्रहविषयः प्रश्नः प्रवर्तते, मृत्युना कालेन चाहोरात्रपूर्वपक्षापरपक्षलक्षणेन ग्रस्तस्य ततो मुक्तिरतिमुक्तिश्च पृष्टा पूर्वम्, अथेदानीं ततो मृत्योः कालाच्च प्रबलाः केचन ग्रहाः सन्ति, यैरयं गृहीतो ग्रहगृहीत इव ग्रहैर्व्यपेतस्वस्मृतिर्विविधं चेष्टते, तथा सन्ति ग्रहाणामपि ग्रहाः, यैरतिग्रहैः स्वायत्तीकृता ग्रहास्ते विशेषतो विचेष्टयन्ते पुरुषम् । ते ग्रहास्ते चातिग्रहाः कति कतमे च ते इति पृच्छति । कतीति पृष्ट आह—अष्टौ ग्रहा अष्टावतिग्रहा इति, उत्तरिते सङ्ख्याप्रश्ने सङ्ख्येयस्वरूपविशेषावधारणाय पृच्छति—कतमे ते इति ॥१॥

प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धं जिघ्रति ॥२॥ वाग्वै ग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति ॥३॥ जिह्वा वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान्विजानाति ॥४॥ चक्षुर्वै ग्रहः स रूपेणातिग्राहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥५॥ श्रोत्रं वै ग्रहः स शब्देनातिग्राहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति ॥६॥ मनो वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान्कामयते ॥७॥ हस्तौ वै ग्रहः स कर्मणा-

तिग्राहेण गृहीतो हस्ताभ्याꣳ हि कर्म करोति ॥८॥
त्वग्वै ग्रहः स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि
स्पर्शान्वेद यत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥९॥

याज्ञवल्क्य आह—प्राणो वै इत्यादि । अत्रेन्द्रियाणां ग्रहत्वं विषयाणामतिग्रहत्वं चाभिप्रेत्य तदवधारणं क्रियतेऽयं ग्रहोऽयमतिग्रह इति । इन्द्रियैर्गृहीतोऽयं पुरुषः स्वानुरूपं विवशश्चेष्टते, तस्मात् इन्द्रियाणि ग्रहा उच्यन्ते, इन्द्रियाणि च गन्धादिभिः विषयैर्गृहीतानि तद्वशगानि चेष्टन्ते, तस्मादतिग्रहास्तानि उच्यन्ते । तत्र घ्राणादेर्ग्रहस्य गन्धादिरर्थो यथाक्रममतिग्रहो निरूप्यते । प्राणो वै ग्रहः—अयं प्राणशब्दो घ्राणपरः, इन्द्रियप्रकरणात् । स घ्राणो ग्रहोऽपानेन गन्धेनातिग्रहेण गृहीतो भवति, गन्धेन विषयेण समाकृष्टो घ्राणस्तदेकार्थस्तदुपभोगैकप्रवणं पुरुषं विदधाति पुरुषं तत्रैव निबध्नाति, तदुच्यतेऽपानेन हि गन्धान् जिघ्रतीति । अपानशब्दोऽत्र घ्राणपरः, वाचा हि नामान्यभिवदति जिह्वया हि रसान् विजानातीत्युत्तरवाक्यानुगुण्यात् । तत्र तत्र यद्ग्रहत्वमतिग्रहत्वं चोक्तं तदेव च वाचा हि नामान्यभिवदतीति तत्तद्वाक्यशेषेणोपपाद्यते । अपानीयतेऽयम् अपानीयतेऽनेनेत्यवयवार्थभेदेन गन्धपरता घ्राणपरता चापानशब्दस्योपपद्यते । यद्वा—अपानमपश्वासः, तेनाकृष्यमाणत्वादपानशब्देनोपचर्यते गन्धः, अपश्वासेनोपकृतस्यैव घ्राणस्याघ्राणसाधनतेत्यपानोपकार्यो घ्राण उपचर्यतेऽपानशब्देन । वाग्वै इत्यादि व्याख्यातप्रायम् । उक्ता ग्रहा अतिग्रहाश्च, तैरेतैः सर्वथाऽभिभूताः कृत्याकृत्यविवेकविहीनाः पशव

इव परितः प्रवर्तमानाः पापोपसञ्चयशीला भवन्ति, ये तु—अनपेत-कामना ग्रहोपग्रहगोचरा अपि चोदनावशगा यथाचोदनं चेष्टन्ते तेऽमी यजमानाः पुण्योपसञ्चयशीला भवन्ति। अन्य एव तु ते ये लेशतोऽपि ग्रहोपग्रहगोचरा न भवन्त्यकामाः ॥२—९॥

याज्ञवल्क्येति होवाच यदिदꣳ सर्वं मृत्योरन्नं
का स्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै
मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति ॥१०॥

अथापमृत्युजयोपायः प्रश्नप्रतिवचनाभ्यां निरूप्यते—याज्ञवल्क्येति। सर्वमिदमेकस्य मृत्योरन्नं भवति, स मृत्युर्यस्या अन्नं भवति का सा देवता, एवं पृष्टो याज्ञवल्क्य आह—अग्निर्वै मृत्युर्यस्य सर्वमिदमन्नं भवति, स चाग्निरपामन्नम्, सर्वस्यास्य दाहकोऽग्निरद्भिरुपशाम्यति। तदपामग्न्यन्नकत्वोपासनेनापमृत्युं जयति, अग्न्यादिभिरपमृत्युर्न तस्योपासकस्येति यावत् ॥१०॥

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत
उदस्मात्प्राणाः क्रामन्त्याहो ३ नेति नेति
होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स
उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते ॥११॥

यदाऽयं पुरुषो मृत्युवशगो म्रियते तदा अस्मात् पुरुषात् जीवात् प्राणाः क्रामन्ति—यथायथमपसर्पन्ति उत नेति, इतर आह—नेति न यथायथं गच्छन्ति, किन्त्वत्रैव पुरुषे शरीरान्निष्क्रामन्ति समवनीय-

न्ते—संयोज्यन्ते । ननु शरीरान्निष्क्रान्तिरत्र प्रतिषिध्यते न शारीरात्, नैतत् । यदाऽयं पुरुषो म्रियते तदा शरीरात्प्राणा निष्क्रामन्त्येव, तत् नेति प्रतिषेधः कथं घटेत । ननु विदुषमधिकृत्यायं प्रश्नः, नैतद्युज्यते, अविदुषो हि प्रकरणमेतत्, उत्तरत्रापि 'कर्म हैव तदूचतुः ××× पापः पापेने'ति श्रूयते । पूर्वमपि 'अपमृत्युं जयती'ति । आर्तभागब्राह्मणमिदमुपक्रमोपसंहारपर्यालोचनयाऽविद्वद्विषयकमेव सिद्ध्यति । ग्रहातिग्रहप्रश्नोऽपि न तद्विमुक्त्युपायज्ञापनाय प्रवर्तते । तथासति 'सर्वं मृत्युनाऽऽप्तं ×× केन यजमानो मृत्योराप्तिमतिमुच्यते' इतिवत् 'सर्वो ग्रहैराप्तः ×× केन ग्रहाणामाप्तिमतिमुच्यते' इति श्रूयेत । पुण्यापुण्यहेतुभूतग्रहातिग्रहस्वरूपमात्रं पृष्टम्, उपसंहारे च तत्प्रयोज्येन कर्मणोपसंहारः, कथमेवंसत्यस्य प्रश्नस्य विद्वद्विषयताश्रयणमुपपद्येत । ननु—'मृत्युर्यस्योपसेचनम्' इति श्रुत्यन्तरतः प्रतीयमानं परब्रह्माधिकृत्य 'यदिदं सर्वं मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरन्नं' इति प्रश्नः श्रूयते नाम । नैतत्, नायं प्रश्नो ब्रह्माधिकृत्य प्रवर्तते । अग्निर्वै मृत्युः सोऽपामन्नमिति ह्युत्तरम्, अभ्यन्नकलेनापामुपासनात्फलं कीर्त्यते 'अपपुनर्मृत्युं जयती'ति । नात्र संसारलक्षणमृत्युसन्तरणम् । ननु ग्रहा अतिग्रहाः प्राक् निरूपिताः, यैरिन्द्रियैर्ग्रहैर्यैर्विषयैरतिग्रहैश्चायं बन्धः, तद्विमोचनं यद्विज्ञानात्, तस्य मृत्योरपि मृत्युभूतस्य परस्य ब्रह्मणो ज्ञापनाय चैव 'का स्वित्सा देवता यस्या मृत्युरन्न'मिति प्रवृत्तम्, तद्विज्ञानफलेन मृत्युजयेन संसारलक्षणमृत्युजयेन भाव्यमिति । नैतत् । तथासति ग्रहानतिग्रहांश्च जयतीति श्रूयेत । ननु

१ आरम्भे श्रूयमाणस्य ग्रहातिग्रहव्याख्यानस्य प्रधानलिङ्गत्वाश्रयणे ।

मृत्योर्मृत्युरव्यवहितं प्रसक्त इति तथा श्रुतिरिति चेत्, तर्हि मृत्योरपि मृत्योरयं प्रश्नोऽन्यार्थमधिकरोतीत्येवाभ्युपगन्तव्यम्, अन्यथा ग्रहातिग्रहेभ्यः कथमतिमुच्यत इति प्रश्नेन भाव्यम् । ननु ग्रहातिग्रहौ मृत्युः, तस्यापि मृत्युः केत्येव प्रश्नः, तर्हि 'मृत्युर्यस्योपसेचन'मिति श्रुत्यन्तरेणैकार्थ्यसमाश्रयणं न युज्यते । सर्वथा 'अग्निर्वै मृत्युः सोऽपामन्नम्' इत्युत्तरं नैव घटेत । मृत्योर्मृत्योरसंभवमाशङ्कमानस्येदमुत्तरं लोकतो निदर्शयितुं प्रवर्तते इति व्याख्यानं विगुणम्, प्रधानार्थपरित्यागात्, अनेन निदर्शयितव्यं यत्, यदेव चाधिकृत्य प्रश्नः, तद्धि न निरूपितम् । नच तदसम्भवाशङ्काऽत्र, यत्परिहाराय निदर्शनं लौकिकमपेक्ष्येत, मृत्युर्यस्या अन्नं सा केत्यवधारणायैव प्रवर्तते, न तत्प्रतिक्षेपाय, तदसम्भवाशङ्कायां वा कथमिदं लौकिकं निदर्शनं भवितुमर्हति, चराचरस्यात्ता मृत्यूपसेचनको नहि लौकिकेनानेन निदर्शनेन सिध्येत् । तत् ग्रहातिग्रहप्रसङ्गमात्रेण बन्धस्वरूपतद्विमोचनोपायज्ञापनपरतया ग्रहातिग्रहप्रश्नमृत्युविशेषप्रश्नयोरन्वयवर्णनं नैवोपपद्येत । तथा चास्य प्राणोत्क्रमणप्रश्नस्य प्रकरणपर्यालोचनया विद्वद्विषयत्ववर्णनं नैवोपपद्येत । 'यत्रायं पुरुषो मृतः शेते' इत्यस्य सामान्यवचनस्य विशेषपरताश्रयणमपि विगुणम् । ननु—'अस्मात्प्राणा नोत्क्रामन्ति अत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' इति यः प्रतिषिध्यमानप्राणोत्क्रान्त्यपादानतया इदंशब्दनिर्दिष्टः समवनयनाधारतया चात्रेति निर्दिष्टस्तस्मिन्नेवोच्छ्वयनादिशारीरधर्मः श्रूयते, स इत्यस्य अस्मादत्रेति पूर्वनिष्ठाभ्यामनन्यार्थकत्वात् । नैतत् । 'उदस्मात्प्राणाः क्रामन्त्याहो ने'त्यत्रेदंशब्दो हि पूर्वप्रकृतपरः, पूर्वं च

'यत्रायं पुरुषो म्रियते' इति पुरुषशब्दः श्रूयते, स च जीवपरः, न चायं शब्दः शिरःपाण्यादिलक्षणपिण्डविशेषपरः, 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राण'इत्युत्तरवाक्ये 'पृथिवीं शरीर'मिति पृथक् पुरुषप्रतिसंबन्धितया शरीरमुच्यते, तत् पुरुषशब्दस्य जीवपरतैव । तस्मात् 'स उच्छ्वयती'ति निर्देशः शरीरशरीरिणोरभेदोपचारात् प्रवर्तते । विद्वद्विषयत्वेऽपि शारीरादेव प्राणानां विश्लेषः प्रतिषिध्यते, न तु शरीरात् । अत्रैवोत्तरत्र 'अथाकामयमानः ××× न तस्य प्राणा उत्क्रामन्ति' इति शारीरादुत्क्रामः प्रतिषिध्यते । अन्यत्र समानप्रकरणे 'न तस्मात् प्राणा उत्क्रामन्ती'ति च । अयमेवार्थः सूत्रेऽपि समर्थितः 'प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम्' इति । अत्र वक्तव्यमग्रे वक्ष्यामः । स उच्छ्वयतीत्यादि व्याख्यातप्रायम् ॥११॥

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति नामेत्यनन्तं वै नामानन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ॥१२॥

पुनरन्यत्पृच्छति—याज्ञवल्क्येति । यदाऽयं पुरुषो म्रियते तदैनं किमिह न जहाति, तदनुबन्धिषु बाह्येषु सर्वमेवैनं जहाति, अथ तेषु किं न जहाति । एवं पृष्टो याज्ञवल्क्य आह—नामेति । युधिष्ठिरः पार्थः कर्ण इति यन्नाम तत्त्वेनमिह न जहाति, अनन्तं वै नाम, शरीरे नष्टेऽप्यनष्टं नाम त्विह मृतमप्यनुवर्तयति बुद्धिपथे । पुण्यं पापं वा सर्वमान्तरमनुगच्छति मृतं पुरुषं, अथ तदनुबन्धिनोऽपि बाह्यपदार्थास्तमपहायाननुबद्धास्तेन नश्यन्त्यल्पेन कालेन, नाम तु

चिरमनुवर्तते अनुवर्तयति च तम् । नामाभिमानिनो विश्वेदेवा ह्यनन्ताः । य एवं नामानन्त्यं वेत्ति स तेन वेदनेनानन्तं लोकं जयति । आनन्त्यमिदमापेक्षिकम् ॥१२॥

याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीꣳ शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीत्याहर सोम्य हस्तमार्तभागावामेवैतस्य वेदिष्यावो न नावेतत् सजन इति तौ होत्क्रम्य मन्त्रयाञ्चक्राते तौ ह यदूचतुः कर्म हैव तदूचतुरथ यत्प्रशशꣳसतुः कर्म हैव तत्प्रशशꣳसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति ततो ह जारत्कारव आर्तभाग उपरराम ॥१३॥

अथ पुनः पृच्छति—याज्ञवल्क्येति । मृतस्यास्य पुरुषस्य वागादिकमग्न्यादिकमप्येति—अनुविशति, अप्ययोऽत्र न लयः, उपादाने हि लयः, न चाग्न्यादेर्वागादेश्चोपादानोपादेयभावः । किन्तु वागाद्यभिमानिदेवतानां तत्तदधिष्ठानलक्षणव्यापारविशेषोपरतिपूर्वकं स्वासाधारणाग्न्यादिरूपेण संस्थितिरेव तत्र तत्राप्ययः । एवं सर्वेष्वस्योपकरणेष्वप्ययं गतेषु पुरुषोऽयं क्व तदा भवति—किमाश्रयो भ-

वति। केनाश्रयेणायं पुनः कार्यकारणसङ्घातलक्षणं देहमुपगृह्णाति। एवं पृष्टो याज्ञवल्क्य आह—अयमर्थो जल्पमार्गेण नावबोधनमर्हति, आहर हस्तम्, इतो जनसमाजादपसृत्यावामेव रहसि विचारयावः, नौ—आवयोर्विचार्यमेतद्वस्तुतत्त्वं सजने न निर्णयार्हम्। अत्र विप्रतिपद्यन्ते हि स्वभावयदृच्छाकालादिवादिनो विविधा वादिनः। इत्युक्त्वा तौ तत उत्क्रम्य रहसि मन्त्रयाञ्चक्राते—विप्रतिपन्नेऽस्मिन् कः पक्षो न्याय्य इति विचारितवन्तौ। विचार्य निर्णयेन यदूचतुः कर्मैव तदूचतुः, अथ कर्मैव प्रशशंसतुः—पुण्यपापलक्षणं कर्मैवास्याश्रयभूतम्, तदेवायमाश्रित्य पुनरयं कार्यकारणसङ्घातलक्षणं वपुरुपादत्ते, इति कर्माश्रयपक्षमेव प्रशशंसतुः। तस्मात्पुण्येन कर्मणा पुण्यो भवति—देवो मनुष्यो वा, पापेन कर्मणा पापो भवति—सिंहो वा वृको वराहो वा। याज्ञवल्क्येनैवमुक्ते आर्तभाग उपरराम ॥१३॥

इति तृतीयाध्याये द्वितीयं ब्राह्मणम्।

---

अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्यव्रजाम ते पतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्सुधन्वाऽऽङ्गिरस इति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन् स त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति ॥१॥

पुण्येन पुण्यो भवतीत्युक्तम्, प्रकृष्टेन पुण्येन प्रकृष्टो लोकः सिध्येदिति न्यायसिद्धमेतत्। तत्र पुण्यफलेषु लोकेषु मानुषादिषूत्तरोत्तरमुत्कृष्टेषु केनचिदवधिना भाव्यम्, यतो नोपरि पुण्यानां गतिः, य एव पुण्यगतिसीमाभूमिः, तद्बोधनायेदं ब्राह्मणं प्रवर्तते। अथोपरते आर्तभागे लभस्य गोत्रापत्यं यो लाह्यस्तस्यापत्यं लाह्यायनिर्नाम्ना भुज्युः पप्रच्छ—अहमन्ये च सब्रह्मचारिणो वयं पुरा चरकाः—अध्ययनार्थव्रताचरणपराः मद्रेषु देशेषु पर्यव्रजाम, तत्र ते वयं काप्यस्य नाम्ना पतञ्चलस्य गृहान् जातु गतवन्तः, तस्य दुहिता गन्धर्वेण केनचिदमानुषेण गृहीता—आविष्टा आसीत्, तमपृच्छाम कोऽसीति, सोऽब्रवीत् गोत्रत आङ्गिरसो नामतः सुधन्वाऽहमसीति। तं वयं लोकानामन्तान् पुण्यलोकानामन्तान् पर्यवसानभूतान् सामान्यतो लोकानां वाऽन्तान् यदाऽपृच्छाम तदेदमप्यब्रूम क पारिक्षिता अभवन्निति पुण्यगतिकाष्ठाविज्ञानाय। सोऽहं गन्धर्वाद्विशिष्टविज्ञानाद्गुरोः प्राप्ततद्विज्ञानस्तदेवाधिकृत्य त्वां पृच्छामि याज्ञवल्क्य जानासि चेत्कथय क पारिक्षिता अभवन् इति।

स होवाचोवाच वै सोऽगच्छन्वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति क न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिꣳशतं वै देवरथाह्न्यान्ययं लोकस्तꣳ समन्तं पृथिवी द्विस्तावत्पर्येति ताꣳ समन्तं पृथिवीं द्विस्तावत्समुद्रः पर्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिका-

याः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनोऽभवन्नित्येवमिव वै स वायुमेव प्रशशꣳस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद ततो ह भुज्युर्लाह्यायनिरुपरराम ॥२॥

एवं पृष्टः स याज्ञवल्क्य उवाच—स गन्धर्वो युष्मांस्ते पारिक्षिता यत्राश्वमेधयाजिनो गच्छन्ति तत्रागच्छन्निति तदेतदुवाच वै, अत्र प्रश्ने गन्धर्वेणोक्तमिदमेव खल्वित्याशयः । एवं याज्ञवल्क्येन सङ्क्षिप्य दत्तोत्तरो भुज्युः पुनः पप्रच्छ—क न्वश्वमेधयाजिनो गच्छन्तीति । यं देशं गच्छन्ति येन प्रकारेण येन पथा तदिदं सर्वमाह—द्वात्रिंशतमित्यादिना । देवरथस्य सूर्यरथस्य गत्या एकेनाह्वा यावत्परिमाणं परिच्छिद्यते तावत् देवरथाह्न्यमुच्यते, सूर्यरथो दिनेनैकेन यावत्परिमितं गच्छेत्तावत्परिमाणस्यायं निर्देशो देवरथाह्न्यमिति, द्वात्रिंशतं देवरथाह्न्यान्ययं लोकः, द्वात्रिंशद्गुणितदेवरथाह्न्यपरिमाणपरिमितोऽयं लोकः, तमिमं लोकं परितस्ततो द्विगुणपरिमाणा पृथिवी पर्येति, तां पृथिवीं परितस्ततो द्विगुणपरिमाणः समुद्रः पर्येति, एवंभूतेऽस्मिन् भुवनकोशे येन विवरेण विनिष्क्रम्याश्वमेधयाजिनो देशविशेषं व्याप्नुवन्ति तत्परिमाणस्येदं निदर्शनं यावती क्षुरस्य धारा स्यात् यावद्वा मक्षिकायाः पत्रं तावत्परिमितोऽतिसूक्ष्म आकाशः—छिद्रविशेषोऽण्डकपालयोरन्तरेण—मध्ये वर्तते, तेन विवरेण देशविशेषं गच्छतस्तान् इन्द्रः स्वयं सुपर्णः पक्षी

वाहनं भूत्वा समानाय्याथ स्वयमसमर्थो वायवे प्रायच्छत्, अथ वायुस्तान् स्वात्मनि धित्वा स्थापयित्वा तत्रागमयत्, यत्र देशेऽश्वमेधयाजिनो गच्छन्ति । हे भुज्यो एवमिव स गन्धर्वो वायुमेव पारिक्षितगतिप्रापकतया ( परमपुण्यगतिप्रापकतया ) प्रशशंस, तस्मात् वायुरेव व्यष्टिः—आब्रह्मभुवनान्तव्यष्टिधारकतया, सूत्रात्मना समष्टिधारकतया च वायुरेव समष्टिः । स्तुतिरियं वायोः । यो वायुमेवं व्यष्टिसमष्ट्यात्मनोपास्ते स पुनरपमृत्युं जयति । अथ प्राप्तप्रश्नोत्तरोऽधिकं प्रष्टुमजानन् भुज्युरुपरराम ॥२॥

इति तृतीयाध्याये तृतीयं ब्राह्मणम् ।

---

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तरो यो व्यानेन व्यानिति स त आत्मा सर्वान्तरो य उदानेनोदानिति स त आत्मा सर्वान्तर एष त आत्मा सर्वान्तरः ॥१॥

अथैनं कर्मविचारेऽजय्यं विनिश्चित्य ब्रह्मविचारे विजिगीषया नाम्नोपस्तश्चक्रस्य गोत्रापत्यं प्रथमं याज्ञवल्क्येत्येनमभिमुखीकृत्येदं

पप्रच्छ—यत् साक्षात् ब्रह्म—मुख्यं ब्रह्म, ब्रह्मशब्दमुख्याभिधेयमिति यावत्, अपरोक्षात्—अपरोक्षं च, देशतः कालतो वा द्रष्टुरव्यवहित-मिति यावत्, परोक्षं हि व्यवहितम्, सर्वस्यास्यान्तर आत्मा च भवति तं मे व्याचक्ष्व—विविच्याचक्ष्व स्पष्टं ब्रूहि इति। एवं पृष्टो याज्ञवल्क्य आह—ते आत्मा य एषः, स एव सर्वान्तर आत्मा, न त्वम्, किन्तु यस्ते आत्मेतीह निगूढं हार्दम्, न दृष्टेर्द्रष्टारमित्युत्त-रवाक्येन पराक्षेपप्रतिक्षेपेण प्रकाशयिष्यते। एष इति सन्निहितनि-र्देशः, हृदयपुण्डरीके ह्येष सन्निहितः, ते आत्मेत्यपरोक्षस्वभावस्फो-रको निर्देशः, स्वात्मा परोक्ष इति हि विप्रतिषिद्धम्, अहंग्रहसीमाभू-मिर्ह्येषः, असंस्कृतदृष्टयः पामराः पिण्डमात्रमहंग्रहगोचरं मन्यन्ते, त्रयीविज्ञानसंस्कृतचेतसः पिण्डादान्तरं विज्ञानमयमहंग्रहगोचरं प-श्यन्ति, त्रय्यन्तविज्ञानसुसंस्कृतदृष्टयस्तु तस्याप्यान्तरं सर्वान्तरमा-त्मानमहंग्रहसीमाभूमिं पश्यन्ति, तत् यदिदमहमित्यात्मनोऽपरोक्षं तस्य प्रधानगोचरता स्यादेवास्मिन्नात्मनि, कर्मणा तिरोधानमात्रेण न परोक्षता, वस्तुस्वरूपं हि स्वतोऽपरोक्षमेव। अनिर्धारितार्थं वचनमि-दमनुत्तरं मन्वान उषस्तः पुनः पप्रच्छ—कतमो याज्ञवल्क्य स सर्वान्त-रः—सर्वान्तरात्मानं पृष्टो यं ब्रूषे एष ते आत्मेति, कतमोऽयम्, अनि-र्धारितार्थं हि ते आत्मेति वचः, किमयं स्थूलः पिण्डविशेषः, उता-न्तरः सूक्ष्मोऽपरो भूतसङ्घातः, किं प्राणविशेषः किंवाऽन्यस्ततोऽप्या-भ्यन्तरः, अवधार्य ब्रूहीति। अथ याज्ञवल्क्य आह—यः प्राणे-नेत्यादि। प्राणादिपञ्चवृत्तेर्मुख्यप्राणस्य येऽसाधारणाः प्राणनादिव्या-

---

१ अहंग्रहसीमाभूमित्वं मुख्यमपरोक्षत्वमित्यभिप्रायेणाह—अहंग्रहेति।

पाराः, तेषां यः कर्ता स्वतन्त्रो[1]ऽनन्यापेक्षो निर्वाहकः स ते आत्मा सर्वान्तरः। जीवस्तु न तथा, सुषुप्तिसमये सति विलीनस्य तस्य न तत्र कर्तृत्वप्रसङ्गोऽपि, प्राणेन स्वशरीरभूतेन द्वारेण प्राणिति-प्राणनव्यापारस्य कर्ता भवति, इति वा शब्दार्थः ॥१॥

स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारꣳशृणुयान्न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तं ततो होषस्तश्चाक्रायण उपरराम ॥२॥

इदं हार्दमुत्तरस्य निगूढमनालक्ष्य प्राणादिभिः करणैः प्राणनादिव्यापारस्य कर्ता विज्ञानमयो जीव इत्यवधार्य वचनार्थमुषस्त आक्षिपति—यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्वेति मया पृष्टे यत्त्वं ब्रवीषि एष ते आत्मा सर्वान्तर इति तद्धि विप्रतिषिद्धम्, यथा कश्चिद्विब्रूयात्—विरुद्धं ब्रूयात् असौ गौरसावश्व इति, नहि गौरश्वो भवितुमर्हति, तथा एष ते आत्मा सर्वान्तर इति विब्रवीषि, न हि मे आत्मा सर्वस्यात्मा भवितुमर्हति, जीवो ह्येषः, प्राणैः

---

१ स्वतन्त्रः कर्तेति कर्तृलक्षणमभिप्रेत्य कर्त्राख्याताशयं प्रदर्शयति—स्वतन्त्र इति।

प्राणितीत्यपि तस्य संसरतः प्राणोपकरणस्यानुगुणम्, तद्विरुद्धं ब्रूहि कतमो याज्ञवल्क्य सर्वान्तरः । अथ याज्ञवल्क्य आह—ननु नाहं विब्रवीमि, यो निर्दिष्टो मया एष ते आत्मेति तं दृष्टेश्चाक्षुषस्य ज्ञानस्य द्रष्टारं साक्षात्कर्तारं न पश्येः, किन्तु तस्याप्यान्तरो योऽयमकरणायत्तसर्वसाक्षात्कारसम्पन्नोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता अन्योऽन्तर आत्मा विज्ञानमयात् तमेव मयोक्तं जानीहि । योऽसावदृष्टो द्रष्टा सर्वज्ञः सर्वान्तरस्तस्यापि प्रतिषेधो मा प्रसजत्विति द्रष्टारं न पश्येदित्यनुक्त्वा दृष्टेर्द्रष्टारमिति चाक्षुषेण ज्ञानेन कर्मणा विशेषितोऽयं निर्देशः । न श्रुतेः श्रोतारमित्याद्यप्येवमेव नेयम् । दृष्टेर्द्रष्टारं श्रुतेः श्रोतारं मतेर्मन्तारं विज्ञातेर्विज्ञातारं न पश्येः न शृणुया न मन्वीथा न विजानीथाः, तस्याप्यन्तरो यस्तवैष आत्मा सर्वान्तरः स एव द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, अयमेव च प्राणापानगतिनिर्वाहकः, श्रूयते चान्यत्र 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वे देवा उपासत' इति । एष ते आत्मा सर्वान्तर उक्तः, अतोऽन्यदखिलमार्तम्, न किमपि दुःखोच्छेदकरम् । अथ लब्धोत्तर उषस्त उपरराम ।

इति तृतीयाध्याये चतुर्थं ब्राह्मणम् ।

---

अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः

कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतस्तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्तं ततो ह कहोलः कौषीतकेय उपरराम ॥१॥

कुषीतकस्यापत्यं नामतः कहोलकः पप्रच्छ—यदेवेत्यादि। कतमो याज्ञवल्क्य सर्वान्तर इत्यन्तं पूर्वतोऽनतिरिक्तम्, ननूपदिष्टेऽर्थे कथं पुनः प्रश्नः, नच सर्वान्तरस्ततोऽन्य इह विवक्षितः, अनुपपन्नं ह्येतत्, न हि द्वौ सर्वान्तरौ स्याताम् । सत्यम् । स एव सर्वान्तर इहाप्युपदिश्यते, न च पौनरुक्त्यम्, तस्मिन्विशेषो ह्यनुक्त इहावबोध्यते, तदर्थमेवायमनुवादः 'कतमो याज्ञवल्क्य सर्वान्तर' इत्यन्तः । प्राणापानादिगतिनिर्वाहकत्वलक्षणमैश्वर्यं कल्याणगुणयोगोपलक्षकमुक्तम्, विजिघित्सत्वादिलक्षणं हेयप्रत्यनीकत्वमिहोच्यते इति पूर्वतो विशेषावबोधनेन विभेदः । तथाच पूर्वोत्तराभ्यामुभयलिङ्गत्वमुक्तं भवति । जीवव्यावृत्तिदार्ढ्याय पुनः प्रश्नोत्तरप्रवृत्तिः,

पूर्ववाक्यं हि जीवपरतयाऽपि कश्चित्प्रतिपद्येतेति व्यासार्थाः । योऽशनायापिपासाशोकमोहमृत्युवर्जितः स ते आत्मा सर्वान्तरः, त्वं ह्यशनायाद्यभिभूतः, यस्ते आत्मा स तु तद्विरुद्धस्वभावः, तवैव शरीरे निवसन्नपि न तैर्दोषैरनुषज्यते । जीवस्य विज्ञानमयस्य संसरतः प्राणादियोगादशनायादिहेयगुणयोगो भवति, अशितुमिच्छा अशनाया, पातुमिच्छा पिपासा, दुःखमूलतया दोषोऽयम्, न प्राणस्य जडस्यैष धर्मः, किन्तु प्राणसंयोगोऽत्र निमित्तम्, शोकः—अनिष्टमिदं मे समुपनिपतितमिति, तत्र मूलं मोहः—आत्मयाथात्म्यानवबोधोऽनात्मन्यात्मविभ्रमश्च, अयमपि विज्ञानमयस्यैव निमित्ततः समुपगतो धर्मः, निमित्तमत्र दुष्टं मनः, जरां मृत्युमिति तन्निमित्तौ महत्तरौ दुःखविशेषावुपचर्येते, साध्ये साधनोपचारः, जरया हि जीर्णकरणपाटवः शयनासनगमनादिषु महत्तरं दुःखमाप्नोति प्राणवियोगकाले चासह्यं दुःखम्, तैर्वर्जितोऽयम् । सोऽयमात्मा सर्वान्तरः साक्षादपरोक्षात् ब्रह्म । तमेतमशनायादिप्रत्यनीकं परमात्मानं सदाचार्यमुखादवगत्य एषणामात्रे दोषमनुपश्यन्तः पुत्रैषणाया वित्तैषणाया लोकैषणायाश्च व्युत्थाय ब्राह्मणा भिक्षाचर्यं चरन्ति । या दारैषणा सा पुत्रार्थैवेति पुत्रैषणायामेवान्तर्भवति । पश्वादिद्रव्यैषणा वित्तैषणा सा च कर्मैषणया, कर्म कुर्वन् हि पश्वादिद्रव्यमिच्छति, सा च कर्मैषणा लोकैषणया, स्वर्गादिलोकमिच्छन् हि कर्म करोति, एवं साध्यसाधनभेदेन भवत्येषणाप्रभेदो विविधः, सङ्गृह्य विचार्येत चेदेषणाद्वयमेव—फलैषणा साधनैषणा चेति, या पुत्रैषणा सा वित्तैषणैव पश्वादिना वित्तेनेव

पुत्रादिना वित्तेन सम्पन्नेन लोकान् फलमाप्नोति, तदिदमुभयं साधनमिति साधनैषणेत्येकैवैषणा, सा च वित्तैषणा साधनैषणात्मिका फलभूतलोकैषणानियतैव, तत् फलैषणा साधनैषणेत्युभे ह्येवैषणे भवतः। फलैषणातो व्युत्थितो व्युत्थित एव सर्वैषणातः, एवंभूता ब्राह्मणा भिक्षाचर्यं चरन्ति—पारिव्राज्यं प्रविशन्तीति यावत्। ब्राह्मणा एव परिव्रजेयुर्नान्य इति नियमज्ञापनाय ब्राह्मणा इति पदम्। ननु—आत्मानं विदित्वा व्युत्थायैषणाया भिक्षाचर्यं चरन्तीति श्रवणादाश्रमान्तरे वर्तमानस्यानधिकारो ब्रह्मविद्यायां गम्यते। नैतत्। श्रूयते हि छान्दोग्ये ब्रह्मविद्याधिकृतस्य गृहस्थाश्रमे स्थितिः—'अभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः धार्मिकान् विदधत् आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तत' इति। श्रुतिद्वयपर्यालोचनयाऽयमर्थः सिद्धः—तमेतमात्मानं विदित्वा व्युत्थाय सर्वैषणाभ्यः कतिचन परित्यक्ताग्नयः पारिव्राज्यं प्रविशन्ति, कतिचनापरित्यज्यैवाग्निं 'ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुत'मिति विहितया ब्रह्मदृष्ट्या विहितं कर्मानुतिष्ठन्तो ब्रह्मविद्यां सुदृढयन्ति। तस्मात्—यस्मादीषणान्वये न शोकमोहाद्यपगमः, न वाऽशनायाद्यतीतात्मस्वरूपलाभस्तस्मात्तदवाप्तये व्युत्थित ईषणातः पाण्डित्यं—श्रवणमननाभ्यां परिपूर्णं परब्रह्मयाथात्म्यावबोधं प्राप्य बाल्येन बाल्यसहजावस्थाविशेषेणानहङ्कारित्वलक्षणेन तिष्ठासेत्, स्वमहिमख्यापनराहित्यलक्षणेनानहङ्कारित्वेनोपलक्षितस्तिष्ठेत्। पाण्डित्यं बाल्यं च निर्विद्याथ

मुनिर्भवेत्—मननशीलो भवेत्, उपास्यशुभाश्रयमननशीलो भवेत्, इदं च मननं श्रवणानन्तरोपादेयादन्यत्प्रणिधानलक्षणविद्यानिष्पत्ते-र्हेतुभूतमुपासनानुष्ठानसमयतोऽन्यत्र गमनशयनादिष्वप्यनुवर्तमान-मालम्बनशुभाश्रयसंशीलनम् । तदिदं पाण्डित्यबाल्याभ्यां तृतीयमिह विधीयते । उक्तलक्षणान्मौनादन्यदमौनं पाण्डित्यं बाल्यं च सहका-रिद्वयं तृतीयं च मौनं सहकारि प्राप्याथ ब्राह्मणो भवति—ब्रह्मदर्शी भवति, तस्यास्य ब्रह्मापरोक्षलक्षणब्रह्मविद्यानिष्पत्तिर्भवतीति यावत् । केनान्येनोपायेन तथाविधो ब्राह्मणः—ब्रह्मदर्शी स्यात्, इतोऽन्यः कोऽप्युपायोऽस्ति ब्रह्मापरोक्षे इति प्रश्नाशयः । नेत्याह—येनेति । येनोपायेन स्यात्तेनेदृक्प्रकार एव स्यात्, ईदृक्प्रकार एवोपायः, नान्य इति भावः । यद्वा—स ब्रह्मदर्शी केनाचारेण स्यात्, केनाचरणेन स लक्ष्येत?, येन स्यात्तेनेदृश एव—नास्य कश्चिदाचारो बाह्यो विलक्षणो लक्ष्येत, येन वर्णाचारेणाश्रमाचारेण वा युक्तः स्यात्तेनेदृश एव ब्रह्मविदेव । असदाचारस्य तु नात्मदर्शिनि प्रसङ्गः । अतोऽशनाया-द्यतीतादात्मनोऽन्यदार्तम्—दुःखप्रचुरम् । तत उपरराम कहोलः ।

इति तृतीयाध्याये पञ्चमं ब्राह्मणम् ।

---

अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदꣳ सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नु

खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि मातिप्राक्षीर्मा ते मूर्धा व्यपप्तदनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि मातिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम ॥१॥

अथ गर्गस्य गोत्रापत्यं नाम्ना वाचक्नवी याज्ञवल्क्यमेनं पप्रच्छ । यदिदं सर्वं पार्थिवं दृश्यते, सर्वमेवैतदप्स्वोतं च प्रोतं च समुपलभ्यते, अन्यथा हि विशरणस्वभावं विशीर्येत, तत् स्थूलं भौतिकमखिलं सूक्ष्मे कारणे भूते गुणमये ओतप्रोतं तेनावधृतं वर्तत इति दृष्टः साहचर्यनियमः, तदनेनानुमानेन गम्यते अद्भिरप्यन्यत्र

भूते सूक्ष्मे ओतप्रोताभिर्भाव्यमिति, तत् पृच्छामि त्वाम्—कस्मिन्नु खल्वाप ओताश्च प्रोताश्च । एवमानुमानिकः प्रश्नोऽत्र प्रवर्तते । याज्ञवल्क्य आह—वायौ गार्गीति । ननु तेजसीति वक्तव्यम्, तद्ध्यपामव्यवहितपूर्वम् । सत्यम् । पञ्चीकृतं स्थूलं पार्थिवमिह प्रकृतम्, लोकाश्चोत्तरत्राधारतया निरूप्यमाणा आब्रह्मलोकात् पञ्चीकृतभूतविशेषा एव, तन्मात्रापञ्चीकृतभूतानां कारणक्रमानुसारिता, पञ्चीकृते चाग्नौ परिदृश्यमाने नापामोतप्रोतता घटेत, पार्थिवमापो वेन्धनमाश्रित्यैव तु स प्रज्वलति । कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यादि न तिरोहितार्थम् । अन्तरिक्षलोकप्रभृतिषु ब्रह्मलोकपर्यन्तेषु गुणमयेषु पूर्वपूर्वाधारतया निरूपितेषु 'ते ब्रह्मलोकाः कस्मिन्नोताः प्रोता' इति पृष्टो याज्ञवल्क्यो गुणेभ्योऽतीतं शब्दैकसमधिगम्यमानुमानिकमुखेन प्रश्नप्रतिवचनानर्हं परिप्रश्नोपदेशेन चैवाधिगन्तव्यं मत्वा प्राह—मातिप्राक्षीरिति । हे गार्गि तवायं प्रश्नः क्रममतिक्रम्य प्रवर्तते, न हि तर्कबलसमुत्प्रेक्ष्यमितः परं यद्वक्तव्यम्, परिप्रश्नार्हां देवतामतिप्रश्नेन पृच्छसि अनतिप्रश्न्या हीयं देवता—उपसदनादिनियमातीततार्किकप्रश्नानर्हा । स्त्रीजातिश्चासि त्वम्, ब्रह्मविदां सदसि न स्त्रीणामधिकारो विजिगीषया ब्रह्मप्रश्ने । अनेनातिप्रश्नेनापराधेन मा ते मूर्धा व्यपप्तत्—मूर्धा मा पततु । तन्मातिप्राक्षीः । एवमुक्त्वा गार्गी वाचक्नव्युपरराम ।

इति तृतीयाध्याये षष्ठं ब्राह्मणम् ।

---

अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञ-

मधीयानास्तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत् कबन्ध आथर्वण इति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तद्भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकꣳ सर्वाणि च भूतानि योऽन्तरो यमयतीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तं भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्स भूतवित्स आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वाꣳस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तं चान्तर्यामिणमिति यो वा इदं कश्चिद्ब्रूयाद्वेदवेदेति यथा वेत्थ तथा ब्रूहीति ॥१॥

ब्रह्मलोकपर्यन्ता उत्तरोत्तरमाधारभूता निरूपिताः, आब्रह्मस्तम्बपर्यन्तस्य सर्वस्यास्याधारभूतं परमं तत्त्वमत्र निरूप्यते । अथैनमरुण-

स्यापत्यं नाम्नोद्दालकः पप्रच्छ—हे याज्ञवल्क्य ! अहमन्ये सब्रह्मचारिणश्च वयं पुरा कपेर्गोत्रापत्यस्य पतञ्चलस्य गृहेषु यज्ञशास्त्रमधीयाना अवसाम, तस्य काप्यस्य भार्या गन्धर्वेणाविष्टा आसीत् । तं वयं कोऽसीत्यपृच्छाम, सोऽब्रवीत् नाम्ना कबन्धः अथर्वणः पुत्रोऽहमिति, अथ स गन्धर्वः पतञ्चलं काप्यमन्यांश्च याज्ञिकानब्रवीत्, हे काप्य ! अपि वेत्थ तत्सूत्रं येनायं लोकः परो लोकः सर्वाणि चाब्रह्मस्तम्बपर्यन्तानि भूतानि सूत्रेण पुष्पाणीव सन्दृब्धानि भवन्तीति, काप्य आह—नाहं भगवंस्तत्सूत्रं वेदेति, अथ स गन्धर्वः पुनरब्रवीत् काप्यमन्यांश्च याज्ञिकान्, अपि वेत्थ तमन्तर्यामिणं य इमं लोकं परं च लोकं सर्वाणि भूतान्यन्तरो यमयति स्वे स्वे व्यापारे इति, स काप्योऽब्रवीत् नाहं भगवंस्तमन्तर्यामिणं वेदेति । अथ स गन्धर्वस्तस्य विनयोपेतं वचनमुपश्रुत्य यस्तत्सूत्रं तं चान्तर्यामिणं इति—उक्तेन सर्वलोकसर्वभूतसूत्रत्वेन प्रकारेण सर्वलोकसर्वभूतान्तर्यामित्वेन प्रकारेण (यथाक्रमं) वेद स ब्रह्मवित्स लोकवित् स देववित् स वेदवित् स भूतवित् स आत्मवित् स सर्ववित्, इति सूत्रान्तर्यामिवेदनं स्तुत्वा तेभ्यः काप्यप्रभृतिभ्योऽसभ्यं समुपादिशत्तत्सूत्रं तमन्तर्यामिणं च । नेदं सूक्ष्मं तर्कैकावलम्बिभिरधिगन्तुं शक्यम्, अपित्वाचार्योपदेशेनैव, तदहमुपदेशतो वेद, त्वं चेत्तत्सूत्रं तं चान्तर्यामिणमाचार्यतोऽविज्ञाय केवलं लोभेन ब्रह्मविदां गा इमा उदजसे—नयसि मूर्धा ते विपतिष्यति—स्यादनर्थं इति । अथ याज्ञवल्क्य आह—जानाम्यहं तत्सूत्रं तं चान्तर्यामिणमिति । ( गौतमेति गोत्रत उद्दालकस्य संबोधनम् ) उद्दालकः आह—यः कश्चित्प्राकृतो ह्येवं ब्रूयाद्वेदाहं वेदाहमिति वचनम्, किमनेन वचनेन, यथा वेत्थ तथा ब्रूहीति ॥१॥

स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रँसिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण सन्दृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ॥२॥

एवं पृष्टो याज्ञवल्क्य आह—हे गौतम यत्सूत्रं त्वं पृच्छसि वायुर्वै तत्, विशिष्टो वायुरयम्, येन सूत्रात्मनाऽनेन वायुनाऽयं लोकः परो लोकः सर्वाणि भूतानि सन्दृब्धानि भवन्ति, तस्मादेव समुत्क्रान्तप्राणं पुरुषमाहुरस्याङ्गानि सूत्राद्विश्लिष्टानि पुष्पाणीव व्यस्रंसिषत—विस्रस्तानीति, सूत्रेण वायुना ह्येष तदा विश्लिष्टः । तत् वायुना सूत्रेण सर्वाणीमानि सन्दृब्धानि । इतीदं वचनमुपश्रुत्य गौतम आह—एवमेवैतत् सूत्रस्वरूपम्, अथान्तर्यामिणं ब्रूहीति ॥२॥

यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥३॥ योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥४॥ योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं

योऽग्निमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥५॥
योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद
यस्यान्तरिक्षँ शरीरं योऽन्तरिक्षमन्तरो यमयत्येष
त आत्मान्तर्याम्यमृतः ॥६॥ यो वायौ तिष्ठन्वायोर-
न्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो
यमयत्येष त आत्मान्तर्याम्यमृतः ॥७॥ यो दिवि
तिष्ठन्दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो
दिवमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥८॥
य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद
यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त
आत्मान्तर्याम्यमृतः ॥९॥ यो दिक्षु तिष्ठन्दिग्भ्योऽ-
न्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दि-
शोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१०॥
यश्चन्द्रतारके तिष्ठँश्चन्द्रतारकादन्तरो यं चन्द्रता-
रकं न वेद यस्य चन्द्रतारकँ शरीरं यश्चन्द्रतारक-
मन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥११॥ य
आकाशे तिष्ठन्नाकाशमन्तरो यमाकाशो न वेद यस्या-
काशः शरीरं य आकाशमन्तरो यमयत्येष त आत्मा-

न्तर्याम्यमृतः ॥१२॥ यस्तमसि तिष्ठँस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१३॥ यस्तेजसि तिष्ठँस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिदैवतमथाधिभूतम् ॥१४॥ यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यँ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतमथाध्यात्मम् ॥१५॥

अथाह याज्ञवल्क्यः—यश्चेतनविशेषः पृथिव्यां तिष्ठन्, न केवलं वेद्यामिवाग्निः किन्तु तिले तैलवत्पृथिव्या अन्तस्तिष्ठन्, पृथिवीमन्तरो यमयति—न राजेव बाह्यो यमयति, किन्त्वन्तरो यमयति—धारणादिस्वकार्ये तां यमयति, अत एवास्य परमचेतनस्य पृथिवी शरीरं भवति, सोऽयमन्तर्यामी, एष एव तव ( ते इत्युपलक्षकम् ) मम सर्वेषामान्तर आत्मा अमृतः—आनन्दमयत्वान्निरतिशयभोग्यः। एवमुत्तरत्रापि बोध्यम्। इत्यधिदैवतमन्तर्यामिस्वरूपविवेचनं कृतम्। अथाधिभूतम्—अथ भूतेष्वन्तर्यामिस्वरूपविवेचनं क्रियते—यः सर्वेष्विति। अथाध्यात्मम्—शरीरान्तरुच्यते ॥३-१५॥

यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१६॥ यो वाचि तिष्ठन्वाचोऽन्तरो यं वाङ् न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१७॥ यश्चक्षुषि तिष्ठꣳश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१८॥ यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यꣳ श्रोत्रं न वेद यस्य श्रोत्रꣳ शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१९॥ यो मनसि तिष्ठन्मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥२०॥ यस्त्वचि तिष्ठꣳस्त्वचोऽन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥२१॥ यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानꣳ शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥२२॥ यो रेतसि तिष्ठन् रेतसोऽन्तरो यꣳ रेतो न

वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्तं ततो होद्दालक आरुणिरुपरराम ॥२३॥

यः प्राण इति । घ्राणोऽत्र प्राणः । व्याख्यातप्रायमितरत् । यो विज्ञाने इति । अत्र विज्ञानशब्दो जीवात्मपरः । शाखान्तरे समानप्रकरणे यो विज्ञाने इति स्थाने य आत्मनीति हि श्रूयते । सोऽयमन्तर्यामी परमात्मा नारायणः स्वशरीरभूतैः पृथिव्यादिजीवान्तैस्तैस्तैरदृष्टः सर्वेषां द्रष्टा अश्रुतस्तैः स्वयं सर्वेषां श्रोताऽमतोऽन्यैः (अपरिच्छिन्नत्वात्) स्वयं मन्ता सर्वस्य एवमविज्ञातो विज्ञाता । नान्य ईदृशो द्रष्टा श्रोता मन्ता विज्ञाता । एष नः सर्वेषामन्तर्याम्यमृतः । तस्मादस्मादन्यदखिलमार्तम्—दुःखप्रचुरम् । न निःश्रेयसायेत्येतत् । तत आरुणिरुद्दालक उपरराम ॥१६–२३॥

इति तृतीयाध्याये सप्तमं ब्राह्मणम् ।

---

अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥१॥

अथ वाचक्नवी याज्ञवल्क्यक्रोधाग्निभयात्पूर्वं समुपरता ब्राह्मणपराजयमसहमाना पुनः पृच्छन्ती याज्ञवल्क्यं प्रथमं प्रष्टुमनुज्ञां ब्राह्मणान् प्रार्थयते, ब्राह्मणानामनुज्ञया प्रष्टुं प्रवृत्तायां स्वस्यां याज्ञवल्क्यस्य क्रोधाग्निः सहसा न प्रसरेदिति। भगवन्तो ब्राह्मणाः! तमिमं याज्ञवल्क्यं द्वौ प्रश्नौ प्रक्ष्यामि, तौ प्रश्नगोचरावर्थौ चेदयं वक्ष्यति नैनं युष्माकं मध्ये कोऽपि ब्रह्मोद्यम्—ब्रह्मवादं प्रति जेता स्यात्। एवं प्रार्थिता ब्राह्मणा अवोचन्। अस्माभिरभ्यनुज्ञाताऽसि, पृच्छ गार्गीति ॥१॥

सा होवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ॥२॥

लब्धानुज्ञा वाचक्नव्युवाच—याज्ञवल्क्य शौर्ये प्रथितः काश्यो वैदेहो वा उग्रपुत्रः—शूराणां कुले जातः पुत्रः उद्गतज्यं धनुरधिज्यमारोपितज्यं विधाय बाणवन्तौ—बाणशब्दोऽत्र शराग्रे सन्धीयमानतीक्ष्णायःखण्डे लाक्षणिकः, तथाभूतौ सपत्नातिव्याधिनौ शत्रुहननसमर्थौ शरौ हस्ते गृहीत्वा शत्रुमुपतिष्ठेत्, एवमेवाहं द्वाभ्यां प्रश्नाभ्यामप्रतिसमाधेयाभ्यां त्वामुपोदस्थाम्—त्वत्समीपमुपगताऽस्मि, तौ मे ब्रूहि—उत्तरय जानासि चेत्, इति। तथोक्तो याज्ञवल्क्य आह—पृच्छ गार्गीति ॥२॥

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिꣳस्तदोतं च प्रोतं चेति ॥३॥

सा गार्ग्युवाच–याज्ञवल्क्य यदूर्ध्वं द्युलोकात्, यदवाक्–अधः पृथिव्याः, यच्च अन्तरा द्यावापृथिवी–मध्ये द्यावापृथिव्योः, ये चेमे द्यावापृथिवी, यच्चान्यत् भूतं भवत् भविष्यत्–कालत्रयपरिच्छिन्नमित्याचक्षते, तत्सर्वं कस्मिन्नोतं च प्रोतं च। पूर्वमनयाऽब्आदिक्रमेण लोकानां केवलमोतप्रोतता पृष्टा, इह तु कालपरिच्छिन्नस्य सर्वस्य कार्यस्योतप्रोततेति विशेषः। आरुणिकृतसूत्रप्रश्नेऽपि ये लोका लोकेषु यानि भूतानि तेषामेव सन्दृब्धता पृष्टा, उत्तरे च कालतः परिच्छिन्नो वायुरेव निर्दिष्टः सूत्रमिति। तदयं प्रश्नो विशिष्यते पूर्वतः॥३॥

स होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति ॥४॥

एवं पृष्टो याज्ञवल्क्य आह–हे गार्गि यदूर्ध्वं दिवो यदधः पृथिव्या यदनयोर्मध्ये ये चेमे यच्च भूतं भवत् भविष्यत् सर्वं तदखिलमाकाशे–अव्याकृताकाशे ओतं च प्रोतं च। सर्वस्य विकारवर्गस्य प्रकृतिभूतमेतत् ॥४॥

सा होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति ॥५॥ सा

होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिꣳस्तदोतं च प्रोतं चेति ॥६॥

सा गार्गी उवाच—यस्त्वं दुर्वचं मया पृष्टं व्यवचः—विस्पष्टमुक्तवान्, तस्मै ते नमः । इदं वचनमस्य विज्ञानप्रशंसार्थं । अपरस्मै प्रश्नाय धारयस्व आत्मानम्, अवहितो भवेत्येतत् । आह याज्ञवल्क्यः पृच्छ गार्गीति । सा द्वितीयं प्रश्नं करिष्यन्ती प्रथमप्रतिवचनं याज्ञवल्क्यमुखेन दृढयितुं प्रथममेव प्रश्नमनुवदति—यदूर्ध्वमित्यादि ॥५॥६॥

स होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ॥७॥

याज्ञवल्क्यस्तदेव प्रतिवचनमनुवदति—यदूर्ध्वमित्यादि । गार्गी पृच्छति—कस्मिन्नु खलु सः अव्याकृताकाशः सर्वस्य कार्यस्याधारतया प्रतिपादित ओतश्च प्रोतश्चेति । तस्यापि परमाश्रयः क इति प्रश्नाशयः ॥७॥

स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्र-

मवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन ॥८॥

एवं पृष्टो याज्ञवल्क्य आह—एतद्वै तत्–हे गार्गि यत्त्वं पृच्छस्यव्याकृतस्याकाशस्याप्याधारभूतं तदेतत्, एतदिति बुद्धिस्थस्य निर्देशः, किं तत्?, अक्षरम्–स्वरूपतः स्वभावतो वा कदाऽपि क्षरणराहित्यादक्षरमुच्यते, तदक्षरं निरूपयितुं प्रवृत्ता ब्राह्मणा–ब्रह्मविद ईदृशमभिवदन्ति, अस्थूलमनणु अह्रस्वमदीर्घम्–यदिह गुणमयं कार्यं कारणं वा स्थूलमणु दीर्घं ह्रस्वं वा समुपलभ्यते तेभ्योऽत्यन्तविलक्षणम्, तद्वैधर्म्यात्। अलोहितमस्नेहमरसमगन्धम्–रूपस्नेहरसगन्धैरग्न्यादिगुणैर्विवर्जितम्, अत एव ततोऽत्यन्तविसजातीयम्, ननु विसजातीयं चेदग्न्यादेरिदमलोहितत्वादेरस्तु च्छायासधर्मं तमःसधर्मं वा, नैतत् इदमच्छायमतमः–न तत्सधर्मं, न वायुसधर्मं नवाऽऽकाशसधर्मं स्पर्शशब्दविधुरं हि तत्, यदि वाय्वादितोऽविसधर्मं तर्हि सङ्गि स्यात्, नैतत्, असङ्गम्–निर्लेपस्वभावम्, ननु क्षेत्रज्ञसजातीयमेतत्, नेत्याह–चक्षुःश्रोत्रादिरहितमेतत्–चक्षुःश्रोत्रादिनिरपेक्षविज्ञानव्यापनस्वभावमेतत्, अतेजस्कमप्राणं च–भूतसूक्ष्मप्राणोपकरणरहितं चैतत्। अमुखम्–करचरणादीनामुपलक्षकम्, मुखमित्यग्रं वा लक्ष्यते, अग्रमूलादिपरिच्छेदरहितमित्येतत्, अमात्रम्–मात्रा अंशः, तद्रहितम्, मीयते अनेनेति वा मात्रा, तद्रहितम् अपरिमेयमित्येतत् अनन्तरबाह्यम्–अन्तर्बहिर्विभागरहितम्। न तदश्नाति किञ्चन–नास्ति किमपि, आप्तकामोऽकामो हि, न च तदश्नाति कश्चन–अविनाश्यं ह्येतत्, सर्वमस्य संहर्तुरोदनम्, नचैतदन्यस्यौदनं भवितुमर्हति ॥८॥

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्र-
मसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने
गार्गि द्यावापृथिव्यौ विधृते तिष्ठत एतस्य वा
अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहो-
रात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति वि-
धृतास्तिष्ठन्त्येतस्य वा अक्षरस्य प्रशासने गार्गि
प्राच्यो नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रती-
च्योऽन्या यां यां च दिशमनु एतस्य वा अक्ष-
रस्य प्रशासने गार्गि ददतो मनुष्याः प्रशꣳसन्ति
यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥९॥ यो वा
एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते
तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भ-
वति यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोका-
त्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वा-
ऽस्माल्लोकात्प्रैति स ब्राह्मणः ॥१०॥ तद्वा एतदक्षरं
गार्ग्यदृष्टं द्रष्टृश्रुतꣳ श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ
नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्य-

द्रतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ॥११॥

ननु विशेषाः प्रतिषिद्धाः, किं प्रतिषेधमुखेनैव तत्स्वरूपमवबोध्यम्, नैतत्, न सर्वथा विशेषाः प्रतिक्षिप्यन्ते, तथासति तन्नैव सिद्ध्येत्, किन्तु हेया विशेषाः प्रतिषिद्धाः, अस्ति तु कल्याणगुणः, प्रकृष्टं ह्यस्य शासनमसाधारणं पारमैश्वर्यलक्षणम्, तथाहि—एतस्य वाऽक्षरस्य प्रशासने निमित्ते गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः—अनालम्बने गगनमण्डले लोकस्य प्रदीपाविव नियमेन प्रज्वलन्तौ विशेषेण धृतौ तिष्ठतः, प्रशासितुः प्रशासनकार्यं ह्येतत् । द्यावापृथिव्यौ चास्याक्षरस्यैव प्रशासितुः प्रशासने विधृते—नियतस्वस्वस्थानेऽसङ्कीर्णे तिष्ठतः । एतस्यैवाक्षरस्य प्रशासने निमेषादयः सकलप्राण्यायुःपरिकलनोपयोगिनः कालविभागा यथाविभागं विधृतास्तिष्ठन्ति, एतस्यैवाक्षरस्य प्रशासने श्वेतेभ्यो हिमवत्प्रभृतिभ्यः पर्वतेभ्यो गङ्गाद्या नद्यः प्राङ्मुखाः स्यन्दन्ते, प्रतीच्यश्चान्याः, अन्याश्च यां यां दिशमनु स्यन्दन्ते,सर्वास्ता अस्यैव प्रशासनेन । नदीनां स्यन्दनमप्यस्यैव प्रशासनकार्यम् । ददतो जनान् प्रतिग्रहीतारः प्रशंसन्तीति यत् तदप्यस्यैवाक्षरस्य प्रशासितुः प्रशासनेन, कस्यचिद्दातृस्वभावता कस्यचित्तत्प्रशंसनपरता चास्यैव प्रशासनेनेत्येतत् । पितरो दर्वीं देवा यजमानं प्रशंसन्तीत्येतदप्यस्यैव प्रशासनेन । विनैतदक्षरविज्ञानं क्रियमाणं होमयागतपःप्रभृति सर्वमन्तवदेव—विनश्वरफलकमेव भवति, यो वैतदविदित्वा—अनुपास्यास्माल्लोकात्प्रैति स कृपणः—

शोचनीयो भवति, गतागतपरिश्रमैकभागितया दुःखैकास्पदो भवतीति यावत्। य एतदक्षरं गार्गि विदित्वा–उपास्य प्रैति स ब्राह्मणः–परब्रह्मानुभवसम्पन्नो भवति। हे गार्गि नास्मात्परमं किमपि, एतद्धि अदृष्टं द्रष्टृ–व्याप्यैः पृथिव्यादिभिरात्मना च व्याप्येनादृष्टं तेषां सर्वेषां द्रष्टृ, अश्रुतमन्यैः सर्वस्य स्वयं श्रोतृ, अमतमितरैः स्वयं सर्वस्य मन्तृ, इदमित्थमिति चिन्तयितुमशक्यं ह्येतत्, अपरिमितं स्वरूपतः स्वभावतश्च, अतएवाविज्ञातम्–इदमित्थमित्थमिति केनाप्यविनिश्चितम्; परिच्छिद्य चिन्तयितुं विनिश्चेतुं चाशक्यमित्येतत्, स्वयं सर्वस्य विज्ञातृ। इतोऽन्यदीदृशं द्रष्टृ श्रोतृ मन्तृ विज्ञातृ वस्तु नास्ति। हे गार्गि एतस्मिन्नक्षरे परे ब्रह्मणि सोऽव्याकृताकाश ओतश्च प्रोतश्च। प्रतिष्ठित इत्येतत् ॥९–११॥

सा होवाच ब्राह्मणा भगवन्तस्तदेव बहु मन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम ॥१२॥

एवं याज्ञवल्क्येनोक्ते गार्गी तस्यास्याजय्यतां विनिश्चित्याह–भो ब्राह्मणा विजयाशंसामवधूय तदेव बहु मन्येध्वम्–बहु मन्यध्वम्, यदस्माद्याज्ञवल्क्यादजय्यान्नमस्कारेण क्रियमाणेन मुच्येध्वम्–नमस्कार एवास्मिन् समुचितो न विजिगीषेत्येतत्। नैव युष्माकं मध्ये कश्चिदप्येनं ब्रह्मवादे जातु विजेताऽस्ति। इत्युक्त्वा वाचक्नव्युपरराम ॥ १२ ॥

इति तृतीयाध्यायेऽष्टमं ब्राह्मणम्।

अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिंशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥१॥

अथास्य सर्वस्य प्रशासितुः परस्य ब्रह्मणः प्रशासनगोचरीभूतदेवताः गौणमुख्यभेदेन निरूपयितुमिदं ब्राह्मणं प्रवर्तते । अथ शकलस्यापत्यं विदग्धो नामतः पप्रच्छ—कति देवा याज्ञवल्क्येति । एवं पृष्टो याज्ञवल्क्यस्तस्योत्तरं वक्ष्यमाणया निविदा प्रतिपेदे—प्रतिपादयितुं प्रत्यपद्यत, यावन्तः—यावत्सङ्ख्याका वैश्वदेवस्य शस्त्रे निविद्युच्यन्ते । कतीति देवतासङ्ख्यां पृष्टो याज्ञवल्क्य एतावत्सङ्ख्याका इति स्ववचनेनाप्रतिवदन् वैश्वदेवे या निवित्—देवतासङ्ख्यावबोधकवाक्यं तेनैव प्रतिवक्तुं प्रत्यमन्यत । तदेव वाक्यमाह—त्रयश्च

त्री च शता त्रयश्च त्री च सहस्रेति—देवास्त्रयः, शतानि च त्रीणि, पुनस्त्रयश्च त्री च सहस्रेति—त्र्यधिकत्रिसहस्रसङ्ख्याकाश्चेति । तमिमं स्थूलभेदं शाकल्य ओमित्यभ्युपगम्य पुनः प्राधान्येन सूक्ष्मं सङ्ख्याभेदं पृच्छति—कत्येव देवा याज्ञवल्क्येति । याज्ञवल्क्य आह त्रयस्त्रिंशदिति, इमं सङ्ख्याभेदमोमित्यभ्युपगम्य शाकल्यः पुनस्ततोऽपि सङ्क्षिप्तं प्रकारं पृच्छति—कत्येव देवा इति, आह—याज्ञवल्क्यः षडिति । एवमुत्तरत्रापि बोध्यम् । एवं गौणमुख्यभेदाभ्यां प्रतिपादितं सङ्ख्याभेदमभ्युपगम्याथ सङ्ख्येयस्वरूपं पृच्छति—कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥१॥

स होवाच महिमान एवैषामेते त्रयस्त्रिंꣳशत्त्वेव देवा इति कतमे ते त्रयस्त्रिंꣳशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंꣳशाविति ॥२॥

त्रयस्त्रिंशत्त्वेव प्राधान्येन देवाः, य एते मयोक्ताः त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा इति ते महिमान एवैषाम्—गुणभूता एव । एवं याज्ञवल्क्येनोक्तः शाकल्यः पप्रच्छ—कतमे ते त्रयस्त्रिंशदिति । याज्ञवल्क्य आह—अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एते एकत्रिंशत्, इन्द्रः प्रजापतिश्चेति त्रयस्त्रिंशौ—द्वावेतौ त्रयस्त्रिंशत्सङ्ख्यापूरकाविति ॥२॥

कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चा-

दित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं वसु सर्वꣳ हितमिति तस्माद्वसव इति ॥३॥

कतमे ते वसवः, अत्रोत्तरम्—अग्निश्चेति। अग्न्यादीनां वसुत्वे निमित्तमाह—एतेषु हीति। एतेषु–अग्न्यादिषु हीदं सर्वं प्राणिजातं हितम्–आहितम्, तदेतन्निवासास्पदत्वाद्वसव उच्यन्ते, वासयति नामाग्न्यादिकमिदं शरीरेन्द्रियाकारेण परिणते स्वस्मिन्, तथा द्युलोकादि च प्राणिकर्मफलभूतम्। सर्वमिदं जगत् कार्यात्मना कारणात्मना चेहैव ह्यग्न्यादावाहितम्, तत् जगन्निवासत्वेन वा वसव उच्यन्ते ॥३॥

कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति ॥४॥

के ते रुद्रा इति पृच्छति—कतम इति। प्रतिवदति–अस्मिन् पुरुषे जीवति य इमे वर्तन्ते दश श्रोत्रादयः प्राणा मनश्चैकादशस्ते रुद्राः, तेषां रुद्रत्वे निमित्तमुच्यते—यदिति। यदेते श्रोत्रादय एकादश मर्त्यात् शरीरादुत्क्रामन्त्यायुषोऽवसाने, उत्क्रामन्तो रोदयन्ति नाम म्रियमाणं बन्धूंश्च। यस्माद्रोदयन्ति तस्मादेषां रुद्रत्वम् ॥४॥

कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्या एते हीदꣳ सर्वमाददाना यन्ति ते यदिदꣳ सर्वमाददाना यन्ति तस्मादादित्या इति ॥५॥

पृच्छति—कतम आदित्या इति। प्रतिवदति—द्वादश वै मासा इति। संवत्सरस्यावयवभूता य इमे द्वादश मासास्त एते आदित्याः किं निमित्तमेषामादित्यत्वे?, इदं निमित्तम्, यस्मादेते परिवर्तमानाः प्राणिनामायुराददाना—अपहरन्तो यन्ति तस्मादादित्याः ॥५॥

**कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति ॥६॥**

पृच्छति कतम इन्द्रः कतमः प्रजापतिरिति, प्रतिवदति स्तनयित्नुरेवेन्द्रो यज्ञः पशुरिति, स्तनयित्नुयज्ञशब्दाभ्यां विवक्षितमर्थं स्फुटयितुं पुनः प्रश्नप्रतिवचने प्रवर्तेते। कः स्तनयित्नुः? अनिर्धारितार्थको ह्ययं शब्दः[1], अशनिरिति अशनिशब्देन पराभिभावकं बलं लक्ष्यते, तेन हि पुरुष इन्द्रो भवति (ईश्वरो भवति)। कतमो यज्ञः? विविधद्रव्यविविधक्रियारूपे यज्ञे विवक्षितार्थः कः?। पशव इति पशोः प्राधान्येन यज्ञसाधनत्वात्पशुर्यज्ञ उच्यते, पशुरेव यज्ञनिष्पादनेन प्रजाः पुष्णातीह परत्र च, तत् प्रजापतित्वं तस्य यज्ञस्य। यद्वा—स्तनयित्नोरिन्द्रत्वे यज्ञस्य प्रजापतित्वे च निमित्तं प्रश्नप्रतिवचनमुखेन ज्ञाप्यते, कः स्तनयित्नुर्य इन्द्र उच्यते। प्रतिवक्ति—अशनिरिति, अशनिप्राधान्यविवक्षयाऽशनिरित्युक्तिः, यस्य तेजःपुञ्जं न सहन्ते सर्वाणि भूतानि स इन्द्रः, मेघस्य घनीभूतः कश्चन तेजःपुञ्ज एव चाशनिः, तन्निपातं न सहते हि भूतमात्रम्, तत् स्तनयित्नुरिन्द्र उच्यते। कतमो यज्ञो यः प्रजापतिरुच्यते, प्रतिवक्ति पशव इति।

---

१ मेघे विद्युति च साधारणोऽयमित्यनिर्धारितार्थक इत्युच्यते।

तादर्थ्यात् पशुर्यज्ञ उच्यते, यो यदेकार्थः स तस्य शेषः, मनुष्याणां सृष्टिर्यज्ञाचरणायैव चतुष्पदां सृष्टिर्हि विनिष्पादनमुखेन यज्ञनिष्पत्तय एव, तत्प्रजासामान्यं यज्ञैकार्थतया भवति यज्ञशेषभूतम्, शेषी च यज्ञः, यो यस्य शेषी स तस्य पतिः, तद्युक्तं यज्ञस्य प्रजापतित्वमिति भावः ॥६॥

कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्चैते षडेते हीद॑ँ सर्व॑ँ षडिति ॥७॥

कतमे ते षट्? आह—अग्निश्चेति। ये वसवोऽष्टावग्न्यादयः प्रोक्तास्तेष्वेव चन्द्रमसं नक्षत्राणि च वर्जयित्वाऽन्ये अग्निः पृथिवी वायुरन्तरिक्षमादित्यो द्यौरित्येते षट् प्राधान्येन देवाः, वसवो रुद्रा आदित्या इन्द्रः प्रजापतिरितीदं सर्वं एते षडेव। एषामेव विस्तरो द्वात्रिंशदिति यावत् ॥७॥

कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति ॥८॥

कतमे ते त्रयो देवाः? आह—इम एवेति। पृथिव्यन्तरिक्षं द्यौरितीमे त्रयो लोका एव देवास्त्रय उच्यन्ते, एष्वेव त्रिषु लोकेषु यथाक्रममग्निर्वायुरादित्य इत्यन्ये ये त्रय उक्तास्त इमे सर्वेऽन्तर्भवन्ति, आधाराधेययोरेकताविभावनयैतत्, तस्मात् षण्णां त्रिष्वेव समावेशः। कतमौ तौ द्वौ देवौ? आह—अन्नं च प्राणश्च, अनयोरेव विस्तारः सर्वे देवाः। कतमोऽध्यर्धः?। आह—योऽयं पवत इति ॥८॥

तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति यदस्मिन्निदꣳ सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते ॥९॥

तत्–तत्रास्मिन्नर्थे आहुः–चोदयन्ति केचित्–ननु पवनोऽयमेक एव पवते, कथमिवाध्यर्ध इति–अधिकोऽर्धेनेति । सत्यम् । सर्वमिदं वायावस्मिन्नधि आर्ध्नोत्–अधिकां वृद्धिं प्राप्नोति, तदध्यर्ध उच्यते (श्लेषोक्तिरिति यावत्) । कतम एको देवः ?, आह–प्राण इति । स प्राणो ब्रह्म–बृहत्त्वात् ब्रह्म, यस्मादेकस्यैवास्य सर्वे देवा विततिरूपाः, तदयं महान् । स्तुतिरियम् । तस्मात् प्राणं त्यद्ब्रह्मेत्याचक्षते, परं ब्रह्म तु सत्, इदं ब्रह्म तु त्यत्[1], इति ततो विशेषः । प्राण एव ब्रह्मदृष्टिमभिप्रेत्य वोच्यते स ब्रह्मेति । प्राणोऽत्र परमात्मैव वा, त्यदिति ब्रह्मणः परोक्षनिर्देशः ॥९॥

पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ शारीरः पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यमृतमिति होवाच ॥१०॥

यस्यैव विस्तारो देवताभेदः स प्राण उक्तः, अथ पुरुषभेदः प्रस्तूयते दृष्टिविशेषार्थः पृथिव्येवेत्यादिना । यस्य पृथिव्येवाय-

---

१ पूर्वपूर्वरूपपरित्यागेन रूपान्तरपरिग्रहात्त्यदुच्यते ।

तनम्—आश्रयः, अग्निर्लोकः—लोक्यतेऽनेनेति लोकः दर्शनसाधनम्, मन एव ज्योतिः—प्रकाशकम्, तं सर्वस्यात्मनः—प्राणिनः परायणं परमाश्रयभूतं पुरुषं यो विद्यात्, स वै वेदिता स्याद्याज्ञवल्क्य । तमजानन् कथं त्वं जानतां कोटौ गणनामर्हसीति गम्यते । पृथिव्याश्रयत्वेनाग्निलोककत्वेन मनोज्योतिष्ट्वेनोपास्यः पुरुषः कः?, अपि त्वं जानासीति प्रश्नाशयः । याज्ञवल्क्यः प्रतिवक्ति—वेद वेति । यमात्थ त्वं तं सर्वस्यात्मनः परायणं तं पुरुषं वेदैवाहम्, स हि शारीरः पुरुषः—यं त्वं पृच्छसि स पुरुषः शारीरत्वेन पृथिव्यायतनत्वादिना च द्रष्टव्य इति यावत् । वदैव शाकल्य—अस्ति चेदत्र प्रष्टव्यं पृच्छ शाकल्य । शाकल्यः पृच्छति—का तस्य देवतेति । तस्य शारीरस्य का देवता? यस्य सत्तया यस्य सत्ता सा तस्य देवतेह विवक्षिता । आह—अमृतमिति । अमृतेनान्नरसेन हि शारीरस्य सत्ता । अलब्धामृतस्यापैति शारीरत्वम्, तदा शरीरात्प्राणा हि विनिष्क्रामन्ति । शारीरः पुरुषः—शारीरस्य जीवस्यान्तर्यामी वा, सर्वात्मपरायणत्वं चास्य मुख्यम् । अमृतं चास्य देवतेत्येतज्जीवद्वारा बोध्यम् । एवमुत्तरत्रापि दृष्टिविशेषो बोध्यः ॥१०॥

काम एव यस्यायतनꣳ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परा-

---

1 आत्मशब्दः प्राणिनि लाक्षणिक इति यावत् ।

यणं यमात्थ य एवायं काममयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच ॥११॥

कामो विषयाभिलाषो यस्यायतनमाश्रयः, हृदयं—बुद्धिर्लोकः दर्शनसाधनम्, मनो ज्योतिः प्रकाशकम् । सर्वस्यात्मनः प्राणिनः परायणम्, कामो हि सर्वेषामविशेषेण पुरुषार्थः । कामायतनत्वहृदयलोककत्वमनोज्योतिष्ट्वैर्द्रष्टव्यः पुरुषः क इति प्रश्नाशयः । प्रतिवक्ति वेद वेति । य एवायं विषयभोगैकाभिलाषप्राचुर्यात्काममयः प्रसिद्धः पुरुषः स एष यस्त्वया पृष्टः तस्यास्य का देवता । स्त्रियः—स्त्रिया हि कामः पूर्यते । तत् काममयस्य स्त्रियो देवतेत्युच्यते । कामायतनत्वादिना काममयः पुरुषो द्रष्टव्य इति यावत् । अन्तर्यामिपरत्वे स्त्रीदेवताकत्वं शरीरभूतजीवद्वारा बोध्यम् ॥११॥

रूपाण्येव यस्यायतनं चक्षुर्लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य तस्य का देवतेति सत्यमिति होवाच ॥१२॥

रूपाणि—शुक्लकृष्णादीनि, यस्यायतनम्, विविधरूपप्रचुरं ह्यादित्यस्य मण्डलम् । सत्यं चास्यादित्यपुरुषस्य देवता, तादर्थ्यात्, अधिदैवमादित्येनाध्यात्मं चक्षुषा सत्यं ह्यभिनिर्वर्त्यम् । रूपायतनत्वचक्षुर्लोककत्वमनोज्योतिष्ट्वसत्यदेवताकत्वैरादित्यपुरुषो द्रष्टव्य इति यावत् ॥१२॥

आकाश एव यस्यायतनꣳ श्रोत्रं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ श्रौत्रः प्रातिश्रुत्कः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति दिश इति होवाच ॥१३॥

श्रौत्रः प्रातिश्रुत्कः पुरुषः—श्रोत्रे सन्निधाय यः शब्दमनुभवति प्रतिध्वनिं चानुभवति स श्रौत्रः प्रातिश्रुत्क उच्यते । शब्दानामाकाशोऽयनमिति श्रौत्रस्याकाशायतनत्वमुच्यते । अध्यात्मं श्रोत्रमधिदैवतं दिग्देवतेति देवता दिश उच्यन्ते । आकाशायतनत्वादिना श्रौत्रः पुरुषो द्रष्टव्य इति भावः ॥१३॥

तम एव यस्यायतनꣳ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच॥१४॥

तमः—नैशम्, छायामयः पुरुषस्तमआयतनत्वादिना मृत्युदेवताकत्वेन च द्रष्टव्य इति भावः । अन्यत्र 'मृत्युरिति वा अहमेतमुपासे' इति छायामये मृत्युदृष्टिर्विहिता ॥ १४ ॥

रूपाण्येव यस्यायतनं चक्षुर्लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष वदेव शाकल्य तस्य का देवतेत्यसुरिति होवाच ॥१५॥

रूपाण्यत्र प्रतिफलनाधायकानि प्रकाशमयान्यभिप्रेतानि, रूपविशेषायतनत्वादिना आदर्शपुरुष उपास्य इति भावः ॥ १५ ॥

आप एव यस्यायतनꣳ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष वदेव शाकल्य तस्य का देवतेति वरुण इति होवाच ॥१६॥

आदर्श इवाप्सु प्रतिबिम्बितः पुरुष इह य एवायमप्सु पुरुष इत्युच्यते । सोऽयं अबायतनत्वादिनोपास्य इति भावः ॥ १६ ॥

रेत एव यस्यायतनꣳ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य

एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य
तस्य का देवतेति प्रजापतिरिति होवाच ॥१७॥

योऽयं पुत्रमयः पुरुषस्तस्यायतनं रेतः, प्रसिद्धमेतत्, प्रजापतिरत्र पिता, स पुत्रमयपुरुषस्य देवतोच्यते। पुत्रमये पुरुषे रेतआयतनत्वादिदृष्टिर्विधेयेति भावः ॥१७॥

शाकल्येति होवाच याज्ञवल्क्यस्त्वाँ स्विदिमे
ब्राह्मणा अङ्गारावक्षयणमक्रता ३ इति ॥१८॥

अनभिलक्ष्यात्मप्रभावं विजिगीषयाऽभिपतन्तं शाकल्यं प्रकुपितो याज्ञवल्क्य आह–हे शाकल्य त्वामिमे ब्राह्मणा अङ्गारावक्षयणम्–अङ्गारावग्रहणपात्रम्, अक्रत–अकुर्वन् किम्। एषां ब्राह्मणानां प्रेरणया मामभिपतन् अङ्गारावग्रहणपात्रमङ्गारेणेव मदभियोगेन दह्यमानमात्मानं नावबुध्यसे त्वमिति भावः ॥१८॥

याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपञ्चालानां
ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति दिशो वेद सदे-
वाः सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः १९

एवमुक्तः शाकल्यो याज्ञवल्क्यमाह–हे याज्ञवल्क्य कुरुपञ्चालानां ब्राह्मणानेतान् यदिदमत्यवादीः–स्वयं वादे भीतास्त्वामङ्गारावग्रहणपात्रमकुर्वन् इति, तत्किमहमेव ब्रह्म विद्वान् एते तु कुरुपञ्चाला अतथाभूता इति मत्वा?। अहं सदेवाः सप्रतिष्ठा दिशो वेद, यदि त्वं सदेवाः सप्रतिष्ठा दिशो वेत्थ तर्हि ब्रूहि पृच्छामि ॥१९॥

किंदेवतोऽस्यां प्राच्यां दिश्यसीत्यादित्यदेवत इति स आदित्यः कस्मिन् प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदय इति होवाच हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य॥२०॥

अस्यां प्राच्यां दिशि किंदेवतोऽसि—का देवता यस्य स किंदेवतः, का देवता प्राचीदिगधिष्ठातृत्वेनोपास्यतया त्वदभिमतेति यावत् । याज्ञवल्क्य आह—आदित्यदेवत इति—आदित्येनाधिष्ठितां प्राचीं दिशं मन्ये इति । देवता उक्ताः, अथ प्रतिष्ठां पृच्छति । स आदित्यः कस्मिन् प्रतिष्ठितः ? । चक्षुषीति—अध्यात्मं चक्षुषि ह्यादित्यः प्रतिष्ठित इति । तच्चक्षुः कस्मिन् प्रतिष्ठितम् ? । रूपेष्विति । कुत एतदवगम्यते ? चक्षुषा हि रूपाण्येव पश्यति, रूपमेवाभिनिपत्य हि तिष्ठन्ति, तच्चक्षुषः प्रतिष्ठारूपम् । तानि रूपाणि कस्मिन् प्रतिष्ठितानि ?, हृदये, कस्मान्निमित्तात् ? हृदयेन हि रूपाणि जानाति—चक्षुरादाय प्रयच्छति नाम हृदयाय, हृदयमेव तु इदं शुक्लमिदं नीलमित्यध्यवस्यति, तदुच्यते हृदये ह्येव रूपाणि प्रतिष्ठितानीति । प्रतिवचनमङ्गीकरोतीतरः—एवमेतद्याज्ञवल्क्येति ॥२०॥

किंदेवतोऽस्यां दक्षिणायां दिश्यसीति यमदेवत इति स यमः कस्मिन् प्रतिष्ठित इति यज्ञ इति कस्मिन्नु

यज्ञः प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठितेति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायाँ ह्येव दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्ठितेति हृदय इति होवाच हृदयेन हि श्रद्धां जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२१॥

दक्षिणायां दिशि किंदेवतोऽसि–पूर्ववदर्थः, यमदेवत इति–यमं दक्षिणादिगधिष्ठातृतयाऽहमुपासे । स यमः कस्मिन् प्रतिष्ठितः ?, यज्ञे, यज्ञो हि धर्मः, धर्मे हि यमस्य प्रतिष्ठा । स यज्ञः कस्मिन् प्रतिष्ठितः ?, दक्षिणायाम्, ऋत्विग्भ्यो दीयमानया दक्षिणया हि यज्ञः संपूर्यते । कस्मिन् दक्षिणा प्रतिष्ठिता ?, श्रद्धायाम्, कस्मात् ?, यदा श्रद्धत्ते यजमानस्तदा हि दक्षिणां ददाति, तत् श्रद्धायां ह्येव दक्षिणा प्रतिष्ठिता । कस्मिन्नु सा श्रद्धा प्रतिष्ठिता ?, हृदये, कस्मात्, ? हृदयेन हि श्रद्धां जानाति, तत् हृदय एव श्रद्धा प्रतिष्ठिता ॥ २१ ॥

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति वरुणदेवत इति स वरुणः कस्मिन् प्रतिष्ठित इत्यप्स्विति कस्मिन्नापः प्रतिष्ठिता इति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२२॥

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति । पूर्ववदर्थः । वरुणदेवत इति । वरुणो हि प्रतीच्या अधिष्ठाता, स वरुणः कस्मिन् प्रतिष्ठितः ?, अप्सु, वरुणस्य प्रकृतिरापो हि । कस्मिन्नापः प्रतिष्ठिताः ?, रेतसीति, रेतो ह्यपां प्रकृतिः, तद्रेतः कस्मिन् प्रतिष्ठितम् ?, हृदये, कस्मात् ?, कामिनो हि हृदयाद्रेतः प्रस्कन्दति, तस्मादेवानुरूपं पुत्रं जातमाहुः—असौ पुत्रोऽस्य पितुर्हृदयादिव विनिःसृतो हृदयादिव विनिर्मित इति, तस्माद्धृदये ह्येव रेतः प्रतिष्ठितमिति ॥ २२ ॥

किंदेवतोऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन् प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य॥२३॥

उदीच्या दिशः सोमो देवः, अत्र सोमशब्दः श्लेषोक्त्या लताविशेषं सङ्गृह्णाति, स सोमः कस्मिन् प्रतिष्ठितः ?, दीक्षायाम्, कस्मात् निमित्तात् ?, दीक्षितो हि सोमं क्रीणाति, कस्मिन्नु दीक्षा प्रतिष्ठिता ? सत्ये, कस्मात् निमित्तात् ? यस्मात् दीक्षितमाहुः सत्यं वदेति, तस्मात् सत्ये एव दीक्षा प्रतिष्ठिता । सत्यं कस्मिन् प्रतिष्ठितम् ?, हृदये, कुत एतत् ?, हृदयेनैव हि सत्यं जानाति, तत् हृदये ह्येव सत्यं प्रतिष्ठितम् ॥ २३ ॥

किंदेवतोऽस्यां ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति कस्मिन्नु वाक् प्रतिष्ठितेति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितमिति॥२४॥

किंदेवतोऽस्यां ध्रुवायां दिश्यसि, ऊर्ध्वा दिक् ध्रुवोच्यते, मेरोः परितो वर्तमानानां सूर्योदयोपाधिभेदेन पूर्वादिभेदेऽपि ऊर्ध्वा तु न भिद्यते इति सा ध्रुवोच्यते। प्रकाशबहुलत्वादग्निस्तस्या देवतोच्यते। सोऽग्निः कस्मिन् प्रतिष्ठितः?, वाचि, कस्मिन् वाक् प्रतिष्ठिता?, हृदये इति। अथ शाकल्यः पृच्छति–यदिदं प्राच्याद्यधिष्ठात्रादिप्रतिष्ठामुख्यास्पदं हृदयं तत् कस्मिन् प्रतिष्ठितमिति ॥ २४ ॥

अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्वयाꣳसि वैनद्विमथ्नीरन्निति ॥२५॥

याज्ञवल्क्यः शाकल्यमहल्लिकेति नामान्तरेण संबोध्याह–प्रसिद्धेऽर्थे कः प्रश्नः, इदं हि नो हृदयमस्मदन्यत्र क्व स्यात्–शरीरादन्यत्र क्व स्यात्, यदि त्वं मन्यसे एतत् हृदयं असदन्यत्र–शरीरादन्यत्र यदि मन्यसे, यदि वा स्यात् असदन्यत्र–शरीरादन्यत्र, तदा ह्येनत् शरीरं श्वानोऽद्युः, वयांसि वा विमथ्नीरन्। तदस्यास्वेवास्मिन् शरीरे प्रतिष्ठितमिति प्रसिद्धमेतत्, (जीवत्पुरुषाश्रयमिति यावत्) तत् प्रश्नोऽत्र मन्दस्यैव स्यात् ॥२५॥

---

१ असच्छब्दस्य पञ्चमीबहुवचनान्तमस्मदिति पदम्।

कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्नपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नूदानः प्रतिष्ठित इति समान इति स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्यतेऽसितो न व्यथते न रिष्यत्येतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान् पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति तꣳ ह न मेने शाकल्यस्तस्य ह मूर्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥२६॥

पुनः शाकल्यः पृच्छति—योऽयमात्मा—हृदयं,हृदयाश्रयतया प्रोक्तो यस्त्वम्—जीवत्पुरुपलक्षणः शरीरविशेषः इत्येतौ द्वौ कस्मिन् प्रतिष्ठितौ ? । प्राण इति, स प्राणः कस्मिन् प्रतिष्ठितः ? अपाने, अपानवृत्त्या ह्याकृष्टः प्राणः शरीरे तिष्ठति, अन्यथा ह्यूर्ध्वगतिः प्राण ऊर्ध्वमेवोद्गच्छेत्, सोऽपानः कस्मिन् प्रतिष्ठितः ? व्याने, अन्यथा ह्यधोगतिस्वभावोऽपानोऽध एवापेयात् । कस्मिन्नु स व्यानः प्रतिष्ठितः ?, उदाने, प्राणादयस्तिस्रोऽप्येता वृत्तय उदाने हि निबद्धाः । कस्मिन्नुदानः प्रतिष्ठितः ?, समाने, सर्वाश्चैतस्रो वृत्तयः समाने हि

प्रतिष्ठिताः। अथ शाकल्यस्तूष्णींबभूव, तूष्णींभूते तस्मिन् प्राणाद्या-ग्रास्काष्ठासेष न वेत्ति तत्त्वतः, यद्यं समानः कस्मिन्निति न पृच्छति, इति तस्याज्ञानमालक्ष्य याज्ञवल्क्य आह—हे शाकल्य अस्ति कश्चिदौपनिषदः—उपनिषदेकगम्यः पुरुषः स एष नेति नेत्यात्मा—अयमियानीदृशः अयमियानीदृश इति ये परिच्छेदप्रकारालौकिक-प्रमाणगम्यास्तैः शून्यः सर्वस्यात्मा स हि प्रत्यक्षादिप्रमाणान्तरगत्य-नर्हो न तैर्गृह्यते, तत्र तत्र विशरणस्वभावेष्वनुगतोऽपि विशरणानर्ह-तया न विशीर्यते, यस्मादलेपस्वभावस्तस्मान्न सज्यते, बन्धनानर्हतया न व्यथते, न रिष्यते—नैव हिंस्यते, स एष यान्येतान्यायतनानि पृथिव्यादीन्यष्टावुक्तानि ये चाष्टौ लोका अग्न्यादयः, ये चाष्टौ देवा अमृतादयः, ये चाष्टौ पुरुषाः शारीरादयः, तान् निरुह्य—अवधार्य प्रत्युह्य—प्रतिव्यक्ति तत्त्वतो निश्चित्य सम्यग्विचार्यमाणः अत्यक्रा-मत्, सर्वानेतान् स्वरूपस्वभावैरतिक्रम्य वर्तते इति यावत्। तमौप-निषदं पृच्छामि, तं चेत्पृच्छते मे त्वं न विवक्ष्यसि—न कथयिष्यसि, मूर्धा ते विपतिष्यतीति। एवं पृष्टः शाकल्यस्तमौपनिषदं न मेने, तस्य ह मूर्धा विपपात। तदाऽस्य शिष्यैः प्रेतसंस्काराय प्रवृत्तैर्नीय-मानान्यस्यास्थीनि चोराः अन्यत्—धनं किमप्येतत् इति मन्यमाना अपजह्रुः ॥२६॥

अथ होवाच ब्राह्मणा भगवन्तो यो वः
कामयते स मा पृच्छतु सर्वे वा मा पृच्छत
यो वः कामयते तं वः पृच्छामि सर्वान्वा वः
पृच्छामीति ते ह ब्राह्मणा न दधृषुः ॥२७॥

निगृहीते शाकल्ये याज्ञवल्क्य इदमाह ब्राह्मणान्–भगवन्तो ब्राह्मणा वो मध्ये य एकः कामयते प्रष्टुं स मामागत्य पृच्छतु सर्वे यूयं संभूय वा पृच्छत, यो वः कामयते प्रतिवक्तुं तमहं पृच्छामि, सर्वान्वा वः पृच्छामि इति । एवमुक्तास्ते ब्राह्मणा न दधृषुः– प्रष्टुं प्रतिवक्तुं वा न प्रगल्भा अभूवन् । किमपि प्रतिवचनं नाकथयन् ॥२७॥

तान् हैतैः श्लोकैः पप्रच्छ । यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा । तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः ॥ त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः। तस्मात्तदा तृण्णात्प्रैति रसो वृक्षादिवाहतात् ॥ माꣳसान्यस्य शकराणि कीनाटꣳ स्नाव तत्स्थिरम् । अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता । यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः। मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ रेतस इति मावोचत जीवतस्तत्प्रजायते । धानारुह इव वै वृक्षोऽञ्जसा प्रेत्य सम्भवः ॥ यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत् । मर्त्यः स्विन्मृत्युना वृक्णः

कस्मान्मूलात्प्ररोहति ॥ जात एव न जायते को-
न्वेनं जनयेत्पुनः । विज्ञानमानन्दं ब्रह्म राति-
र्दातुः परायणं तिष्ठमानस्य तद्विद इति ॥२८॥

तान् ब्राह्मणान् एतैः—वक्ष्यमाणैः श्लोकैः पप्रच्छ याज्ञवल्क्यः । अयं प्रत्यक्षतोऽनुभूयमानः पुरुषः,यथा वृक्षो वनस्पतिः—पत्रपुष्पफलपूर्णो वृक्षो यथा तथाऽयं पुरुषः, अमृषैतत्—अनयोर्यदिदं साम्यमुच्यते तत्सत्यमेव । तथाहि—वृक्षस्य पर्णानि, तस्यास्य पुरुषस्य पर्णस्थानीयानि लोमानि । वृक्षस्योत्पाटिका, अस्योत्पाटिकास्थाने बहिस्त्वक् । वृक्षस्य त्वच उत्पटः—त्वचः सकाशान्निर्गच्छन् क्षीरादिलक्षणो रसः, अस्य पुरुषस्य उत्पटस्थाने त्वचः प्रस्यन्दि रुधिरम् । तस्मादेवाऽऽहताद्वृक्षाद्रस इवाऽऽतृण्णादाच्छिन्नात्तस्माद्रुधिरं स्रवति । यान्यस्य वृक्षस्य शकराणि, तत्स्थानीयान्यस्य पुरुषस्य मांसानि । स्नाव—स्नायुः शिरा स्थिरं—दृढं कीनाटम्—वल्कलम्, कीनाटस्थानीया शिरेति भावः । यान्यस्थीनि तान्येवान्तरतो दारूणि, वृक्षान्तःस्थितदारुस्थानीयान्यस्थीनि । याऽस्य पुरुषस्य मज्जा सैव वृक्षान्तःस्थमज्जोपमा । तदेवं वृक्षस्य पुरुषस्य च सर्वतः साम्यमस्ति, तस्मात् पुनः प्ररोहांशेनापि साम्यमवश्यमास्थेयमनयोः, वृक्षो वृक्णः—छिन्नो मूलात्पुनर्नवतरः प्ररोहति, पुरुषोऽयं मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति, वृक्षस्येवास्य पुनःप्ररोहणं तन्मूलं चावश्यमास्थेयं तच्च न लक्ष्यते, तत्किमिति प्रश्नाशयः । रेतस इति मावोचत, जीवतो हि तत्प्रजायते, न मृतात्,

तन्मृत्युना वृक्णस्यास्य पुनः प्ररोहणे किं मूलम् । न केवलं काण्डरुहो वृक्षः, किन्तु धानारुहश्च बीजसमुद्भवश्च, तत् वृक्षस्य प्रेत्य पुनः संभवो दृष्टः, यदि समूलमावृहेयुः बीजकाण्डादिमूलसहितं समुत्पाटयेयुः तदातु न पुन रुद्भवः, अन्यथा तु पुनः प्ररोहणमस्त्येव । तद्वृक्षस्येव काण्डरुहस्य बीजरुहस्य पुरुषस्यास्य पुनः समुद्भवे किं मूलम् । ननु–जात एवायम्, न पुनर्जनिष्यते, जनिष्यमाणस्य हि मूलप्रश्नः, पुरुषस्तु यो जातो नष्टः, स न पुनः प्रभवति, सकृदेव जातः । नैवं, पुनर्जायते नाम, अन्यथा कृतहानाकृताभ्यागमप्रसङ्गात् । तस्मात् पृच्छामि को न्वेनं जनयेत्पुनः । इमं प्रश्नं प्रतिवक्तुं तेष्वेकोऽपि न प्राभवत् । समाप्ताऽऽख्यायिका । अथ श्रुतिः स्वयं मूलमाह–इदमेव सर्वस्य मूलम्–यद्विज्ञानमानन्दं ब्रह्म, ज्ञानानन्दैकरूपं परं ब्रह्म, तच्च ब्रह्म रातिः–रातेः (षष्ठ्यर्थे प्रथमा) धनस्य दातुः, इदमुपलक्षकं कर्मिणाम् यज्ञदानादिकर्म कुर्वतां परायणम्–परा गतिः सर्वकर्मफलप्रदमिति यावत्, तिष्ठमानस्य–ब्रह्मणि यः सर्वदा तिष्ठति तस्य, ब्रह्मैकनिष्ठस्य तद्विदः–ब्रह्मस्वरूपविदश्च परायणम्–परमं प्राप्यम्, एवम्भूतं परंब्रह्मैव सर्वस्य मूलमिति भावः ॥ २८ ॥

इति तृतीयाध्याये नवमं ब्राह्मणम् ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण-परमहंसवर्य-योगिराज-श्रीगोपालानन्दस्वामिविरचिते बृहदारण्यकोपनिषद्भाष्ये तृतीयोऽध्यायः ॥३॥

---

## अथ चतुर्थोऽध्यायः

जनको ह वैदेह आसाञ्चक्रेऽथ ह याज्ञवल्क्य आवव्राज तँ होवाच याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानित्युभयमेव सम्राडिति होवाच ॥१॥

जातु जनको दिदृक्षूणां दर्शनावसरं प्रयच्छन् सभायामासाञ्चक्रे । अथ याज्ञवल्क्यस्तं जनकं तदाऽऽवव्राज । तमागतं राजाऽवलोक्य प्राह–हे याज्ञवल्क्य किमर्थमचारीः–आगतवानसि । किं पशूनत्तो लब्धुमिच्छन्, आहोस्वित् अण्वन्तान्–अणोः सूक्ष्मस्य-दुर्विज्ञेयस्यान्तो निर्णयो यैः प्रश्नैस्तान् इच्छन् आगतोऽसि । याज्ञवल्क्य आह–उभयमेव सम्राडिति । सम्राडिति संबोधनम् ॥१॥

यत्ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तच्छैलिनिरब्रवीद्वाग्वै ब्रह्मेत्यवदतो हि किँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत का प्रज्ञता याज्ञवल्क्य वागेव सम्राडिति होवाच वाचा वै सम्राड्बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वा-

ङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टँ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राड् प्रज्ञायन्ते वाग्वै सम्राट् परमं ब्रह्म नैनं वाग्जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥२॥

एवमुक्त्वा इदमाह—हे राजन् त्वया बहुभ्यः श्रुतोऽर्थः, तत् यत्ते कश्चिदब्रवीत् तत् प्रथमं त्वत्तः शृणवामेति। अथ जनक आह—शैलिनिः—शिलिनस्यापत्यं नाम्ना जित्वा मे—मह्यं प्राह—वाग्वै ब्रह्मेति, वाचि ब्रह्मदृष्टिमुपदिष्टवानिति यावत्। याज्ञवल्क्य आह—हे राजन् मातृमान्—माता अनुशास्त्री यस्य स मातृमान्, पितृमान्—पिता अनुशास्ता यस्य स पितृमान्, आचार्य अनुशास्ता यस्य स आचार्यवान्, एतदनुशासनत्रयतो विशुद्धहृदयो यथा ब्रूयात् तथा स जित्वा प्राह। आचार्यानुशिष्टस्यायमुपदेशो नाशङ्कास्पदमिह किञ्चिदिति स्तूयतेऽयमर्थः। अवदतो हि किमत्र वा परत्र वा स्याच्छ्रेयः, तत् वाग्वै ब्रह्मेत्यब्रवीत्तु शैलिनिः। हे राजन्! तस्य ब्रह्मण आयतनं प्रतिष्ठामपि स शैलिनिस्तुभ्यमब्रवीत्?। इतर आह नेति। याज्ञवल्क्य आह—एकपात्तु वै

तत्—न सर्वांशेनात्रोपदेष्टव्यमुपदिष्टम्, पादमात्रमुपदिष्टम्, पादत्रयमुपदेष्टव्यमवशिष्यते । पादत्रयविज्ञानविधुरमुपास्यमानमिदं न फलाय स्यात् । इतर आह—भो याज्ञवल्क्य स त्वं तत् नो ब्रूहि इति । याज्ञवल्क्य आह—वागधिष्ठात्र्यां देवतायामध्यस्योपास्यमानस्य ब्रह्मणःवागेवायतनमाश्रयः, आकाशः—अव्याकृताकाशः प्रतिष्ठा, प्रज्ञेत्येनदुपासीत—प्रज्ञात्वेन धर्मेणैनदुपासीत, प्रज्ञेति नाम्नैनदुपासीतेति वा । का प्रज्ञताऽस्य—प्रज्ञापदप्रवृत्तिनिमित्तभूता प्रज्ञता का नामास्य, आह—वागेवेति, वाच्यध्यस्योपास्यमाने ब्रह्मणि वाचो या प्रज्ञता सैव तद्वारा बोध्या । वाचस्तथात्वं कथम्? उपपाद्यते, वाचैव बन्धुर्विज्ञायते वाचैव ऋग्वेदो यजुर्वेदः सामवेदः इतिहासादि सर्वं ज्ञायते हुतादि सर्वं वाचैव ज्ञायते, अयं लोकः परो लोकः सर्वाणि च भूतानि वाचैव विज्ञायन्ते, तत् प्रज्ञायतेऽनेनेति प्रज्ञा वाग्भवति । तदिदमुपासनमुपसंह्रियते—वाग्वै परमं ब्रह्मेति । य एवं विद्वानेतदुपास्ते, नैनं वाग्जहाति—अप्रतिहतवाक् भवति । सर्वाणि भूतान्येनमुपासकमभिरक्षन्ति, सर्वभूतप्रणयपात्रं भवतीत्येतत् । देवो भूत्वा—इहैव देवसधर्मा भूत्वा प्रेत्य देवानप्येति । तदिदं याज्ञवल्क्यस्य वचनं श्रुत्वा वैदेहो जनकः प्राह—भो याज्ञवल्क्य हस्तिसदृशान् ऋषभान् सहस्रं ते दास्याम्यस्यै विद्यायै, इति । याज्ञवल्क्य आह—हे राजन् पिता खलु ममैवममन्यत, सम्यगननुशिष्य शिष्यं धनं तस्मान्न हरेतेति, तत् पितुरभिप्रायमतिलङ्घ्य न त्वत्तोऽद्य धनमिदमाहरेयमिति ॥२॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्म उदङ्कः शौ-

ल्बायनः प्राणो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छौल्बायनोऽब्रवीत्प्राणो वै ब्रह्मेत्यप्राणतो हि किँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत का प्रियता याज्ञवल्क्य प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राट् कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राट् कामाय प्राणो वै सम्राट् परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवंविद्वानेतदुपास्ते हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥३॥

भो राजन्! यदेव कश्चिदाचार्यस्तेऽब्रवीत्तदेव भूयः शृणवामेति। अब्रवीन्मे शुल्बस्यापत्यं नाम्नोदङ्कः प्राणो ब्रह्मेति। यथा मातृमानित्यादि व्याख्यातप्रायम्। प्राणस्य प्रियतामुपपादयति—प्राणस्य वै इत्यादिना। प्राणो हि सर्वस्य प्रियतमः, प्राणस्य कामायैव हि जानन्तोऽपि दोषमयाज्ययाजनादौ अयाज्यं याजयन्ति, अप्रति-

गृह्यस्य प्रतिगृह्णन्ति, यस्यामात्मनो वधाशङ्का तामपि तस्करभूयिष्ठां दिशमभ्येति । य एवं विद्वान् प्राणं ब्रह्मोपास्ते, नैनं प्राणो जहाति—चिरायुर्भवतीत्येतत् । व्याख्यातमितरत् ॥३॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे बर्कुर्वार्ष्णश्चक्षुर्वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यपश्यतो हि किँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत का सत्यता याज्ञवल्क्य चक्षुरेव सम्राडिति होवाच चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिति तत्सत्यं भवति चक्षुर्वै सम्राट् परमं ब्रह्म नैनं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवंविद्वानेतदुपास्ते हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥४॥

नाम्ना बर्कुर्वृष्णेरपत्यम् । अन्यदविशिष्टम् । चक्षुषः सत्यतामुप-

पादयति—चक्षुषा वै इत्यादि । चक्षुषा दृष्टमर्थमन्येन प्रोच्यमानं याथार्थ्यावधारणाय पृच्छन्ति किं त्वमद्राक्षीरिति, अद्राक्षमित्युक्ते तत्सत्यमवधारितं भवति, तत् चक्षुः सत्यार्थावबोधकतया सत्यमुच्यते । स्पष्टमितरत् ॥४॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे गर्दभीविपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यशृण्वतो हि किँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य श्रोत्रमेवायतनमाकाशः प्रतिष्ठाऽनन्त इत्येनदुपासीत काऽनन्तता याज्ञवल्क्य दिश एव सम्राडिति होवाच तस्माद्वै सम्राडपि यां काञ्च दिशं गच्छति नैवास्या अन्तं गच्छत्यनन्ता हि दिशो दिशो वै सम्राट् श्रोत्रँ श्रोत्रं वै सम्राट् परमं ब्रह्म नैनँ श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवंविद्वानेतदुपास्ते हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति॥५॥

यदेवेत्यादि व्यक्तार्थम् । श्रोत्रस्यानन्त्यमुपपादयति—दिश एवेत्यादिना । 'दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्' इति श्रुतेरभेदाध्यवसायात् दिश्युपपाद्यमानमानन्त्यं श्रोत्रस्येत्याशयः । इममेवाशयं स्फुटयति—दिशो वै सम्राट् श्रोत्रमिति ॥५॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे सत्यकामो जाबालो मनो वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य मन एवायतनमाकाशः प्रतिष्ठाऽऽनन्द इत्येनदुपासीत का आनन्दता याज्ञवल्क्य मन एव सम्राडिति होवाच मनसा वै सम्राट् स्त्रियमभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट् परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवंविद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥६॥

यदेवेत्यादि स्पष्टार्थम् । मनस आनन्दतोपपाद्यते—मनसा वै इति । हे सम्राट् स्त्रियमभिहार्यते पुमान् मनसैव हि, यां स्त्रियं कामयमानोऽभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते, स्त्र्यभिगमनपुत्र-जननादिलक्षण आनन्दो हि मनस एव, तन्मनस आनन्दता । अन्यदतिरोहितार्थम् ॥६॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति यथा मातृमान्पितृमाना-चार्यवान्ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्य-हृदयस्य हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्र-तिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितता याज्ञवल्क्य हृदय-मेव सम्राडिति होवाच हृदयं वै सम्राट् सर्वेषां भूता-नामायतनꣳ हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठा हृदये ह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट् परमं ब्रह्म नैनꣳ हृदयं जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा दे-वानप्येति य एवंविद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं

ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥७॥

यदेवेत्यादिव्याख्यातप्रायम्। हृदयस्य स्थितताम्मुपपादयति। हृदयं वै सम्राड्ढ सर्वेषां भूतानामायतनं सर्वेषां भूतानां प्रतिष्ठा हृदये ह्येव सर्वाणि भूतानि प्रतिष्ठितानि, तत् हृदयेनैव सर्वभूतस्य स्थितिः, तत् स्थीयते अनेनेति व्युत्पत्त्या स्थितिरिति हृदयं ब्रह्मोपासीतेति भावः। हृदयं ब्रह्मेत्यादि स्पष्टार्थम् ॥७॥

इति चतुर्थाध्याये प्रथमं ब्राह्मणम्।

---

जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राणमहान्तमध्वानमेष्यन् रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवन्वेद यत्र गमिष्यामीत्यथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥१॥

याज्ञवल्क्यस्येदं वचनमुपश्रुत्य विशिष्टोऽसत्तो ब्रह्मविदसौ, विशिष्टा ह्यस्य ब्रह्मविद्येत्यवधृत्य तमाचार्यभावेन स्वीकुर्वन् स

वैदेहो जनकः कूर्चादासनविशेषादुत्थाय समीपमुपसर्पन् नमस्तेऽस्तु याज्ञवल्क्येति शिष्यभावसमुचितप्रणिपातव्यञ्जकवचनपूर्वकमनुशाधि मामित्युवाच । स ह याज्ञवल्क्य उवाच–यथा महान्तमध्वानं स्थलेन जलेन वा गच्छन् रथं नावं वा समाददीत एवमेव तत्तदाचार्योपदिष्टाभिराभिरुपनिषद्भिः–रहस्योपदेशैस्त्वमसि समाहितात्मा–समाहितमनाः । आढ्यो–धनसंपन्नो वृन्दारकोऽसि, वृन्दारकवत्पूज्योऽसि । स एष त्वमधीतवेद आचार्येभ्यो लब्धोपनिषत्क इतो देहादत्यन्ततो विमुच्यमानः क्व गमिष्यसि, केन पथा कं स्थानं गमिष्यसि । अपि जानासि, ये चेमे उपदेशास्तेभ्यस्तेभ्यो लब्धा न तावता कृतकृत्यता यावदिदं न जानासीति भावः । इतर आह–नाहं भगवन्वेद यत्राहं गमिष्यामीति । याज्ञवल्क्य आह यत्र गमिष्यसि तदहं वक्ष्यामि । इतर आह–अवहितोऽस्मि ब्रवीतु भगवानिति ॥१॥

**इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥२॥**

योऽयं दक्षिणेऽक्षिणि पुरुषः, इन्धो नामैषः–प्रकृष्टदीप्तिगुणयोगादिन्ध इति ख्यातोऽयम् । अन्यत्र–'य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्ष'न्निति दक्षिणाक्षिस्थस्य आदित्यमण्डलस्थपुरुषेणैक्यश्रवणात् आदित्यमण्डलान्तस्थः पुण्डरीकाक्षो नारायण एव दक्षिणाक्षिस्थ इन्धनामकोऽत्र प्रत्यभिज्ञायते । एतमिन्धं सन्तमिन्द्र

इत्याचक्षते परोक्षशब्देन देवाः, देवा हि परोक्षशब्देन व्यवहारे प्रीतिमन्तः, प्रत्यक्षद्विषो हि ते—साक्षात् स्पष्टाववोधकशब्देन व्यवहर्तुं नैतेषां प्रीतिरिति भावः । सोऽयमिन्ध एवेन्द्र इति तत्र तत्र श्रूयते 'इन्द्रं निचिक्युः परमे व्योमन्', 'इन्द्रो मायाभिः पुरुरूप ईयते' इति ॥२॥

अथैतद्वामेऽक्षणि पुरुषरूपमेषास्य पत्नी विराट् तयोरेष सꣳस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः सञ्चरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्त्येताभिर्वा एतदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः॥३॥

अथ यदेतद्वामेऽक्षणि पुरुषरूपं—मानुषाकारं (योगिभिर्दृश्यते) एषाऽस्येन्द्रस्य पत्नी विराट्—श्रीः, श्रूयते हि विराडिति श्रियो नाम, 'वीराडसि बृहती श्रीरसीन्द्रपत्नी'ति । तयोरेष संस्तावः—सहवसतिस्थानम्, किं तत् स्थानम् ?, य एषोऽन्तर्हृदय आकाशः, अथैनयोरेतदन्नम्—भोग्यम्, य एषोऽन्तर्हृदये लोहितपिण्डः, अकर्म-

वश्यस्य कथमिदं भोग्यम्, सत्यम्, लीलारसनिष्पादकतया भोग्यम्, रूपणं तु तथा, अथैनयोरेतत्प्रावरणम्, यदेतदन्तर्हृदये नाडीमयं जालकमिव, अथैनयोरेषा सञ्चरणी सृतिः—मार्गः, यैषा हृदयादूर्ध्वा नाडी मूर्धानमभिनिःसरति, तया हि उपासक एतावन्वेति। 'तयोर्ध्व-मायन्नमृतत्वमेती'ति श्रूयते। यथा केशः सहस्रधा भिन्नस्तथाऽतिसूक्ष्मा हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिताः, ताभिरेवैतद्भूतजातं—जीवजातं परित आस्रवति। या पूर्वोक्ता एका ऊर्ध्वा नाडी तयाऽमृतमेति, आभिस्तु संसरति जीवः, अतः 'अनयोरेषा सृतिः, यैषा हृदयादूर्ध्वा' इत्युक्तम्, यस्मादेष प्रकृष्टदीप्तिमत्त्वेनेन्धः,अतएव हृदयगुहानिवासोऽपि अस्मात् शारीरात् जीवात् प्रविविक्ताहारतर इव—अतिविलक्षणानव-धिकानन्दमयतया विलक्षणमिव भोग्यं वस्तु। विलक्षणं मुक्तभोग्यं वस्त्वित्येतत्। यद्वा—तस्मादस्मात्—हिताभिर्नाडीभिः परित आस्रवतः स्वप्नजाग्रद्दशयोः सुखदुःखे अनुभवतोऽस्मात् शारीरात् जीवात् एष इन्धः—प्रकृष्टदीप्तिगुणविशिष्ट इन्द्रः परमात्मा प्रविविक्ताहारतर इव—न ह्ययमन्तर्हृदये निवसन्नपि शारीरेण सह स्वाप्नं जागरितं वा सुखं दुःखं वा कर्मफलमनुभवति, सह निवसन्नपि ततः प्रविवि-क्ताहारतर इवैव, अकामस्याप्तकामस्याकर्मवश्यस्य कोऽयमाहारः,किन्तु लीलारसानुभवमात्रम्, अत इवेति निर्देशः, नास्य तत्सामान्याहार-योग इति व्यवच्छेदाय एवकारः। यद्येषोऽपि जीव इव हिताभि-र्नाडीभिरास्रवेत् भवेत् नाम तदा तत्तत्स्थानसंश्लेषप्रयुक्तजाग्रत्स्वाप्न-सुखदुःखाद्यनुभवः, न च तथा, येयं मूर्धानमभिनिःसृतोर्ध्वा सैव ह्यस्य सञ्चरणी सृतिरिति ॥३॥

तस्य प्राची दिक् प्राञ्चः प्राणा दक्षिणा दिग्दक्षिणे प्राणाः प्रतीची दिक् प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः स होवाच जनको वैदेहोऽभयं त्वागच्छताद्याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मी ३ इति ॥४॥

इतश्च शारीरादात्मनो विलक्षणः सः, य इन्द्रः प्रस्तुतः। प्रतिशरीरं भिन्नस्य शारीरस्य जीवस्य तत्र तत्रोऽन्योऽन्यः प्राणः, तदेकमेव प्राणमपेक्ष्य स आत्मा भवति, स ह्यनिन्द्रः—कर्मवश्यः, अयं तु इन्द्रः, या च प्राची दिक् ये च तस्यां दिशि वर्तमानाः प्राणाः या दक्षिणा दिक् ये च तस्यां दिशि वर्तमानाः, या च प्रतीची दिक् ये च तस्यां दिशि वर्तमानाः या चोदीची ये च तस्यां प्राणाः सर्वे ते तस्यैवेन्द्रस्य तदेकशेषभूताः, प्राणानामप्येष प्राणः, स एष दृष्टैः प्राकृतैः प्रकारैरस्पृष्टः सर्वतोऽस्माद्विलक्षणो नेतिनेत्येवावबोध्यः, तद्यथा—अगृह्यो न हि गृह्यते, अशीर्यो नहि शीर्यते, असङ्गो न हि सज्यते,

असितो न व्यथते न रिष्यति इति । मयोपदिष्टं तमिन्द्रं सर्वप्राणप्राणनहेतुं सर्वान्तरात्मानं स्वेतरसकलवस्तुविलक्षणं परमात्मानं जानंस्त्वमभयं गतोऽसि । इति होवाच याज्ञवल्क्यः । स होवाच जनको वैदेहः—भगवन् भवत्तो लब्धविद्यस्य मम भवतः प्रसादेनाभयं भवतात् । यस्त्वं नोऽभयं ब्रह्म वेदयसे तस्मै ते नमोऽस्तु, य इमे विदेहा देशाः यश्चाहं सर्वमिदं तवैव । त्वदधीनमित्येतत् ॥२॥

इति चतुर्थाध्याये द्वितीयं ब्राह्मणम् ।

---

जनकꣳ ह वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समुदाते तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तꣳ हास्मै ददौ तꣳ सम्राडेव पूर्वं पप्रच्छ ॥१॥

विद्यास्तुतये आख्यायिकेयं प्रवर्तते । याज्ञवल्क्यो जातु वैदेहं जनकमभिजगाम योगक्षेमार्थम् । गच्छन्नेव स मेने—अद्य ब्रह्मविद्यामधिकृत्य किमपि न वदिष्ये इति । अथ तौ सङ्गतौ जनकयाज्ञवल्क्यौ अग्निहोत्रे समुदाते—अग्निहोत्रमधिकृत्य संवादमकुर्वताम् । अग्निहोत्रे जनकस्य विज्ञानातिशयमवगत्य प्रहृष्टो वरं ददौ—वरं वृणीष्वेत्याह, स जनकः कामप्रश्नमेव—यस्य जिज्ञासा तस्य प्रश्नमेव वव्रे । तं ह वरमस्मै ददौ । अत एव सम्राडेव पूर्वं पप्रच्छ । अनेन वरदानेन ब्रह्मविद्याप्रश्नस्य तत्प्रतिवचनस्य चावसरः समभूदिति गम्यते ॥१॥

**याज्ञवल्क्य किंज्योतिरयं पुरुष इति आदित्यज्योतिः सम्राडिति होवाचाऽऽदित्येनैव ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥२॥**

याज्ञवल्क्य अयं पुरुषः किंज्योतिः ?। (किं ज्योतिर्यस्येति बहुव्रीहिः) व्यवहरन्नेष केन ज्योतिषा व्यवहरति, अर्थप्रकाशे सति व्यवहारः, प्रकाशकेन च केनचिज्ज्योतिषा भाव्यम्, तच्च ज्योतिः किम्। आह याज्ञवल्क्यः—हे सम्राट् आदित्यज्योतिरेवायमिति। आदित्येन प्रकाशितार्थोऽयं व्यवहरति। तदेवोपपादयति—अयं हि पुरुषः आदित्येनैव ज्योतिषाऽऽस्ते—उपविशत्यासने कस्मिंश्चित्, पल्ययते—पर्यटति तत्र तत्र, कर्म च तत्तत् कुरुते, विपल्येति च—विपर्येति च यथागतम्। प्रतिवचनमिदं जनकोऽनुमन्यते—एवमेवैतद्याज्ञवल्क्येति ॥२॥

**अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य॥३॥**

अस्तमितेऽप्यादित्ये पुरुषो व्यवहरति नाम, तत् तदा किंज्योतिरेवायं पुरुषः, आह याज्ञवल्क्यः—चन्द्रमा एवास्य व्यवहरतो ज्योतिः, चन्द्रमसो ज्योतिष्ट्वमुपपादयति—चन्द्रमसैवायं ज्योतिषेति। अतिरोहितार्थमेतत् ॥३॥

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किंज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥४॥

पुनः पृच्छति जनकः, चन्द्रमस्यप्यस्तमिते किंज्योतिरेवायमिति । आह याज्ञवल्क्यः—अग्निरेवेति । अन्यद्व्याख्यातप्रायम् ॥४॥

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य ॥५॥

पृच्छति—चन्द्रमस्यप्यस्तमिते शान्तेऽप्यग्नौ किंज्योतिरिवायं पुरुषः। आह याज्ञवल्क्यः—वागेवास्य ज्योतिरिति। वाचो ज्योतिष्ट्वमुपपादयति—वाचैवायं ज्योतिषेत्यादि । हे सम्राट् स्वीयः पाणिरपि यत्रान्धकारे न लक्ष्यते तत्रान्धकारे यत्र देशे कस्यचिदन्यस्य वागुच्चरति तां वाचमाश्रुत्य तं देशमुपन्येति तत् वागेव ज्योतिस्तदेति ॥५॥

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष

इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योति-
षाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति ॥६॥

पृच्छति–आदित्यादावस्तमिते वाच्यपि शान्तायां किंज्योतिरेवायं पुरुषः ?, आह याज्ञवल्क्यः—आत्मैवास्य ज्योतिरिति । वागिन्द्रियेऽप्यस्तमिते व्यवहरति नाम पुरुषः स्वप्नार्थाननुभवन्, अतस्तदा किंज्योतिरेवायं पुरुषो भवति । आह याज्ञवल्क्यः–आत्मैवास्य ज्योतिर्भवतीति । कथमात्मा ज्योतिः ?, उच्यते–तदा ह्यसावात्मनैव ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येति ॥६॥

कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु
हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोका-
वनुसञ्चरति ध्यायतीव लेलायतीव सहि स्वप्नो
भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ॥७॥

अस्तमितेषु येनात्मना ज्योतिषा पुरुष आस्ते कर्म कुरुते पर्येति च, स आत्मा कतमः, स्वरूपदेहबुद्धिजीवेष्वात्मशब्दार्थेषु इह विवक्षितः कतमः । प्रतिवक्ति–योऽयमिति । योऽयं विज्ञानमयो–विज्ञानप्रचुरः हृदि अन्तः–हृदयकमलान्तः संस्थितः, बाह्येभ्य आदित्यादिज्योतिर्भ्यो विलक्षणोऽन्तर्ज्योतिर्लक्षणः प्राणेषु सन्निहितः, यत्सान्निध्यबलात्प्राणाश्चेतयन्तीव, स प्राणेभ्योऽन्यो ज्ञाता जीवः, तेनात्मना विज्ञानज्योतिषा वागादिष्वस्तमितेष्वप्यास्ते पर्येति कर्म कुरुते स्वाप्ने । अयमात्मा पुरुषः । पूर्णत्वात् पुरि हृदयाख्ये शयनाद्वा ।

सोऽयं विज्ञानमयः स्वयंज्योतिः पुरुषः समानः सन्—यस्मिन् गुणमये पिण्डविशेषे प्राणे हृदि सन्निहितः, तेनेन्द्रियप्राणादिसङ्घातात्मकेन पिण्डविशेषेण समानः सन् अगृहीततद्वैलक्षण्यस्तदात्मानमात्मानं पश्यन् अतएव तत्संसर्गौपाधिकक्रियाविशेषकर्तृत्वमात्मनः स्वाभाविकं जानन् पुण्यापुण्याभ्यां संश्लिष्ट उभौ लोकौ—इमं लोकममुं च लोकमनुसञ्चरति—अनुक्रमेण सञ्चरति, अस्मात्प्रेतः अमुमेति, अमुष्माच्च्युतः इममितः पुनरुद्गतोऽस्मादमुमिति । यावन्न विवेकग्रहः, तावदेतदनुभ्रमणमवर्जनीयम् । समानः—साभिमान इति वाऽर्थः, देहात्माभिमानसहित इत्येत् । यद्वा—परायत्ते कर्तृत्वे स्वतन्त्रोऽहमित्यभिमानसहित इत्येतत् । ध्यायतीव लेलायतीव—गुणविशेषसंसर्गोपाधिकं ध्यानचलनलक्षणक्रियाविशेषकर्तृत्वं परायत्तमपि स्वाभाविकमात्मनोऽभिमन्यते सोऽयम् । स एष स्वप्नावस्थो भूत्वा इमं लोकं जाग्रत्प्रपञ्चमतिक्रामति । योऽयं जाग्रद्दशायामनुभूयमानः प्रपञ्चः, तानि मृत्योः—पापस्य संसारस्यैव रूपाणि, दुःखैकायतनानीत्येतत् ॥७॥

स वाऽयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः सँसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति ॥८॥

सोऽयं विज्ञानमयः पुरुषो न जायते न वा म्रियते, नित्यो ह्ययम्, अथाप्यनादिकर्मनियन्त्रितो यदा शरीरमभिसम्पद्यते, तेन शरीराभिसम्पदनेन जायते इत्युच्यते, तथा शरीरादुत्क्रामन् म्रियते

इत्युच्यते, सोऽयं शरीरमभिसम्पद्यमानो जायमानः पाप्मभिरेतैर्भोग्यभोगोपकरणव्यपदेशास्पदैः संसृज्यते, शरीरादुत्क्रामन् म्रियमाण एतैः पाप्मभिर्वियुज्यते, भोग्यभोगोपकरणतयाऽऽभासमानाः सर्वे एव गुणमया भावा वस्तुतः पापमूलत्वात्पापा एव, स्वतोऽपहतपाप्मनो नित्यस्याप्यस्य विज्ञानमयस्य प्रकृतिसंसर्गोपाधिके जननमरणे पापसंश्लेषश्चेति भावः ॥८॥

तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयꣳ स्वप्नस्थानं तस्मिन्सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं च अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दाꣳश्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति ॥९॥

तस्यैतस्य शरीरमभिसम्पद्यमानस्य कर्मफलभोगाय द्वे एव स्थाने सामान्ये भवतः, इदं सन्निहितं दृश्यमानं स्थानम् (अयं लोकः) परलोकस्थानं च, आभ्यामपरं तृतीयं स्थानमसामान्यम्, एकैकासाधारणम् । एतेन—'द्वे एव स्थाने भवत' इत्यवधारणं 'तृतीयं स्थान'मिति पुनर्वचनं च मिथो व्याहतमिति शङ्का परास्ता । सामा-

न्यस्य ह्यवधारणम् । तच्च सन्ध्यम्—स्वप्नसुषुप्त्योः सन्धौ भवम् । उक्तयोः स्थानयोः सन्धौ भवमिति वा सन्ध्यमुच्यते, सन्धिस्थाने स्थित एव तु द्वे स्थाने पश्येत्, इह स्थितस्तु एतल्लोकसुखदुःखे परलोकसुखदुःखे चानुभवति, इममेवाशयमनुपदं श्रावयति च—तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं चेति । पश्यति हि पत्नीपुत्रादिकमिमं लोकममुं चेन्द्रभवनादिकम्, यद्यपि स्वाप्नः पत्नीपुत्रादिरिन्द्रभवनादिश्चार्थो वस्तुतो नायं लोको न वा परो लोकः, अथापि ताविव ताविति तथोच्यते । ननु कर्म हि परिपक्वं फलायेमं लोकममुं वा लोकं नयति, असति तस्मिन् केनाक्रमेण स्वप्ने तदुपभोगः, इत्यत्राह—अथ यथाक्रमोऽयमिति । अयं जीवः इतः प्रेतः यथाक्रमः—आक्रम्यतेऽनेनेत्याक्रमः परिपक्वं कर्म, यादृक्प्रकारपरिपक्वकर्मसंपन्नः, परलोके भवति, तथैवायं देहात्प्रारब्धफलादप्रेत एव तमेवाक्रमम्—तथाविधमेव किमपि परिपक्वं कर्मावलम्ब्योभयान्पाप्मनः—दृष्टसजातीयान् व्याघ्रसर्पादिदुःखाधायकान् अदृष्टसजातीयान् यक्षरक्षःपिशाचादींश्च द्विविधान् पश्यति, तथोभयानानन्दान्—दृष्टपत्नीपुत्रादिसजातीयानानन्दान् अदृष्टेन्द्रभवनादिसजातीयांश्च पश्यति । पाप्मन आनन्दानुभयांश्च पश्यतीति वा । एतेन स्वाप्नस्यापि कर्मफलत्वेन एतल्लोकपरलोकार्थस्येव परमार्थता ज्ञापिता भवति । ननु जाग्रत्प्रपञ्च इव स्वाप्नोऽप्यर्थः कर्मफलभूतश्चेत्तदाऽऽत्मनैव ज्योतिषा आस्ते इत्येतत् कथम्, इत्यत्राह—स यत्रेत्यादिना । स यत्र प्रस्वपति—स्वप्नावस्थां प्राप्नोति, तदा अस्य लोकस्य—जाग्रद्दशायामनुभूयमानस्य प्रपञ्चस्य

या मात्रा मीयतेऽनेनेति मात्रा प्रकाशिका इन्द्रियवृत्तिः इन्द्रियाण्येव वा तामपादाय–तत्तदिन्द्रियप्रदेशतस्तत्तद्देशतो वा अपादाय (ज्ञानप्रभा ह्यस्येन्द्रियैः करणैर्द्वारभूतैः परितः प्रसरति, स्वप्नावस्थायां च सङ्कुचन्ती ततोऽपसरति) स्वयं विहत्य–स्थूलमिमं देहं निश्चेष्टं निःसम्बोधमापाद्य स्वयं निर्माय–जाग्रद्विसजातीयं भोगायतनभोगोपकरणभोगस्थानादि धर्माधर्मबलेन निर्माय स्वेन ज्योतिषा–आत्मना ज्योतिषा (न बाह्येनादित्येन ज्योतिषा) स्वेन भासा स्वासाधारणभूतया ज्ञानप्रभया स्वपिति–स्वप्नमनुभवति । तस्मादत्र स्वप्ने स्वयंज्योतिर्भवति बाह्यज्योतिरनपेक्षो भवति ॥९॥

न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान् पुष्करिणीः स्रवन्तीः सृजते स हि कर्ता ॥१०॥

यद्यप्ययं जीवो धर्माधर्मसंपन्नोऽपि न स्वयं प्रभवति निर्मातुम्, असमर्थो ह्ययम्, नाप्यात्मीयावपि धर्माधर्मौ साक्षात्कर्तुं प्रभवत्ययम्, साक्षात्करोति चेदनुकूलं धर्मफलमेव सृजेत्, तथापि यो बाह्यानर्थान् सृजति सर्वज्ञः परमेश्वरः परमात्मा स एव हि सर्वस्य कर्ता सकलपुरुषानुभाव्यान् तत्तत्पुरुषमात्रानुभाव्यान् रथादीन् सृजति, तत्र–स्वप्नावस्थायां न सकलनयनगोचरतार्हा रथा रथयोगा

अश्वादयः पन्थानो वा अथापि तत्तत्पुरुषमात्रानुभाव्यान् तत्काल-प्रध्वंसिनो रथान् रथयोगान् पथः सृजते । दर्शनमात्रेण या प्रीतिः सा मुत्, स्वीयत्वाध्यवसायतो या प्रीतिः सा प्रमुत्, उपयोगजनिता प्रीतिरानन्दः । वेशन्ताः पल्वलानि, पुष्करिण्यः सरांसि, स्रवन्त्यो नद्यः ॥१०॥

तदेते श्लोका भवन्ति । स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति । शुक्रमादाय पुनरैति स्थानं हिरण्मयः पुरुष एकहंसः ॥११॥

तस्मिन्नस्मिन् स्वप्ने विषये एते–वक्ष्यमाणाः श्लोका भवन्ति । स्वप्नेनोपलक्षितोऽयं जीवः शरीरमेव शारीरं स्थूलमिदं शरीरं अभिप्रहत्य–निःसम्बोधं निश्चेष्टं निपतितमापाद्य–स्वप्नेनेतिकरणे तृतीया वा, स्वप्नावस्थयाऽभिप्रहत्येत्यन्वयः, स्वयमसुप्तः सुप्तानभिचाकशीति–स्वयमविलुप्तविज्ञानः अस्तावबोधांश्चक्षुरादीन् (निर्व्यापारानित्येतत्) अभितः स्वासाधारणचैतन्यज्योतिषा प्रकाशते । अथ स्वप्नान्ते शुक्रं–प्रकाशकमिन्द्रियजातं समादाय विज्ञानांशुना पुनरैति जाग्रत्स्थानं सोऽयं हिरण्मयः–प्रकाशमयः पुरुषः, एकहंसः–स्वप्ने चक्षुरादिजाग्रत्परिवारमखिलमपहाय एक एव चरति, तदयं स्वप्नावस्थायामेकहंस उच्यते । यद्वा–जाग्रत्स्थानात् स्वाप्नस्थानं ततः पुनर्जाग्रत्स्थानं ततः पुनः स्वाप्नं स्थानमेवमस्माल्लोकादमुं लोकममुष्मादिमं पुनरस्मादमुं गच्छत्येकः, नतु स्थानभेदाल्लोकभेदाद्वाऽन्योऽन्यः, तदयमेकहंसः ॥११॥

प्राणेन रक्षन्नवरं कुलायं बहिष्कुला-
यादमृतश्चरित्वा । स ईयतेऽमृतो यत्र
कामं हिरण्मयः पुरुष एकहंसः ॥१२॥

स्वयं सौधतले कस्मिंश्चिच्छयान एव सोऽयं स्वप्नावस्थायां कुलायादस्मात् स्थूलदेहाद्बहिः—देशान्तरे कुलायान्तरेणामृत एव चरित्वा, यद्यपि मृतो भवान्तरं प्राप्तो देशान्तरे कुलायान्तरेण चरेन्नाम, अद्य तु प्राणेन पञ्चवृत्तिना अवरं—मांसमज्जादिमयतयाऽपकृष्टं रक्षन् चरित्वा, स्वप्ने यस्मिंश्चरति येन वा कुलायेन चरति तदुभयमितोऽन्यदेव, तद्युक्तम् बहिष्कुलायादिति । यत्र काममीयते—यत्र क्वचन देशे यं कञ्चन कामम्—अनियतदेशकालप्रकृतिनिमित्तं काम्यमानं विषयमीयते, अनुभवतीत्येतत् । सोऽयं स्वतोऽमृतो—मरणधर्मरहितो हिरण्मय एकहंसः पुरुषः ॥१२॥

स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः
कुरुते बहूनि । उतेव स्त्रीभिः सह मोद-
मानो जक्षदुतेवापि भयानि पश्यन् ॥१३॥

स्वप्नान्ते—स्वप्नस्थाने उच्चावचम्—उत्कृष्टापकृष्टं पुण्यपापफलं मानुषतिर्यगादिभोगजातमीयमानो बहूनि—अनियतदेशकालनिमित्तानि देवमानुषतिर्यगादीनि रूपाणि पुण्यापुण्यसहायः सोऽयं देवः—चैतन्यलक्षणद्योतनगुणवान् कुरुते । जातु स्त्रीभिः सह रममाण इव जातु जक्षदिव किञ्चित् जातु व्याघ्रादिभयानीव पश्यन् भवति ॥१३॥

आराममस्य पश्यन्ति न तं पश्यति कश्चनेति तं ना- यतं बोधयेदित्याहुः । दुर्भिषज्यꣳ हास्मै भवति यमेष न प्रतिपद्यतेऽथो खल्वाहुर्जागरितदेश एवा- स्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायं पुरुषः स्वयंज्योतिर्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षाय ब्रूहीति ॥१४॥

अस्य–हिरण्मयस्य स्वयंज्योतिषः पुरुषस्येममारामं पश्यन्ति सर्वे, यस्यायमारामस्तं तु न कश्चन, यः स्वाप्नोऽर्थो जाग्रदर्थो वा सर्वोऽप्या- राम इवारामः, पश्यन्तोऽप्यारामं कस्यायमिति तु न कश्चन पश्यति। इन्द्रियारामाः पामराः प्राणेन्द्रियादिसङ्घातस्य पिण्डस्यैवायमाराम इति पश्यन्ति, स्वाप्नार्थमनुभवन्तोऽपि न ततोऽतिरिक्तं द्रष्टुं प्रभ- वन्ति। इति श्रुतेरनुवादोऽयमाश्चर्येण, अहो स्वाप्नावस्थायां निरूप्यमा- णायां स्वयंज्योतिरेष देहेन्द्रियप्राणादिव्यतिरिक्त उपायेन सुग्रहोऽपि नावधार्यते केनापि, अहो विपरीतवासनावैचित्र्यम् इति भावः। आयुर्वेदविदो लौकिका अप्येतदाहुः–आयतं गाढसुप्तं सहसा न बोधयेत्, अयमत्र हेतुः–यदा स्वप्नेन शरीरं निःसम्बोधमापाद्य शुक्रमिन्द्रियवर्गं तत्तत्प्रदेशादादाय प्राणेन रक्षन्नवरं कुलायं बहि- ष्कुलायादमृतश्चरित्वा पुनरेति स्थानं तदैष सहसोद्बोधनेन दोषेण यं स्थानविशेषं–इन्द्रियस्थानगोलकविशेषं न प्रतिपद्यते इन्द्रियैर्द्वार- भूतैः, विनिमयेन वा प्रतिपद्यते, तदा दुर्भिषज्यम्–दुश्चिकित्स्यमा-

न्ध्यबाधिर्यादि भवतीति । अथात्र केचिदाहुः, नात्र सान्ध्यं तृतीयं स्थानम्, जागरितदेश एवायम्, जाग्रदेवानुभूतं गजादि पश्यति, तत् स्थानद्वयान्नाधिकं स्वप्नस्थानम्, येनास्यात्र स्वयंज्योतिष्ट्वं गम्येत इति । नैतद्योग्यम्, इन्द्रियाण्यखिलान्युपरमन्ते ह्यत्र, तदत्रायं पुरुषः स्वयंज्योतिरेव, तत्तृतीयमेव चेदं स्थानम् । अथ जनकः प्रहृष्ट आह–भगवन्! भवत्तो लब्धस्वयंज्योतिष्ट्वविज्ञानोऽहं एतद्विज्ञानप्रदाने निमित्ते सहस्रं दक्षिणात्वेन तुभ्यं ददामि, अत ऊर्ध्वं विमोक्षायैव साधनं ब्रूहि इति ॥ १४ ॥

स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥१५॥

एवं पृष्टो याज्ञवल्क्य आह–स एष स्वयंज्योतिः पुरुषः सम्प्रसादे–स्वप्नस्थाने, यद्यपि सुषुप्तं संप्रसाद उच्यते, सर्वाभिमानकालुष्यापगमात्, अथापि जाग्रदपेक्षया स्वप्नस्थानमप्यपगतकतिपयाभिमानकालुष्यमिति संप्रसाद उच्यते । एतस्मिन् संप्रसादे रत्वा स्त्रीभिश्चरित्वा च रथादिभिर्दृष्ट्वा च पुण्यं गजतुरगादि पापं वा व्याघ्रसर्पादि, सुषुप्तं प्रबोधं प्राप्तोऽपि पुनः प्रतिन्यायं–आयो गमनम्, न्यायो निर्गमनम्, गमनविपरीतक्रमेणैव यन्निर्गमनम्, तत् प्रतिन्याय-

शब्देनोच्यते, यथागतमित्येतत्, प्रतियोनि—यथानिमित्तं स्वप्नायैव पुनः आद्रवति। संप्रसादः सुषुप्तस्थानमेव वा, स एषः—स्वाप्नावस्थः स्वयंज्योतिः पुरुषस्तदा रत्वा चरित्वा दृष्ट्वा पुण्यं च पापं च प्रविष्टः संप्रसादे, ततः संप्रसादात्प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायेत्यर्थः। स यत्तत्र—स्वप्ने पुण्यं पापं वा पश्यति न तेनायमन्वागतः—न तेनायमनुगतो भवति। कुतः?, असङ्गो ह्ययम्—न स्वभावतोऽस्य तैर्दृश्यैः पुण्यैः पापैर्वा सङ्गः, न तद्दर्शनेन वा,येन तैरन्वागतो भवेत्। अयं भावः—या यस्य प्रकृतिर्न तया स विमुच्येत, न हि तेजः स्वप्रकृत्या औष्ण्येन न वा जलं शैत्येन न वा पृथिवी गन्धेन, अन्वेत्येवौष्ण्यादितत्तत्प्रकृतिस्तेजःप्रभृति तत्तद्वस्तु सर्वदा। या तु न प्रकृतिर्न साऽन्वेति, नहि काठिन्यं करकादावपां विकृतावन्वेति, विमुच्यते एव सा तेनापगते उपाधौ, यदेतत्पुण्यापुण्यदर्शनं न सा प्रकृतिरस्य, स्वतोऽपहतपाप्मा ह्यसौ, प्रीतिप्रद्वेषभेदनियतं च तत्। उपाधिश्चात्रानादिकालानुस्यूतविपरीतवासनामूलको विपरीतधर्माध्यासः, तत्र च निमित्तं गुणमयवस्तुसान्निध्यम्, तस्मादस्य चैतन्यैकस्वभावस्य न बाह्यैरर्थैः पुण्यपापलक्षणैः सहजसम्बन्धो न वा तद्दर्शनेन प्रीतिप्रद्वेषनियतेन। अत एवायं संप्रसादे प्रविष्टो न तेनान्वागतो भवति, यदि सहजः सङ्गः स्यात्, कथं तदा तैर्विमुच्येत। पुण्यापुण्यदर्शनोपाधौ विलयमुपगते तु विमुच्यते एव तदा तैः पुण्यपापैर्दृश्यैस्तद्दर्शनेन च। एवमेव जाग्रद्दशायामपि यत् पुण्यं पापं च पश्यति तेन स्वाप्नेऽनन्वागत एव भवति, असङ्गो ह्ययम्, प्रकृतिरेवास्यासङ्गता, जाग्रद्दशायामिन्द्रियसंप्रयोगार्थोपनिपाता-

दिलक्षणोपाधिकृतं पुण्यापुण्यदर्शनम्, विलीने चोपाधौ तैरनन्वागत एवायम् । तदेवं जाग्रत्स्वप्नाद्यवस्थायां विचार्यमाणायामसङ्गस्यास्य पुण्यापुण्यैर्दृश्यैस्तद्दर्शनेन चानन्वागतस्य सर्वथा पुण्यापुण्यदर्शनलक्षणसंसाराद्विमोक्षो न दुर्घटः, न ह्यस्य तत् पुण्यापुण्यदर्शनं साहजिकम्, तत् येनोपाधिना पुण्यापुण्यदर्शनलक्षणः संसारस्तस्यात्यन्तिकापनोदने यतितव्यमिति । अपगते च तदुपाधौ विपरीतधर्माध्यासे सुषुप्तिस्वप्नजाग्रद्भेदो नास्य तदा, सर्वं पश्यन्नप्येष ब्रह्मात्मकमेव पश्यतीति न प्रीतिप्रद्वेषनियतपुण्यापुण्यदर्शनप्रसङ्गः । सरलया दिशा भावमपरमप्यस्य संप्रदर्शयामः । विमोक्षायैव ब्रूहीति पृष्ट आह–स्वयंज्योतिषमात्मानं पुरुषमेनं पामराः शिरःपाण्यादिलक्षणकार्यकारणसङ्घातात्मकपिण्डविशेषादभिन्नं पश्यन्तो मुह्यन्ति प्रियाप्रियभेददृष्टिदूषितचेतसः । अत एव ममायं पुत्रो ममेयं पत्नी ममायं भ्राता ममायं मित्रं ममेदं क्षेत्रमिति तत्र तत्रात्मीयताभावनया सज्जन्ते, अयं तु चेतनो वस्तुतोऽसङ्गः, यथाऽयं स्वप्नावस्थानिरूपणे स्वयंज्योतिरात्मा जडादस्मात्पिण्डाद्विलक्षण इति विज्ञायते, तथा स्वाप्नजाग्रदाद्यवस्थानिरूपणे प्रकृत्याऽसङ्गताऽस्य विज्ञायते । तथाहि–स्वप्ने यत् पुण्यं–प्रियं वस्तु पश्यति, यच्च पापं–अनिष्टं वस्तु पश्यति, प्रियाप्रिययोः पुण्यपापफलत्वात्पुण्यपापशब्दाभ्यां निर्देशः, जाग्रदवस्थां प्रविशन्ननन्वागतस्तेन भवति–स्वप्ने यद्वस्तु दृष्ट्वा प्रीत्याऽनुधावति अप्रीत्या वा उद्विजते, न ते तमेनमनुगच्छतः, तदयमनन्वागत

---

१ पत्नीत्वपुत्रत्वाद्यध्यासादिरादिशब्दग्राह्यः ।

एव तेन, एवं जाग्रदवस्थायां यत्पश्यति पुण्यं पापं वा स्वप्नदशायां न ताभ्यामन्वागतो भवति, संप्रसादे च न ताभ्यामुभाभ्यामपि, यो येनाननन्वागतस्तस्य तेन सह कः सङ्गः, कार्यं कारणमनुगच्छेत् कारणं वा कार्यम्, यथा घटादि कार्यं विलीयमानं कारणं मृद्द्रव्यमनुगच्छति, वर्तमानमपि तदनन्यतया तदनुगतमेव, कारणं मृद्द्रव्यमपि कार्यं घटमनुप्रविष्टमेव, तत् कार्यकारणद्रव्ये एव मिथोऽन्वागते स्याताम्, जातिव्यक्ती गुणगुणिनौ च तथा, अयं च स्वयंज्योतिश्चेतनो न कार्यं न कारणम्, नवाऽस्य दृश्यैस्तैः सह गुणगुणिभावो जातिव्यक्तिभावो वा, तस्यास्य कः सङ्गः क्षणं दृक्पथमागत्योपसर्पद्भिरपसर्पद्भिः, तथा तेषां क्षणं दृक्पथोपगमनं प्रियाप्रियरूपताऽपि पुण्यापुण्यरूपकर्मोपाधित एव । कर्मोपाधिकत्वव्यञ्जनायैव च पुण्यापुण्यशब्दाभ्यां दृश्यवस्तुनिर्देशः । तदस्थाने भवत्यस्यात्मीयताध्यासः, तद्वस्तुतत्त्वं विचारयतो नैव सङ्गः क्वचिदपि भवेत्, विमुच्येतैव ततो बन्धनात् इति । अथ जनक आह—भगवन्नस्मिन्नुपदेशे सहस्रं ददामि, अतः परं विमोक्षाय यद्वक्तव्यमवशिष्टं तन्मे ब्रूहीति ॥१५॥

स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥१६॥

बुद्धान्तः—अन्तशब्दः स्थानपरः, जाग्रत्स्थानायेत्यर्थः । व्याख्यातप्रायमितरत् ॥ १६ ॥

स वा एष एतस्मिन्बुद्धान्ते रत्वा चरित्वा
दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं
प्रतियोन्याद्रवति स्वप्नान्तायैव ॥१७॥

बुद्धान्ते—बुद्धस्थाने, स्वप्नान्ताय—स्वप्नस्थानाय । अनुदिनमसकृद्यमात्मा बुद्धान्तात् स्वप्नान्तं स्वप्नान्तात् बुद्धान्तमेवमाद्रवन्नपि तैः पुण्यपापोपाधिसमुपस्थापितैरर्थैरनन्वागत एव भवति ॥ १७ ॥

तद्यथा महामत्स्य उभे कूलेऽनुसञ्चरति
पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्ता-
वनुसञ्चरति स्वप्नान्तं च बुद्धान्तं च ॥१८॥

सनिदर्शनमुपक्रान्तं स्थानद्वयसञ्चरणमुपसंहरति—तद्यथेति । यथा महानद्यां वर्तमानो महामत्स्यो दक्षिणकूलादुत्तरकूलमुत्तरकूलाद्दक्षिणकूलमनुसञ्चरति, एवमुभावन्तावनुसञ्चरति ॥ १८ ॥

तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य
श्रान्तः सꣳहत्य पक्षौ संलयायैव ध्रियत एवमेवायं
पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन
कामं कामयते न कञ्चन स्वप्नं पश्यति ॥१९॥

अथ सुषुप्तं निरूप्यते, यत्रायं संप्रसन्नः स्वेन रूपेण प्रकाशते ।

यथाऽस्मिन्नाकाशे श्येनः सुपर्णो वा पतत्री विशेषतः परिपत्य श्रान्तः पक्षौ संहत्य संलयाय–नीडाय ध्रियते, एवमेवायं पुरुषो बुद्धान्तात् स्वप्नान्तं स्वप्नान्ताद्बुद्धान्तं पुनःपुनश्चरित्वा विश्रान्तः एतस्मा अन्ताय–सुषुप्तस्थानाय धावति, यत्र स्थाने प्रसुप्तो न कञ्चन कामं पुत्रपश्वादि कामयते, न कञ्चन पश्यति व कञ्चन स्वाप्नं वा, कामनादिसकलकालुष्यरहितं संप्रसादं स्थानमुपसर्पति ॥ १९ ॥

ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यते अथ यत्र देव इव राजेवाहमेवेदँ सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥२०॥

ननु शरीरे एव सन्नप्ययं जीवः कथमपेतकामो व्यपगतपुण्यापुण्यदर्शनश्च स्यात्, यद्येष स्वभावः, कथं वा स्वप्ने तद्दर्शनम्, अत्राह—ता वा अस्य पुरुषस्य हिता नाम नाड्यः सन्ति, केशः सहस्रधा भिन्नो यावताऽणिम्नाऽस्ति स तावताऽणिम्ना परिमाणेनोपलक्षितास्तास्तिष्ठन्ति, शुक्लनीलपिङ्गलहरितलोहितैर्वातपित्तश्लेष्मगतिवैचित्र्यलक्षणैरन्नरसैरापूर्णाश्च भवन्ति, आसु स्वप्नस्थानेऽत्र समुपगतोऽ-

यमविद्यया पश्यति घ्नन्तीवात्मानं जिनन्तीव—वशीकुर्वन्तीव हस्ती विद्रावयतीव गर्ते इव निपतितम्, किं बहुना यत् जाग्रत् भयं पश्यति तदेव—तज्जातीयमेव पश्यति । इदमुपलक्षकं प्रियस्यापि, यदेव जाग्रत्प्रियं पश्यति तदेव रथगजतुरगादि पश्यत्यत्रैव स्थाने स्थितोऽविद्यया । अविद्यासमुद्बोधितवासनामयो ह्ययं पश्यति । प्रियाप्रियदर्शनोपाधिरविद्यैव सा च कर्मैव कर्ममूलकविपरीताभिमतिरेव वा, यथा जाग्रत्स्थानमनेकेन्द्रियव्यापृतिक्षममविद्याविलासस्थानम्, तथैव स्वप्नस्थानमपि, कर्मफलोपगस्थानमेव ह्येतदपि । अथ यत्र स्थाने स्थितः देव इव राजेव भवति—विलक्षणानन्दवान् भवति 'स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते' इत्ययमर्थः श्रावितश्च बालाक्यजातशत्रुसंवादे । सोऽस्य परमो लोकः—प्रकृष्टो लोकः, अयं लोकोऽसौ लोको वा न दुःखक्षयाय,पुण्यपापफलभोगयोग्यो लोक इति देवमनुष्यादिविपरीताभिमतिलक्षणाविद्याविलासभूमिः, तदवर एव,इदं स्थानं हि अविद्याप्रतिभटम्, सत्यप्यविद्या ( कर्मलक्षणा ) स्थानमिदमुपगतं पुरुषं विविधाभिमतिमापाद्य सुखदुःखशतैर्व्याकुलयितुं न प्रभवति, तत्स्थानमुपगतः अहमेवेदं सर्वमिति हि मन्यते—अहमयमस्मीति जाग्रत्स्वप्नयोरिव न देवाद्याकारं मन्यते, तदविद्याप्रतिभटं स्थानमिदं सुषुप्तिस्थानं परमो लोक उच्यते । स चायं परमात्मैव । तेन तदाऽभिभूता नाम साऽविद्या, तत् सत्यपि शरीरसम्बन्धे परमं लोकमिदं स्थानमुपगतो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥२०॥

तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयꣳ रूपं तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं तद्वा अस्यैतदाप्तकाममात्मकाममकामꣳ रूपꣳ शोकान्तरम् ॥२१॥

तदेतत्-योऽस्य परमो लोक उक्तः तदेतत् अस्य रूपम्, अस्य पुरुषस्य प्राप्यं रूपम्, इदं च रूपमतिच्छन्दं अतिपतितकामम्, दीर्घश्छान्दसः, कामप्रतिभटमित्येतत्, अपहतपाप्म, पुण्यपापास्पृष्टं तद्विरोधि वा, अभयम्-सकलभयविधुरम् । यदिदमस्य पुरुषस्य सुषुप्तिस्थानं परंब्रह्म तदेवास्य परमो लोकः परमप्राप्यं च रूपम्, यं लोकं गतः कामेन पाप्मना भयेन वा न लिप्यते, यदेव चास्य ग्राह्यं रूपमपहतपाप्मत्वादिगुणविशिष्टं परब्रह्मणो रूपाद्विशिष्टम् । न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यतीत्येतन्निदर्शनेन संगमयति-तद्यथेति । प्रियया स्त्रिया संपरिष्वक्तो यथा न बाह्यं किञ्चन वेद नान्तरम्, तथाऽयं पुरुषः सुषुप्तौ प्राज्ञेनानन्दमयेन परमात्मना संपरिष्वक्तः-सम्यक् परिष्वक्तः, देवमनुष्याद्यभिमानतन्मूलकशोकमोहादिप्रतिद्वन्द्वी संश्लेषविशेषोऽयं संपरिष्वङ्गः, न बाह्यं शब्दादि न वाऽन्तरं तन्मूलसुखदुःखादि पश्यति, बाह्यं जाग्रद्वस्तु आन्तरं स्वाप्नं वस्त्विति वाऽर्थः । यथाऽयं संपरिष्वक्तो न वेत्ति किमपि, नासावानन्दः, न वा स्वत आनन्दाश्रयः, पिण्डविशेष एव तु

सः, वासनासमुद्भावितप्रीतियोगपात्रमात्रं हि मलमयं किमपि तद्वस्तु, अध्यस्तानन्दमात्रेण तेन चेद्वस्तुना परिष्वक्तो न किञ्चन वेद, अथ प्राज्ञेनात्मना स्वाभाविकानन्दमयेन परिष्वक्तो न किञ्चन वेदेत्यत्र किं वक्तव्यम् । निदर्शनीकृतः परिष्वङ्गो बाह्याभ्यन्तरदर्शनप्रतिरोधी, अयं तु प्राज्ञपरिष्वङ्गो बाह्यान्तरविविधविभक्तवस्तुदर्शनानुगुणदेवमनुष्याद्यात्माभिमानप्रतिरोधीति विशेषः । अस्य प्राज्ञेन संपरिष्वक्तस्य बाह्यमान्तरं किमप्यपश्यतस्तददर्शनलक्षणं नैजं रूपमेतत्,यदकाममाप्तकाममात्मकामं शोकान्तरम् । यत्र विज्ञानैकघने व्यपेतदेहात्माभिमाने स्वे रूपे सन्निविष्टस्य न कोऽपि कामः, तत् कामप्रतिभटत्वादकामं तद्रूपम्, अत एवात्मकामम्, न स्वरूपानन्दादस्यान्यत् शब्दादि प्रियं भवितुमर्हति तदात्मकामम्, देहाभिमानानुदयाच्च न शोकावसरः, तत् शोकान्तरम्—शोकतो व्यवहितम् । यदस्य प्राज्ञस्येदमाप्तकाममकाममात्मकामं शोकान्तरं रूपं तदस्य पुरुषस्य प्राज्ञे आत्मनि प्रलीनस्य प्राप्यं भवतीति वा, अपहतपाप्मत्वादि ब्राह्मं रूपमेव तु स्वाभाविकम्, इदं चाविशिष्टं प्राज्ञस्य रूपात् ॥ २१ ॥

अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽता-

पस्रोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो
हि तदा सर्वाञ्छोकान् हृदयस्य भवति ॥२२॥

अत्र–प्राज्ञे आत्मनि सुषुप्तिस्थाने पिता अपिता भवति–पुरा जाग्रद्दशायामयं पुरुषो यमपेक्ष्य पिताऽसीत् सोऽयं सुषुप्तिसमये प्राज्ञे आत्मनि प्रलीनो व्यपेतनामरूपाभिमानः सन्नपिता भवति, व्यपेतपितृभावो भवति,नामरूपाभिमानोपाधिको हि पितृमात्रादिभावः,उपाधावपगते स्वेन रूपेण स्थितोऽयमपिता भवति। तथा माता अमाता भवति। तथा येऽस्य पुरा जाग्रद्दशायां भोगस्थानतया लोका आसन्, तेऽस्यात्र सुषुप्तिस्थाने सतः अलोका भवन्ति, अस्पृष्टपुण्यपापो ह्ययमिदानीम्। ये इन्द्रादयो देवाः–इष्टप्रतिलम्भकतयोपास्या आसंस्तेऽस्यात्र अदेवाः–अतथाभूता भवन्ति, स्वे रूपे सतो न हि केनचिदनुग्राह्यता। वेदा अवेदाः, हितानुशासनं हि वेदादि शास्त्रम्, स्वे रूपे सतो न केनचिदनुशास्यता, योऽयं स्तेनो व्यपदिश्यते, स तदा तद्व्यपदेशानर्हः, ज्ञानैकघने परिशुद्धे स्वे स्वरूपे सतो न हि स्तैन्यादिक्रियायोगः, तत् स्तेनोऽत्रास्तेनो भवति भ्रूणहा अभ्रूणहा भवति, चण्डालोऽचण्डालः, चण्डालत्वादि देहाध्यासकृतम्, तस्मिंश्च व्यपगते न तदपि। किं बहुना–तद्धि सुषुप्तौ यदवस्थितं पुरुषस्य रूपं व्यतिपतितनामरूपभेदं पुण्येन पापेन चानन्वागतम्–अननुबद्धम्, तदा हृदयसम्बन्धौपाधिकान् सर्वान् शोकानसौ पुरुषस्तीर्णो हि भवति। हृदयेन हि क्षुभ्यमाणेन शोकवेगः, स्वे रूपे विज्ञानैकघने सतो व्यपेतनामरूपाभिमानस्य न पुल्कसत्वादयो भेदा औपाधिका अनुवर्तेरन् ॥२२॥

यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ॥२३॥ यद्वै तन्न जिघ्रति जिघ्रन्वै तन्न जिघ्रति न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥२४॥ यद्वै तन्न रसयते रसयन्वै तन्न रसयते न हि रसयितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥२५॥ यद्वै तन्न वदति वदन् वै तन्न वदति न हि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥२६॥ यद्वै तन्न शृणोति शृण्वन्वै तन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥२७॥ यद्वै तन्न मनुते मन्वानो वै तन्न मनुते न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥२८॥ यद्वै तन्न

स्पृशति स्पृशन् वै तन्न स्पृशति न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् स्पृशेत् ॥२९॥ यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥३०॥

ननु-सत्यं सुषुप्तौ न बाह्यं किञ्चन वेद नान्तरमिति, परं 'यथा स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मित्येतन्निदर्शनं विषमम्, न हि स्त्रिया संपरिष्वक्तस्य ज्ञानमुच्छिन्नम्, सुषुप्तौ तु पुंसो विज्ञानमुच्छिद्यते, पुंसो विज्ञानयोगो हि मनःसंयोगाद्युपाधिनिमित्तकः, सुषुप्तौ निमित्तापायात्तदनुदयः, यदि तदाऽपि विज्ञानान्वयः स्यात् अवभासेत विज्ञेयं रूपादि यत्किञ्चित्, ज्ञानं हि ज्ञेयेनाविनाभूतम्, इत्यत्राह—यद्वै तदिति । सत्यं सुषुप्तौ रूपं न पश्यति, किन्तु-यद्वै तन्न पश्यति, पश्यन्नेव-चेतनोऽयं विज्ञानैकघनो विज्ञाता सन्नेव अविनष्टविज्ञान एव तन्न पश्यति । न त्वस्य विज्ञानमुच्छिन्नम्, न हि द्रष्टुः-ज्ञातुश्चेतनस्य सहजाया दृष्टेर्विज्ञानस्य विपरिलोपो-विच्छेदो घटेत, विज्ञानैकस्वभावो हि चेतनः, स चाविनाशी, यदि विज्ञानमुच्छिद्येत विज्ञाता चेतनो विनश्येत्, विज्ञानशून्यश्चेतनस्तिष्ठतीति व्याहतम् । चैतन्यं हि विज्ञानैकलक्षणम् । न हि युक्तं गभस्तयो विनष्टा गभस्तिमानस्तीति, प्रकाशो विनष्टस्तेजोऽस्तीति । यद्येवमसौ रूपादि कुतो न पश्यति, विज्ञानं चेत्, विज्ञेयेन रूपादिनाऽनुबद्धेन तेन भाव्यम्, अथ तदननुबद्धं

विज्ञानमिति च कथम् । अनुभूयते तु विज्ञानम् 'अहमिदं पश्याम्यहमिदं शृणोमी'ति रूपाद्यर्थोपश्लिष्टम् । कमप्यर्थमनवभासयतः कथं विज्ञानरूपता । नैतत् । अवभासयत्येवात्मानं विज्ञातारं च, तन्न प्रच्यवति विज्ञानं स्वस्वभावात् । ननु यथा जाग्रद्दशायामहमिदं पश्याम्यहमिदं शृणोमीति क्रियाकर्तृकर्मकारकावलीढमवभासयति तथा द्रष्टुरन्यं द्वितीयं दृश्यं विभक्तं कुतो नावभासयति, किं ततः, न हि तावताऽवभासकस्वभावप्रच्यवः, न वा विज्ञातुर्विज्ञातृस्वभावप्रच्यवः, न ह्यसन्तमर्थमवभासयेत् सदपि विज्ञानम् । यदाऽयं पुमान् विज्ञानमयः प्राज्ञात्मन्यानन्दमये स्वे निलयने निमग्नस्तदाऽस्मै कः प्रत्युपस्थापयेदसन्तमर्थम्, न ह्यस्ति द्वितीयमन्यद्दृश्यं विभक्तम्, यश्चायं द्रष्टा यच्चेदं दृश्यं सर्वमेव परे ब्रह्मण्यविभक्तम्, सकलचेतनाचेतनशरीरकं परं ब्रह्म ह्येकमेव तत्त्वम्, यदाऽयं व्यपेतनामरूपाद्यभिमानः स्वेनैव ब्राह्मेण रूपेण परे ब्रह्मणि विलीनस्तदाऽतात्त्विकं विभक्तमब्रह्मात्मकं रूपं कथं पश्येत्, तदयमप्रच्युतविज्ञानलक्षणचैतन्यः सन्नेव न पश्यति । समानार्थमितरत् ॥२३–३०॥

यत्र वाऽन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ॥३१॥ सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य

**एषास्य परमा गतिरेषास्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥३२॥**

ननु कथमिदानीमविभक्तमखिलमिदमेकात्मकं न पश्यति, किन्तु–अन्यदन्यत् स्वतन्त्रं वस्तु रूपादि पश्यति द्रष्टृदृश्यविभागोपश्लिष्टमेव, तत्राह–सत्यमखिलमिदमविभक्तमेव परब्रह्मणस्तत्तदात्मकमेव, अथापि अविद्यया कर्मणा निरुद्धविज्ञानदृष्टिप्रसराणामेषां जाग्रद्दशायां समुद्भूतनामरूपाभिमानानां न परिस्फुरति वस्तुतत्त्वम्, तत् यत्र जागरे अविद्यया अन्यदिव–विभक्तं स्वतन्त्रमन्यान्यदिव स्यात् प्रत्युपस्थाप्येत, तदाऽन्योऽद्रष्टाऽन्येन करणेनान्यद्रूपादि पश्येत् अहमिदं पश्यामि अहमिदं स्पृशामीति प्रविभक्तम् । सलिले सलिलं प्रविष्टमेकमेव भवति–विभाजकोपाधिरहितमविभक्तमेकस्वभावमेव भवति तथाऽयं द्रष्टा विज्ञानमयः प्राज्ञे प्रविष्ट एको भवति, अपेतनामरूपाद्यभिमानलक्षणभेदकोपाधिः केवलज्ञानघनैकस्वरूपस्वभावो भवति, येनायमविभागं प्राप्तः एष एव ब्रह्माख्यो लोकः, हे सम्राट् इति उक्तप्रकारेण वक्ष्यमाणप्रकारेण चानुशशास जनकं याज्ञवल्क्यः । एषैवास्य विज्ञानमयस्य परमा गतिः–गम्यतेऽनेनेति गतिः; अयमेव परम उपाय इति यावत्, एषैवास्य परमा संपत्–परमा समृद्धिः–सकलफलसिद्धिहेतुः, नैवास्मादप्राप्यं किमप्यस्येति यावत्, एषोऽस्य परमो लोकः प्रकृष्टं भोगस्थानम्, अस्मिन्नलभ्यं भोग्यं न किमपीत्यर्थः, यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्,

एष एवास्य परमानुभाव्यः परम आनन्दः—सर्वतः प्रकृष्ट आनन्दः, आनन्दमयो ह्ययम्, एतस्यैवानन्दमयस्य मात्रां आनन्दलेशमन्यानि भूतानि—इन्द्रादिप्राणिजातानि उपजीवन्ति, इन्द्राद्यानन्दोऽस्य निरवधिकसहजानन्दमहासागरस्य कणमात्रमिति यावत् ॥३१–३२॥

स यो मनुष्याणाꣳ राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दोऽथ ते ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दोऽथ ते ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ते ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्ते अथ ते ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ते ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ते ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच

**याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयाञ्चकार मेधावी राजा सर्वेभ्यो मान्तेभ्य उदरौत्सीदिति॥३३॥**

एष एव परमानन्द इत्येतदुपपादयति—स य इत्यादिना । ये नामानन्दाः प्रकृष्टा इह प्रथन्ते, सर्वे ते परब्रह्मानन्दस्यात्यल्पांशा इत्युपपादनेन परमत्वं ब्रह्मानन्दस्य ज्ञापयितुं प्रवर्तते श्रुतिः, न तु परिच्छेदाय । मनुष्याणां मध्ये यो राद्धः—सिद्धः—अविकलः, करणैर्भोगोपकरणैश्चाविकलः, समृद्धः—भोग्यवस्तुभिश्च समृद्धः, अन्येषां चाधिपतिर्भवति, नैकेनापि मानुष्यकभोगेन न्यूनः, न वाऽन्यो मानुष्यकभोगसंपन्न एतस्य तुल्यः सोऽयं मानुष्यकैर्भोगैः संपन्नतमः, अस्य योऽयमानन्दः स मनुष्याणां परम आनन्दः । ईदृशमानुषानन्दानां शतं स एको जितलोकानां—कर्मभिर्यैर्जितो लोकस्तेषां पितॄणामानन्दः । अथ ते ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोकानन्दः, मनुष्यानन्दैः शतगुणितैरेक आनन्दः पितॄणां परिमीयते, पितॄणां शतगुणितैरानन्दैरेको गन्धर्वानन्दः परिमीयते । एवं गन्धर्वानन्दानां शतमेकः कर्मणा देवभावं गतानामानन्दः, कर्मदेवानन्दानां शतमेक आजानदेवानां—जन्मनैव देवानामानन्दः, अयं मानुषानन्दतः शतगुणितोत्तरोत्तरक्रमेण प्रगुणित आजानदेवानन्दः, यः श्रोत्रियः—श्रुतवेदान्तो ब्रह्मनिष्ठोऽवृजिनः अपेतपुण्यपापः अकामहतो मुक्तः संसारबन्धनात्तस्याप्यस्ति, समुद्रे गोष्पदवत् । आजानदेवानन्दानां शतमेकः प्रजापतेर्हिरण्यगर्भस्या-

नन्दः, अयमानन्दः श्रोत्रियस्य ब्रह्मनिष्ठस्य व्यपेतपुण्यपापस्य संसारबन्धनविनिर्मुक्तस्याप्यस्ति। प्रजापत्यानन्दानां शतमेकः परब्रह्मण आनन्दः, एक इति परब्रह्मानन्दादन्यस्यापकृष्टताज्ञापनाय, न तु सङ्ख्यानाय। अयमानन्दस्तदनुभवैकनिष्ठस्यावृजिनस्याकामहतस्याप्यस्ति। हे सम्राट्! एष एव परम आनन्दः, अनवधिकोऽह्ययम्, एष एव परब्रह्माख्यो लोकः—मुक्तप्राप्यत्वात् लोक उच्यते। श्रुत्वेदं जनक आह—भगवते उपदिष्टेऽस्मिन्नर्थे सहस्रं ददामि, अत ऊर्ध्वं विमोक्षाय यदवशिष्टं वक्तव्यमस्ति तन्मे ब्रूहीति। अत्र हि प्रश्ने याज्ञवल्क्यो बिभयाञ्चकार—भयं प्रपेदे, न भयमस्योत्तरानवगतेः, किन्तु—मेधाव्येष राजा मां सर्वेभ्यः अन्तेभ्यः—संशयान्तेभ्यो निर्णयेभ्यः उदरौत्सीत्—उपरोधं कृतवान्, सर्वानेव निर्णयान् कामप्रश्नमुखेनैव संपादयन्ननुपरुणद्धि, वरस्तु दत्तः कामप्रश्ने, तद्रहस्यमप्युपदेष्टव्यम्, अकृत्वा विमोक्षे विनिर्णयं न मामेष त्यक्ष्यतीति ॥ ३३ ॥

स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ॥३४॥

उक्तमप्यर्थं पुनरनुवदति वक्ष्यमाणार्थानुबन्धेन, वक्ष्यमाणश्चार्थः पुरुषस्य कर्मणा लोकद्वयसञ्चरणम्, तत्र चेदं निदर्शनं स्वप्नान्तबुद्धान्तयोरनुसञ्चरणम्, यथाऽयं पुरुष इहैव शरीरे सन् बुद्धान्तात् स्वप्नान्तं स्वप्नान्तात् बुद्धान्तं पुनः पुनरनुसञ्चरति यथाकर्म, तथैवास्माल्लोकादमुं लोकममुष्मादिमं लोकं यथाकर्मानुसञ्चरतीति। स वा एष इति। व्याख्यातमेतत् ॥३४॥

तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवा-
यꣳ शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उ-
त्सर्जन्याति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥३५॥

यथा अनः—शकटम्, सुसमाहितं—सम्यक् समाहितमुपकरणैः अधिष्ठात्रा पुरुषेण सम्यगाहितम्, योजितमिति वा, उत्सर्जत्पूर्वदेशं परित्यजत् परं देशं यायात्, एवमेवायं शारीर आत्मा—जीवः प्राज्ञेनात्मनाऽन्वारूढः—अधिष्ठितः उत्सर्जन् इमं लोकं याति, यत्र—यस्मिन् समयेऽयमूर्ध्वोच्छ्वासी—ऊर्ध्वं निर्गतोच्छ्वासो भवति; म्रियते इत्येतत् ॥३५॥

स यत्रायमणिमानं न्येति जरया वोपतपता
वाऽणिमानं निगच्छति यद्यथाऽऽम्रं वोदुम्बरं
वा पिप्पलं वा बन्धनात् प्रमुच्यत एवमेवायं
पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रति-
न्यायं प्रतियोन्याद्रवति प्राणायैव ॥३६॥

ऊर्ध्वोच्छ्वसितां निमित्तोपन्यासेन प्रपञ्चयन् पुनर्भवमुपपादयति—स यत्रेत्यादिना। यत्र—यस्मिन् समयेऽयं पुरुषः अणिमानं कार्श्यं जरया न्येति—नितरामेति, उपतपता वा—धातुवैषम्यसमुत्थेन शरीरमुपतपता ज्वरेण वा कार्श्यं नितरां गच्छति, तदाऽयं पुरुष आम्रमुदुम्बरं पिप्पलं वा परिपक्वं यथा बन्धनाद्वृन्तात् प्रमुच्यते तथा एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायम्—न्यायमनतिक्रम्य न्यायो-

ऽत्रागमनसाधनं कर्मोच्यते, प्रतियोन्याद्रवति । कस्मै प्रयोजनाय ?, प्राणायैव—प्राणान् सफलीकर्तुम्, सत्यपि प्राणसम्बन्धे यावन्न स्थूलदेहसम्बन्धः, न तावत्तैरुपयोगः, भोग एव हि तेषामुपयोगः, भोगायेति यावत् ॥ ३६ ॥

तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीति एवं ह वैवंविदं सर्वाणि भूतानि प्रतिकल्पन्ते इदं ब्रह्मायातीदमागच्छतीति ॥३७॥

प्रतिन्यायं प्रतियोनि भोगाय पुनराद्रवतोऽस्य न भोगसिद्धौ विलम्ब इत्याह—यथा राजानमायान्तं प्रत्येनसः—स्तेयादिपापकर्मसु दण्डनाय नियुक्ता उग्राः दण्डधरत्वादेव लोकानामुग्राः, उग्रा इति जातिविशेषवाची वा, सूता ग्रामनेतारश्चान्नैः पानैरावसथैश्च सन्नद्धीकृतैः प्रतिकल्पन्ते—प्रतीक्षन्तेऽयं नो राजा समायात्यधुनैवायमागच्छतीति समधिकादराः । एवमेव भोग्यभोगोपकरणभोगस्थानतया कर्मणास्य परिणतानि सर्वाणि भूतानि सर्वेषां नो भोक्तृ कर्तृ चात एव नो ब्रह्म ( बृहत्त्वात् ) आयात्यायातीति एवंविदं—कर्मफलविज्ञानिनं—विज्ञाय फलं तल्लाभाय कर्माचरितवन्तं प्रतीक्षन्ते इदमहमन्नमस्मि, इदमहं पानीयमस्मि, अयमहमावसथोऽस्मीति । कामनया कर्म कुर्वतोऽस्य कृतं तत्तत्कर्म देहपातं प्रतीक्षते नाम फलं वितरितुमिति देहपातसमनन्तरं यथाकर्म देहान्तरयोगोऽवश्यंभावीति यावत् ॥३७॥

१—इहावसथः स्थूलदेहः, वेश्म च ।

तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायान्ति एवमेवान्तकाले सर्वे प्राणा अभिसमायान्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥३८॥

इतो देहान्निर्गच्छन्तं पुरुषं केऽभिगच्छन्ति ? तदेतत् सनिदर्शनमुच्यते—तद्यथेति । यथा राजानं नगरात्प्रयियासन्तमवगत्य उग्राः प्रत्येनसः सूतग्रामण्यः सर्वे एतेऽभिसमायान्ति—अभितः आभिमुख्येन वा समायान्ति स्वयमेव, एवमेवेममात्मानं जीवमन्तकाले—देहवियोगकाले सर्वे प्राणाः वागादयः श्रोत्रादयश्च मुख्यप्राणेन सहैकीभूयाभिसमायान्ति । यत्रायमूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥

इति चतुर्थाध्याये तृतीयं ब्राह्मणम् ।

---

स यत्रायमात्माऽबल्यं न्येत्य सम्मोहमिव न्येत्यथैनमेते प्राणा अभिसमायान्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्तते अथारूपज्ञो भवति ॥१॥

एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति

न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तꣳ सर्वे प्राणा अनूत्क्रामन्ति स विज्ञानो भवति स विज्ञानमेवान्ववक्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥२॥

यत्रायमणिमानं न्येतीति सङ्क्षेपेण श्रावितो देहवियोगप्रकारोऽद्य विस्तरेण श्राव्यते—स यत्रायमित्यादिना। यत्र—यस्मिन् समये सोऽयमात्मा—जाग्रत्स्वप्नसुषुप्तिषु क्रमाद्विपरिवर्तमानोऽयं संसरन्नात्मा जीवः ज्वरेणोपतपता वा जरया वयःपरिपाकेनान्येन वा निमित्तेनाबल्यं—बलहीनतां शरीरधारणबलप्रक्षयं न्येत्य—प्राप्य संमोहमिव—मूर्च्छामिव न्येति—ईषन्मूर्च्छां प्राप्नोति (इवशब्दोऽत्र ईषदर्थकः) अथ तदा—मूर्च्छोपक्रमसमये एव सर्वे प्राणाश्चक्षुरादयो विहायार्थेष्वभिसरणमपसृत्य स्वस्वदेशेभ्य एनं—इतो निर्गमिष्यन्तं जीवमभिसमायान्ति, स चायं जीव एतास्तेजोमात्राः—प्रकाशकगुणलेशयोगादिन्द्रियाणि तेजोमात्रा उच्यन्ते, एतानीन्द्रियाणि समभ्याददानः—सम्यक् अपुनरपसरणं[2] आददानः हृदयमेव—हृदयाकाशमेवान्ववक्रामति, यत्रायं

---

१ 'मुग्धेऽर्धसंपत्तिः परिशेषा'दिति सूत्रोक्ता मूर्च्छावस्था संमोहशब्दार्थतयाऽभिप्रेता।
२ सुषुप्तेर्वैलक्षण्यं गम्यते—अपुनरपसरणमित्यनेन, सुषुप्तावप्यादत्ते नाम चक्षुरादीनि, तानि सहसा ततोऽपसृत्य प्रविश्य स्वं स्थानमनुसरति नामार्थम्, मरणसमये तु न तथेत्यपुनरपसरणमित्युच्यते।

हार्दः परमपुरुषः। इदं चावक्रमणं धर्मभूतज्ञानप्रभाद्वारेण बोध्यम्। अणोरस्य शरीरे सर्वत आक्रमणमपक्रमणं च ज्ञानप्रभयैव हि भवति। तेजोमात्राः समभ्यागताः समादाय हृदयमवक्रामतो जीवस्य समयो विशेषान्तरेण ज्ञाप्यते—स यत्रैष चाक्षुषः पुरुष इति। यस्मिन् समये एष चाक्षुषः पुरुषः—चक्षुरधिष्ठाता आदित्याख्यः पुरुषः पराङ् पर्यावर्तते—चक्षुषोऽधिष्ठानात्पराङ् पर्यावर्तते, आदित्यश्चक्षुरधिष्ठानव्यापारादुपरमते इति यावत्। अरूपज्ञस्तदा भवति, न पुरःस्थमपि लक्ष्यतेऽनेन। तदाऽयं तेजोमात्राः समभ्यादायान्ववक्रान्तो हृदयमिति विज्ञेयम्। चाक्षुषः पुरुषोऽयं जीव एव वोच्यते, यः पूर्वं स्वज्ञानप्रभया सन्निधाय चक्षुःप्रदेशं द्रष्टाऽभूत् सोऽयं चाक्षुषः पुरुषः, स ततः पराङ् पर्यावर्तते चक्षुरप्यादाय हृदयमेव, तदाऽरूपज्ञो भवति। इदमुपलक्षकं श्रोत्रादीनाम्, जीवोऽयं ज्ञानप्रभया तत्तदिन्द्रियप्रदेशेषु सन्निधाय तत्तदुपकरणो भूत्वा तं तमर्थं प्रकाशयति, तदुच्यते चक्षुषः श्रोत्र इत्यादिभिः शब्दैः। तदैनं पुरुषं (म्रियमाणं) पार्श्वस्थाः पुरुषा एवमाहुः—एकीभवति—अविभागं याति, सर्वाण्यपीन्द्रियाणि तदा हृदये जीवेन सहैकीभावमविभागं यान्ति, तदाहुः—चक्षुरेकीभवति न पश्यतीति, घ्राणमेकीभवति न जिघ्रतीति, रसना एकीभवति न रसयतीति, एवमुत्तरत्रापि, ततो विभज्य सन्निधाय स्वस्वदेशं यदाऽर्थमाहरेयुस्तदाऽयं पश्येत् जिघ्रेद्वा, यदा चायमभ्यागतानि करणानि समादाय हृदयमन्ववक्रामति, तदा तेषां करणानामेकीभावान्न तत्प्रसङ्गः। यद्वा—एकशब्दोऽसहायपरः, यान्यस्य रूपादिग्रहणे सहायभूतान्यभवन् चक्षुरादीनि प्रलीनानि तानि

घ्राणे, अन्ततो हृदयाकाशे, तदयमधुना एकीभवति असहायो भवति न पश्यति, एकीभवति न जिघ्रति, एकीभवति न वदति न शृणोति न स्पृशति, एवमेवान्यदपि न ग्रहीतुं कर्तुं वा प्रभवति । यद्वा—अयं हि चेतनः पुरुषः स्वज्ञानप्रभया तत्तदिन्द्रियप्रदेशेषु सन्निधाय तत्तदधिष्ठाता सन् चाक्षुषः पुरुषः श्रौत्रः पुरुषः इत्याद्यौपाधिकभेदमनुप्रपन्नः पश्यति स्म जिघ्रति स्म शृणोति स्म रसयति स्म स्पृशति स्म, ततस्ततः पराङ्प्रत्यावृत्तः समुपहृतसकलकरणः समुपसंहृतविज्ञानप्रभो व्यपेतचाक्षुषादिभेद एकीभवति, तन्न पश्यति न शृणोति इति । अथास्य देहान्निर्गमनप्रकार उच्यते—तस्येति । तस्यैतस्य हृदयस्य—सोऽयं जीवस्तेजोमात्राः समभ्याददानो यत् हृदयमन्ववक्रामति स तस्यैतस्य हृदयस्याग्रं नाडीमुखं प्रद्योतते—प्रकाशते, उपसंहृतकरणग्रामस्यास्यात्मज्योतिषा (ज्ञानप्रभया) प्रकाशपदमेति तन्मुखम् । तेनाग्रप्रकाशेन लब्धनिर्गमनमार्ग एष आत्मा यथाज्ञानं यथाकर्म निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरावयवेभ्यः, तमुत्क्रामन्तं मुख्यः प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणाश्चक्षुरादयोऽनूत्क्रामन्ति । अनूत्क्रमति अनूत्क्रामन्तीत्ययं प्राधान्यज्ञापनाय, न तु क्रमश उत्क्रमणमपि विवक्षितम् । सह प्राणैरात्मा निष्क्रामतीत्येतत् । विनिष्क्रमणावसरे सोऽयं जीवः स विज्ञानवान् भवति—यथाकर्म यथावासनं ज्ञानविशेषेण युक्तो भवति, येनैव स्मृतिविशेषेण पुनर्भवे योनिविशेषमापद्यते । इदं तु विज्ञानं कर्मवासनायत्तम्, न स्वायत्तम्, योगिनां तु स्वयत्नायत्तम्, ध्याननैरन्तर्यात् । सवि-

१ चक्षुषो निर्गच्छन् लोकविशेषमेति मूर्ध्नो निर्गच्छन् लोकविशेषमिति ज्ञानकर्मफलभेदमभिप्रेत्य यथाज्ञानं यथाकर्मेत्युक्तम् ।

ज्ञानमेवैनमन्येऽप्यनूत्क्रामन्ति । सविज्ञानं यथातथैवान्ववक्रामति गन्तव्यं स्थानान्तरमिति वा । भोक्ताऽयं जीवो गेहाद्गेहान्तरमिव देशाद्देशान्तरमिव चेतो लोकाल्लोकान्तरं व्रजन् किंसम्भारो व्रजति तदुच्यते—तं विद्येति । तं लोकान्तरं व्रजन्तं विद्याकर्मणी—विज्ञानं कर्म च समारभेते—अनुगच्छतः, तथा पूर्वप्रज्ञा च—पूर्ववासना च, ज्ञानं कर्म वासना चेत्येतत्त्रयं परलोकं गच्छतोऽस्य संभारः, यादृशं विज्ञानमभ्यस्तं यादृशं च कर्म कृतं यादृशी च वासना, तत्तदनुगुणमेव फलं भुङ्क्ते परलोके, तद्विहिता विद्या विहितं च कर्म सेव्यम्, सद्वासनोद्भवे च यतितव्यमात्महितेच्छुनेति प्रकरणतो गम्यते ॥२॥

तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्राममाक्रम्यात्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्राममाक्रम्यात्मानमुपसंहरति ॥३॥

यथा तृणजलायुका तृणस्यान्तमवसानं प्राप्य अन्यमाक्रामम्—आक्रम्यते इत्याक्राम आश्रयः,तथाभूतं तृणान्तरमवलम्ब्य आत्मानं उपसंहरति पूर्वस्मात्तृणात्, एवमयमात्मा इदं शरीरं स्थूलं निहत्य—निश्चेष्टतात्मापाद्याविद्यां गमयित्वा निःसम्बोधतां गमयित्वाऽन्यमाक्रामं स्थूलं देहान्तरं प्रारब्धेन समुपस्थापितमाक्रम्य स्वमात्मानं पूर्वस्मादुपसंहरति । संसरतां सर्वेषां प्रारब्धप्रक्षयो हि अपरप्रारब्धसमुन्मेषनियतः, समुन्मिषितापूर्वप्रारब्धफलभूतं देहान्तरमाक्राममाक्राम्य प्रक्षीणप्रारब्धपूर्वदेहादात्मानमुपसंहरति, निवृत्तपूर्वदेहा-

भिमानः समुत्पन्नापूर्वदेहाभिमानश्च भवति । अनेन निदर्शनेन देहान्तरयोगारम्भके प्रारब्धे परिपक्क एवास्यैतद्देहवियोग इति न विलम्बः स्थूलदेहयोग इति गम्यते ॥३॥

तद्यथा पेशस्कारी पेशसो मात्रामादायान्यन्नवतरं कल्याणतरं रूपं तनुते एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां भूतानाम् ॥४॥

यथा पेशस्कारी—सुवर्णकारः पेशसः सुवर्णस्य मात्राम्—एकांशमादायान्यन्नवतरं कल्याणं कटकमुकुटादिरूपं करोति, तथाऽयमात्मा देहारम्भकतया यानि द्रव्याण्युपात्तानि पूर्वं तान्येव द्रव्याणि मात्रया यथाकर्म समादाय नवतरं पित्र्यं गान्धर्वं दैवमन्यद्वा रूपं प्रारब्धकर्मद्वारा सृजति ॥ ४ ॥

स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयस्तद्यदेतदिदम्मयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी

**पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन । अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते ॥५॥**

सोऽयं विज्ञानमय आत्मा स्वतोऽपहतपाप्मत्वादिगुणसम्पन्नतया ब्राह्मेण स्वभावेन युक्तोऽत एव ब्रह्मभूतोऽपि, अनादिकर्मवासनानियन्त्रितत्वेन मनःप्राणादिसापेक्षकर्मफलोपभोगैकप्रवृत्तिर्भूत्वा मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयश्च भवति, तत्तद्वृत्तिप्रचुरतया तत्तन्मयो भवति । भूतपरिणतिलक्षणशरीरसंसर्गात् पृथिवीमय आपोमयस्तेजोमयो वायुमय आकाशमयश्च भवति, तथा अतेजोमयः–तेजसो भूतवर्गाद्योऽन्यो महदहङ्कारादिस्तन्मयश्च भवति, काममयः कामादन्यो यः सङ्कल्पादिस्तन्मयश्च भवति । यद्वा–कामो रागः ततो विरुद्धोऽकामो द्वेषः,रागद्वेषमय इति यावत् । तथा क्रोधमयः अक्रोधमयः–प्रीतिमयः पुण्यमयोऽपुण्यमयः, एवमादिसर्वमयः पुण्यपापफलभूतैतल्लोकपरलोकमयश्च । स्वयमपहतपाप्मा ब्रह्मभूतोऽपि गुणमयसंसर्गं प्राप्तः स्वयं तेभ्यो भूतभौतिकेभ्य इन्द्रियार्थेभ्यश्च विलक्षणोऽपि तत्तद्गुणवृत्तिस्वभावमेवात्मानं पश्यन् रागद्वेषक्रोधादिकलुषितस्वभावः पुण्यापुण्ये कुर्वन् यथाकारी यथाचारी तथा भवति–तथाफलभाग्भवति, अत्र करणाचरणयोः श्रौतत्वस्मार्तत्वाभ्यां भेदः, तदेवोपपाद्यते–साधुकारी साधुर्भवति–साधुयोनिर्भवति पापकारी पापः–पापयोनिर्भवति, पुण्याचरणेन पुण्यफलसुखसंपन्नो भवति पापाचरणेन पापफलदुःखसंपन्नो भवति । अत्र समधिगतयथा-

वस्थितवस्तुसाक्षात्काराः प्राहुः—स्वतोऽपहतपाप्माप्ययमात्मा पुनः पुनः पुण्ययोनौ पापयोनौ वा समुद्भवति तत्र कारणं गुणसङ्ग इति प्रदर्शनायोक्तं मनोमयश्चक्षुर्मयः श्रोत्रमय इत्यादि। तत्र काममयत्वमेव प्रधानं कारणम्, पुरुषो ह्येष प्राधान्येन काममय एव, अत एव स यथाकामो भवति तत्क्रतुर्भवति—तदेकाध्यवसायो भवति, यदेकाध्यवसायो भवति तत् कर्म कुरुते यत् कर्म पुण्यं वा पापं वा कर्म कुरुते तदभिसंपद्यते—तदनुरूपं जन्म प्राप्नोति ॥ ५ ॥

तदेष श्लोको भवति। तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य। प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययं॥ तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति ॥६॥

तस्मिन्नस्मिन्नर्थे एष वक्ष्यमाणः श्लोको भवति, यत्र फलेऽस्य पुरुषस्य लिङ्गं मनः—लिङ्ग्यते—गम्यते येन करणेन तल्लिङ्गं मनो हि वासनया समाबध्य पुरुषं तत्र तत्र गमयति, तथाभूतं मनो निषक्तम्—नितरां सक्तम्, तदेव फलमितो विमुच्यमानः कर्मणा—तत्फलाधायकेन पुण्येन सहितः सन्नेष पुरुष एति। इत्येष श्लोकः। यत्किञ्च पुण्यं पापं वेह कर्म करोति तस्य कर्मणः अन्तं—फलभोगेनान्तं परत्र प्राप्य तस्माल्लोकात् पुनरेतीमं लोकम्, कस्मै?, कर्मणे—फलाय कर्म कर्तुम्। इति तु कामयमानः। कामयमानानामिदं

गतागतं क्लेशैकफलकम् । अथाकामयमानः—निरूप्यते, अकामयमानस्य स्थितिर्निरूप्यते इत्येतत् । योऽसावकामो निष्कामः—कामना न कचिदर्थे यस्य समुद्भवति, याश्च कामना आसंस्ताश्च निर्गताः, विषयदोषानुचिन्तनेन वैराग्यप्रकर्षादपुनरुद्भवं सर्वाः कामना यस्य प्रविणष्टाः सोऽयमकामो निष्काम उच्यते, कथमपरिपूर्णस्य कामनाव्यपगमः, नैतत्, आप्तकामो ह्ययम्, ननु न कोऽपि परिपूर्णकामो भवेत्, भाविकालानन्त्येन कामानन्त्यात् । नैतत् । आत्मकामो ह्ययम्, काम्यत इति कामः—आत्मैव कामो यस्य तथाभूतोऽयम्, नास्य शब्दादिष्वर्थेषु निष्ठा, येन तेषामनित्यतया सातिशयतया चाप्ततत्तत्कामोऽप्यनाप्तकाम एव स्यात्, आत्मन्येव ह्यस्य निष्ठा, सचायमनतिशयोऽनन्तश्च । चरमशरीरपातसमये न तस्य प्राणा उत्क्रामन्ति—तस्येति शेषे षष्ठ्याऽपादानत्वं गम्यते, न तस्मात् प्राणा उत्क्रामन्तीत्यर्थः, श्रूयते चान्यत्र समानप्रकरणे 'न तस्मात्प्राणा उत्क्रामन्ती'ति । अप्राकृते देशे परं व्योमाक्षरं धाम गच्छतोऽस्यात्मनिष्ठस्योपासकस्य यावत्स्थानविशेषप्राप्ति गमनोपकारकतया प्राणाः सहैव तिष्ठन्तिः न निर्यान्तीति यावत् । ततश्चायं तत्र परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, अतएव ब्रह्मैव सन्—प्राप्तापहतपाप्मत्वादिलक्षणब्राह्मस्वभावः सन् परं ब्रह्म पुरुषोत्तममप्येति । अप्ययश्चात्र परमानन्दमयतदात्मकत्वातिरेकेण स्वस्वरूपस्यादर्शनम् । तदेकानुभवनिष्ठो भवतीति यावत् ॥६॥

तदेष श्लोको भवति । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र

ब्रह्म समश्नुत इति । यद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेद४ँ शरीर४ँ शेते यथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥७॥

ब्रह्मविदमधिकृत्यैष श्लोको भवति । ब्रह्मविदः पूर्वं स्थानविशेषं प्राप्य या ब्रह्मसंपत्तिः सा प्रोक्ता, अधुना इहैव साधनवेलायां या सा, सा प्रोच्यते । यदा हृदि श्रिताः सर्वे कामा हृदयग्रन्थिलक्षणाः प्रमुच्यन्ते, कदा?, तस्मिन् दृष्टे परावरे, श्रूयते च 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति । अथ—ब्रह्मसाक्षात्कारजन्यकामलक्षणहृदयग्रन्थिविनाशानन्तरम्, मर्त्योऽमृतो भवति—मर्त्योऽमृतो भवतीति व्याहतम्, न हि तस्यातद्भावः कदाऽपि घटेत, किन्तु देहयोगादात्माऽयं मर्त्यव्यपदेशभाग्भवति, तदयं यावद्देहपातं मर्त्यव्यपदेशभाजनं सन्नप्यमृतो भवति मरणसंबन्धरहितो भवति, तद्योगो हि देहात्माभिमानकृतः, ब्रह्मात्मकस्वात्मैकदृष्टेरस्य स्वात्मनि मरणयोगादर्शनात्, प्रत्युत तद्विपरीतस्वाभाविकरूपदर्शनात् । किञ्च—अत्र देशविशेषप्राप्तेः प्रागेवात्रैव देशे ब्रह्म समश्नुते—प्राप्नोति परिपूर्णब्रह्मानुभवो भवतीत्येतत् । यावदयं ब्रह्मदर्शी शरीरान्न प्रैति तावदस्य सत्तामात्रेण शरीरं न पतति नाम, अथापि यथा अहेर्निर्ल्वयनी—निर्मोकः, अखण्डः समग्रः शारीरस्त्वग्विशेषः वल्मीके स्वाश्रये

स्थाने सर्पेण प्रत्यस्ता—परित्यक्ता मृताऽपि सर्पवदवभासमाना शेते, तथाऽस्य शरीरं परित्यक्तमनेन निश्चेष्टं शेते। अयं भावः—अहमयमस्मि ममायमिति च यः शरीराभिमानः स एवात्यागः शरीरस्य, नाहमयमस्मि न चायं मम अहं तु ब्रह्मात्मक एवेति या दृष्टिः स एव शरीरस्य त्यागः, यावदयमहमस्मीति शरीरात्माभिमानः, तावद्विविधं चेष्टते शरीरम्, अपगते तदभिमाने ब्रह्मात्मकतयैव च सर्वस्मिन् साक्षात्क्रियमाणे त्यक्तमिदं शरीरं परैर्ब्रह्मदर्श्येष ब्रह्मदर्शिनो वपुरिति वा दृश्यमानं स्वयं व्यपेतविविधचेष्टं केवलं शेते श्वासोच्छ्वासलक्षणचेष्टामात्रावशिष्टमिति। यथा चायं तदानीममृतः सन्नेव—जीवन्नेव अशरीरो भवति अभिमानराहित्यात् उक्तदृष्टिभेदाच्च। निदर्शनेऽप्यत्र तौल्यम्, सर्पो जीवन्नेवाशरीरो भवति, येन पूर्वं विनिर्मोकेण शरीरवानासीत् इदानीमतच्छरीरो हि भवति, तत्राभिमानत्यागस्ततोऽपगमनात्, इह तु ततोऽनपगतस्यैवाभिमानत्यागेनाशरीरता। व्यपेतसकलाभिमानोऽत एवाशरीरः सोऽयं ब्रह्मदर्शी केन रूपेणास्ते?, केवलेन स्वेनैव रूपेण, किं तद्रूपम्, आह—प्राण इत्यादि, प्राणो ह्येषः, एतद्योगेनैव जीवनमुच्यतेऽन्यस्य, जडे वायुविशेषेऽप्यौपचारिकस्तत्प्रयोगः, जीवस्य प्राणत्वं श्रूयते चान्यत्र 'प्राणा वै सत्यं तेषामेष सत्य'मिति। प्राणस्यास्य स्वाभाविकरूपयोगमाह—ब्रह्मैवेति 'अपहतपाप्मा विजरो विमृत्यु'रित्युक्तापहतपाप्मत्वादिस्वाभाविकब्राह्मरूपसम्पन्न एव। न केवलं ब्रह्मतामात्रम्, तेजश्च—परं ज्योतिश्च, परं ब्रह्मैव, ब्रह्मभूतमात्मानं प्राणं परब्रह्मात्मकतयैवैष ब्रह्मदर्शी साक्षात्करोतीति सोऽयं साक्षात्कारसमये केवलः

प्राणः परंज्योतिर्ब्रह्मैव भवति । तेजो ब्रह्म प्राण इति वा योजना, अयमर्थः—सोऽयं ब्रह्मदर्शी आत्मानं न देवादिभावेन पश्यति, किन्तु तेज इति, स्वयंप्रकाशज्ञानैकघन इति, न केवलं तथा, किन्तु स्वाभाविकापहतपाप्मत्वादिब्राह्मगुणविशिष्टतया ब्रह्मभूतं पश्यति, न केवलं तथा, अपितु सर्वान्तरात्मभूतप्राणशब्दमुख्यार्थभूतपरब्रह्मात्मकमपि पश्यति । तत् सोऽयं ब्रह्मदर्शी अशरीरः ज्योतिः ब्रह्म प्राण एव भवति । अनेनात्रैव ब्रह्मसंपत्तिरस्य प्रदर्शिता । अथोपदेशलब्धप्रहर्षो गुरवे दक्षिणां प्रयच्छन्नाह जनकः सोऽहं भगवते सहस्रं ददामीति ॥७॥

तदेते श्लोका भवन्ति । अणुः पन्था विततः पुराणो माँ स्पृष्टोऽनुवित्तो मयैव । तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ॥८॥

तस्मिन्नस्मिन् प्रकृते मोक्षे विषये वक्ष्यमाणाः श्लोका भवन्ति । अस्ति कश्चित् पन्थाः, स चाणुः—सूक्ष्मः दुर्विज्ञेयः विततश्च—विस्तीर्णश्च पुराणः—उपनिषत्प्रसिद्धोऽयं न कल्पितः कश्चित्, तत्पुराण एव, न चायमुपासकानामत्यन्तं व्यवहितः मां स्पृष्टः—शताधिकमूर्धन्यनाडीद्वारा ब्रह्मदर्शिनं मामभिसंबद्धः, न केवलमभिसंबद्धः, मयाऽनुवित्तः साक्षात्कृतश्चोपासनसमये, तदयं पन्था न व्यवहित उपासकानाम्, तेनानेन मार्गेण ब्रह्मविदः—ब्रह्मदर्शिनः विद्यैकनिरता इतो देहात् विमुक्ताः, प्राकृतमण्डलादूर्ध्वदेशवर्तिनं स्वर्गं लोकं अपरिच्छिन्ननित्यसुखैकलक्षणं भगवल्लोकं यन्ति ॥८॥

तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलꣳ हरितं लोहितं च। एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ॥९॥

ब्रह्मदर्शिनस्तल्लोकमार्गाभिज्ञास्तस्मिन् शुक्लं नीलं पिङ्गलं हरितं लोहितं च वर्णमाहुः। आदित्यो ह्यर्चिरादिमार्गानुप्रविष्टः। आदित्यश्च शुक्लनीलाद्यात्मकः श्रूयते-'असौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहित' इति। एष आदित्योपलक्षितः अर्चिरादिमार्गः परब्रह्मणाऽनुवित्तः-संबद्धः, तल्लोकप्रापकत्वात्। तेन पथा, पुण्यकृदित्यस्य मध्यमणिन्यायेनोभयत्रान्वयः, पुण्यकृत् ब्रह्मवित्-कर्माङ्गकब्रह्मविद्यानिष्ठ इत्यर्थः, तथा पुण्यकृत्तैजसः-तेजःशब्दो ज्ञानमयचेतनपरः, तन्निष्ठः ब्रह्मात्मकस्वात्मोपासकः पञ्चाग्निविद्यानिष्ठ इत्यर्थः, एतावुभावपि भगवल्लोकं गच्छतः ॥९॥

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते। ततो भूय इव ते तमो य उ विद्यायाꣳ रताः ॥१०॥

पुण्यकृत् ब्रह्मविदित्यनेन ज्ञापितं कर्मज्ञानयोरङ्गाङ्गिभावं द्रढयन्नाह-अन्धं तम इति। ये अविद्याम्-विद्येतरत् केवलं कर्म इदमस्मै फलाय इदमस्मै फलायेति उपासते-तदेकानुष्ठानपरा भवन्ति। ते अन्धं तमः अज्ञानलक्षणं गाढान्धकारं प्रविशन्ति। मुमुक्षूणां किं कर्मणेति कर्म त्यक्त्वा केवलं विद्यायामेव प्रवर्तन्ते, ते ततोऽप्यधिकमन्धं तमः प्रविशन्ति, कर्मणामननुष्ठानात् नायं लोको न परश्च,

अन्तःकरणनैर्मल्यासम्भवेन न विद्यासिद्धिश्च, अतोऽधिकं तमो विशन्तीत्युच्यते ॥१०॥

अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्त्यविद्वाँसोऽबुधो जनाः ॥११॥

गाढान्धकाराविष्टाः सुखलेशशून्याः सन्ति केचन लोकाः, तान् लोकान् प्रेत्य गच्छन्ति, के?, येऽविद्वांसः–ब्रह्मज्ञानविधुराः अबुधश्च बोधशून्याश्च, (हलन्तोऽयम्) बोधः प्रकृतिविलक्षणात्मज्ञानम् । अज्ञानाविष्टा दुःखभूयिष्ठा योनिविशेषा एव वा लोकाः ॥११॥

आत्मानं चेद्विजानीयात् अयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥१२॥

अनात्मज्ञस्य दुःखभूयिष्ठलोकप्राप्तिः कस्मात्?, कामात् । सत्यात्मज्ञाने तु न कामस्यावसर इति ज्ञापयन्नाह—आत्मानमिति । अनात्मविदः कामयमानाः फलमिदं मे भूयादिदं पत्यै भूयादिदं पुत्राय भूयादिति पिण्डविशेषलक्षणं शरीरमनु सन्तप्यन्ते नाम, सर्वाऽपीयं कामना नात्मनः स्वतः, अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः खल्वेषः, परं शरीरसंसर्गात्तद्भावानात्मन्यध्यस्यतस्तदुपाधिकं पत्नीपुत्रादिपरिवारमात्मीयं च पश्यतः पश्यतश्चेन्द्रियार्थशब्दादिविषयोपभोगमात्मसहजमात्मस्वरूपे विभ्रान्तस्य भवति, तस्मात् सर्वोऽप्यविवेकी पुरुषः शरीरमनु सन्तप्यते नाम । आत्मानम्–अहमयमस्मि–ईदृशप्रकारोऽहमस्मि, विज्ञानैक-

घनः परब्रह्मात्मकोऽहमिति तत्त्वतो विजानीयाच्चेत्–विशिष्य जानीयाच्चेत्, सोऽयमात्मदर्शी किं फलं ऐहिकमामुष्मिकं वा इच्छन् कस्य वा कामाय–प्रयोजनाय शरीरमनुसंज्वरेत्। यश्चायमैहिकः शब्दादिः यश्चामुष्मिकः, स सर्वोऽपीन्द्रियार्थः शरीरेन्द्रियप्राणसङ्घातलक्षणपिण्डात्मदृष्टेः कर्तृत्वभोक्तृतैकस्वभावात्मदृष्टेर्वा भवत्यर्थः, विज्ञानैकघनब्रह्मात्मकस्वात्मदृष्टौ सत्यां न चेदं फलम्, नचैतत्कामः स तत्त्वदर्शी, तत् किं फलमिच्छन् कस्य प्रयोजनायानुसंज्वरेत् ॥१२॥

यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् सन्देह्ये
गहने प्रविष्टः । स विश्वकृत् स हि सर्वस्य
कर्ता तस्य लोकः स उ लोक एव ॥१३॥

ब्रह्मदर्शी स्तूयते—यस्येति । गहने–अरण्यवदनेकभयास्पदेऽतिविषमे दुर्निष्क्रमेऽस्मिन् सन्देह्ये–देहे प्रविष्टः कर्मगत्याऽत एवानालक्ष्यविविक्तस्वरूपः स्वतस्तु प्रतिबुद्धः–चैतन्यैकघनतयाऽजडः स्वयंप्रकाशात्मा एवंभूतः स्वात्मा यस्यानुवित्तः–तृतीयार्थः षष्ठ्येह विवक्षितः, येनानुवित्तः–अनुलब्धः, साक्षात्कृत इति यावत्। यद्वा–अनु–परब्रह्मानु, वित्तः वेदनविषयीभूतः परब्रह्मैकप्रकारतया साक्षात्कृतः। यस्य परब्रह्मात्मकस्वात्मसाक्षात्कारोऽभूदिति यावत्। अनुवित्तः–श्रवणमनु मननविषयीकृतः, प्रतिबुद्धः–ध्यानेन साक्षात्कृतश्चेति वार्थः। भावस्तु स एव। स-ब्रह्मात्मकस्वात्मदर्शी, विश्वकृत्–नास्य सृज्ये विश्वे प्रवेशः, न पुनर्भव इति यावत्, कुतः?, विश्वकृदेषः, सृजेः कर्ता नाम स्यादयम्, नतु कर्म, कुत एतत्?, सर्व-

स्यास्य जगतः कर्ता परमात्मैव तस्य ब्रह्मदर्शिनो भवति लोकः—नेतरस्येव हैरण्यगर्भादिः कार्यो लोकोऽस्य, सर्वकर्ता परमात्मैवास्य प्राप्यो लोकः, यं लोकं प्राप्नोति तत्सधर्मा हि भवेत्, तत् सर्वस्य कर्तारं प्रविष्टः सर्वकर्तृसधर्मा भवति नाम, अत एव मुक्तः सङ्कल्पादेव स्रष्टुं प्रभवति, स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति । भाविमुक्तैश्वर्यप्रतिपादनेनायं स्तूयते । ननु परमात्मा कथं लोकः स्यात्? आह—स उ लोक एव—लोको हि बहूनामाश्रयः, सर्वस्यैतदेकाधारत्वादयमेव मुख्यो लोकः, तल्लोक एव-लोको नेति न । अन्यलोका अनर्थशतसङ्कुले पुनर्भूत्वा सृज्ये जगति गण्यन्ते, अयं तु सर्वजगत्कर्तारं परमं लोकं प्राप्तस्तत्साधर्म्यं प्राप्य सङ्कल्पमात्रेण स्रष्टा भवति, न पुनः सृज्यो भवति ॥१३॥

इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवे-
दिर्महती विनष्टिः । य एतद्विदुरमृतास्ते
भवन्त्यथेतरे दुःखमेवापि यन्ति ॥१४॥

इहैवानर्थसहस्रसङ्कुले देहे वर्तमाना वयं कथमप्याचार्यप्रसादं प्राप्य तदात्मतत्त्वं विद्मः, न चेत्—आचार्योपसदनादिना तद्विज्ञाने आदरं यदि न कुर्मः, तर्हि अवेदिः—अज्ञानमेव स्यात्, तथासत्यनर्थसहस्रसङ्कुलेऽस्मिन् देहे वर्तमानानां महती विनष्टिरवश्यम्भाविनी । ये एतदात्मतत्त्वं विदुस्त एवामृता भवन्ति, इतरे जननमरणदुःखचक्रमेवाप्रतिरुद्धवेगमभिगच्छन्ति, इदं तु विख्यातम् ॥१४॥

यदैतमनुपश्यत्यात्मानं देवमञ्जसा । ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥१५॥

भूतभव्यस्य सर्वस्येशानं द्योतनगुणयोगाद्देवं तमेतं परमात्मानं श्रवणमननपूर्वकध्यानाभ्यासबलेन यदा तत्त्वतः पश्यति, ततः नैव कञ्चन प्रति विजुगुप्सते-निन्दां न कस्यापि कुर्यात्, ऐकात्म्य-दर्शनात् ॥१५॥

यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते। तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥१६॥

संवत्सरः स्वावयवैरहोभिः यस्मादर्वागेव-अन्यत्रैव परिवर्तते, कालापरिच्छेद्य इत्येतत् । ज्योतिषां-प्रकाशकानामपि ज्योतिः-प्रकाशकम्, सर्वेषामायुः-प्राणनहेतुभूतममृतं-नित्यम्, अमृतवद्भोग्यं वा देवा उपासते ॥१६॥

यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेवमन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥१७॥

यस्मिन् परमात्मनि पञ्च-पञ्चसङ्ख्याकाः पञ्चजनाः पञ्चजनसंज्ञाः, तानि चात्रेन्द्रियाणि बोध्यानि, आकाशश्च प्रतिष्ठितः-आकाश इति भूतवर्गस्योपलक्षकम् । आकाशादिभूतजातमर्थप्रकाशकं श्रोत्रादी-न्द्रियं च यस्मिन्प्रतिष्ठितमिति यावत् । अव्यवहितपूर्वमन्त्रे ज्योतिषां ज्योतिरिति यानि प्रस्तुतानि ज्योतींषि तानीन्द्रियाणि, तान्येवात्र पञ्चजनशब्देन निर्दिश्यन्ते इति विज्ञायते, पञ्चत्वसङ्ख्यान्वयानुगु-

ण्यात्। अव्यवहितोत्तरमन्त्रे च 'प्राणस्य प्राणमुत चक्षुषश्चक्षु'रिति प्रस्तुतं ज्योतिषां ज्योतिष्ट्वमुपपद्यते च। तमेनमात्मानं आयुरमृतं ब्रह्मेत्येवं विद्वान्–उपासीनः अन्योऽपि देवेभ्योऽन्योऽपि अमृतो भवति उपास्यामृतसधर्मा भवति ॥१७॥

**प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः। ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥१८॥**

प्राणोऽत्र घ्राणः–उच्छ्वासेन प्राणेनोपसंस्कृतो घ्राणो गन्धग्रहणाय प्रभवतीति प्राणशब्देन घ्राणस्योपचरणम्। गन्धप्रकाशकस्य घ्राणस्यापि घ्राणम्–तथाविधशक्त्याधायकत्वात्। चक्षुषश्चक्षुः–रूपग्रहणसामर्थ्याधायकत्वात्। श्रोत्रस्य श्रोत्रं मनसो मन इत्येतदपि व्याख्यातमेतेन। समानप्रकरणे 'अन्नस्यान्न'मिति श्रवणादिदं तस्याप्युपलक्षकम्। अन्नशब्देन च स्पार्शनरसनयोस्तन्त्रेण सङ्ग्रहः। तेन पञ्चत्वसङ्ख्यान्वयोऽपि सुगमः। तदेवं ज्योतिषां प्रकाशकानामिन्द्रियाणामपि प्रकाशकं ये विदुस्ते पुराणं प्राचीनम्, अग्र्यम्–सर्वेभ्यः कार्येभ्यः प्रागेव भवम्, सर्वकारणमित्येतत्, एवंभूतं परं ब्रह्म निचिक्युः–तत्त्वतो निश्चितवन्तः ॥१८॥

**मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥१९॥**

तस्य परस्य ब्रह्मणो दर्शने साधनमुच्यते—मनसैवेति। तत परब्रह्मतत्त्वं मनसैवानुद्रष्टव्यम्–'न चक्षुषा गृह्यते नापि वाचा' 'मनसा तु विशुद्धेन', तद्योगसुसंस्कृतेन मनसैवानुद्रष्टव्यम्, अनुद्रष्टव्यम्–

ब्रह्मदर्शिनो गुरोः सकाशात् श्रुत्वा श्रवणमनु-ध्यानाभ्यासबलेन द्रष्टव्यम् । दर्शनसमानाकारतापन्नमेव ध्यानं तत्प्राप्तौ साधनमिति यावत् । मनसैवानुद्रष्टव्यमित्यत्राभिप्रेतमर्थंविशेषं निरूपयति—नेहेत्यादिना । द्रष्टव्यं तदद्वितीयं वस्तु दृश्यविसजातीयम्, दृश्यते तु जगति नाना, इदं जलमियं पृथिवी, अयमेकोऽसावन्य इति, सा च नानादृष्टिरतत्त्वविदाम्, इह जगति वस्तुतो नाना नास्ति, यद्यन्यान्यो धर्मी स्यात्तदा युज्यते नानेति, एकमेव चेदनेकैः स्वासाधारणैर्धर्मैः सम्पन्नं तदा तु नेह नानेति व्यवहारो मुख्य एव, तथैवेह परं ब्रह्म तनुतया स्वासाधारणैश्चिदचित्प्रकारैः समुपश्लिष्टं वर्तते इति परब्रह्मणोऽन्यन्न धर्मितत्त्वम्, तदिदमखिलस्यैकात्म्यं न चक्षुषा गृहीतुं शक्येत, तत् 'ऐतदात्म्यमिदं सर्व'मिति सदुपदेशतः स्वेतरसमस्तचिदचित्प्रकारं ब्रह्म विशुद्धेन मनसा निध्यायतो हि दृष्टिपथमुपेयात्तथाविधमद्वितीयं ब्रह्म । अनानात्वेऽपि यो नानेव पश्यति यथाचाक्षुषम्, स पशुतोऽविलक्षणो मृत्योर्मृत्युम्—संसारात् संसारं प्राप्नोति, दुःखैकबहुलभवजलधिमध्यमधिगच्छतीति यावत् ॥१९॥

**एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम् । विरजः**
**पर आकाशादज आत्मा महान् ध्रुवः ॥२०॥**

नेह नानाऽस्तीति प्रतिषेधवाक्यादन्यथाप्रतिपत्तिर्व्यावर्त्यते—एकधैवेति । ब्रह्म स्वरूपत एव चिदचिदात्मना परिणमति, तत् जगतः स्वरूपं चेद्विचार्येत ब्रह्मणः स्वरूपमेवेति जगति नाना—अत्यन्तभेदो न, इति कश्चित्प्रतिषेधवाक्याशयं गृह्णीयान्न तथेत्याह—

ब्रह्मणः स्वरूपं एकधैवानुद्रष्टव्यम्—न तु अनेकधाऽपि, स्वरूपे मिथो भेदोऽपि न बोध्यः, एतत् ब्रह्मस्वरूपं हि ध्रुवम्—अविकृतम्, अप्रमेयं च—अपरिच्छेद्यं च, ब्रह्मस्वरूप एव चेदयं चिदचिद्भेदः, परिच्छेद्यता विकारित्वं च स्वरूपे प्रसजेत् । विशिष्टाद्वैतदृष्टौ तु न ब्रह्मस्वरूपे भेदः, विशेषणेषु शरीरेष्वेव तु भेदः, अतः स्वरूपस्याप्रमेयता ध्रुवता चाक्षतैव । यद्वा—एवमैकात्म्येऽपि जगतः परं ब्रह्म चेतनाचेतनशरीरकमपि एकधैवानुद्रष्टव्यम्—नित्यत्वाप्रमेयत्वादयो येऽस्यासाधारणाः प्रकारास्तैरेव प्रकारैर्द्रष्टव्यम्, न तु तद्विपरीतैर्मिथोविरुद्धैः शारीरैर्धर्मैरन्यथाऽन्यथा, चेतनशरीरकत्वात् सुखित्वदुःखित्वादिविरुद्धधर्मान्वयोऽचेतनशरीरकत्वाद्विकारित्वपरिच्छेद्यत्वमहत्त्वाल्पत्वादिविरुद्धधर्मान्वयस्य वा न प्रसङ्गः, न हि शरीरगतानां विरोधानां शरीरिण्यन्वयः । इदं ब्रह्मतत्त्वं हि अप्रमेयम्—अपरिच्छेद्यम्, ध्रुवम्—अविकारि चेति । अयं परमात्मा हि विरजः—व्यपेतगुणः—त्रिगुणप्रत्यनीकस्वभाव इत्येतत् । आकाशात् गुणमयात् गुणपरिणतेश्च परः । यद्वा—आकाशात्—प्रकाशमयात् विज्ञानमयात्परः, अजः—कर्मकृतजनिरहितः, महांश्चायमात्मा, ध्रुवः—नित्यः, अनेन सर्वशरीरस्य तद्गतदोषास्पृष्टत्वमुक्तं भवति । सारत इदमभिहितं भवति—जगति यदिदं जडद्रव्यमुपलभ्यते तदखिलमेवोपचयापचयादिभिर्विकारभेदैः कालभेदेन देशभेदेन चान्यथाऽन्यथा दृश्यते, तथा जीवोऽपि धर्मभूतज्ञानस्योपचयापचयादिभेदेन प्रबुद्धत्वाप्रबुद्धत्वसुखित्वादिवैषम्ययोगेनान्यथाऽन्यथा समुपलभ्यते, इदं तु ब्रह्मतत्त्वं कालभेदे देशभेदेऽप्येकरूपमेवेत्येकधैवानुद्रष्टव्यम्, तद्धि ध्रुवम्—काल-

भेदेऽपि नोपचीयते न वाऽपचीयते न विवर्तते वा एकरूपमेव, तथा अप्रमेयम्—कालतो देशतो वा न तत्परिच्छिद्यते इति । यद्वा—जगदिदमखिलम्, एकधैवानुद्रष्टव्यम्—ब्रह्मात्मकतया एकात्मकत्वेनेकधैव द्रष्टव्यम् । अन्यदनतिरिक्तार्थकम् ॥२०॥

**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहून् शब्दान् वाचो विग्लापनं हि तदिति ॥२१॥**

तमेवात्मानं परं ब्रह्म शास्त्रतो गुरोर्वा तत्त्वतो विज्ञाय प्रज्ञां कुर्यात्—ध्यानं कुर्यात् । कोऽसौ ? ब्राह्मणः—अधीतवेदः । जातिपरत्वे उपलक्षकं वा त्रैवर्णिकस्य । बहून् शब्दान्—आत्मनोऽन्यत्र प्रवृत्तान् कामनावैविध्योपायवैविध्यावलम्बेन बहवो नाम शब्दाः प्रवृत्ताः, न तैः कश्चनार्थो निःश्रेयसकामस्य, तत्तान् बहून् शब्दाननानुचिन्तयेत्, तदनुचिन्तनं हि वाचो विग्लापनम्—ग्लानिमात्रापादकम्, तापत्रयानतिलङ्घनात् ॥२१॥

**स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय तमेतं वेदानुवचनेन ब्राह्मणा**

विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति एतद्ध स्म वै तत्पूर्वे विद्वाँसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः । स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्जतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः ॥२२॥

सः—पूर्वं 'अज आत्मा महान् ध्रुव' इति प्रस्तुतः परमात्मा एषः, कः ? य एषोऽन्तर्हृदयेऽवस्थित आकाशः—प्रकाशमानो विज्ञानमयः प्राणेषु सन्निधत्ते, तस्मिन् जीवात्मनि शेते य एषः । अन्तर्हृदयेऽवस्थितः सन् व्याप्य चक्षुरादिप्राणान् प्रकाशयति बाह्यानाभ्यन्तरांश्चार्थान् यो विज्ञानमयस्तस्याप्यन्तरात्मेति यावत् । यद्वा—आकाशशब्दो भूताकाशपर एव, यो महानज आत्मा परस्तस्यैव हृदयाकाशे स्थितिरुच्यते, 'स वा एष योऽयं विज्ञानमयः प्राणेष्वि'ति परस्य

श्रूयमाणं विज्ञानमयेन सामानाधिकरण्यं शरीरात्मभावनिबन्धनम् । अनेन जीवात्मनः परमात्मायत्तस्वरूपस्थितिप्रवृत्तिकत्वज्ञापनात् पूर्वोक्तं प्राणस्य प्राणत्वं श्रोत्रस्य श्रोत्रत्वमित्यादि न जीवस्य, किन्तु परमात्मन एवेत्यपि दृढीकृतं भवति । अत्र विस्तरः प्रकाशिकायां बोध्यः । स एष परमात्मा सर्वस्य वशी—सर्वमस्य वशे, नास्यावशगं किमपि, सर्वशरीरितया सर्वाधारो ह्ययम् । सर्वस्येशानः—नियन्ता । सर्वस्याधिपतिः—सर्वमस्य शेषभूतम् । यस्मादेष सर्वस्याधिपतिः सर्वस्येशानः सर्वस्य वशी अतएव नायमितरवत् साधुना कर्मणा भूयान् असाधुना वा कनीयान् । निग्रहं वाऽनुग्रहं वा यथाकर्म कुर्वन्न लिप्यते च ताभ्याम् । साध्वसाधुकर्मविभागोऽप्यस्यैव प्रशासितुः प्रशासनानुवर्तनतदननुवर्तनवैलक्षण्यलक्षण एव । एष एव सर्वेषामीश्वरः, एष एव भूतानामधिपतिः, एष एव भूतानां पालकश्च, ईश्वरत्वं स्वामित्वं रक्षकत्वं चेति कल्याणगुणविशेषाः प्रदर्शिताः । एषां लोकानामसंभेदाय—असाङ्कर्याय विधारकः सेतुरेष एव, सेतुरिव सेतुः, सर्वान् लोकान् तत्तत्स्थाने विधारयत्ययमेवेत्येतत् । ब्राह्मणाः—अधीतवेदाः, तमेतं परमात्मानं वेदानामनुवचनेन—अध्ययनेन यज्ञेन दानेन तपसाऽनाशकेन—अनशनेन, उपवासलक्षणव्रतविशेषेणेत्येतत्, कामानशनेनेति वा, एतैर्निष्काममनुष्ठितैरुपायैर्विविदिषन्ति—वेत्तुमिच्छन्ति । असिना जिघांसतीत्यादाविव सन्प्रकृतिभूतविदिधात्वर्थवेदनसाधनत्वं वेदानुवचनादिषु प्रतीयते । अत्र परे सनन्तार्थविविदिषासाधनत्वमेवात्र करणश्रुत्या प्रतीयते इति वदन्ति । अत्र विशेषः श्रीभाष्यश्रुतप्रकाशिकयोर्द्रष्टव्यः । एतमेव

परमात्मानं विदित्वा–ब्रह्मदर्शिनो गुरोः सकाशात् विज्ञाय तदधिगमाय मुनिर्भवति–मननैकपरो योगी भवति । एतमेव परमात्मानं लोकम्- सर्वेषां कामानामाश्रयो ह्ययम्, यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्, स्वतश्च निरवधिकानन्दस्वरूपत्वेन प्राप्यश्च, अतो लोक उच्यते । एतं लोकमिच्छन्तः प्रव्राजिनः–सन्यासिनः प्रव्रजन्ति। कामकामानां नायं लोकः, अकामकामानां त्वयं लोक इति यावत् । एतत्परमात्मस्वरूपविदः पूर्वेऽपि प्रजां न कामयन्ते, कुतः, उच्यते, किं प्रजया वयं करिष्यामः, यस्य वपुरेवात्मा, ततोऽन्यो भोक्तृतैकस्वभावो वा, लोकश्चायमसौ वा तस्य प्रजया पशुभिः कामैर्वाऽन्यैरैहिकैरामुष्मिकैः फलम्, येषां नः अयमेवात्मा अयमेव लोकः, यः सर्वान्तरः स एव न आत्मा, नास्माकं वपुषि आत्मदृष्टिः, न वा परब्रह्मानात्मके केवलभोक्तृतैकस्वभावे, तथादृष्टयो हि नात्मतत्त्वविदः, वयं तु तत्त्वत आत्मानं जानीमः, तत् न आत्मा सर्वान्तरः स एव, लोकश्च स एव नः, न ह्यन्यत आनन्दलेशः । एवंभूता वयं किं प्रजादिभिः कामैः कामसाधनैर्वा करिष्यामः इति न कामयन्ते । पुत्रैषणाया इत्यादिव्याख्यातं प्राक् । अतः कारणात् पापमकरवमतः कारणात् कल्याणमकरवमित्येते उभे चिन्ते एतं ब्रह्मविदं न तरतः–न प्राप्नुवतः । अब्रह्मविदो हि सा चिन्ता, यत एष ब्रह्मदर्शी उभे पुण्यपापे इहैव तरति विद्यया । विद्याबलाद्विनश्यतीति यावत् । नचैनं ब्रह्मदर्शिनं कृताकृते–सुकृतदुष्कृते प्रामादिकेऽपि तपतः–न श्लिष्यतः ॥२२॥

तदेतदृचाऽभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान् तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति तस्मादेवं-विच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजो विचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राडेनं प्रापितोऽसीति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्यायेति ॥२३॥

तदेतत्—पुण्यपापसन्तरणम्, ऋचा वक्ष्यमाणयाऽभ्युक्तम् । ब्राह्मणस्य—ब्रह्मदर्शिनः एष वक्ष्यमाणो महिमा नित्यः—ऐन्द्राद्यैश्वर्यवन्न प्रक्षयी । अयं ब्रह्मदर्शी कर्मणा सुकृतेन न वर्धते न वा दुष्कृतेन कनीयान्, अयमस्य महिमा, अनात्मविद एव तु कर्मभिर्लाभो हानिर्वा । तस्मात् तस्यैव—परमात्मन एव पदवित्—स्वरूपवित् स्यात्, पद्यते इति पदं स्वरूपम्, तं परमात्मानं विदित्वा न लिप्यते पापकेन—पुण्यपापलक्षणकर्मणा । यद्वा—तस्यैव महिम्नः पदवित्—स्वरूपवित् स्यात्, तं महिमानं विदित्वा न कर्मणा लिप्यते । इत्येष महिमा । तस्मात्—यस्मात् ब्रह्मदर्श्येवंविधमहिमशाली तस्मात्, एवंवित्—उक्तप्रकारेण ब्रह्मस्वरूपवित्, शास्त्रतो विजानन्नित्येतत्,

शान्तः—निगृहीतान्तरिन्द्रियः, दान्तः—निगृहीतबाह्येन्द्रियः, उपरतो विविधारम्भतः प्रतिषिद्धाचरणादिभ्यश्च, तितिक्षुः—क्षमासंपन्नः, समाहितः—अवहितचित्तश्च भूत्वा, आत्मनि—स्वस्मिन्नन्तरात्मतयाऽवस्थितमात्मानं पश्येत् । यद्यपि पश्यतीत्येव निर्देशः, अथापि विधौ तात्पर्यम् । विधिश्च ध्यानस्य, (तच्च ध्यानं दर्शनसमानाकारतासंपत्त्यन्तं कार्यमित्येतज्ज्ञापनाय दृशिधातुः) शान्त्यादिकं च तदङ्गम्, अन्यथा ध्यानानिष्पत्तेः । न केवलमात्मन्यात्मानं, किन्तु सर्वमात्मानं पश्यति; ब्रह्मात्मकं सर्वं पश्येदिति यावत् । आत्मन्येवेत्यवधारणपाठे विभक्तदृष्टिः प्रतिषिध्यते । एनं ब्रह्मदर्शिनं पाप्मा—पुण्यपापं न तरति—न व्याप्नोति, एष ब्रह्मदर्शी पापं तरति अतिक्रामति, व्यपेतपापो भवतीति यावत् । नैनं पाप्मा तपति—बाधते, अयं तु सर्वं पाप्मानं तपति—नाशयति । एष ब्राह्मणः—ब्रह्मदर्शी विपापो विरजः—रजःकार्यरागादिशून्यः, अविचिकित्सः—व्यपेतसकलसंशयश्च भवति । कुत इदमैश्वर्यम्?, आह—स एष ब्रह्मदर्शी ब्रह्मलोकः—ब्रह्मैव लोको यस्य तथाभूतः नान्योऽस्य लोकः, ब्रह्मैवास्य परमो लोक इति यावत् । अन्यलोका हि पुण्यपापैस्तप्येरन् । इममुपदेशं मत्तोऽधिगतवतस्ते ब्रह्मप्राप्तौ न संशय इति दार्ढ्यं फले ज्ञापयन् आह—हे सम्राट् एनं प्रापितोऽसीति इति होवाच याज्ञवल्क्यः । उपदेशतः प्राप्तब्रह्मविद्यः प्रहृष्टो वैदेह आह—सोऽहं भगवते विदेहान् ददामि मां चापि दास्याय—भवतः परिचरणाय ॥२३॥

स वा एष महानज आत्माऽन्नादो वसु-
दानो विन्दते वसु य एवं वेद ॥२४॥

परिसमाप्तो जनकयाज्ञवल्क्यसंवादः—अथ श्रुतिः स्वयमाह—स वेति। परस्य ब्रह्मणः सकलफलप्रदत्वमुच्यते। याज्ञवल्क्येन जनकायोपदिष्टः स एष महानज आत्मा अन्नादः—अत्तृजीववर्गान्तर्यामितयाऽन्नादोऽयम्, वसुदानः—स्वतः सकलकर्मफलप्रदः। वस्विति कर्मफलं लक्ष्यते। य एवमेनमुपास्ते स विन्दते वसु—भोग्यं धनधान्यादि ॥२४॥

**स वा एष महानज आत्माऽजरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद ॥२५॥**

स एष महानज आत्मा जरामरणरहितः अत एवामृतः, अभयश्च—भयरहितो भयप्रतिभटश्च। ब्रह्म—स्वरूपतः स्वभावतो निरतिशयबृहत्त्वगुणविशिष्टश्च। यद्ब्रह्म तदभयमिति तु प्रसिद्धम्। य एवमेनमात्मानं परं ब्रह्म वेद—उपास्ते सोऽप्यभयं ब्रह्म-भयरहितं ब्रह्म भवति, अपहतपाप्मत्वादिलक्षणस्वाभाविकाभयब्राह्मस्वरूपाविर्भावो भवतीति यावत्। अनेन मुक्तिफलप्रदत्वमप्यस्यैवेति ज्ञाप्यते ॥२५॥

इति चतुर्थाध्याये चतुर्थं ब्राह्मणम्।

---

**अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् ॥१॥**

पुनरनुपठ्यते नाम मैत्रेयीब्राह्मणमिदं आवितस्यार्थस्य द्रढिम्ने । क्वचित् पदतो वाक्यतश्चास्ति पाठे भेदः न तात्पर्यतः । अथाप्यव्याख्यातानि तानि व्याख्यायन्ते । याज्ञवल्क्यस्य मैत्रेयी कात्यायनी चेति द्वे भार्ये बभूवतुः, तयोर्मैत्रेयी ब्रह्मवदनशीला बभूव, कात्यायनी तु स्त्रीप्रज्ञैव केवलं बभूव–स्त्रीणां समुचिताऽत्यन्तापेक्षिता या गृहनिर्वहणैकप्रयोजनपर्यवेक्षणलक्षणा प्रज्ञा तया संपन्ना बभूव । अथ याज्ञवल्क्योऽन्यद्गार्हस्थ्यात् वृत्तं–वर्तनं पारिव्रज्यमित्येतत्,उपाकरिष्यन्–स्वीकरिष्यन् । मैत्रेयीमुवाचेत्युत्तरेण संबन्धः ॥१॥

मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति ॥२॥ सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यां न्वहं तेनामृताऽऽहो३ नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितꣳ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥३॥ सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेत्थ तदेव मे विब्रूहीति ॥४॥

व्याख्यातमेतत् ॥२–४॥

स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती

सती प्रियमवृधद्धन्त तर्हि भवत्येतद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥५॥

विविदिषां तस्या विज्ञाय हर्षेणाह—धर्माचरणे स्थितानां नः सहधर्मचरणे श्रद्धातिशयात् भवति प्रीतिपात्रमेव सती पुनरिदानीं धने वैतृण्यख्यापनपूर्वकं विविदिषाख्यापनात् प्रियमवृधत्—प्रीतिं वर्धयते । हन्त ते विविदिषानुगुणं व्याख्यास्यामि । व्याख्यातमितरत् ॥५॥

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति न वा अरे लोकानां कामाय लोकाः प्रिया

भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदꣳ सर्वं विदितम् ॥६॥ ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि सर्वाणि भूतानीदꣳ सर्वं यदयमात्मा ॥७॥ स यथा दुन्दुभेर्हन्यमानस्य न

बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥८॥ स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥९॥ स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥१०॥ स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टꣳ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥११॥ स यथा सर्वासामपाꣳ समुद्र एकायनमेवꣳ सर्वेषाꣳ स्पर्शानां त्वगेकायनमेवꣳ सर्वेषाꣳ रसानां जिह्वैकायनमेवꣳ सर्वेषां गन्धानां नासिके एकायनमेवꣳ सर्वेषाꣳ रूपाणां चक्षुरेकायनमेवꣳ सर्वेषां शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्वेषां सङ्कल्पानां मन एकायनमेवꣳ सर्वासां विद्यानाꣳ

हृदयमेकायनमेव ँ सर्वेषां कर्मणा ँ हस्तावेकायनमेव ँ सर्वेषामानन्दानामुपस्थ एकायनमेव ँ सर्वेषां विसर्गाणां पायुरेकायनमेव ँ सर्वेषामध्वनां पादावेकायनमेव ँ सर्वेषां वेदानां वागेकायनम् ॥१२॥

व्याख्यातमेतत् ॥६—१२॥

स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१३॥

यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव—लवणघन एव, नैकांशेनाप्यलवणः, अन्तरो बाह्य इत्येव सुवचे अनन्तरोऽबाह्य इत्युक्तिर्दार्ढ्याय, एवमेवायं सर्वांशेन प्रज्ञानघनः । व्याख्यातमितरत् ॥१३॥

सा होवाच मैत्रेय्यत्रैव मा भगवान्मोहान्तमापीपिपन्न वा अहमिमं विजानामीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा ॥१४॥

मैत्रेय्युवाच मा भगवानिति । मोहान्तम्—मोहस्थानम् (अन्तशब्दः प्रदेशपरः) आपीपिपत्—प्रापितवान् । 'न प्रेत्य संज्ञाऽस्ति' इत्य-

नेन भवत्यर्थे मोहः, न वा इह वाक्ये विवक्षितमर्थं विजानामि। याज्ञवल्क्य आह—न वेति। मोहावहं वाक्यं नाहं ब्रवीमि। अविनाश्येवायमात्मा, तथाऽनुच्छित्तिधर्माऽपि, अस्य यद्धर्मभूतं ज्ञानं तदप्यनुच्छित्ति, न विद्यते उच्छित्तिर्विनाशो यस्य तथाभूतम्, तेन मुक्तावपि अस्य न स्वाभाविकज्ञानप्रणाशः। भावस्तु स एव ॥१४॥

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरँ रसयते तदितर इतरमभिवदति तदितर इतरँ शृणोति तदितर इतरं मनुते तदितर इतरँ स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कँ रसयेत्तत्केन कमभिवदेत्तत्केन कँ शृणुयात्तत्केन कं मन्वीत तत्केन कँ स्पृशेत्तत्केन कं विजानीयाद्येनेदँ सर्वं विजानाति तं केन विजानीयात्स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्जतेऽसितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ॥१५॥

मैत्रेयि एतावत् खल्वमृतत्वम्—साध्ये साधनोपचारः, अमृतत्वसाधनमुपदेष्टव्यमेतावदेव, तत् अमृतत्वार्थिभिरितो नाधिकमवग-

न्तव्यमस्ति, तदस्मिन्नर्थे त्वमुक्तानुशासनाऽसि, निरवशेषं मयोपदिष्ट-मित्येतत् । इतरत् व्याख्यातम् ॥१५॥

इति चतुर्थाध्याये पञ्चमं ब्राह्मणम् ।

---

अथ वꣳशः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥१॥ आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात्सैतवः पाराशर्यायणात्पाराशर्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यन्दिनायनान्माध्यन्दिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिः ॥२॥ घृतकौशिकाद् घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौ-

तमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातोबाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्यआङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभुब्रह्मणे नमः ॥३॥

अथाचार्यवंशोऽस्य याज्ञवल्क्यीयकाण्डस्योच्यते । आचार्यवंशविज्ञानं विद्याप्रतिष्ठायै कल्पते । प्रथमान्तेन शिष्यः पञ्चम्यन्तेन गुरुर्निर्दिश्यते ॥१–३॥

इति चतुर्थाध्याये षष्ठं ब्राह्मणम् ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण-परमहंसवर्य-योगिराज-श्रीगोपालानन्दस्वामिविरचिते बृहदारण्यकोपनिषद्भाष्ये चतुर्थोऽध्यायः ।

---

## अथ पञ्चमोऽध्यायः ।

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

उपदिष्टं निःश्रेयससाधनं परस्य ब्रह्मणो विज्ञानम् । अथ विद्याङ्गतयाऽभ्युदयसाधनतया चोपासनविशेषा उपदिश्यन्ते । तत्रादौ सर्वस्य ब्रह्मात्मकतामनुस्मारयति विज्ञानदार्ढ्याय । कतिचन दार्शनिकाः सर्गप्रक्रियायामेवं मन्यन्ते—पूर्णात् व्यापकात् प्रधानात् अपूर्णमव्यापकमिदं कार्यं समुद्भवतीति, अपरे केचन अपूर्णात् अव्यापकात् अत्यल्पदेशपरिच्छिन्नात् परमाणोः इदं पूर्णं व्यापकं समधिकदेशव्याप्तं पृथिव्याद्यवयविद्रव्यमुत्पद्यते इति । तर्कैकशरणास्ते यथास्वदृग्वैभवं वदन्ति । औपनिषदास्त्वेवमाहुः—पूर्णमदः पूर्णमिदम्—अद इति कारणमुच्यते, इदमिति कार्यमुच्यते । कारणं कार्यमप्युभयं पूर्णमेव व्यापकमेव, कथमेतत् ?, पूर्णादेव हि परस्मात् ब्रह्मणः पूर्णमेव स्वयमुदच्यते—उद्भवति, यस्मादुद्भवति तदपि पूर्णम्, यदुद्भवति तदपि पूर्णमेव, कथमेतत् ?, स्वेतरसमस्तचिदचिच्छरीरं ब्रह्मैव हि स्वशरीरसौक्ष्म्यस्थौल्याभ्यामारम्भकारभ्यविभागं प्राप्नोति, न हि तस्य कारणभावे कार्यभावे वा पूर्णतायाः—व्यापकताया अपगमः, कारणविशेषणानां कार्यविशेषणानां तु परिच्छेदतारतम्यात् पूर्णापूर्णताविभागः, तद्युक्तं पूर्णमदः पूर्णमिदमिति । तथा प्रतिसर्गेऽपि—समधिकदेशव्यापि पूर्णमिदं पृथिव्यादि प्रण-

ष्यति, अल्पदेशपरिच्छिन्नमपूर्णं परमाणुमात्रमवशिष्यते इति केचित्। परे पूर्णं—व्यापकमेव प्रधानं पूर्णस्य स्वस्यैव रूपान्तरं अपूर्णम्—अव्यापकं पृथिव्यादि आदाय—स्वयमुपसंहृत्यावशिष्यते इति। न तथा तत्, किन्तु पूर्णं परं ब्रह्मैव पूर्णस्य स्वस्यैव रूपान्तरं स्थूलचिदचिद्विशिष्टं पूर्णं स्वं रूपं स्वस्मिन् आदाय—उपसंहृत्य स्वयं पूर्णमेवावशिष्यते ॥

ॐ ३ खं ब्रह्म खं पुराणं वायुरं खमिति
ह स्माह कौरव्यायणीपुत्रः । वेदोऽयं ब्रा-
ह्मणा विदुः, वेदैनेन यद्वेदितव्यम् ॥१॥

ओमिति । योऽयं प्रणवः स ब्रह्म, प्रणवे ब्रह्मदृष्टिः कार्येति यावत्, प्रणवालम्बनं ब्रह्मोपासनमुपदिष्टं भवति। उपास्यं ब्रह्म विशिनष्टि—खमिति । तच्च खं नार्वाचीनं किन्तु पुराणम्; अव्याकृताकाशमित्येतत्, कथं ब्रह्म तथाविधं खं भवति ?, तच्छरीरकत्वात्, तथाचाव्याकृताकाशशरीरकब्रह्मदृष्टिः प्रणवे कार्येति यावत् । यद्वा—अलेपत्वापरिच्छिन्नत्वाभ्यां ब्रह्मैव साक्षात् खमिति शब्देनोच्यते । विवक्षितार्थज्ञापनाय भूताकाशव्यावर्तकं पुराणमिति विशेषणम्, तथाच पुराणत्वापरिच्छिन्नत्वादिगुणविशिष्टब्रह्मदृष्टिः प्रणवे कार्येति यावत् । कौरव्यायणीपुत्रः प्राह—प्रणवे अध्यस्योपास्यं ब्रह्म वायुरं खमिति—वायुमदम्बरमिति, तथाच भूताकाशशरीरकब्रह्मदृष्टिः प्रणवे कार्येति यावत् । उभयथापि प्रणवालम्बनं ब्रह्मोपासनमुपदिष्टं भवति। अथ प्रणवः स्तूयते—अयमेव वेदः, यदनेनैव सर्वं वेदितव्यं विद्वान् वेद, सर्वकारणभूतस्य परस्य ब्रह्मणो ह्यभिधानमिदम्, वाच्ये ब्रह्मणि

विदिते सर्वं विदितं भवति, तत् वाच्यस्य महिम्ना वाचकः स्तूयते । इति ब्राह्मणाः—ब्रह्मनिष्ठा विदुः । अस्येमं महिमानं ब्रह्मनिष्ठा विदुरिति यावत् ॥१॥

इति पञ्चमाध्याये प्रथमं ब्राह्मणम् ।

---

त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा ३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥१॥

दमादिसाधनं विधास्यन् आख्यायिकामुखेन तदुपक्रमते । आख्यायिका च तत्र श्रद्धायै । प्राजापत्याः—प्रजापतेरपत्यानि देवाः मनुष्या असुराश्चेति त्रयाः—त्रिविधाः पितरि प्रजापतौ हितमात्मनो विविदिषन्तो ब्रह्मचर्यं शिष्यभावेनोषुः—आचरितवन्तः । उषित्वा ब्रह्मचर्यं प्रथमं देवाः प्राप्यावसरमिदमूचुः—ब्रवीतु नो भवान् हितमिति । तेभ्यो देवेभ्यो द इत्येतदक्षरमुवाच प्रजापतिः । उक्त्वा मयोक्तस्यास्यार्थं व्यज्ञासिष्ट—यूयं विज्ञातवन्तः किमित्यपृच्छत् । व्यज्ञासिष्म—विज्ञातवन्तो वयम्, 'द' इत्यनेनाक्षरेणास्मान् दाम्यतेति ह भवानाहेति ऊचुः । देवानां प्रकृष्टैश्वर्यमदमत्तताप्रकृत्यपनयनाय तेभ्योऽयमसाधारण उपदेशः, तेऽपि स्वप्रकृत्यभिज्ञा निगूढमप्युपदेशार्थं विज्ञातवन्तो नाम । अभ्यनुजानाति प्रजापतिः—ओम् सत्यं व्यज्ञासिष्टेति ॥१॥

अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा ३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥२॥

अथ हैनं मनुष्याः प्राप्य प्रश्नावसरमूचुः—ब्रवीतु नो हितं भवानिति। अथ प्रजापतिस्तेभ्योऽपीदमेवाक्षरमुवाच—'द' इति। उक्त्वा चापृच्छत् अप्यस्यार्थं यूयं व्यज्ञासिष्ट—विज्ञातवन्त इति। ते होचुः—व्यज्ञासिष्म दत्तेति हि न आह भवानिति। मनुष्या ह्यल्पवीर्याः क्षुत्पिपासाव्याकुलाः कथमपि धनं प्राप्य प्रायो लोभप्रकृतयो भवन्ति, तदेभ्योऽयमसाधारण उपदेशो दानशीला यूयं भवतेति, तदेते आत्मप्रकृत्या व्यजानन्नामोपदेशार्थम्। अभ्यनुजानाति तत् प्रजापतिः—ओं व्यज्ञासिष्टेति ॥२॥

अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा ३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति तदेतत्त्रय१ँ शिक्षेद्दमं दानं दयामिति ॥३॥

अथ प्राप्यावसरमसुरा ऊचुः—ब्रवीतु नो हितं भवानिति। तेभ्योऽ-

पीदमेवाक्षरमुवाच 'द' इति । अपृच्छच्चाप्यस्यार्थो विज्ञातो युष्माभिरिति, ते चावोचन्–विज्ञातवन्तो वयं दयध्वमित्याह भवानिति । असुरा हि परपीडनैकप्रकृतयस्तेभ्योऽयमसाधारण उपदेशो दयध्वमिति । अभ्यनुजानाति स–ओं विज्ञातवन्तो यूयमिति । अथ श्रुतिराह–इममेवोपदेशं दाम्यत दत्त दयध्वमित्यभिप्रायकं अद्यापि दैवी वाक् स्तनयित्नुः 'द द द' इत्यनुवदति । ददेति हि मेघस्य गर्जितं भवति । तस्मात् दमो दानं दया चेति एतत्त्रयं शिक्षेत्–अभ्यस्येत्, यः श्रेयस्कामः । ननु त्रयं नैकेनोपादेयम्, यस्मै यदुपदिष्टं तत्तेनोपादेयम् । नैतत् । आख्यायिका हि नाभिधेयार्थप्रधाना, अपि तु तात्पर्यार्थप्रधाना, तात्पर्यं चादान्तत्वादयो दोषाः परिहार्या इत्यत्र । अत्र दान्तादय एव देवादिशब्दैस्तात्पर्यतो निर्दिश्यन्ते ॥३॥

इति पञ्चमाध्याये द्वितीयं ब्राह्मणम् ।

---

एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षरꣳ हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ॥१॥

उपासनां कुर्वता दमादिसंपन्नेन भाव्यमित्युक्तम्, (सर्वत्रोपासने दमादेरङ्गत्वमुक्तम्) अथ हृदयोपासनमुच्यते, यद्यप्यभ्युदयसाधनमेतत्, अथाप्यकामस्य ब्रह्मविद्याङ्गताऽपि, आदौ हृदय-

मुपास्यं स्तूयते, उपास्यस्तुत्या ह्युपासने प्रवर्तते पुरुषः । यदिदं हृदयं एष प्रजापतिः प्रजानां पतिः—हृदयेनैव प्रजानां सत्ता, एतत् ब्रह्म—बृहत्त्वगुणयोगात् । गरीयो हि प्राणेभ्यो हृदयम्, एतत्प्रतिष्ठा हि सर्वे प्राणाः । एतदेव हृदयं सर्वम्, शाकल्यब्राह्मणान्तोक्त-प्रकारेण आदित्यादिदिग्देवताप्रतिष्ठात्वोपपादनक्रमप्राप्तसर्वप्रतिष्ठा-त्वेन सर्वत्वमुपचर्यते । एवं हृदयं स्तुत्वा प्रथमं तस्य नामो-पासनं विधीयते—तदेतदित्यादिना । हृदयमिति तदेतत्त्र्यक्षरं नाम, तत्र हृ—इत्येकमक्षरम्, अस्याक्षरस्य प्रवृत्तौ निमित्तमेतत्, अस्मै हृदयाय स्वाः श्रोत्रादीनीन्द्रियाणि अन्ये च बाह्याः शब्दादयः अभिहरन्ति भोगविशेषान्, तदनेनार्थेनाक्षरप्रवृत्तिं यो वेद तस्मै स्वाश्चान्ये चाभिहरन्ति इत्यावृत्त्याऽन्वयबोधः । यतो हृदयाय स्वाश्चान्ये च स्वस्ववीर्यं ददति, तदनेनार्थयोगेन द इत्यक्षरं नाम्नि संयुज्यते । य एवं वेद ददत्यस्मै स्वाश्चान्ये च। गत्यर्थकं यमि-त्यक्षरमत्र संयुज्यते, तदक्षरं तदर्थकतया नाम्नि संयुक्तं यो वेद स स्वर्गं लोकमेति । उक्तप्रवृत्तिनिमित्तकाक्षरसमुदायलक्षणं हृदयनाम य उपास्ते तस्योक्तसमुदितफलसिद्धिरिति यावत् ॥१॥

इति पञ्चमाध्याये तृतीयं ब्राह्मणम् ।

---

तद्वै तदेतदेव तदास सत्यमेव स यो हैतं मह-द्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लो-कान् जित इन्वसावसद्य एवमेतं महद्यक्षं प्रथ-मजं वेद सत्यं ब्रह्मेति सत्यꣳ ह्येव ब्रह्म ॥१॥

तद्वै—यस्य नामोपासनमात्रेणेयत्फलं तादृशं वै तत्—हृदयम् । यस्य नामोपासनमात्रेणेयत्फलं तस्यैवोपासने किं वक्तव्यमित्यनेन ज्ञापितं भवति । एतदेव हृदयं तदास । किमास ? । सत्यमेव–सत्-मूर्तम्, त्यत्-अमूर्तम्, मूर्तामूर्तोभयरूपमेवास । मूर्तामूर्तोभयात्मना हृदयमुपास्यमिति यावत् । अथैतद्वेदनस्य फलमुच्यते—यः उपासकः महत्, यक्षं—पूज्यं एतत्—हृदयं प्रथमजं सत्यम्—सर्वस्मादस्मात् प्रथमजातमूर्तामूर्तात्मकाव्याकृतपञ्चभूतत्वेन तथा बृहत्त्वेन ब्रह्मेति च वेद—उपास्ते, स जयतीमान् लोकान् । य एवमेतं महद्यक्षं प्रथमजं सत्यं ब्रह्म वेद, तेन जित इन्नु जित एव असौ शत्रुः असत् असत्प्राय एव भवति । सत्यं य उपास्ते स सत्यो भवेत्, तस्य शत्रुरसत्यो भवेत्—असद्भवेत् तद्युक्तं सत्यहृदयोपासकस्य शत्रुरसद्भवतीत्येतत् द्रढयन्नाह–सत्यं ह्येव ब्रह्मेति यदुपास्यं हृदयाख्यं ब्रह्म तत् सत्यं खलु । सत्यता चोक्तरूपा ॥१॥

इति पञ्चमाध्याये चतुर्थं ब्राह्मणम् ।

---

आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म प्रजापतिं प्रजापतिर्देवा१ँस्ते देवाः सत्यमेवोपासते तदेतत्त्र्यक्षर१ँ सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीत१ँ सत्यभूयमेव भवति नैनं विद्वा१ँसमनृत१ँ हिनस्ति ॥१॥

मूर्तामूर्तलक्षणस्य सत्यस्य प्रथमजत्वं पूर्वोक्तमुपपादयितुं प्रवर्तते। पुरा—अण्डसृष्टेः प्राक् इदं—व्याकृतं जगत् आप एव, आप इत्युपलक्षकम्—अव्याकृतपञ्चभूतान्येवासन् । तानि सत्यमसृजन्त, ताश्चापः सत्यम्—पञ्चीकृतभूतपञ्चकं मूर्तामूर्तलक्षणमसृजन्त, तच्च सत्यं ब्रह्म—ब्रह्माणम्, असृजत, ब्रह्मा प्रजापतिम्—कश्यपादीनित्येतत्, स च प्रजापतिर्देवान् । पूर्वोक्तं सत्यस्य यक्षत्वं—पूज्यत्वं द्रढयितुमुच्यते—ते देवाः सत्यमेवोपासते इति । सृष्टा देवाः प्रथमजं सत्यमेवोपासते यदिह विहितं सत्यत्वेन हृदयोपासनं न मनुष्या एव अपि तु देवा अपि कुर्वन्ति, तत् देवैरप्युपास्यस्यास्य सत्यस्य पूज्यत्वं युक्तमिति यावत् । यदेतत् सत्यमिति नाम तत् त्र्यक्षरं भवति, तत्र स इत्येकमक्षरं प्रथमम्, तीत्येकमक्षरं मध्यमम्, इकारानुबन्धो निर्देशार्थैव, 'त' इत्यक्षरमिति यावत्, यमित्येकमक्षरं चरमम्, तेषु प्रथमोत्तमे अक्षरे, अन्तिमस्य द्वयोरक्षरयोरूर्ध्वं निर्देशात् उत्तमता, सकारयकारौ सत्यम्, मध्यमस्यैव मृत्युरूपताभावात्, यन्मध्यमक्षरं तकारः तदनृतम्, कस्मात्?, अनृतं हि मृत्युः, तकारस्तु मृत्युः, तकारान्वयात् । तदेतदनृतं मध्यमं तकारात्मकमक्षरमुभयतः सत्येन परिगृहीतम्, तदिदमुभयतः सत्येन व्याप्ततया सत्यभूयमेव—सत्यप्रचुरमेव भवति, एवं सत्यबाहुल्यमस्य जानन् यो विद्वांस्तं जातु प्रसक्तमपि प्रामादिकमनृतं न हिनस्ति ॥१॥

तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तावेतावन्योऽन्यस्मिन्प्रतिष्ठितौ रश्मि-

भिरेषोऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्
स यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मण्डलं
पश्यति नैनमेते रश्मयः प्रत्यायन्ति ॥२॥

हृदये सत्योपासनमुक्तम्, अथाविकृतत्वलक्षणसत्यत्वेनाक्ष्यादित्यान्तर्वर्तिपरमात्मोपासनमुच्यते—तद्यदिति । यत्तत्प्रसिद्धं सत्यम्, प्रसिद्धिश्च श्रुतितः, अविकृतत्वलक्षणमुख्यार्थान्वयाच्च, एतेनोक्तादस्य सत्यस्य व्यावृत्तिः सिद्धा । असौ स आदित्यः, कः सः ?, आह—य एष एतस्मिन्मण्डले पुरुषः 'य एषोऽन्तरादित्ये हिरण्मयः पुरुष' इत्यन्यत्र श्रुतः, यश्चायं दक्षिणेऽक्षन्—'य एषोऽन्तरक्षणि पुरुषो दृश्यते' इत्यन्यत्र श्रुतः, स्थानभेदेऽप्यनयोर्न भेदः, आदित्यमण्डलान्तर्वर्ती चक्षुरन्तर्वर्ती च परमात्मा, अविक्रियत्वात्तद्यत्सत्यमित्यत्रोच्यते । तावेतावन्योन्यस्मिन् प्रतिष्ठितौ । कथमेतत्, उच्यते । रश्मिभिरेष मण्डलान्तर्वर्ती अस्मिन्—अक्षिस्थे प्रतिष्ठितः, तथाऽयमक्ष्यन्तःस्थः पुरुषः प्राणैरमुष्मिन् आदित्ये प्रतिष्ठितः । आदित्यमण्डलान्तर्वर्ती पुरुषो रश्मिद्वारा सन्निधाय चक्षुषि चाक्षुषस्य पुरुषस्य रूपप्रकाशनलक्षणे कार्ये उपकरोति, चाक्षुषः पुरुषः प्राणेनादित्ये सन्निधाय प्राणनकार्ये उपकरोति । तदेवं मिथ उपकार्योपकारकभावतो मिथः प्रतिष्ठिताविव्युक्तिः । य एवमुपास्ते स यदोत्क्रमिष्यन् भवति शुद्धमेवैतन्मण्डलं पश्यति, परब्रह्मलोकप्राप्तिद्वारभूतमेतदादित्यमण्डलमुपासकस्यास्य चाक्षुषगत्यप्रतिघातकं सौम्यदर्शनं भवतीति यावत् । एनमेते आदित्यरश्मयो न प्रत्यायन्ति—न परावर्तयन्ति । अप्रतिरोधका भवन्तीत्येतत् ॥२॥

य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर एकँ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ॥३॥

अथैतयोर्व्याहृतिशरीरकत्वं रहस्यनामयोगश्च निरूप्यते तथादृष्टये। य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति व्याहृतिः शिरः, कथमुच्यते शिर इति, आह—एकमिति। अवयवेषु शिरस एकत्वात् अस्य व्याहृतिविशेषस्य चैकाक्षरत्वात् एकत्वेन सामान्येनोच्यते शिर इति। भुव इति बाहू—कस्मान्निमित्तात्?, द्वौ बाहू द्वे एते अक्षरे, द्वित्वसाम्यादित्येतत्। स्वरिति प्रतिष्ठा—पादौ। कस्मात्?, द्वे प्रतिष्ठे द्वे एते अक्षरे। द्वित्वसाम्यादित्येतत्। अथास्य व्याहृतिशरीरकस्यादित्यमण्डलस्य अहरिति उपनिषत्—रहस्यं नाम। य एवमुपास्ते स पाप्मानं हन्ति जहाति च, अहरिति नाम्नि हि हन्तेर्जहातेश्च धातोर्योगः, तत् नामविज्ञानमहिमैतत् ॥३॥

योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर एकँ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा प्रतिष्ठे द्वे द्वे एते अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ॥४॥

उक्तमादित्यमण्डलान्तःस्थस्य व्याहृतिशरीरकत्वं नाम चोक्तम्,

अथ तथैवाक्ष्यन्तःस्थस्य तदुभयमुच्यते—योऽयं दक्षिण इत्यादिना । अनतिरिक्तार्थमेतत् ॥४॥

इति पञ्चमाध्याये पञ्चमं ब्राह्मणम् ।

---

मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च ॥१॥

अथ परस्यैव ब्रह्मण उपासनान्तरमुपदिश्यते । अयं परमपुरुषो मनोमयः—विशुद्धेन मनसैव ग्राह्यत्वान्मनोमय उच्यते । भाः—प्रकाशमयदिव्यस्वरूपः । श्रूयते चान्यत्र समानप्रकरणे 'मनोमयो भारूप' इति । सत्यम्—सततैकस्वरूपत्वात् सत्यः । स्वरूपतः स्वभावतोऽप्यविकृत इति यावत् । स एष तस्मिन्नन्तर्हृदये—हृदयान्तःप्रदेशे सन्निहितः । यथा व्रीहिर्यथा वा यवः, तथाऽयमणुः, स्थाननिबन्धनोऽयं निर्देशः । स एष सर्वस्येशानः—नियामकः, सर्वस्याधिपतिः—स्वामी, शेषीत्येतत्, यदिदं किञ्च—कार्यं कारणं वा स्थूलं सूक्ष्मं वा जडमजडं वा सर्वमिदं स एष प्रशास्ति स्वयमेव, सर्वात्मत्वात् । मनोमयत्वादिगुणविशिष्टतया परं ब्रह्मोपास्यमित्युक्तं भवति । अस्यां विद्यायामन्यत्र समानप्रकरणे पठितानां गुणानामुपसंहारो बोध्यः॥१॥

इति पञ्चमाध्याये षष्ठं ब्राह्मणम् ।

---

विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥१॥

अथ विद्युति ब्रह्मदृष्टिर्विधीयते—विद्युदित्यादिना। केचिदाहुः—विद्युत् ब्रह्मेति, विद्युति ब्रह्मदृष्टिः कार्येत्येतत्। कस्मात् निमित्तात्?, आह—विदानात् विद्युदिति। तमसो विदानात्—खण्डनात् विद्युदुच्यते, ब्रह्म चाज्ञानलक्षणं तमः खण्डयति। तस्मात् तमोविदानात् सामान्यात् विद्युति ब्रह्मदृष्टिः कार्येत्येतत्। विद्युद्ब्रह्मेति य एवं वेद—उपास्ते, एनम्—उपासकं प्रति पाप्मनः प्रतिकूलान् सर्वान् विद्युत्यभ्यस्योपास्यमानं ब्रह्म विद्युति—खण्डयति। उपास्यस्यायं महिमा, ब्रह्म विद्युद्ध्येव हि—पापविदानशीलं हि ॥१॥

इति पञ्चमाध्याये सप्तमं ब्राह्मणम्।

---

वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्य द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥१॥

अथोपासनान्तरं विधीयते। त्रयीलक्षणां वाचं धेनुमुपासीत। धेनुसाम्याद्धेनुत्वेनोपासीत। किं तत् साम्यम्?, तस्याश्चत्वारः स्तनाः। के ते?, स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारश्चेति। तस्यास्त्रयीधेनोः द्वौ स्तनौ स्वाहाकारवषट्कारौ देवा उपजीवन्ति—देवेभ्यो हविः स्वाहावषडित्याभ्यां हि दीयते। हन्तकारं स्तनमेकं मनुष्या उपजीवन्ति—मनुष्येभ्यो ह्यन्नं हन्तेति दीयते। (क्षुधितं पात्रं

प्राप्य हन्तेति दयाव्यञ्जकं शब्दमुच्चार्यान्नं दीयते ) स्वधाकारमपरं स्तनं पितर उपजीवन्ति—स्वधेति हि पितृभ्यः कव्यं दीयते । तस्या धेन्वाः प्राणः ऋषभः, प्राणेनैव हि वाक् प्रसूयते । मनो वत्सः—यथा धेनुर्वत्सेन प्रस्राव्यते तथा मनसा वाक् प्रस्राव्यते क्षरणोन्मुख्यमापाद्यते । मनःसमालोचनमनु प्रवर्तते हि वाक् । वाचमेवंविधां धेनुमुपासीतेत्येतत् ॥१॥

इति पञ्चमाध्यायेऽष्टमं ब्राह्मणम् ।

---

अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषँ शृणोति ॥१॥

उपासनान्तरं विधीयते—अयमित्यादिना । अयमग्निर्वैश्वानरः, कोऽसावग्निर्योऽयमिति पुरःस्थ इव निर्दिश्यते ?, आह—योऽयमन्तःपुरुषे—शरीरान्तः, येनेदमन्नं भुक्तं पच्यते, उपलक्ष्यते चायमनेनान्तःशरीरे श्रूयमाणेन घोषेण, कोऽसौ घोषः ?, सर्वः पुरुषः कर्णावपिधाय यं शृणोति स एष तस्य वैश्वानरस्याग्नेः कौक्षेयस्य घोषः । स यदोत्क्रमिष्यन् भवति—मुमूर्षुरिति यावत्, नैनं घोषं शृणोति । तमिमं वैश्वानरमग्निमुपासीतेति भावः । प्रकरणादेनं ब्रह्मोपासीतेति बोध्यम् ॥१॥

इति पञ्चमाध्याये नवमं ब्राह्मणम् ।

---

यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लम्बरस्य खं तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्वमाक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शाश्वतीः समाः ॥१॥

प्रसङ्गाद्ब्रह्मविदो गतिरुच्यते—यदा वै इति। परब्रह्मदर्शी पुरुषो यदाऽस्माल्लोकात्प्रैति, तदा स वायुम्—वायुलोकमागच्छति क्रमेण मार्गवशात्, मार्गक्रमश्चान्यत्र श्रुतः, प्रथममार्चिः, ततः क्रमात् दिन-पूर्वपक्ष—षडुदङ्मास—अब्दक्रमात् वायुमागच्छतीति। तस्मै स वायुः पन्थानं प्रकल्पयन् विजिहीते—स्वात्मानं विश्लिष्टावयवं करोति यथा छिद्रं स्यात्, तच्च छिद्रं यथा रथचक्रस्य खं—तावत्परिणामं भवति, तेन छिद्रेण स उपासक ऊर्ध्वमाक्रमते, ऊर्ध्वमुद्गच्छन् स आदित्यमागच्छति, स चादित्य इतरेषां मार्गप्रतिरोधकोऽप्यस्मै ब्रह्मविदे मार्गं प्रयच्छन् विजिहीते, यथा छिद्रं स्यात्, तच्च छिद्रं यथा लम्बराख्यवादित्रविशेषस्य छिद्रं तावत्परिमाणं भवति, स तेनोर्ध्वमाक्रमते। ऊर्ध्वमुद्गच्छन् स चन्द्रमसमागच्छति। तस्मै स चन्द्रो मार्गं कल्पयन् विजिहीते, यथा दुन्दुभेः खम्, स तेन छिद्रेणोर्ध्वमाक्रमते। स तत ऊर्ध्वं गच्छन् क्रमाद्विद्युद्वरुणेन्द्रधातृलोकानतिक्रम्य अशोकम्—आध्यात्मिकदुःखरहितम्, अहिमम्—आधि-

दैविकाधिभौतिकदुःखरहितम्, ब्रह्मलोकम्—परस्य ब्रह्मणो लोकम्, आगच्छति प्राप्नोति। तस्मिन् शाश्वतीः समा वसति-न पुनरावर्तते ॥१॥

इति पञ्चमाध्याये दशमं ब्राह्मणम्।

---

एतद्वै परमं तपो यद्व्याहितस्तप्यते परमꣳ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमरण्यꣳ हरन्ति परमꣳ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति परमꣳ हैव लोकं जयति य एवं वेद ॥१॥

ब्रह्मविदा प्रारब्धयोगेन जायमाने ज्वरादौ तपोदृष्टिः कार्येत्येतदुच्यते—एतद्वै इति। एतद्वै परमं तपः, व्याहितः ज्वरादिभिरभिव्याप्तः, व्याधित इति पाठे स्पष्टोऽर्थः, तप्यते इति यत् तदेव परमं तपः, ज्वरादितापे तपोदृष्टिः कार्येत्येतत्। य एवं वेद स वेदनेन व्यपेतसकलपापः परमं लोकं जयति। यच्च प्रेतमृत्विजो ग्रामादरण्यं हरन्ति अन्त्येष्टये, तदपि परमं तपः, अरण्यगमनसाम्यात्, तथा तत्र दृष्टिः कार्येत्येतत्। य एवं वेद परमं ह्येव लोकं जयति। किञ्च—प्रेतमग्नावभ्यादधतीति यत् तच्च परमं तपः, अग्निप्रवेशसाम्यात् तत्र तथादृष्टिः कार्येत्येतत्, य एवं वेद स परमं ह्येव लोकं जयति ॥१॥

इति पञ्चमाध्याये एकादशं ब्राह्मणम्।

---

अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात्प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतस्तद्ध स्माह प्रातृदः पितरं किꣳस्विदेवैवंविदुषे साधु कुर्यां किमेवास्मा असाधु कुर्यामिति स ह स्माह पाणिना मा प्रातृद कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति तस्मा उ हैतदुवाच वीत्यन्नं वै व्यन्ने हीमानि सर्वाणि भूतानि विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रमन्ते सर्वाणि ह वा अस्मिन् भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद ॥१॥

उपासनान्तरं प्रस्तौति—अन्नं ब्रह्मेत्येक इति। एके अन्नम्—यदद्यते तत् ब्रह्मेत्याहुः, तन्न तथा, प्राणमृते अन्नं हि पूयति—पूतिभावं प्राप्नोति। अपरे आहुः प्राणो ब्रह्मेति, तन्न तथा, अन्नादृते प्राणः शुष्यति हि। तत् एते द्वे देवते—अन्नप्राणलक्षणे एकधाभूयं भूत्वा—एकीभावं प्राप्य, मिलित्वेत्येतत्, परमतां—बृहत्त्वं गच्छतः, तदेते सम्भूयोपास्ये इति यावत्। तदेवमध्यवस्य प्रातृदो नाम कश्चन पितरं प्राह—एवंविदुषे—तदिदमुभयं प्राणान्नं परमतया पश्यतः किं वा साधु कुर्याम्, किं वाऽसाधु कुर्याम्, नास्य साधुकर्मणा लाभः असाधुकर्मणा हानिः, कृतकृत्यो ह्ययम्—। वचनमिदं पुत्रस्य श्रुत्वा

पिता पाणिना तस्य मतं प्रतिषेधन्नाह—प्रातृद मैवम्, कस्त्वेनयोर-न्नप्राणयोरेकधाभूयं भूत्वा, एकीभूय सतोः परमतादृष्टिमात्रेणेत्येतत्, परमताम्—कृतकृत्यतां गच्छति, इति । यद्येवमेतौ कथं विजानन् परमतां गच्छति तद्ब्रवीतु भवानिति पृष्टः पिता तस्मै—पुत्राय एतत्—वक्ष्यमाणमुवाच । वीति उपासीत, किं तत्?, अन्नं वै वि, कस्मात्? अन्ने हि सर्वाणीमानि विष्टानि—निविष्टानि, सर्वाणि भूतान्यन्नैकाश्रयाणि, तदन्नं वीत्युपासीत, सर्वभूताश्रयत्वगुणयोगेन वीत्युपासीतेत्येतत् । रमिति उपासीत, किं तत्?, प्राणो वै रम्, कस्मात्? प्राणे हीमानि सर्वाणि भूतानि रमन्ते, न हि बलहीनो रमते, बलं च प्राणायत्तम्, तत् सर्वभूतरतिहेतुत्वगुणयोगेन रमिति प्राणं पश्येत् । य एवमन्नप्राणोभयं विरमित्युपास्ते तस्मिन्नेतस्मिन् सर्वाणि भूतानि विशन्ति सर्वाणि भूतानि रमन्ते च ॥१॥

इति पञ्चमाध्याये द्वादशं ब्राह्मणम् ।

---

उक्थं प्राणो वा उक्थं प्राणो हीदꣳ सर्व-मुत्थापयत्युद्धास्मादुक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्यꣳ सलोकतां जयति य एवं वेद ॥१॥

अन्नप्राणयोर्मिलितयोरुपासनमुक्तम्, अथ पृथक् प्राणस्योपासनमुच्यते—उक्थमिति । उक्थम्—उपासीतेत्येतत्, किं तदुक्थम्?, प्राणो वा उक्थम्, प्राणे उक्थदृष्टिः कार्येत्येतत्, प्राणो हि प्रधानः प्राणेषु, शस्त्रेषु चोक्थम्, तत् आनुरूप्यं प्राणोक्थयोः, केन गुणयोगेन प्राणे उक्थदृष्टिस्तत्राह—प्राणो हीदं सर्वमुत्थापयतीति, न

ह्यप्राण उत्थातुं शक्नोति तदनेन गुणयोगेन प्राणमुक्थमुपासीत । य एवं प्राणमुपास्ते तस्मादस्मादुक्थप्राणवित् वीरः पुरुष उत्तिष्ठति–ईदृशः पुत्रो भवतीत्येतत् । ऐहिकं फलमेतत्, आमुष्मिकं चेदम्–य एवं वेद स उक्थस्य प्राणस्य सायुज्यं सलोकतां चैतीति ॥१॥

यजुः प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते युज्यते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यꣳ सलोकतां जयति य एवं वेद ॥२॥

यजुरित्युपासीत, यो यजुरित्युपास्यः स कः? प्राणो वै यजुः, कथं प्राणे यजुष्ट्वम्, प्राणे हि सतीमानि सर्वाणि भूतानि कर्मसु युज्यन्ते, तस्मात्प्राणो योजकत्वात् यजुरित्युपास्यः । अस्मै–उपासकाय सर्वाणि भूतानि युज्यन्ते श्रैष्ठ्याय–श्रैष्ठ्यं गमयितुम् । दृष्टमिदं फलम् । अदृष्टं चेदम्, यजुषः प्राणस्य सायुज्यं सलोकतां च जयति–गच्छतीति ॥२॥

साम प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मै सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यꣳ सलोकतां जयति य एवं वेद ॥३॥

सामेत्युपासीत, कस्तथोपास्यः? प्राणो वै साम, कस्मात् गुणात्प्राणः सामेत्युपास्यः? प्राणे हीमानि सम्यञ्चि–सङ्गतानि, तस्मात्सङ्गमनात् सामेत्युपासीत प्राणम् । अस्मै उपासकाय सर्वाणि भूतानि

सम्यञ्चि—सङ्गतानि भवन्ति, सङ्गच्छन्ति सन्ति श्रैष्ठ्यायास्य कल्पन्ते च । य एवं वेद स साम्नः प्राणस्य सायुज्यं सलोकतां च जयति—गच्छति ॥३॥

क्षत्रं प्राणो वै क्षत्रं प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः प्र क्षत्रमत्रमाप्नोति क्षत्रस्य सायुज्यꣳ सलोकतां जयति य एवं वेद ॥४॥

क्षत्रमित्युपासीत, कम्?, प्राणो वै क्षत्रम्—प्राणं क्षत्रत्वेनोपासीतेत्येतत् । कथं प्राणस्य क्षत्रता?, प्रसिद्धमेतदित्याह—प्राणो हि वै क्षत्रमिति । प्रसिद्धिमुपपादयत्युपपत्तिनिरूपणेन—त्रायते हैनं देहं क्षिणोतेः शस्त्राद्याघातकृतहिंसातः, प्राणो हि क्षतं पूरयति स्वयमेव मांसाद्युपचयाधानेन । य एवं वेद स उपासकः अत्रम्—अन्यैरत्रातं त्रायकान्तरनिरपेक्षं स्वयं क्षतात्त्राणनेन क्षत्रं प्राणं प्राप्नोति क्षत्रस्य प्राणस्य सायुज्यं सलोकतां चैति ॥४॥

इति पञ्चमाध्याये त्रयोदशं ब्राह्मणम् ।

---

भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥१॥

अथ गायत्र्युपासनमुच्यते—गायत्री हि त्रिपदा, प्रत्येकमष्टाक्षरं पदम्, पदं च पादः, तत्र प्रथमं पदं भूमिरन्तरिक्षं द्यौरित्येतद्भावयेत्, अष्टाक्षरत्वसाम्यात्, भूमिरन्तरिक्षं द्यौरिति ह्यष्टावक्षराणि,

द्यौरित्यत्र दकारयकारोभययोगेनाष्टाक्षरत्वम्, तदेतदस्या अष्टाक्षरमेकं पदम् । भूरादिलोकत्रयात्मकं प्रथमं पादं भावयेदिति यावत् । योऽस्या गायत्र्या एतत् पदमेवं वेद स त्रिष्वेषु भूरादिषु लोकेषु यावदस्ति तावदखिलं जयति ॥१॥

ऋचो यजूंषि सामानीत्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥२॥

ऋचो यजूंषि सामानि इत्येतानि त्रयीनामाक्षराण्यष्टौ, अष्टाक्षरं ह वा गायत्र्या एकं पदम्, एतदृग्यजुःसामलक्षणमस्या गायत्र्या एतत्–द्वितीयं पदम् । योऽस्या एतदृगादित्रयीलक्षणं पदं वेद, स त्रयीयं यावती–यावत्फलजननी, तावत्फलं जयति–प्राप्नोति ॥२॥

प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमेतदु हैवास्य एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेदाथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परोरजा इति सर्वमु ह्येवैष रज उपर्युपरि तपत्येवꣳ हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ॥३॥

प्राणोऽपानो व्यान इतीमानि प्राणनामाक्षराण्यष्टौ, एतदष्टाक्षरं प्राणनामैकं पदम्, प्राणापानव्यानलक्षणमेतदस्यास्तृतीयमेतत्पदम् ।

योऽस्या गायत्र्या एतत्तृतीयं पदं प्राणापानव्यानलक्षणं वेद, यावदिदं प्राणि सर्वं तज्जयति । एवं त्रिपदायाः प्रसिद्धाया गायत्र्याः पादत्रयभावना प्रोक्ता, अथास्या वाग्रूपाया यद्वाच्यं तस्मिंस्तुरीयपादत्वभावना विधीयते । अथास्या गायत्र्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति । तुरीयमित्यादिपदं श्रुतिः स्वयमेव व्याचष्टे—यद्वै इत्यादिना । यद्वै चतुर्थं तत्तुरीयमिति पदेनोच्यते । दर्शतं पदमिति व्याख्येयप्रतीकग्रहणम् । एष ददृश इव—दृश्यत इव योगिभिः, मण्डलस्थः पुरुषो हि योगोन्मीलितान्तर्दृष्टिभिः साक्षात्क्रियते, स च साक्षात्कारो न नायनः, स हीन्द्रियागोचरः, चाक्षुषसमानवैशद्यविशेषसंपत्त्या साक्षात्कार उच्यते, अतो दृश्यत इवेतीवकारः (प्राकृतं वस्तु प्राकृतैश्चक्षुषेव योगिभिरयं समाधौ व्यक्तं साक्षात्क्रियते इति दृश्यते इवेति निर्देश इति भावः) परोरजा इतीति व्याख्येयप्रतीकग्रहणम् । एष हि मण्डलस्थः पुरुषः, रजः—रजःकार्यमिमं लोकं सर्वमुपर्युपरि—सर्वत उपरीत्येतत्, तपति भासाऽनन्यया । य उपासकोऽस्या गायत्र्याः पदमेतद्दर्शतमेवं वेद, स श्रिया यशसा तपति ॥३॥

सैषा गायत्र्येतस्मिँस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तदेतत्सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम तद्वै तत्सत्यं बले प्रतिष्ठितं प्राणो वै

बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलꣳ सत्यादोगीय इत्येवमेषा गायत्र्यध्यात्मं प्रतिष्ठिता सा हैषा गयाꣳस्तत्रे प्राणा वै गयास्तत्प्राणाꣳस्तत्रे तद्यद्गयाꣳस्तत्रे तस्माद्गायत्री नाम स यामेवामूꣳ सावित्रीमन्वाहैषैव स यस्मा अन्वाह तस्य प्राणाꣳस्त्रायते ॥४॥

सैषा—प्रोक्तत्रिपदा गायत्री एतस्मिंस्तुरीये दर्शते परोरजसि आदित्ये प्रतिष्ठिता, तदेतत्तुरीयं पदमादित्यात्मकं सत्ये प्रतिष्ठितम्, तच्च सत्यं चक्षुः, चक्षुर्वै सत्यम्—प्रसिद्धं चक्षुः सत्यमिति, प्रसिद्धावुपपत्तिमाह—यस्मात् चक्षुः सत्यं तस्मादेवाद्यापि, अहमदर्शमित्येकः अहमश्रौषमित्यपरः एवमेकस्मिन्नर्थे द्वौ विवदमानौ आगच्छेताम्, तदा तयोर्यः अदर्शमिति ब्रूयात् तस्मै एव वयं श्रद्दध्याम, न त्वश्रौषमिति वदते। तत् सत्यं चक्षुरिति युक्तमेव । श्रुतं च प्राक् 'स आदित्यः कस्मिन् प्रतिष्ठित इति चक्षुषी'ति । तच्च चक्षुः सत्यं बले प्रतिष्ठितम्, किं तद्बलम्, प्राणो वै बलम्—प्रसिद्धमेतत्, तस्मात् तत्सत्यं प्राणे बले प्रतिष्ठितम्, तस्मादेवाहुः—सत्यात् बलमोगीयः—ओजीयः, अत्योजस्वीति, ओजीय इति पाठे स्पष्टोऽर्थः। एवमुक्तप्रकारेणैषा गायत्री अध्यात्मं प्राणे प्रतिष्ठिता। यस्मात् प्राणे प्रतिष्ठिता तस्मात् प्राणभूतेयं गायत्री गयांस्तत्रे पालयति स, के गयाः? प्राणा वै गयाः—वागादयः प्राणा गयाः, तानेतान् वागादिप्राणांस्तत्रे, वागादयो हि प्राणेन सत्तां प्राप्नुवन्ति, तद्यद्गयांस्तत्रे तस्मात् गायत्रीत्यन्वर्थमस्या नाम । स आचार्यो माणवकमुपनयन्

यामेवामूं सावित्रीं सवितृदेवताकामन्वाह—पच्छोऽर्धर्चशः सर्वामिति क्रमेणान्वाह, एषैव सा—अध्यात्मं प्राणे प्रतिष्ठिता गायत्री । स आचार्यो यस्मै माणवकायेमामन्वाह सेयं तस्य प्राणांस्त्रायते ॥४॥

ताꣳ हैतामेके सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम इति न तथा कुर्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदिह वा अप्येवंविद्बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकं च न पदं प्रति ॥५॥

एके—केचन तामेतामनुष्टुभं सावित्रीमाहुः—केचन शाखिनो माणवकेभ्यः सवितृदेवताकामनुष्टुप्छन्दस्कामुपदिशन्ति, ते हि मन्यन्ते—वाक्—सरस्वती, सा ह्यनुष्टुप्—अनुष्टुप्छन्दःप्रधाना, तस्मादेतां वाचमनुष्टुप्छन्दस्कामनुब्रूम इति । न तथाकुर्यात्—नानुष्टुप्छन्दस्कामनुब्रूयात् । किन्तु—इमामेव त्रिपदां गायत्रीं सवितृदेवताकामनुब्रूयात् । अथ गायत्रीवित् स्तूयते गायत्र्या महिम्नः ख्यापनाय —यदिह वेत्यादिना । एवंवित्—उक्तप्रकारेण गायत्रीं यो वेत्ति सः, बह्विव प्रतिगृह्णाति—एतद्विज्ञानदृष्ट्या प्रतिगृह्यमाणे न बहुत्वम्, सर्वतः समधिकादस्मात् प्रतिग्रहो ह्यल्पः, अथापि लोकदृष्ट्या बहुत्वमिति व्यज्यते इवशब्देन, तत् प्रतिग्रहजातं अनेन विज्ञाताया अस्या गायत्र्या एकं च न पदं प्रति न वै पर्याप्तम्—एकपदविज्ञानं प्रत्यपि न पर्याप्तम्, योऽयं बहुप्रतिग्रहोपभोगः स नैकपदविज्ञानफलायापि पर्याप्तः, स कथं तस्यास्यागः संपादयितुं शक्नुयादिति यावत् ॥५॥

१ सा चेयम्—'तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि' इति ।

स य इमाꣳस्त्रींल्लोकान् पूर्णान् प्रतिगृह्णी-
यात्सोऽस्या एतत्प्रथमं पदमाप्नुयादथ याव-
तीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सो-
ऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं
प्राणि यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतत्तृ-
तीयं पदमाप्नुयादथास्या एतदेव तुरीयं द-
र्शतं पदं परोरजा य एष तपति नैव केन-
चनाप्यं कुत उ एतावत्प्रतिगृह्णीयात् ॥६॥

स गायत्रीवित् हस्तिहिरण्यादिभोग्यपरिपूर्णानिमांस्त्रीन् लोकान् प्रतिगृह्णीयात् सोऽस्या गायत्र्या एतत्—उक्तं प्रथमं पदमाप्नुयात्—उक्तप्रथमपदविज्ञानफलमाप्नुयात्, प्रतिग्रहोपलब्धास्त्रयोऽपि लोका अस्य गायत्रीप्रथमपदविज्ञानफलमात्रम्, क्व पापस्य प्रसङ्ग इति भावः। त्रिलोकप्रतिग्रहोऽपि नातिचरितमस्य येन पापं स्यादित्येतत्। कल्पयित्वेदमुच्यते प्रतिग्रहोऽस्य पापाय नेति ज्ञापनार्थं। घटेत वा कश्चित् बलिरिव दाता त्रिविक्रम इव प्रतिग्रहीता। अथ यो गायत्रीवित् यावतीयं त्रयी तावत्—त्रय्या गम्यं सर्वं फलमिति यावत्, प्रतिगृह्णीयात्, स एतद्गायत्रीद्वितीयपदविज्ञानफलं प्राप्नुयात्। अथ यदि यदिदं प्राणि यावत् तावत् प्रतिगृह्णीयात्—प्राणिनां यावन्तो भोगास्तान् सर्वान् प्रतिगृह्णीयात्, तदाऽस्यास्तृतीयपदविज्ञानफलं प्राप्नुयात्। अथास्या यदेतद्दर्शतं पदं तुरीयं परोरजाः

प्रोक्तं तद्विज्ञानस्यानुरूपमेतावत् कुतः प्रतिगृह्णीयात्, न कुतश्चित्, यदि दाता स्यात् तदा हि प्रतिग्रहः, दाता च प्राप्तस्यैव, न ह्यप्राप्तस्य दानम्, नचैतावत् केनचनाप्यम्—आप्तुमर्हम्—न हि तुरीयपदविज्ञानानुरूपफलं केनचिदन्येन प्राप्येत, तत् कथमेतावतो दाता घटेत । एतद्विज्ञानफलमनन्यसामान्यमस्यैवेत्येतत् ॥६॥

तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वा न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा ॥७॥

अथ तस्या गायत्र्या उपस्थानं येन मन्त्रेण स मन्त्र उच्यते—गायत्र्यसीत्यादि । हे गायत्रि त्वं यथाप्रोक्तपदविभागं भूरादिना लोकत्रयेण प्रथमेन पदेनैकपद्यसि, त्रयीलक्षणेन द्वितीयेन पदेन द्विपद्यसि, प्राणापानव्यानलक्षणेन तृतीयेन पदेन त्रिपद्यसि, दर्शतेन परोरजसा चतुर्थेन चतुष्पद्यसि । अथाप्यपद्यसि, कथमेतत्, नहि पद्यसे—अपरिच्छिन्नमहिमा त्वं नहि सर्वैः सर्वांशेन गम्यसे, अगम्यासीत्येतत् । नमस्ते तुरीयाय पदाय परोरजसे । असौ—मम प्रतिकूलः, मदिष्टप्रतिलम्भविरोधी अदः—मदिष्टप्रातिकूल्याधायकं वीर्यादि माप्रापत् । इति—इत्येतेन मन्त्रेणोपस्थानं कुर्यात् । प्रार्थनाप्रयोगे विकल्पः—यं द्विष्यादित्यादि । यं विद्वानसौ द्विष्यात् तं प्रत्यनेन वा मन्त्रेणोपतिष्ठेत, असौ—अमुकनामकाय कामः—तदभिमतः

कामो मा समृद्धि–समृद्धिं मा प्राप्नोतु, इति। यस्मै द्विषते एवमसौ विद्वानुपतिष्ठते, तस्मै तदभिलषितः कामो नैव समृद्ध्यते। शत्रोः कामप्रतिरोधाशंसा प्रोक्ता, अथ स्वस्याभ्युदयाशंसया प्रवर्तते प्रार्थना-प्रयोगे विकल्पः–अहमदः प्रापमिति वेति–अदः फलमहं प्रापम्–प्राप्नुयामिति यावत्। एवं य उपतिष्ठते तस्य तत् सिद्ध्यति इति भावः। त्रयाणामेषां मन्त्राणां विकल्पेन प्रयोगो बोध्यः ॥७॥

एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नुहो तद्गायत्रीविद्ब्रूथा अथ कथꣳ हस्तीभूतो वहसीति मुखꣳ ह्यस्याः सम्राण्न विदाञ्चकारेति होवाच तस्या अग्निरेव मुखं यदिह वा अपि बह्विवाग्नावभ्यादधति सर्वमेव तत् सन्दहत्येवꣳ हैवैवंविद्यद्यपि बह्विव पापं कुरुते सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति ॥८॥

एतस्मिन्–गायत्रीविज्ञाने विषये जनको वैदेहो बुडिलं नामतः अश्वतराश्वस्यापत्यमिदमुवाच–अहो तद्गायत्रीविद्ब्रूत्वा–तथाविधगायत्रीविज्ञानवान् भूत्वा त्वं कथं प्रतिग्रहजनितदुरितभारं हस्तीभूत्वा वहसि, हस्ती महान्तमिव भारं दुर्भरं दुरितभारं वहसि इति यावत्। किन्विति वितर्के। प्रतिग्रहदोषेण हस्तीभूत्वा वहन्तमात्मानं बुडिलं वैदेह आह—यन्नु हो इत्यादीति वा। एवं पृष्टो बुडिल आह–हे सम्राट् अस्या गायत्र्या मुखमहं न जानामि, तद्विज्ञानवैकल्येन दुर्भरं

भारमिमं वहामि इति । मुखविज्ञानस्यावश्यकताज्ञापनायाख्यायिकेयम् । अथ वैदेह आह—शृणु, तस्या गायत्र्या अग्निरेव मुखम्, अग्नौ तन्मुखदृष्टिः कार्येत्येतत् । मुखविज्ञानफलमुच्यते—यदिह वेति । यदि लौकिकाः पुरुषा अग्नौ बह्वपीन्धनमभ्यादधति, सर्वमपि तद्दहत्येवाग्निः, तथा यद्यप्येवंवित् बह्वपि पापं करोति, सर्वं संप्साय-दग्ध्वेत्येतत्, शुद्धः पापैरनालिप्तः पूतो भवति । पूतश्चायम्—व्यपगतविद्याप्रतिबन्धकः प्राप्य ब्रह्मविद्यां अजरोऽमृतश्च-जरामरणशून्यश्च भवति ॥८॥

इति पञ्चमाध्याये चतुर्दशं ब्राह्मणम् ।

---

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं । तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये । पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि । वायुरनिलममृतमथेदं भस्मान्तँ शरीरम् । ॐ ३ क्रतो स्मर कृतँ स्मर क्रतो स्मर कृतँ स्मर । अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥१॥

गायत्र्युपासने तुरीयं पदमादित्यः प्रस्तुतः, प्रसङ्गादादित्यप्रार्थनामन्त्राः प्रस्तूयन्ते—इयं च प्रार्थना ब्रह्मविदः, आदित्यादयो ह्यर्चि-

रादिमार्गभूताः, ब्रह्मविदा ब्रह्मलोकगमनमार्गाधिष्ठिता ह्यभ्यर्थनीयाः । सत्यस्य परस्य ब्रह्मणो मुखम्—द्वारम्, मार्ग इति यावत् । हिरण्मयेन—प्रकाशमयेन पात्रमिव पात्रम्, अपिधायकत्वात्, तेजोमण्डलरूपेण पात्रेणेत्येतत्, अपिहितम्—आवृतम्, प्रतिरुद्धमिति यावत् । तत्त्वं पूषन् अपावृणु—येनापावृतेन—उद्घाटितेन मार्गेण गच्छतो मम सत्यस्य धर्मस्य परस्य ब्रह्मणः प्राप्तिः स्यात्, परं ब्रह्मैव सर्वफलसाधनत्वात् नित्यसिद्धत्वाच्च सनातनो धर्मः, तत् सत्यधर्माय—सत्यं धर्मं प्राप्तुं तदपावृणु, दृष्टये च, अनवरततदीयदिव्यस्वरूपसाक्षात्कारसिद्धये च, साक्षात्कारश्चेह तज्जनितानन्दोपलक्षकः । तदनुभवजनितदिव्यानन्दायेति भावः । हे पूषन् एकर्षे—अद्वितीयस्त्वमसि ऋषिः—द्रष्टा, सर्वसाक्षी ह्येषः, यम—नियमयत्येष रश्मिभिः सदसत्प्रकाशनेन सर्वम्, सूर्य—सुष्ठु प्रेरयति प्राणिजातम्, तदयं सूर्यः, यत्ते दुष्प्रेक्ष्यमिदमुग्रं तेजः समूह तत्—उपसंहर तत्, यत्ते मण्डलान्तर्वर्ति कल्याणतमं रूपं तत्पश्यामि । अहमस्मि प्रकृतिविविक्तब्रह्मात्मकस्वात्मदर्शीत्याह—योऽसाविति । असौ पुरुषः योऽसौ—यादृग्रूपो यादृक्स्वभावश्च, सोऽहमस्मि—तादृग्रूपस्तादृक्स्वरूप एवाहम्, न देवो न मनुष्यः न युवा न स्थविरः, अपगतस्तथाविधो मोहः । एवं प्रकृतिविविक्तब्रह्मात्मकस्वात्मदर्शिनो मम प्रारब्धफलभूतेऽस्मिन् देहे निपतति, वायुरयं प्राणः स्वकारणमनिलमेतु, अथेदं दह्यमानं शरीरं भस्मान्तं भवतु, यथायथं यान्त्वेते न तेष्वभिमानलेशोऽप्यस्ति ममेति भावः । हे पूषन् मया कृतस्य क्रतोरुपासनस्य स्मर, उपासनाङ्गतया यच्च कृतं कर्म तदपि स्मर,

साङ्गोपासननिष्ठो मार्गस्यास्याधिकारीति मत्वा अपावृणु द्वारमिति भावः। अथाग्निरर्चिरादिमार्गप्रथमपर्वभूतः प्रार्थ्यते—अग्ने इत्यनेन। हे अग्ने सुपथा—अर्चिरादिना मार्गेणास्मान् नय, कस्मै फलाय? राये—अपरिमितायैश्वर्याय, मुक्तिसाम्राज्यायेति यावत्। त्वं विश्वानि वयुनानि विद्वान्, सर्वज्ञोऽसि, अस्मत्—मत्तः, जुहुराणं कुटिलमेनः युयोधि—अपगमय। भूयिष्ठां ते नमउक्तिं विधेम। अग्ने इत्यस्य परमात्मप्रार्थनापरता वा पूर्वं व्याख्यातया दिशा बोध्या ॥१॥

इति पञ्चमाध्याये पञ्चदशं ब्राह्मणम्।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण-परमहंसवर्य-योगिराज-श्रीगोपालानन्दस्वामिविरचिते बृहदारण्यकोपनिषद्भाष्ये पञ्चमोऽध्यायः।

---

## अथ षष्ठोऽध्यायः।

ॐ॥ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥१॥

अथ प्राणोपासनं निरूप्यते—यो ह वै ज्येष्ठं च श्रेष्ठं च—ज्यैष्ठ्यश्रैष्ठ्यगुणविशिष्टमुपासीत स स्वानां मध्ये ज्येष्ठः श्रेष्ठश्च भवति। एवं प्रथमतः फलकथनेनाभिमुख्यमुपासनायां संपाद्य अथ कस्तथाविधगुणविशिष्टः, यदुपासनेनेदं फलं सिद्ध्येत् इति जिज्ञासायामाह—प्राणो वै ज्येष्ठश्च श्रेष्ठश्चेति। मुख्यप्राणोऽयमितरेभ्यश्चक्षुरादिप्राणेभ्यो ज्येष्ठः श्रेष्ठश्च, आदितः प्राणयोगेनानुदिनमनुवर्धमाने गर्भे चक्षुरा-

दीन्द्रियोन्मेषो हि पश्चात्तनः, तद्युक्तं ज्यैष्ठ्यमितरेभ्यः, श्रैष्ठ्यं च प्राणेन्द्रियसंवादेन निरूपयिष्यमाणेन स्फुटीभविष्यति। प्राणं ज्यैष्ठ्यश्रैष्ठ्यगुणविशिष्टमुपासीतेत्येतत्। फलं पुनरनूद्यते—ज्येष्ठश्चेत्यादिना। य एवं वेद—उपास्ते, स स्वानां ज्ञातीनां मध्ये ज्येष्ठः श्रेष्ठश्च भवति, अपिच—येषां मध्ये तथाभवितुमिच्छति तेषां मध्येऽपि तथाभवति नाम। ज्यैष्ठ्यं वृत्तितः[1] श्रैष्ठ्यं गुणतश्चेति फलभेदोऽयं बोध्यः ॥१॥

**यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति य एवं वेद॥२॥**

यो ह वै वसिष्ठां वेद स स्वानां वसिष्ठो भवति। स कः?, वाग्वै वसिष्ठा, वाग्मी पुरुषो विशेषतो वसुमान् भवति, तद्वाक् वसिष्ठा। इतरेभ्यो विशिष्टान्—अतिशयितान् वासयति लोके वाक् ततो वा वाग्वसिष्ठा। य एवं वेद स स्वानां येषां वा ज्येष्ठः श्रेष्ठो बुभूषति तेषां च मध्ये वसिष्ठो भवति। इदं वागाद्युपासननिरूपणं प्राणस्य श्रैष्ठ्योपपादनशेषभूतं बोध्यम् ॥२॥

**यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥३॥**

प्रतितिष्ठत्यनयेति प्रतिष्ठा, चक्षुषा हि पुरुषः समे दुर्गे चाप्रस्खलितः प्रतितिष्ठति। तच्चक्षुः प्रतिष्ठा। इतरदतिरोहितार्थम् ॥३॥

---

1 स्वानामन्येषां वा वृत्तिरेतद्वृत्तिमनुवर्तत इति वृत्तितो ज्यैष्ठ्यम्।

योह वै सम्पदं वेद स ँहास्मै पद्यते यं कामं कामयते श्रोत्रं वै सम्पत् श्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः स ँहास्मै पद्यते यं कामं कामयते य एवं वेद॥४॥

सम्पद्यते–गम्यते अनयेति सम्पत्, सकलपुरुषार्थसाधनोपदेशभूता हि वेदाः श्रोत्रेणैव (अध्ययनमुखेन) गम्यन्ते, तस्मात् सम्पत् श्रोत्रम् । अन्यदतिरोहितार्थम् ॥४॥

यो ह वा आयतनं वेदायतन ँ स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतन ँ स्वानां भवत्यायतनं जनानां य एवं वेद ॥५॥

मन एव ह्यायतनमिन्द्रियप्रवृत्तीनाम्, प्रवर्तते निवर्तते वा चक्षुरादि मनसैव, तन्मन आयतनमित्युपासीत । इतरत् स्पष्टम् ॥५॥

यो ह वै प्रजापतिं वेद प्रजायते ह प्रजया पशुभी रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिर्य एवं वेद॥६॥

रेतःशब्देन प्रजननेन्द्रियं लक्ष्यते । प्रजानां प्रजननहेतुत्वात् प्रजननेन्द्रियं प्रजापतित्वेनोपास्यमिति यावत् । प्रजातिरिति पाठे प्रजायते अनयेति प्रजातिः, प्रजातित्वेनोपासीतेति यावत् । य एवं वेद प्रजया पशुभिश्च प्रकर्षेण जायते । इतरत् स्पष्टम् ॥६॥

ते हेमे प्राणा अह ँश्रेयसे विवदमाना ब्रह्म जग्मुस्तद्धोचुः को नो वसिष्ठ इति त ँ

होवाच यस्मिन्व उत्क्रान्त इद्ँ शरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥७॥

एवम्भूतास्त इमे वागाद्यः प्राणा अहंश्रेयसे—अहमेव श्रेयान् अहमेव श्रेयान् इति स्वस्वश्रेयस्त्वस्थापने विवदमानाः सन्तो ब्रह्म-ब्रह्माणं प्रति जग्मुः । तत्र गत्वा इदमूचुः—को नो मध्ये वसिष्ठः—स्वतन्त्रोऽत्र देहे वासयति च स्वसत्तयाऽन्यान्, श्रेष्ठ इत्येतत् । स्वस्व-श्रैष्ठ्यस्थापने तेषां दुराग्रहं स्ववचनेनाप्यप्रतिसमाधेयमालक्ष्य स्वयं जानन्नपीदमाह—वो मध्ये यस्मिन्नुत्क्रान्ते इदं शरीरं पापीयो मन्यते—अत्यन्तं गर्हायोग्यं अवगम्यते, स वः श्रेष्ठ इति । किमन्यतो निर्णयप्र-वृत्त्या, स्वयमेव परीक्ष्य विनिश्चीयतामिति ॥७॥

वाग्घोच्चक्राम सा संवत्सरं प्रोष्यागत्योवाच कथ-मशकत मदृते जीवितुमिति ते होचुर्यथाऽकला अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाँसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक् ॥८॥

अथ तेषु वाक् स्ववीर्यं ज्ञातुकामा प्रथममुच्चक्राम शरीरात् । सा संवत्सरं प्रोष्य पुनरागत्य प्रोवाच, कथमशकत—शक्तवन्तो जीवितुं यूयं मामृते इति । अथान्ये चक्षुराद्य ऊचुः—यथा अकलाः मूका इव वाचाऽवदन्तोऽपि प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा अन्यैश्च श्रो-त्रादिभिस्तत्तद्व्यवहारं कुर्वन्तोऽजीविष्मेति । श्रुत्वा व्यपगतमाना प्रविवेश स्वस्थानं वाक् ॥८॥

चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथम-
शकत मदृते जीवितुमिति ते होचुर्यथा अन्धा अप-
श्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्व-
न्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसै-
वमजीविष्मेति प्रविवेश ह चक्षुः ॥९॥ श्रोत्रꣳ होच्च-
क्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते
जीवितुमिति ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण
प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा वि-
द्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति
प्रविवेश ह श्रोत्रम् ॥१०॥ मनो होच्चक्राम तत्सं-
वत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितु-
मिति ते होचुर्यथा मुग्धा अविद्वाꣳसो मनसा प्राण-
न्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः
श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश
ह मनः ॥११॥ रेतो होच्चक्राम तत्संवत्सरं प्रोष्याग-
त्योवाच कथमशकत मदृते जीवितुमिति ते होचु-
र्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन

वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वा॰ँसो मनसैवमजीविष्मेति प्रविवेश ह रेतः ॥१२॥

स्पष्टम् ॥९–१२॥

अथ ह प्राण उत्क्रमिष्यन्यथा महासुहयः सैन्धवः पड्वीशशङ्कून्संवृहेदेव॰ँ हैवेमान्प्राणान्संववर्ह ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्यो मे बलिं कुरुतेति तथेति ॥१३॥

अथ मुख्यः प्राण उत्क्रमिष्यन्नेव उत्क्रमणाय प्रवृत्तमात्र एव सपदि सर्वानेव वागादीन् प्राणान् संववर्ह–उद्यखान स्वस्वस्थानात् । तद्यथा–सैन्धवः–सिन्धुदेशसमुद्भवः जात्या बलवीर्यसंपन्नः, आकृत्या च महान्, शोभनलक्षणसंपन्नो, हयः उत्क्रमिष्यन् पड्वीशशङ्कून् पादबन्धनशङ्कून् संवृहेत्–समुत्खनेत् । तथा ते वागादयः स्थानात् किञ्चिदिव भ्रष्टाः विह्वला मुख्यं प्राणमिदमूचुः । भगवन् मोत्क्रामीः, न वै शक्ष्यामस्त्वामृते वयं जीवितुमिति । एवमभ्यर्थितः प्राण उवाच–यदि विज्ञातं मे प्राभवम्, तर्हि तस्य नेतुर्मे श्रेष्ठस्य यूयं बलिं कुरुत–करमर्पयत । अथ वागादयस्तथेति प्रतिश्रुतवन्तः इदं च वागादीनामुत्क्रमणं संवादादि च केवलमाख्यायिकया प्रवर्तते, न तु तत्त्वतः, नहि संवत्सरमेकैकस्योत्क्रमणं घटेत । प्राणश्रैष्ठ्यमवगमयितुमाख्यायिकां कल्पयति श्रुतिः ॥१३॥

सा ह वागुवाच यद्वा अहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुर्यद्वा अहँ सम्पदस्मि त्वं तत्सम्पदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनो यद्वा अहं प्रजापतिरस्मि त्वं तत्प्रजापतिरसीति रेतस्तस्यो मे किमन्नं किं वास इति यदिदं किञ्चाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति न ह वा अस्यानन्नं जग्धं भवति नानन्नं परिगृहीतं य एवमेतदनस्यान्नं वेद तद्विद्वाँसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाचामन्त्येतमेव तदन्नमनग्नं कुर्वन्तो मन्यन्ते ॥१४॥

यथाप्रतिश्रुतं बलिसर्पयन्ती प्रथमं सा ह वागुवाच—यद्वा अहं वसिष्ठाऽस्मि, इतः प्रभृति त्वं वसिष्ठोऽसि, येनैश्वर्ययोगेनाहं ख्याताऽस्मि सोऽयमैश्वर्ययोगस्तुभ्यमर्प्यते मयेति। अथ चक्षुरुवाच यदहं प्रतिष्ठाऽस्मि तत् त्वं प्रतिष्ठोऽसि। एवमन्येऽपि श्रोत्रादयः स्वं स्वमैश्वर्यं प्राणायार्पयन्त ऊचुर्यद्वा इत्यादि। पुनः प्राण आह—उपहतो नाम करः, तस्य मे किमन्नम्, किं वा वासः, इति। इतरे ऊचुः। आश्वभ्यः आकृमिभ्यः आकीटपतङ्गेभ्यः सर्वेभ्यः प्राणिभ्यो यदिदं किञ्चनान्नं सर्वमेव तत् ते अन्नम्। तथैवापो वासः। अन्नमात्रे प्राणान्नत्वदृष्टिरप्सु प्राणवासस्त्वदृष्टिश्चेह विधीयते। सेयं प्राणस्य

सर्वान्नकलदृष्टिः स्तूयते—न ह वेत्यादिना । य एवमनस्य—प्राणस्य सर्वमन्नं वेद, अस्योपासकस्य अनन्नम्—अभक्ष्यं जग्धं भवति, नवा अनन्नम्—अप्रतिग्राह्यमन्नं प्रतिगृहीतं न भवति, अभक्ष्यभक्षणाप्रतिग्राह्यप्रतिग्रहदोषाभ्यामेष विद्वान्न लिप्यते इति विद्या स्तूयते केवलम् । न तु प्राणविदः सर्वान्नभक्षणमभ्यनुज्ञायते । प्रतिषिद्धस्याभ्यनुज्ञा हि नोपपद्यते । प्रतिषेधश्चान्यत्र श्रुतः । इभ्यग्रामवसतेरुषस्तेश्चाक्रायणस्याख्यायिकायां प्राणात्ययमात्रे ब्रह्मविदोऽभक्ष्यान्नभक्षणेऽभ्यनुज्ञा गम्यते । अब्रह्मदर्शिनोऽस्यान्यत्रापि प्राणात्ययात् कथं नामोपपद्येत सर्वान्नभक्षणाभ्यनुज्ञानम् । यस्मादापो वसनं प्राणस्यात एव तद्विदः श्रोत्रिया अशिष्यन्त आचामन्ति, अशित्वा चाचामन्ति, एवं क्रियमाणेनाचमनेनान्नमनग्नं कुर्वन्तो मन्यन्ते । अशनतः प्राक् पश्चाच्च विधितः प्राप्ते आचमने प्राणवासोदृष्टिं कुर्वन्तीत्येतत् । आचमने प्राणवासोदृष्टिरिह विधीयते ॥१४॥

इति षष्ठाध्याये प्रथमं ब्राह्मणम् ।

---

श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम स आजगाम जैवलिं प्रवाहणं परिचारयमाणं तमुदीक्ष्याऽभ्युवाद कुमार ३ इति स भो ३ इति प्रतिशुश्रावानुशिष्टोऽन्वसि पित्रेत्योमिति होवाच ॥१॥

पञ्चाग्निविद्या प्रस्तूयते—यया संसृतौ वैराग्यं प्रकृतिविविक्तात्मविज्ञानं च स्यात् । अरुणेरपत्यमारुणिस्तस्यापत्यमारुणेयो नाम्ना

श्वेतकेतुः पञ्चालानां परिषदमाजगाम–प्रथिता नाम पाञ्चाला विद्वांसः, तेषां परिषदं स्वपाण्डित्यख्यापनेन यशोलिप्सुराजगाम। प्राप्य तस्यां परिषदि पाण्डित्यख्यातिं ततो राजानं परिजनैः स्वात्मानं परिचारयमाणं सभायां समुपस्थितं जिवलेरपत्यं नाम्ना प्रवाहणमाजगाम। तमुदीक्ष्य आलक्ष्य पाण्डित्याभिमानं प्रवाहणोऽभ्युवाद–कुमार ३ इति संबोधयन्, भर्त्सयन्निव संबोधयति प्लुतेन। स च श्वेतकेतुरनादरं तस्यालक्ष्य तमुपहसन्निवाचार्यपदानुगुणेन–भो इति पदेन प्रतिशुश्राव। राजा च जन्मना श्रेष्ठस्यापि अर्हणां प्रथममकुर्वन् प्रथममस्य विद्यागर्वमपनयन् आह–पित्रा त्वमनुशिष्टो न्वसि–अपि पितुः सकाशात् लब्धविद्योऽसि। आह–श्वेतकेतुः–ओम् इति॥१॥

वेत्थो यथेमाः प्रजाः प्रयन्त्यो विप्रतिपद्यन्ता ३ इति नेति होवाच वेत्थो यथेमं लोकं पुनरापद्यन्ता ३ इति नेति हैवोवाच वेत्थो यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न सम्पूर्यता ३ इति नेति हैवोवाच वेत्थो यावतिथ्यामाहुत्याँ हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती ३ इति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वा। अपि हि न ऋषेर्वचः श्रुतम्,

द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति नाहमत एकंचन वेदेति होवाच ॥२॥

अथ प्रवाहण इदमपृच्छत्—अपि वेत्थ, इमाः प्रजाः प्रयन्त्यः—म्रियमाणाः यथा विप्रतिपद्यन्ते—विशेषेण विशिष्टं वा देशविशेषं (अमुं लोकम्) प्रतिपद्यन्ते। प्लुतिरत्र प्रश्ने। छान्दोग्ये समानप्रकरणे श्रूयते—'वेत्थ यदितोऽधिप्रजाः प्रयन्ती'ति। एवं पृष्टो नेति होवाच श्वेतकेतुः। अथेदमपरमपृच्छत् प्रवाहणः—अपि वेत्थ ततोऽमुष्मादिमं कथं पुनः सम्पद्यन्ते इति। श्वेतकेतुर्नेति होवाच। प्रवाहण आह—अपि वेत्थ एवं पुनः पुनः प्रयद्भिः—म्रियमाणैर्बहुभिरसौ स्वर्गो लोको यथा न संपूर्यते इति। इतर आह—नेति। पुनः पृच्छति प्रवाहणः, यावतिथ्यां—यावत्सङ्ख्याकायां आहुत्यां हुतायां आपः—भूतसूक्ष्माणि, पुरुषवाचः पुरुषशब्दाभिलप्या भूत्वा सम्यगुत्थाय वदन्ति—व्यवहरन्ति। इतर आह—नेति। प्रवाहण आह—अपि वेत्थ देवयानस्य पथः प्रतिपदं पितृयाणस्य वा पथः प्रतिपदम्—प्रतिनियतं पदं प्रतिपदम्, यै पदैः स्थानविशेषैर्यैः पन्था उपलक्ष्यते, तानि पदानि तत्पथप्रतिनियतानि, इतो देशादमुं देशं गच्छते 'प्रथमं पदमयं ग्रामः, ततोऽयं, ततश्चाय'मिति भवति पदैः—स्थानैः पथोपदेशो लोके। यत्प्रतिपदं कृत्वा—लक्षीकृत्य देवयानं पन्थानं पितृयाणं वा पन्थानं प्रतिपद्यन्ते, तदुभयं प्रतिपदं वेत्थेति पूर्वेण संबन्धः। छान्दोग्ये समानप्रकरणे 'वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्या-

वर्तने' इति श्रूयते । प्रतिपदमिति स्थाने व्यावर्तने इति । अस्मिन्विषये ऋषेः—मन्त्रद्रष्टुर्वचनं—मन्त्रलक्षणं वचनं नः श्रुतम्—अस्माभिः श्रुतम् । किं तद्वचनम्? उच्यते—इतः प्रेत्य परं लोकं गच्छतां मर्त्यानां द्वे सृती—मार्गावशृणवं पितॄणां देवानां च, संसृतिचक्रे एजत्—प्रचलदिदं प्राणिजातं मनुष्यादि याभ्यां ताभ्यां सृतिभ्यां विश्वमिदं ब्रह्माण्डान्तर्गतं समेति—नातिवर्तते, मातरं पितरं चान्तरा—विना यत् स्थानं जननमरणशून्यं तत्समेति, एकया पुनर्भवमपरया चापुनर्भवमिति यावत् । इतर आह—नाहमत्रैकञ्चन वेदेति ॥२॥

**अथ हैनं वसत्योपमन्त्रयाञ्चक्रे । अनादृत्य वसतिं कुमारः प्रदुद्राव । स आजगाम पितरं तं होवाचेति वाव किल नो भवान् पुराऽनुशिष्टानवोचदिति । कथं सुमेध इति पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत्ततो नैकञ्चन वेदेति । कतमे त इति । इमे इति ह प्रतीकान्युदाजहार ॥३॥**

अथ प्रवाहणो व्यपनीयास्य विद्यामदं विप्रकुमारमेनं सत्कुर्वन् वसत्या निमित्तेनोपमन्त्रयाञ्चकार—इह कानिचिद्दिनानि वसतु भवानिति प्रार्थितवान् । स तु कुमारः प्रश्नप्रव्यथितहृदयः प्रार्थितां वसतिमनादृत्य पितुः सकाशं प्रति प्रदुद्राव । स पितुः समीपमागत्येदमुवाच सोपालम्भम्—भवान्नः पुरा—समावर्तनसमये सर्वाभिर्विद्याभिरनुशिष्टान् मया यूयमनुशिष्टाः, नास्त्यवशिष्टमुपदेष्टव्यम्,

इति उपदिष्टाखिलविद्यानन्ववोचत् । किलेति पितुर्वचनस्यालीकता व्यज्यते, अननुशिष्यैवानुशिष्टानवोचत्किलेति । एवं सोपालम्भं प्रोक्तः पिता प्राह—कथं सुमेधः—हे सुमेधः कथमयं क्षोभस्ते, यन्नः प्रत्यपि सोपालम्भमिव ते वचनम् । पुत्र आह—स राजन्यवन्धुः—राजन्याभासः, परिभवजनितक्रोधमूलकोऽयं शब्दः, मां पञ्च प्रश्नानप्राक्षीत्, तेषु नैकमप्यहं वेदेति । पिता आह—कतमे ते इति । इमे ते प्रश्ना इति प्रश्नप्रतीकान्युदाजहार पुत्रः ॥३॥

स होवाच तथा नस्त्वं तात जानीथा यथा यदहं किञ्च वेद सर्वमहं तत्तुभ्यमवोचं प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति । भवानेव गच्छत्विति । स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास । तस्मा आसनमाहृत्योदकमाहारयाञ्चकार । अथ हास्मा अर्घ्यं चकार । तं होवाच वरं भगवते गौतमाय दद्म इति ॥४॥

तात माऽस्मानन्यथा संभावय, तथा नस्त्वं जानीथाः, यथा यदहं वेद सर्वं तन्निरवशेषं तुभ्यमवोचमिति । अविदितमज्ञवन्नापराध्यति । प्रेहि मया सह, आवां तत्र प्रवाहणसन्निधौ प्रतीत्य—गत्वा विद्यार्थं ब्रह्मचर्यं वत्स्याव इति । पुत्रः प्राह—अत्रमन्तुस्तस्यान्तिकं नाहमेष्यामि भवानेव गच्छत्विति । अथ स गौतम आरुणिराजगाम यत्रासनं प्रवाहणस्य जैवलेरासीत् । आगताय तस्मै स

प्रवाहण आसनमाहृत्य–दत्त्वा अर्घ्यार्थमुदकं भृत्यैराहारयाञ्चकार । आहृते उदके अस्मै अर्घ्यं चकार । एवमासनार्घ्यादिभिः सत्कृत्येदमुवाच–भगवते वरम्–अभीष्टं दद्मो व्रियतामिति ॥४॥

स होवाच प्रतिज्ञातो म एष वरो यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥५॥

स आरुणिरुवाच–प्रतिज्ञातो नाम त्वया वरं वृणीष्व दद्म इति, देयो वरस्त्वेष एव मे, यां वाचं प्रश्नरूपां कुमारस्यान्ते अभाषथास्तामेव मे ब्रूहि, येऽर्थाः पृष्टास्तान्मे ब्रूहीत्येतत् ॥५॥

स होवाच दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति ॥६॥

स प्रवाहण उवाच–यत्त्वं वृणुषे तद्धि दैवेषु वरेषु, अमानुषभोगार्होऽयं वरः, मानुषेषु वरेषु यदिष्टं तद्ब्रूहि ॥६॥

स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गोअश्वानां दासीनां प्रवाराणां परिधानस्य। मा नो भवान् बहोरनन्तस्यापर्यन्तस्याभ्यवदान्योऽभूदिति स वै गौतम तीर्थेनेच्छासा इत्युपैम्यहं भवन्तमिति वाचाह स्मैव पूर्वे उपयन्ति स होपायनकीर्त्योवास ॥७॥

स गौतम आह–यत्त्वं कथयसि मानुषाणां वृणीष्वेति, मानुष-

भोगस्वरूपमजानतस्तत्र भवति नामादरः, विज्ञायते नाम मया, अस्ति हि हिरण्यस्य गवामश्वानां दासीनां प्रवाराणां परिधानानां चापात्तम्–प्राप्तिरिति विविधो मानुषभोगः, न तत्रास्माकमादरः, यज्जानीमः सर्वो मानुषभोगः अत्यल्पः सान्तः पर्याप्तः–परिमित इति, तत् यदेव बहु अनन्तमपर्याप्तं तदेव विद्याधनं वरणीयं नः, इदं हि धनं नाल्पम्, अपरिमितफलाधायकत्वात् । अनुदिनमनु-भूयमानमुपचीयते एव न क्षीयते, तदनन्तम्, नाप्येकमात्रपर्याप्तम्, शिष्यप्रशिष्यपरम्परयाऽनुवर्तमानमनवधि, तस्यास्य बहोरनन्तस्याप-र्याप्तस्य विद्याधनस्य नोऽभि–अस्मान् प्रति भवान् अवदान्यः–अदाता माभूत् । स प्रवाहणः प्राह–यद्येवं तीर्थेन–विधिना विद्या-र्थिनो यो विधिस्तेन प्रकारेण मत्तो विद्यां प्राप्तुमिच्छास्व–इच्छ, नानेन वरप्रतिग्रहमार्गेण । अथ स गौतम आह–उपैम्यहं शिष्यभा-वेन भवन्तमिति, पूर्वे जात्या वरा अवरं जात्या विद्यार्थमुपयन्तो वाचैव–शिष्यभावख्यापकवचनेनैवंविधेन केवलमुपयन्ति, नतु परि-चरणादिभिः, तदयमप्यनयोपायनकीर्त्यैव–उपैम्यहं भवन्तमिति कीर्तनमात्रेण तस्यान्तिके उवास, न परिचरणादिना ॥७॥

स होवाच तथा नस्त्वं गौतम मापराधास्तव च पितामहा यथेयं विद्येतः पूर्वं न कस्मिँश्चन ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥८॥

प्रवाहण उवाच–हे गौतम ! तव पितामहा यथा नः पूज्यास्त्व-

अपि नस्तथा पूज्योऽसि, तत् माऽपराधाः—पूज्ये त्वयि अपराद्धमिव मया, यद्वोचं विधिनेच्छेति, तन्माभूवन्नीदृशा अपराधाः, अपराधान्मा गणयेत्येतत् । इयं हि विद्या इतः पूर्वं न कस्मिंश्चन ब्राह्मणे उवास, क्षत्रियेष्वेवेयं विद्या वर्तते, एवं ब्रुवन्तम्—'उपैम्यहं भवन्त'मिति ब्रुवन्तं कः क्षत्रियः प्रत्याख्यातुमर्हति, ब्राह्मणानां हि वर्णतो गरीयसामवरं प्रति वचनमात्रमिदं परिचरणतोऽभ्यधिकम्, तदहमिमामपूर्वां विद्यां तुभ्यं वक्ष्यामि ॥८॥

असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा सम्भवति ॥९॥

प्रथमं चतुर्थप्रश्नस्य प्रतिवचनं वक्तुमारभते, इतरप्रतिवचनार्थस्यैतदायत्तत्वात् । हे गौतम ! असौ वा वै—स्वर्गो लोकः अग्निः, तत्र तद्दृष्टिर्विधीयते, 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'त्येतदुपपादनाज्ञुगुणमादित अग्निहोत्रपरिकल्पनेयम् । तस्याग्नेरादित्य एव समित्—समिध्यते ह्यसौ लोक आदित्येन । रश्मयो धूमः—ततः समुद्गमात् । अहरर्चिः—प्रकाशप्राचुर्यात् । दिशोऽङ्गाराः, अवान्तरदिशो विस्फुलिङ्गाः, परितः पृथगभिव्यक्तेः । अस्मिन्नग्नौ कैः किं हूयते आह—तस्मिन्नेतस्मिन्नग्नौ देवाः—यजमानस्य प्राणरूपाः । श्रद्धाम्—आपः ताश्च भूतान्तरसंश्लिष्टाः, भूतसूक्ष्माणीत्येतत्, जुह्वति । आयुषोऽवसाने अग्निहोत्रादिनिष्ठस्य यजमानस्य प्राणाः सुकृतसहकृता

यजमानस्यास्य भूतसूक्ष्माणि स्वर्गं नयन्तीति यावत्। तस्या आहुतेः सोमो राजा भवति—तस्यामाहुता आपः सोमराजभावं—स्वर्गभोगार्हसमाह्लादकदेहभावं प्राप्नुवन्ति, ता आपस्तस्य यजमानस्य द्युलोकोपभोगार्हस्थूलदेहारम्भका भवन्तीति यावत् ॥९॥

**पर्जन्यो वाग्निर्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुत्यै वृष्टिः सम्भवति ॥१०॥**

पर्जन्यः—वृष्ट्यभिमानी देवविशेषः, स एवाग्निर्द्वितीयः। तस्याग्नेर्वायुरेव समित्, स वायुना हि समिध्यते, 'पुरो वातेन पर्जन्यः प्रवर्तते' इति हि प्रसिद्धम्। अभ्रं धूमः—समिधः पुरोवातमनु परिवर्तते ह्यभ्रम्। विद्युदर्चिः—प्रकाशप्राचुर्यात्। अशनिरङ्गाराः, स हि मूर्तोऽग्निखण्ड इव। ह्रादुनयः—मेघगर्जितानि विस्फुलिङ्गाः, विशीर्यमाणावयवशब्दसाम्यात्। तस्मिन्नेतस्मिन्नग्नौ देवाः पूर्वोक्ताः प्राणास्तमेनं सोमं राजानम्—सोमराजभावापन्नं श्रद्धाशब्दवाच्यं भूतसूक्ष्मं जुह्वति। तस्या आहुत्यै—तस्या आहुतेः, विभक्तिव्यत्ययश्छान्दसः, वृष्टिर्भवति। वृष्टिभावश्चात्र तस्य तत्संश्लेषलक्षणः ॥१०॥

**अयं वाव लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्चिश्चन्द्रमा अङ्गारा नक्ष-**

त्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुत्या अन्नं सम्भवति ॥११॥

अयं वाव मानुषो लोकोऽग्निस्तृतीयः, तस्यास्याग्नेः पृथिवी समित्-अयं हि मानुषो लोको विविधभोगास्पदभूतया पृथिव्या दीप्यते । अग्निर्धूमः, समिधः समुद्गच्छति धूमः, पृथिव्याश्चाग्निः । रात्रिरर्चिः, चन्द्रनक्षत्रादिप्रकाशप्राचुर्यात् । चन्द्रमा अङ्गाराः नक्षत्राणि विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति, वृष्टिभावापन्नं तदन्न हूयते । तस्या आहुत्या अन्नं भवति । प्रसिद्धं वृष्टेरन्नं भवतीति ॥११॥

पुरुषो वा वाग्निर्गौतम तस्य व्यात्तमेव समित्प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः सम्भवति ॥१२॥

पुरुषो वाव अग्निश्चतुर्थः, तस्यास्याग्नेः व्यात्तमेव-विवृतं मुखमेव समित्, विवृतेन मुखेन हि दीप्यते पुरुषः, संवृतमुखः पुरुषो नैव प्रकाशते सदसि, अध्ययनाध्यापनप्रवचनेन विवृतमुखः प्रकाशते । प्राणो धूमः, विवृतान्मुखादग्नेर्निःसरति हि प्राणः । वागर्चिः-प्रकाशनात् । चक्षुरङ्गाराः प्रकाशप्राचुर्यात् । श्रोत्रं विस्फुलिङ्गाः-परितः समुत्पत्य पतनात् । तस्मिन्नेतस्मिन्नग्नौ देवाः अन्नं जुह्वति, तस्या आहुत्या रेतः सम्भवति । अन्नभावमन्नसंश्लेषविशेषलक्षणं प्राप्तस्य भूतसूक्ष्मस्य रेतोभावः-रेतःसंश्लेषविशेषरूप एव ॥१२॥

योषा वा वाग्निर्गौतम तस्या उपस्थ एव समिल्लो-
मानि धूमो योनिरर्चिर्यदन्तःकरोति तेऽङ्गारा
अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा
रेतो जुह्वति तस्या आहुत्यै पुरुषः सम्भवति
स जीवति यावज्जीवत्यथ यदा म्रियते ॥१३॥

योषा वाव गौतम पञ्चमोऽग्निः, तस्या इत्यादि स्फुटार्थम् । तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति, तस्या आहुतेः पुरुषः संभवति, अथ जीवति कञ्चित्कालम्, अथ यदा म्रियते ॥१३॥

अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्स-
मिद्धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा
विस्फुलिङ्गाः तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति
तस्या आहुत्यै पुरुषो भास्वरवर्णः सम्भवति ॥१४॥

अथैनं मृतमग्नये हरन्ति—अग्नेराहुतिक्रमात्सम्भूतमेनं प्रसिद्धेऽग्नौ प्रक्षिपन्ति । अग्निसमित्प्रभृत्यन्यत्रेवात्र न कल्प्यते, प्रसिद्धमेव तदखिलमित्याह—'तस्याग्निरेवाग्नि' रित्यादिना । यो द्युलोकाग्नौ सोमो राजा प्रादुर्भूतः स एवाद्य प्रक्षिप्तः प्रसिद्धाग्नौ प्रदीप्यमानसर्वावयवः प्रदृश्यते, तदेवं गतागतफलेन कर्मणा गर्भवासाग्निपतनमात्रपर्यवसायिना दुःखमेवाप्यते इति गम्यते । गम्यते च भूतसूक्ष्मयोगत एव जननमरणादिकं न स्वतस्तदात्मन इति ॥ १४ ॥

ते य एवमेतद्विदुः ये चामी अरण्ये श्रद्धाꣳ स-
त्यमुपासते तेऽर्चिरभिसम्भवन्ति अर्चिषोऽहरह्न
आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासा-
नुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादा-
दित्यमादित्याद्वैद्युतं तान् वैद्युतान् पुरुषो मानस
एत्य ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु पराः
परावतो वसन्ति तेषां न पुनरावृत्तिः ॥१५॥

चतुर्थप्रश्ने यद्वक्तव्यं तदभिहितम्, अथ पञ्चमप्रश्नस्य यत्प्रतिवचनं तदाह सान्निध्यात् । ते इति । य एवमेतद्विदुः—अपामेव पुरुषभावमेवं ये विदुः, पुरुषभावो योऽयं स त्वपामेव नात्मन इति विज्ञाय प्रकृतिविलक्षणं ब्रह्मात्मकमात्मानं ये उपासते इति यावत् । ते, येचामी अरण्ये श्रद्धां पुरस्कृत्य सत्यं परं ब्रह्मोपासते, ते चेतः प्रेताः प्रारब्धावसाने अर्चिः—अर्चिरादिशब्दास्तत्तदभिमानिदेवतापराः, तत्तदधिष्ठितान् लोकानिति यावत् । अर्चिर्लोकं ततो दिनलोकं ततः पूर्वपक्षाभिमानिलोकं ततः षडुदङ्मासलोकं ततोऽब्दलोकं ततो देवलोकं तत आदित्यं ततो वैद्युतं तानेतान् विद्युल्लोकमुपागतानमानवः पुरुषो ब्रह्मणा मनसैव सृष्टः समेत्य ब्रह्मणः परस्य लोकान् गमयति, तेषु अप्राकृतेषु परस्य ब्रह्मणो लोकेषु ते मुक्ताः पराः—प्रकृष्टा भूत्वा असङ्कुचितज्ञाना भूत्वा परावतश्च भूत्वा प्रकृष्टमुक्तैश्वर्यविशिष्टाश्च भूत्वा वसन्ति, न तेषां पुनरिहावृत्तिः—न गर्भवासादिक्लेशभूयिष्ठेऽस्मिन् भवचक्रे परिभ्रमणम् ॥१५॥

अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिँ रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणाऽऽदित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति ताँस्तत्र देवा यथा सोमँ राजानमाप्यायस्वापक्षीयस्वेत्येवमेनाँस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते लोकान् प्रत्युत्थायिनस्त एवमेवानुपरिवर्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम् ॥१६॥

उपदिष्टं देवयानम्, अथ पितृयाणमुपदिशति । अथ ये इत्थं न विदुः केवलकर्मिणो बुभुक्षवो यज्ञेन दानेन तपसा साधनेन लोकानिन्द्रादेः प्राप्नुवन्ति, तेऽनेन पथा गच्छन्ति, इतः शरीरात् प्रेताः प्रथमं धूमं ततो रात्रिं ततः अपक्षीयमाणपक्षं ततो दक्षिणायनं ततः पितृलोकं ततश्चन्द्रं प्राप्नोति । अत्र धूमादिशब्दास्तत्तदभिमानिपराः । प्राप्य चान्द्रं समाह्लादकं लोकं तत्र वर्तमानानां देवानामन्नं भवति—कथमयमन्नं तेषाम् ?, तत्र वर्तमाना देवा हि तं भक्षयन्ति, तत्र

निदर्शनं यथेति, यथा यज्ञे ऋत्विजः सोमं राजानं—चमसस्थं सोमरसं आप्यायस्व अपक्षीयस्वेति भक्षयन्ति तथा, नैकदा समग्रं भक्षयन्ति चमसस्थं सोमम्, किन्तु—अवशेष्यावशेष्यासकृत् भक्षयन्ति, तत्रावशेषणेनाप्याययन्ति, भक्षणेन अपक्षयं प्रापयन्ति, तदनयोः क्रिययोरसकृद्भावो गम्यते आप्यायस्वापक्षीयस्वेति निर्देशेन। तथैतांस्तत्र यावत्सम्पातं वर्तमानानाप्याय्याप्याय्य भक्षयन्ति। पशूनिव तानुपभुञ्जते इति यावत्। तेषां तत्सुकृतं यदा पर्यवैति—परिक्षीयते, तदा इममेवाकाशमभिनिष्पद्यन्ते, अथ ततो वाय्वादिक्रमेण प्राप्य पृथिवीमन्नं भूत्वा पुनः पुरुषाग्नौ निपत्य ततो योषाग्नौ प्रविश्य तत्र प्राप्य पुरुषभावं जायन्तेऽस्मिन् लोके, पुनश्च ते यज्ञादिना लोकान् प्रत्युत्थायिनो भवन्ति। त एते एवमेवानुपरिवर्तन्ते इतो लोकादमुं तत इमं इतोऽमुमिति। अनेनैव पितृयाणप्रक्रियानिरूपणेन प्रथमद्वितीयप्रश्नयोरपि प्रतिवचनमुक्तं भवति। एतौ पन्थानौ ये न विदन्ति, ते कीटपतङ्गादियोनिं प्राप्नुवन्ति। एतेन तृतीयप्रश्नस्य 'यथाऽसौ लोको न संपूर्यते' इत्यस्य प्रतिवचनमुक्तं भवति ॥१६॥

इति षष्ठाध्याये द्वितीयं ब्राह्मणम्।

---

स यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वा औदुम्बरे कꣳसे चमसे वा सर्वौषधं फलानीति सम्भृत्य परिसमूह्य परिलिप्याग्निमुपसमाधाय प-

रिस्तीर्यावृताज्यꣳ सꣳस्कृत्य पुꣳसा नक्षत्रेण मन्थꣳ सन्नीय जुहोति यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कामान् तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा या तिरश्ची निपद्यतेऽहं विधरणी इति तां त्वा घृतस्य धारया यजे सꣳराधनीमहꣳ स्वाहा ॥ १ ॥

अथ महत्त्वसिद्धये साधनमुपदिश्यते । महत्त्वे प्राप्ते धनप्राप्तिः धने प्राप्ते कर्म कर्तुं प्रभवति, निर्धनः किं कर्म कुर्यात्, कर्मभिश्च लोकाः, तत् कामनासिद्धिसामान्ये महत्त्वं मूलम् । यः कामयेत महत्त्वं प्राप्नुयामिति स इदं कर्म कुर्यात्, तत्प्रकारश्चायम्—उदगयने आपूर्यमाणपक्षे पुण्याहे, एतेन प्रकृष्टकालप्रतीक्षा कर्मण्यस्मिन् कार्येति नियमो ज्ञाप्यते, प्राक्कर्मदिनाद्यावद्द्वादशाहमुपसद्व्रती भूत्वा—पयोव्रती भूत्वा औदुम्बरे कंसे वा चमसे वा पात्रे, पात्राकृतौ विकल्पोऽयम्, सर्वौषधं—सर्वा ओषधीः, यथासम्भवं यथाशक्ति, ग्राम्या ओषधयो दश वक्ष्यमाणा अवश्यं ग्राह्याः, अन्यत्र यथासम्भवं यथाशक्ति, अत्र श्रूयमाणं सर्वौषधं वक्ष्यमाणं दशविधमेव वा, तथा सर्वाणि फलानि सम्भृत्य परिसमूहनपरिलेपने भूमिसंस्कारौ कृत्वा अग्निमुपसमाधाय दर्भैः परिस्तीर्य आवृताज्यं—स्मार्तप्रक्रिययाऽऽज्यं संस्कृत्य पुंनक्षत्रेण सर्वौषधफलमयं मन्थं संनीय—मध्ये संस्थाप्य जुहोति एतैर्मन्त्रैः । यावन्तो देवा इत्यस्य मन्त्रस्यायमर्थः—भो जात-

वेदः—अग्ने! त्वयि—त्वदधीनाः यावन्तो देवाः तिर्यञ्चो भूत्वा—प्रतिकूला भूत्वा मम पुरुषार्थान् घ्नन्ति, तेभ्यः भागधेयम्—आज्यभागं त्वयि जुहोमि, ते तृप्ताः सन्तः कामैः सर्वैर्मां तर्पयन्तु, स्वाहा। द्वितीयमन्त्रस्यायमर्थः—या देवता तिरश्ची—प्रतिकूला सती अहमेव सर्वस्य विधरणी इति अभिमन्यमाना त्वा—त्वामाश्रित्य वर्तते, तां संराधनीं सर्वसाधनीं घृतस्य धारया यजे, स्वाहा ॥१॥

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति चक्षुषे स्वाहा सम्पदे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति श्रोत्राय स्वाहा यतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥२॥ अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमव-

नयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति क्षत्त्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति॥३॥

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ द्विर्हुत्वा मन्थे संस्रवम्–स्रुवावलेपनमाज्यम् अवनयति–संस्रावयति । रेतसे स्वाहेत्यारभ्य एकैकामाहुतिं हुत्वा मन्थे संस्रवमवनयति ॥२॥३॥

अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिङ्कृतमसि हिङ्क्रियमाणमस्युद्गीथमसि उद्गीथमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे सन्दीप्तमसि विभूरसि प्रभूरस्यन्नमसि ज्योतिरसि निधनमसि संवर्गोऽसीति ॥४॥

अथैनं मन्थमभिमृशति 'भ्रमदसी'त्यनेन मन्त्रेण ॥ ४ ॥

अथैनमुद्यच्छत्यामँ स्यामँ हि ते महि सहि राजेशा-
नोऽधिपतिः स माँ राजेशानोऽधिपतिं करोत्विति ॥५॥

अथैनं मन्थं हस्ते उद्यच्छेदामं स्यामं हि ते इत्यनेन मन्त्रेण ॥५॥

अथैनमाचामति तत्सवितुर्वरेण्यं मधु वाता ऋता-
यते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीर्भूः
स्वाहा भर्गो देवस्य धीमहि मधु नक्तमुतोषसो
मधुमत्पार्थिवँ रजः मधुद्यौरस्तु नः पिता भुवः
स्वाहा धियो यो नः प्रचोदयान्मधुमान्नो वनस्पति-
र्मधुमाँ २ अस्तु सूर्यः माध्वीर्गावो भवन्तु नः स्वः
स्वाहेति सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमती-
रहमेवेदँ सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत
आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः
संविशति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्ड-
रीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति
यथेतमेत्य जघनेनाग्निमासीनो वँशं जपति ॥६॥

अथैनं मन्थं वक्ष्यमाणैर्मन्त्रैराचामति–भक्षयेत् । तत्र गायत्र्याः प्रथमेन पादेन मधुमत्याः प्रथमया प्रथमया च व्याहृत्या स्वाहान्तया प्रथमं ग्रासमाचामेत् । अथ गायत्र्या द्वितीयेन पादेन मधुमत्या द्वितीयया व्याहृत्या द्वितीयया स्वाहान्तया द्वितीयं ग्रासमाचामेत् ।

अथ तृतीयेन गायत्र्याः पादेन मधुमत्या तृतीयया तृतीयया व्याहृत्या स्वाहान्तया तृतीयं ग्रासमाचामेत् । समग्रां सावित्रीं समग्रां च मधुमतीमनूद्य अहमेवेदं सर्वं भूयासं इति चोच्चार्य स्वाहान्तां व्याहृतिं पठित्वाऽन्तेऽवशिष्टं मन्थमाचामेत् । अनेन प्रागेव विचार्य कंसे चतुर्ग्रासपरिमितो मन्थः सम्पाद्य इति गम्यते । अथ पाणी प्रक्षाल्याचम्य जघनेनाग्निम्–अग्नेः पश्चाद्भागे प्राक्शिराः संविशति–शयीत । अथ प्रातःसन्ध्यां विधायादित्यं 'दिशामेकपुण्डरीकमसी'त्यनेन मन्त्रेणोपतिष्ठेत । अथ यथेतमेत्य जघनेनाग्निम्–अग्नेः पश्चाद्भागे आसीनो वंशं जपति–जपेत् ॥६॥

तँ हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥७॥ एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥८॥ एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाचापि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥९॥ एतमु हैव चूलो भागवित्तिर्जानकये

आयस्थूणायान्तेवासिन उक्त्वोवाचापि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥१०॥ एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाचापि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥११॥ एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचापि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतन्नापुत्राय वानन्तेवासिने वा ब्रूयात् ॥१२॥

तमेतं मन्थं महत्त्वप्रापकमन्थाख्यकर्मप्रकारं वा नाम्ना उद्दालक अरुणस्यापत्यं वाजसनेयाय याज्ञवल्क्यायान्तेवासिने—परिचरणैकसमयप्रतीक्षायान्तेवासिने प्रियशिष्याय उक्त्वा—उपदिश्य इदमप्युवाच, एनं संस्रवसंस्कृतं मन्थं शुष्के स्थाणौ निषिञ्चेत्, शुष्कादपि ततः शाखाः प्ररोहेयुः पलाशानि जायेरन् इति। स वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्याय, स मधुकः पैङ्ग्यश्चूलाय भागवित्तये, स चूलो जानकये आयस्थूणाय, स जानकिः सत्यकामाय जाबालाय, स जाबालोऽन्तेवासिभ्यः, इति । तमेतं गुरुभिः प्रियायान्तेवासिने सम्प्रदिष्टं नानन्तेवासिने नापुत्राय वोपदिशेत् । एतेनास्योपदेशे स्नेहविशेषप्रकर्षः प्रयोजको न धनादीत्येतन्नियम्यते ॥१२॥

चतुरौदुम्बरो भवत्यौदुम्बरः स्रुव औदुम्बरश्च-
मस औदुम्बर इध्म औदुम्बर्या उपमन्थन्यौ
दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवा-
स्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च
खल्वाश्च खलकुलाश्च तान् पिष्ट्वा दधनि
मधुनि घृत उपषिञ्चत्याज्यस्य जुहोति ॥१३॥

मन्थे वक्तव्यं विशेषमाह—चतुरौदुम्बर इत्यादिना । अयं मन्थश्चतुरौदुम्बरो भवति, कथम्?, औदुम्बरः स्रुवः, औदुम्बरश्चमसः, औदुम्बर इध्मः, औदुम्बर्यौ उपमन्थन्यौ इति । स्रुवादय औदुम्बरा एव कार्या इति नियम्यते । ओषधयः संपाद्या उक्तास्ताः काः कति? उच्यते, दश ग्राम्याणि धान्यानि व्रीहियवादीनि, इतोऽधिका ओषधयस्तु यथासम्भवं यथाशक्ति । तान् व्रीह्यादीन् पिष्ट्वा दधिमधुघृतेषूपसिञ्चति–दध्यादिभिरुपसिञ्चेदित्येतत् अयं मन्थसम्पादनप्रकारः आज्यस्य जुहोति ।

इति षष्ठाध्याये तृतीयं ब्राह्मणम् ।

---

एषां वै भूतानां पृथिवी रसः पृथिव्या आ-
पोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां
फलानि फलानां पुरुषः पुरुषस्य रेतः ॥१॥

येन कर्मणा विशिष्टः—गुणैरभ्यधिकः पुत्र उत्पद्येत तथाविधं

कर्मोपदिश्यते चतुर्थेन ब्राह्मणेन । उक्तो महत्त्वाधायकः कर्मविशेषः, प्राप्तं महत्त्वं विशिष्टेन पुत्रेण जातेन प्रकर्षमेति । पितृऋणापाकरणात् लोकविजयाच्च, अतश्चास्येह प्रसङ्गः । तत्रादौ रेतसः प्रकर्ष उच्यते, प्रकृष्टपुत्रोत्पादनशेषतयैवास्योपयोगः कार्यः, न कामदाहोपशममात्रायेत्येतज्ज्ञापनाय । एषां वै इति । स्पष्टम् ॥१॥

स ह प्रजापतिरीक्षाञ्चक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियꣳ ससृजे ताꣳ सृष्ट्वाऽध उपास्त तस्मात्स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत् तेनैनामभ्यसृजत् ॥२॥

रेतोविसर्गस्य प्रतिष्ठा योषैवेत्येतत् प्रजापतेराचरणतो ज्ञापयति । स्त्रीसङ्गमे वाजपेयदृष्टिं विधास्यन् वाजपेयसाम्यं संपादयति—स एतमित्यादिना ॥२॥

तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिधो मध्यतस्तौ मुष्कौ स यावान् ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासं चरत्यासाꣳ स्त्रीणाꣳ सुकृतं वृङ्क्तेऽथ य इदमविद्वानधोपहासं चरत्यस्य स्त्रियः सुकृतं वृञ्जते ॥३॥

वाजपेयदृष्ट्या क्रियमाणं स्त्रीसङ्गमं स्तौति—यावानित्यादिना ।

उक्तविज्ञानपूर्वकस्य स्त्रीसङ्गमस्यार्थाधायकतां तद्रहितस्य तस्यानर्थाधायकतां चाह—य एवमित्यादिना । पशुसाधारणजघन्याचरणस्य निन्दा गम्यते ॥३॥

एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराहैतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान् कुमारहारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात्प्रयन्ति य इदमविद्वा<sup></sup>ँसोऽधोपहासं चरन्तीति बहु वा इद<sup></sup>ँ सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥४॥

उक्तविज्ञानविहीनं प्राणिमात्रसामान्यं मैथुनमतिगर्हितमित्यत्र प्राचां वचनमनूद्यते—एतद्ध स्म वै इत्यादिना । एतत् वक्ष्यमाणं वचनमुद्दालकादय आहुः, किं तत्?, बहव इत्यादि । य इदमविद्वांसोऽधोपहासं—मैथुनकर्म समाचरन्ति, ते मर्याः—मरणधर्माणः ब्राह्मणायनाः—ब्राह्मणकुले जन्मस्थितिमात्रसंपन्ना निरिन्द्रियाः—प्रणष्टवीर्याः व्यपेतसुकृता आयुषोऽवसाने अस्माल्लोकात् प्रयन्ति केवलम् । न त्वमुं लोकं प्राप्नुवन्ति, अनुभूय दुःखं पुनरस्मै लोकाय पापायैवागच्छन्तीति गम्यते । एतेन विद्वान् विशिष्टगुणपुत्रप्राप्तिसाधनादन्यत्र ब्रह्मचर्यमनुपालयेदिति गम्यते । तस्यास्य प्रमादतो रेतःप्रस्कन्दे प्रायश्चित्तमुच्यते—बहु वा इत्यादिना ॥४॥

तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवी-मस्कांत्सीद्यदोषधीरप्यसरद्यदप इदमहं तद्रेत आ-ददे पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्नि-र्धिष्ण्या यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्या-मादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥५॥

स्पष्टम् ॥५॥

अथ यद्युदक आत्मानं परिपश्येत्तदभिमन्त्रयेत मयि तेज इन्द्रियं यशो द्रविणꣳ सुकृतमिति श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासास्तस्मान्म-लोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ॥६॥

निमित्तान्तरे प्रायश्चित्तान्तरमुच्यते—अथेति। अथ रेतःसेकार्हां स्त्रियं स्तौति—श्रीर्हवेत्यादिना ॥६॥

सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात् सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आ-दद इत्ययशा एव भवति ॥७॥ सा चेदस्मै दद्यादि-न्द्रियेण ते यशसा यश आदधामीति यशस्विनावेव भवतः ॥८॥ स यामिच्छेत्कामयेत मेति तस्यामर्थं

निष्ठाय मुखेन मुखँ सन्धायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्सम्भवसि हृदयादधि जायसे स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेमाममूं मयीति ॥९॥ अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखँ सन्धायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ॥१०॥ अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखँ सन्धायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥११॥

गर्भग्रहणे प्रतिकूलायां पत्न्यां तदपनोदनोपायः, गर्भाधानप्रकारश्च निरूप्यते ॥७–११॥

अथ यस्य जायायै जारः स्यात्तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमँ शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति मम समिद्धेऽहौषीः पुत्रपशूँस्त आददेऽसाविति मम समिद्धेऽहौषीरिष्टासुकृते त आददेऽसाविति मम समिद्धेऽहौषीराशापराकाशौ त आददेऽसाविति

स वा एष निरिन्द्रियो विसुकृदस्माल्लोकात्प्रैति यमेवं विद्वान् ब्राह्मणः शपति तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ॥१२॥

अथ प्रसङ्गादभिचारकर्मोच्यते, अभिचारकर्माप्यत्र धर्मशेषतयेति न दोषः ॥१२॥

अथ यस्य जायामार्तवं विन्देत् त्र्यहं कꣳसेन पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥१३॥

अथ गर्भाधानस्य पूर्वेतिकर्तव्यतोच्यते—अथेत्यादिना ॥१३॥

अथ य इच्छेत्पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयित वै ॥१४॥ अथ य इच्छेत्पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्यौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयित वै ॥१५॥ अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन् वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जन-

यित वै ॥१६॥ अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयित वै ॥१७॥

पुत्रविशेषपुत्रीविशेषकामनायां तत्प्राप्तावभ्युपायः प्रदर्श्यते— अथ य इच्छेदित्यादिना । ईश्वरौ जनयित वै–जनयितुं समर्थौ ॥१४–१७॥

अथ य इच्छेत्पुत्रो मे पण्डितो विजिगीथः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति माँसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयित वा औक्षेण वार्षभेण वा ॥१८॥ अथाभिप्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां सञ्जायां पत्या सहेति ॥१९॥ अथैनामभिपद्यतेऽमोहमस्मि सा त्वँ सा त्वमस्यमोऽहं सामाहमस्मि ऋक्त्वं द्यौरहं

पृथिवीं त्वं तावेहि सꣳरभावहै सह रेतो दधावहै पुꣳसे पुत्राय वित्तय इति ॥२०॥ अथास्य ऊरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुखꣳ सन्धाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥२१॥ हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ तं ते गर्भं हवामहे दशमे मासि सूतवे यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति ॥२२॥

अथ पाण्डित्यादिसकलगुणसंपन्नपुत्रकामनायामभ्युपायः प्रदर्श्यते—अथेत्यादिना ॥१८–२२॥

सोष्यन्तीमद्भिरभ्युक्षति यथा वायुः पुष्करिणीꣳ समिङ्गयति सर्वत एवा ते गर्भ एजतु सहावैतु जरायुणा इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः तमिन्द्र निर्जहि गर्भेण सावराꣳ सहेति ॥२३॥

अथ सुखप्रसवोपायः प्रदर्श्यते—सोष्यन्तीमित्यादिना ॥२३॥

जातेऽग्निमुपसमाधायाङ्क आधाय कꣳसे पृषदाज्यꣳ सन्नीय पृषदाज्यस्योपघातं जुहोत्यस्मिन् सहस्रं पुष्यासमेधमानः स्वे गृहे अस्योपसन्द्यां मा छैत्सीत् प्रजया च पशुभिश्च स्वाहा मयि प्राणाꣳस्त्वयि मनसा जुहोमि स्वाहा यत्कर्मणात्यरीरिचं यद्वा न्यूनमिहाकरं अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टꣳ सुहुतं करोतु नः स्वाहेति ॥२४॥ अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधिमधुघृतꣳ सन्नीयानन्तर्हितेन जातरूपेण प्राशयति भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥२५॥ अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥२६॥ अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो यो मयोऽभूर्यो रत्नधा वसुविद्यः सुदत्रः येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकरिति ॥२७॥ अथास्य मातरमभिमन्त्रयते इलासि मैत्रावरुणी वीरे वीरमजीजनत्सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरदिति तं वा एतमाहुरति पिता बताभूरति पितामहो ब-

ताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥२८॥

अथ पुत्रे जाते कर्तव्यं जातकर्मादिविधानमुच्यते ॥२४—२८॥

इति षष्ठाध्याये चतुर्थं ब्राह्मणम् ।

---

अथ वꣳशः पौतिमाषीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रः कौशिकीपुत्रात् कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥१॥

आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः साङ्कृतीपुत्रात् साङ्कृतीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बीपुत्रो

जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रः कार्शकेयीपुत्रात् कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात् प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात् साञ्जीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥२॥ याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो वाध्योगाज्जिह्वावान् वाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात् कश्यपाद्धरितः कश्यपः शिल्पात् कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूँषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥३॥ समानमा साञ्जीवीपुत्रात्साञ्जीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सा-

त्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥४॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति बृहदारण्यकोपनिषदि षष्ठोऽध्यायः ॥ ६ ॥

विद्याप्रतिष्ठायै आचार्यवंशोऽनुसन्धेयः, तस्मादन्ते आचार्यपरम्परोपदिश्यते। प्रथमान्तेन शिष्यनिर्देशः, पञ्चम्यन्तेनाचार्यनिर्देशः। शिष्याचार्यावत्र मात्रोपलक्ष्येते पौतिमाषीपुत्रः कात्यायनीपुत्रादित्यादिना। वीरप्रसूरितिवत् पण्डितप्रसूरिति ततो विशेषं ज्ञापयितुमेतत्। पण्डितपुत्रफलकं कर्माव्यवहितं प्रसक्तं च। आब्रह्मण आपौतिमाषीपुत्रं यावदेको वंशः समानः। योऽसावस्मिन्वंशे सांजीविनीपुत्रः, सः—यानीमानि शुक्लानि यजूंषि आदित्यप्रवक्तृकतया आदित्यानीति वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते तत्प्रवर्तकाचार्यकोटावप्यनुप्रविष्ट एव। तद्यथा—आदित्यादम्भिणी अम्भिण्या वाक्, वाचो नैध्रुविः कश्यपः इत्येवं क्रमेण शिष्याचार्यपरम्परायां प्राश्नीपुत्रात् सांजीविनीपुत्रः, इति ॥४॥

आरण्यकं बृहदिदं सुनिगूढतत्त्वं
श्रेयोऽर्थिनः सुगमयन् विशदैर्वचोभिः ।
व्याख्या मया व्यरचि याऽस्य समर्प्यतेऽसौ
नारायणस्य पदयोर्ननु येन सत्ता ॥१॥
नेति नेति यदादेशो यस्येयत्तां निरस्यति ।
मूर्तामूर्ततनुः सोऽयं सर्वात्मा मे प्रकाशताम् ॥२॥
आत्मैवासीत्पुरा यः सकलमिदमदो ब्रह्म सर्वं बुभूषु
ब्रह्मक्षत्रादिरूपं व्यभवदहमिदं सर्वमस्मीत्यपश्यत् ।
ऐकात्म्यं जानतां नस्तदिदमखिलगं वामदेवादिदृष्टं
सर्वत्रैवान्तरात्मा स्फुरति हि सहजानन्दमूर्तिः स एषः ॥३॥
जायापत्यसुतादिवस्तुनिचये किञ्चित्प्रियं कस्यचित्
यत्सङ्कल्पवशाद्य एष फलदः सर्वस्य सत्कर्मणः ।
दृष्टे दृष्टमिदं भयाय यदृते दृष्टं स सर्वान्तरो
द्रष्टव्यः सकलैर्मुमुक्षुभिरसावात्मा स मे स्यात्प्रियः ॥ ४ ॥
क्षित्यप्तेजोमरुत्खप्रभृति महदहङ्कारतन्मात्रमेतत्
ते चाव्यक्ताक्षरे तत्रिगुणमपि तमो यच्च विज्ञानमात्मा ।
एतद्विश्वं शरीरं भवति नियमनादन्तराविश्य यस्य
श्रीमान् सर्वान्तरात्मा नियमयतु स मां शेषतैकात्मवृत्तौ ॥५॥

इति षष्ठाध्याये पञ्चमं ब्राह्मणम् ।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण-परमहंसवर्य-योगिराज-श्रीगोपालानन्दस्वामिविरचिते बृहदारण्यकोपनिषद्भाष्ये षष्ठोऽध्यायः ॥६॥

॥ इति बृहदारण्यकोपनिषद्भाष्यं संपूर्णम् ॥

